



यजुर्वेदीय

# मैत्रायणी-संहिता ।



अनेकवैदिकानां साहाय्येन विविधप्राचीनलिखितपुस्तकपाठानुसारेण च

संशोध्य

**भट्टाचार्येण श्रीपादशर्मणा दामोदरभट्टसूनुना सांतवलेकरकुलजेन**

**संपादिता**



सा च

**औन्धराजधान्यां**

भारतमुद्रणालये मुद्रयित्वा स्वाध्यायमण्डलद्वारा प्रकाशिता ।



विक्रमीयसंवत् १९९८; शालिवाहनशकः १८६४

मूल्यं रूप्यकपञ्चकम् । ६) रु.

९८



# मैत्रायणी-संहितायाः प्रस्तावः ।

इयं॑ वि॒सृ॑ष्टि॒र्यत॑ आब॒भूव॒ यदि॑ वा द॒धे यदि॑ वा न ।

यो अ॒स्याध्य॑क्षः पर॒मे व्यो॑म॒न्त्सो अ॒ङ्ग वे॑द॒ यदि॑ वा न वेद॑ ॥२०॥ [मै० सं० ४।१२।१]

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ऽआ सु॑व ॥ [वा० य० ३०।३]

## अथ प्रास्ताविकं किञ्चित् ।

प्रारम्भे कुलदेवतामिह महालक्ष्मीयुतां रेणुकाम् । भक्ताभीष्टकरीं मतिस्मृतियशोऽर्थायुःपरानन्ददाम् ॥
प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदाम् । सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥१॥

अज्ञानवार्धिं परिशुष्य यन्मे ज्ञानं त्वदादाश्रुतितन्त्रयुग्मम् ।
यत्क्षोणिवृन्दारकवृन्दवन्द्यं नित्यं नमामो गुरुमण्डलं तत् ॥२॥
ॐ नमः श्रीमत्सद्गुरुहृदयानन्दसरस्वतीचरणकमलेभ्यः ॥३॥
पुराण इत्येव न सर्ववित्स्यान्नव्यो गुणी ज्ञः किमु नार्चनीयः ।
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥४॥

अधिकृत्य श्रुतिं चेमां मैत्रायणीय-संहिताम् । प्रस्तूयते त्विदं किञ्चित्तच्छाखाबोधहेतवे ॥५॥
तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति । स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः ॥
[म० भा० शां० प० मो० ध० १४१-५१]

सुविदितमेवैतत्सुधियां वेदविद्यारहस्यवेदिनां संख्यावतां तत्र प्रविवक्षूणां छात्रवृन्दानां च । इह सम्भूय संसरद्भिः धर्माधर्मतद्विपाकरूपजात्यायुर्भोगैरविद्याऽस्मितारागद्वेषाभिनिवेशाख्यक्लेशैरधिभूताधिदेवताध्यात्मिकतापत्रयैश्च परिभूयमानैः समस्तैः प्राणिवर्गैः—

सुखमिच्छति सर्वोऽपि भूयादेतत्सदा मम । इत्थं दुःखं तथा द्वेष्टि मा भूदेतत्कदापि मे ॥

इति मनुष्यस्वभावसुलभसंकल्पानुसारेण कुतोऽपि कथंचिदपि लेशमात्रेणापि दुःखासंस्पर्शि सुखमर्थादभ्युदयलक्षण-मैहिकं पारलौकिकं निःश्रेयसलक्षणं पारमार्थिकं च परमानन्दवाच्यं सुखं काम्यते । तदुपलब्धौ च प्राक्तनस्व-स्व-गुणकर्म-प्रभावाद्यनुसारेण विविधमार्गान्वेषणपुरःसरमविश्रान्तं प्रयत्यते च ।

## प्रयत्नस्य पुरुषार्थ-वाच्यत्वम् ।

प्रयत्नः पुरुषार्थ इति चानर्थान्तरम् । 'पुरुषार्थ' शब्दश्चैवं व्युत्पाद्यते शास्त्रविद्भिर्यत् "पुरुषेण साध्यो यः कश्चन लौकिकोऽलौकिको वाऽर्थः पुरुषार्थः" इति । ननु पुरुषार्थपदं बहुव्रीहिणा तत्पुरुषेण वा समासेन कुतो न व्युत्पाद्यते इति चेद्वदामः, पूर्वत्रार्थासङ्गत्यापत्तेरुत्तरत्र योग्यताविरहादिति । तेन निरुक्ता व्युत्पत्तिरेव सूपपद्यते । उक्तव्युत्पत्तिसव्यपेक्षया साध्यं साधनं चेत्युभयमपि तयोरभेदोपचारवृत्त्या पुरुषार्थपदभाग्भवति । तदेव च प्रयत्नस्वरूपमिति ।

## पुरुषार्थस्य द्वैविध्यम् ।

स च पुरुषार्थो लौकिकालौकिकभेदेन द्विधा जायते । ऐहिकपुत्रपशुविद्याधनदाराप्रतिष्ठामानकीर्तिराज्यसाम्राज्य-प्रभृतिलक्षणो लौकिकोऽभ्युदयस्तत्साधनानि च । अलौकिकोऽपि द्विधा पारत्रिकाभ्युदयपारमार्थिकनिःश्रेयसभेदात् । तत्र

प्रथमो देवपित्रादिलोकं गत्वा तत्तदात्मना यावत्पुण्यपुञ्जबलोदयं तत्रत्यविविधविषयोपभुक्तिलक्षणः पारत्रिकोऽभ्युदयस्तत्साधनानि च । द्वितीयं पारमार्थिकं निःश्रेयसं स्वात्मानुभवस्तत्साधनानि चेति ।

## पुरुषार्थ-चतुष्टये उपेयोपायभावः ।

अत एव च धर्मादिचतुष्टये पुरुषार्थतामभिमन्यमानेन मनुना विचिन्तितं—

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च । अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ इति [ मनु० २।२२४ ]

कैश्चिदाचार्यैरभिप्रियते धर्मार्थौ श्रेयस्करौ कामहेतुत्वादिति । अर्थकामौ श्रेयस्करौ सुखकारणत्वादित्यन्यैरभिमन्यते । धर्म एव श्रेय आत्यन्तिकसुखजनकत्वादित्यपरे समाद्रियन्ते । अर्थ एव चेह लोके श्रेय इतीतरे प्रवदन्ति । धर्मार्थकामलक्षणस्त्रिवर्ग एवान्योऽन्यमविरुद्धः सन्पुरुषार्थतया श्रेय इति तु वास्तविकी स्थितिरिति मनोरभिप्रायः । तन्मतेऽस्य त्रिवर्गस्य समं परस्परानुपमर्देन निषेवणे चरमो मोक्षाख्यः पुरुषार्थस्त्वर्थसिद्ध एवेत्यभिसन्धेयम् । अन्येषामध्यात्मविदां मते तु परमत्वेनाभिमतस्तुरीयो मोक्षाख्यः स्वतन्त्रः पुरुषार्थः । स एव च प्राप्तव्यत्वेनोपेयपदवीमधिरोहति । इतरे चोपायाः । तत्रापि साक्षादुपायस्तु धर्माख्यः प्रथमः पुरुषार्थः । मध्यमयोरितरयोरर्थकामयोश्च तद्व्यापारत्वेन तदुपसर्जनत्वात् । एतेन अर्थकामव्यापारवता धर्मेणापवर्गमधिगच्छेदिति पर्यवसन्नं भवति ।

## वेदस्य धर्ममूलत्वम् ।

तस्यैतस्य धर्मादिपुरुषार्थचतुष्टयस्य मूलं सर्वज्ञानविज्ञानैकायतनं वेद एवेति । तथा चाह मनुः— "वेदोऽखिलो धर्ममूलम्" इति । अस्यां च मनूक्तौ धर्मपदमितरपुमर्थत्रयस्योपलक्षणं तस्यापि यथार्थज्ञानस्य वेदाधीनत्वात् । मूलत्वं नाम— अन्यानपेक्षत्वे सति स्वतस्त्वेनानधिगताबाधितार्थबोधकत्वम् । तच्च वेदादन्यत्र न सम्भाव्यते । वेदस्यान्यानपेक्षत्वं पुरुषकर्तृकत्वाद्यभावात्स्वतस्त्वं च कारणदोषबाधकदोषविरहितत्वाच्चेत्यन्यत्र माध्यन्दिनशतपथस्योपोद्घाते क्षुण्णम् ।

## वेद एव पुरुषार्थस्य परमं साधनम् ।

वेदोदितं कर्म कर्तुमर्हस्य पुंसः परमं पुरुषार्थसाधनं वेदशास्त्रमेवेति विज्ञेयं—

" हविरग्नौ हूयते, सोऽग्निरादित्यमुपसर्पति, तत्सूर्यो रश्मिभिर्वर्षति, तेनान्नं भवति,
अथेह भूतानामुत्पत्तिः स्थितिश्चेति, हविर्जायते "

इत्यस्याः श्रुतेः स्वरसात् । मनुरप्याह—

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ इति [ मनु० १२।९९ ]
अस्य पुरुषार्थस्येत्यर्थः ।

## वेदमहिमा ।

एतावानस्य वेदस्य महिमा—

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् । अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥९४॥
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥९७॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः । वेदादेव प्रसिध्यन्ति प्रसूतिगुणकर्मतः ॥९८॥
वेदशास्त्रार्थतत्त्वज्ञो यत्रतत्राश्रमे वसन् । इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥१०२॥

इत्यादिरिति । [ मनु० १२।९४,९७,९८,१०२ ]

अत एव च मैत्रायण्युपनिषद् यत्कण्ठरवेणावदत् 'यद्वेदेष्वभिहितं तत्सत्यं, यद्वेदेषूक्तं तद्विद्वांस उपजीवन्ति, तस्माद्ब्राह्मणो नावैदिकमभिधीयीत' इति । [ मैत्रा० उप० प्र० ७।१० ] तत्सङ्गच्छते ।

## वेदस्वरूपम् ।

वेदो नाम-- धर्माद्यतीन्द्रियार्थावबोधको वाक्यराशिः । तदुक्तं शास्त्रकृद्भिः—

'प्रत्यक्षानुमोपमाद्यैर्यो धर्माद्यर्थो न गम्यते । यस्मात्तं वेद एवाह तस्माद्वेद इति प्रथा ॥' इति ।

आर्य-विद्या-सुधाकर-कर्तृभिस्तु "वेदो नाम वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षा अनेनेति व्युत्पत्त्या चतुर्वर्ग-साधन-भूतो ग्रन्थविशेषः । करणे घञ् बाहुलकादिति " वेदशब्दो व्याख्यातः । स च वेदो मन्त्रब्राह्मणात्मकः ।

'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति कात्यायनापस्तम्बसत्याषाढबौधायनकौशिकप्रभृतिप्रायः सर्वेषामृषीनां सम्मतः पन्थाः । तत्राव्यभिचरितस्वरवर्णसंस्कारविशिष्टाध्ययनाध्यापनानुपूर्वीसमागतः सन्सर्वदा सर्वस्मिन्नपि भारते प्रति-शाखमविभागेन विराजमानो य एकश्छन्दोऽनुबद्धो विभागः स मन्त्रराशिः । विधिनिषेधार्थवादादिविभेदैर्मन्त्रलिङ्गादि-प्रदर्शितार्थस्य विनियोगप्रतिपादको व्याख्यानोपव्याख्यानभूतश्छन्दोविरहितो गद्यसदृशो वाक्यकदम्बकोऽपरो विभागो ब्राह्मणराशिः । उभाभ्यामप्यंशाभ्यां वेदशब्दश्चरितार्थ इति ।

## वेदश्चतुर्धा ।

स चैकोऽपि मन्त्रब्राह्मणरूपो वेदः पुनश्चतुर्धा विभिद्यते ऋग्यजुःसामाथर्वभेदात् । तथा चोक्तमाथर्वणिकश्रुतौ—

यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन् ।

सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ इति

[ अथर्व० १०.७.२० ]

तथा मैत्रायणीयानामुपनिषद्यपि—

एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसाः ॥ इति [ मैत्रा०उप०६।३२ ]

स्पष्टमाभ्यां श्रुतिभ्यां चातुर्वैद्यमावेदितं भवति । चरणव्यूहेऽपि—

तत्र यदुक्तं चातुर्वैद्यं चत्वारो वेदा विज्ञाता भवन्ति, तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वश्चेति, इति ।

एषां चतुर्णामपि वेदानां व्यवहारे क्वचिदभेदेन क्वचिद्भेदेन च सम्प्रयोगो दृश्यते । यथा—

' अयमर्थो वेदेनापि ज्ञाप्यते ' ' अत्र च वेदा एव शरणं, वेदाः प्रमाणम् ' इति चेति । अत्र च—

' अनुद्धृतावयवभेदाविवक्षया बहुत्वेकवचनम् '

'उद्धृतावयवभेदाविवक्षया बहुषु बहुवचनम्' इतीमौ न्यायावनुसर्तव्यौ । ते चावयवास्त्रयः—ऋग्यजुःसामवाच्याः तत्र नियतपादाक्षरावसाना ऋचः, अनियतपादाक्षरावसानानि यजूंषि, प्रगीतसाध्या ऋच एव सामानि । अनयैवावयवत्रय्या वेदे त्रयी शब्दो रूढः । चतुर्थोऽप्येकोऽवयवः समस्ति यदथर्वमुनिदृष्टा ऋच आथर्वणिका मन्त्रा इति । परं चैषां मन्त्राणामृक्ष्वेवान्तर्हितत्वान्न पृथङ्निर्देशोऽकारि वैदिकैः । एतेन ऋग्बहुलो ऋग्वेदो, यजुर्बहुलो यजुर्वेदः, सामबहुलः सामवेद, आथर्वणिकमन्त्रबहुलोऽथर्ववेद इति प्रसिध्यति ।

## विभाग-प्रयोजक-कारणम् ।

एतद्विभागप्रयोजकन्तु चातुर्होत्रम् । चातुर्होत्रं नाम-हौत्रमाध्वर्यवमौद्गात्रं ब्रह्मत्वं चेति यज्ञविदो विदुः । तथा चात्र श्रीमद्भागवतं—

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैः प्रभुः । सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥

ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः । चतस्रः संहिताश्चक्रे सूत्रे मणिगणा इव ॥ इति

[ द्वादशस्कंधे षष्ठेऽध्याये ]

तथा वायुपुराणे—

एक एवासीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत् । चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥
आध्वर्यवं यजुर्भिस्तु ऋग्भिर्वै हौत्रमेव च । औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥
ततः स ऋचमुद्धृत्य ऋग्वेदं समकल्पयत् । होतृकं कल्प्यते तेन यज्ञवाहं जगद्धितम् ॥
सामभिः सामवेदं च तेनौद्गात्रमरीरचत् । राज्ञस्त्वथर्ववेदेन सर्वकर्माण्यकारयत् ॥ इति

एतेन भगवता वेदव्यासेन यज्ञेषु आध्वर्यवाद्याऽऽर्त्विज्यव्यवस्थां प्रतिपिपादयिषया एक एव वेदराशिस्तत्तत्प्रकरणशो मन्त्रगणं समुद्धृत्य चतुर्धा विन्यस्त इति ।

## अनेके शाखाभेदाः ।

तत्रैकैकोऽपि ऋगादिवेदो गुरुशिष्य--प्रशिष्य--प्रणाड्या श्रुतर्षिद्वाराऽनेकाभिः शाखाभिर्विभक्तः सम्बभूव । ऋग्वेद एकविंशतिधा, यजुर्वेद एकशतधा, सामवेदः सहस्रधा, अथर्ववेदो नवधा समभवदिति शतपथस्योपोद्घाते सोपपत्तिकं निरूपितं तत्तत्र द्रष्टव्यं नात्र विस्तरभिया पुनः प्रपञ्च्यते ।

## यजुर्वेदस्य सङ्घाः ।

प्रकृतस्य यजुर्वेदस्य षडशीतिसंख्यावान्कृष्णयजुःशब्दाभिधेयो बौधायनापस्तम्बमैत्रायण्यादिर्ब्रह्मसम्प्रदायावरुद्ध एकः सङ्घः । पञ्चदशसंख्यावाच्छुक्लयजुःशब्दाभिधेयः कण्वमाध्यन्दिनादिरादित्यसम्प्रदायावरुद्धोऽपरः सङ्घः । इमावेव द्वौ मुख्यौ सङ्घौ । ब्रह्मादित्यसम्प्रदायविषयिणी विशेषचर्चा त्वस्मदीये शतपथब्राह्मणस्योपोद्घाते द्रष्टव्या । अनयोरपि सङ्घयोः पुनः सूत्रभेदेन षट् सङ्घाः समभवन् । तथा चोक्तं भगवता कात्यायनेन मन्त्रभ्रान्तिहरापरपर्यायसूक्ष्मग्रन्थप्रकाशिकायां—

शुक्लस्य यजुषः पञ्च दश शाखाश्च ताः स्मृताः । कृष्णस्य यजुषः शाखाः षडशीतिरुदाहृताः ॥६४॥
एवमेकोत्तरशतं शाखाः प्रोक्ता हि याजुषे । एतद्भेदे षट्कल्पाश्च प्रोक्ताः कात्यायनादिभिः ॥६५॥
कात्यायनः कल्पकर्ता शुक्ले वाजसनेयके । बौधायनापस्तम्बौ च भारद्वाजस्तथैव च ॥६६॥
तथा हिरण्यकेशी च सत्याषाढस्तु पञ्चमः । पञ्चैव कल्पकर्तारः कृष्णे स्युस्तैत्तिरीयके ॥६७॥
कण्वादिपञ्चदशसु कल्पः कात्यायनः स्मृतः । औखेयाद्येकविंशत्सु बौधायन इति स्मृतः ॥६८॥
खाण्डिकेयाद्येकविंशत्स्वापस्तम्ब इति स्मृतः । चरकादिद्वादशानां भारद्वाज इति स्मृतः ॥६९॥
मानवाद्यद्विदशसु स्मृतो हैरण्यकेशिकः । गार्ग्यादिपञ्चदशसु सत्याषाढ इति स्मृतः ॥७०॥
एवं षट् कल्पकर्तारस्तत्तच्छाखाकदम्बके । शाखाभेदेऽपि कल्पैक्ये कर्मभेदो न विद्यते ॥७१॥

इति । एतेन कृष्णयजुर्वेदीयषडशीतिशाखासु सूत्रभेदेनावान्तरा पञ्च सङ्घाः सन्तीति सुस्पष्टमेव ।

## शुक्ल-कृष्णत्व-व्यवहार-मूलानि ।

शुक्लत्वं मन्त्रब्राह्मणयोः पार्थक्येनाभिधानमूलकं, कृष्णत्वं च तयोर्व्यामिश्रत्वेनैकत्राभिधानमूलकम् ।

तथा चाभ्यधायि— आर्यविद्यासुधाकरे—

'याज्ञवल्क्येनादित्याल्लब्धोऽयं यजुर्वेदः शुक्ल इत्यभिधीयते यतोऽत्र दर्शपूर्णमासप्रभृतिसर्वयज्ञेषूपयुक्तानां यजुर्मन्त्राणां ब्राह्मणासङ्कीर्णानां यथायोग्यक्रमेण विन्यासेन याज्ञिकानां व्यामोहाजननात् । प्राचीनयजुर्वेदस्य तु ब्राह्मणसङ्कीर्णत्वात्तत्तद्यज्ञियमन्त्राणामप्यनुक्रमेण पाठाभावाच्च ततो यज्ञकर्मानुष्ठानमार्गस्य दुर्ज्ञेयत्वात्कृष्णत्वमिति ' इति । कण्वसंहिताभाष्योपक्रमे सायणाचार्या अप्येवमेवाभिप्रयन्ति स्म—

प्रवर्तितः खण्डशस्तैर्न सम्यग्बुध्यते नृभिः । आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया ॥
बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीरितम् । याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान् ॥
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते । पौराणिकीं कथामेनां वेदव्याख्यान आदरात् ॥ इति ।

एतदेव भङ्ग्यन्तरेण कात्यायनेनाप्यवोचि—

यजुर्वेदः कल्पतरुः शुक्लः कृष्ण इति द्विधा । सत्त्वप्रधानाच्छुक्लाख्यो यातयामत्ववर्जितात् ॥६०॥
कृष्णस्तु तित्तिरैर्भक्षात्तामसाद्यातयामतः ॥

इति मन्त्रभ्रान्तिहरापरपर्यायसूत्रमन्त्रप्रकाशिकायाम् । एतदेवास्मपुराणे श्रीविद्यारण्यगुरुचरणाः श्रीशंकरानन्दयतिवर्या अन्ववदन्—

शुक्लं कृष्णं यजुर्द्वेधा कृष्णं स्यात्तैत्तिरीयकम् । शुक्लं वाजसनेयिनामिति कात्यायनोऽब्रवीत् ॥
वांत्या च भक्षणेनापि कृष्णान्यासन्यजूंष्यपि । इति । [आत्म० पु० १०।२६]

चरणव्यूहभाष्ये त्वन्यथोपवर्ण्यते—

'एतत्सखिलं सशुक्रियं मध्याह्ने शुक्लवर्णेन सूर्येण दत्तं तच्छुक्लयजुः परिसंख्यातम् । वेदोपक्रमणे चतुर्दशीयुक्तपूर्णिमाग्रहणाच्छुक्लयजुः, तैत्तिरीयकैर्वेदोपक्रमणे औदयिकपर्वग्रहणादर्थात्कृष्णप्रतिपद्विद्धपौर्णमासीग्रहणात्कृष्णयजुरिति वा' इति ।

## आद्ययजुर्वेदः ।

सविशेषमत्र विमृश्यते — यदिदानीमनुपदोक्तशुक्लत्वकृष्णत्वप्रख्यात्युपष्टम्भकप्रामाणिकवचोनिकरात्सर्वस्यापि षडशीतिशाखासङ्घस्य कृष्णत्वं निःसंदेहं प्रतीयते । तथापि तदात्मानं शुक्लकृष्णभेदभवनात्प्राचीनतमं मन्यमाना मैत्रायणीयादयो न सहन्ते । ते त्वत्र विषये स्वीयमतमन्यथाऽऽविष्कुर्वन्ति । तथा च मैत्रायणीयाह्निकदर्पणस्य भूमिकायां मोढज्ञातीयाः पं० पाठकोपनामकाः श्रीहर्षजीसुत--रामकृष्णशास्त्रिणः प्राहुः- 'अयं शाखाभेदश्च व्यासकृतवेदविभागानन्तरं सम्भवति । अत एव सर्वयजुषां निधानं महर्षिर्वैशम्पायनः आद्ययजुर्वेदाचार्यः । ननु —

ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सपरिशेषं च हर्षेण परमेण ह ॥
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् । विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥

इति शान्तिपर्वण्युक्तत्वाच्छतपथब्राह्मणवेदनिर्माता योगी याज्ञवल्क्यः कुतो न यजुर्वेदाचार्य इति चेत्सत्यं स योगीश्वरो भगवतो वैशम्पायनमहर्षेर्भागिनेयः कल्पारम्भानन्तरगते वर्षपूगे तपःसमुपार्जितस्यापरस्य यजुर्वेदस्य निधानम् । यजुर्वेदस्याद्यापरभेदवत्त्वं पुराणेतिहासेभ्यः प्रतीयते ।

तथाहि- 'न कश्चिद्वेदकर्ता च वेदस्मर्ता चतुर्मुखः' इति पराशरवचनात्कल्पादौ सृष्टिसमये ब्रह्मणो मुखात्प्रादुर्भूतस्य ऋगादिमिश्रितस्यैकात्मस्वरूपस्य वेदस्य धारणेऽसमर्थानल्पमेधसो जनान्समालोक्य युगत्रयपर्यये पराशरात्सत्यवत्यां समुद्भूतेन भगवता व्यासेन वेदश्चतुर्धा विभेदयाञ्चक्रे । एवं विभिन्नस्य वेदस्य ऋग्यजुःसामाथर्वसंज्ञकाश्चत्वारो भागाः क्रमेण पैल-वैशम्पायन-जैमिनि-सुमन्तुभिरधीत्य शिष्यांश्चाध्यापिता अनेकशाखारूपतां प्रतिपेदिरे इति नाविदितं विदुषाम् । एतावन्तं कालं त्रिलोक्यां न वाजसनेयवेदनामाप्यश्रूयत । समपद्यन्त च बहून्यश्वमेधादीनि कर्माणीति पुराणेतिहासग्रन्थेभ्योऽवगम्यते । स कालः सत्यत्रेताद्वापरयुगसंज्ञोऽनुमितवर्षगणनयाऽष्टाशीतिसहस्राधिकाष्टात्रिंशल्लक्षात्मकः [३८,८८,०००] व्यतीयाय ।

ततो यजुर्वेदमध्यापयतो महर्षेर्वैशम्पायनस्यान्तेवासी भिन्नभिन्नशाखा अधीयानानां छात्राणां मेधावी अनुपमसामर्थ्यवान्परम्पराप्राप्तस्याद्यवेदस्य षडशीत्यन्तर्गतान्यतमया शाखया संस्कृतस्तेजःपुञ्ज इव याज्ञवल्क्य ऋषिश्चरकशाखैकदेशपारदृश्वाऽऽसीत् । असाधारणगुरुभक्तिमतोऽप्यस्य केनचित्कारणेन श्रीवैशम्पायनगुरोर्वैमत्यं समजनीति गुर्वनुज्ञयाऽधीतां शाखां परित्यक्तवान् । तां तैत्तिरीयामाचक्षते । न हि तेजस्विनोऽधःक्रियां सहन्त इति स उग्रेण तपसा सूर्यमुपासाञ्चक्रे । प्रसन्नादादित्याद्यजुर्वेदमवाप्य तदुपरि ब्राह्मणं निर्ममे इति भारतादवगम्यते । अयं यजुर्वेदः समनन्तरोक्तवर्षपूगोत्तरमाविर्भूतो वाजसनेयतया प्रसिद्धोऽपरोऽभिधीयते ।

'यजुर्वेदस्य षडशीति भेदा भवन्ति' इति चरणव्यूहस्तु आद्ययजुर्वेदपरः । तत्रोपलभ्यमाना भेदाः चरका आह्वरकाः

कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वारतन्तवीयाः श्वेताः श्वेततरा औपमन्यवः पाताण्डिनेया मैत्रायणीयाश्चेत्यादि तथा चरकविशेषाणां तैत्तिरीयाणां द्वौ भेदावित्यादि सर्वमार्यविद्यासुधाकरे निरूपितं परमगुरुचरणैस्तत्तत एवात्रधार्यम् ।

' एकशतमध्वर्युशाखाः ' इति महाभाष्यं तु– आद्ययजुर्वेदस्य षडशीति शाखासंख्यायां वाजसनेयनामकस्यापरयजुर्वेदस्य कण्वादिपञ्चदशशाखानां सम्मेलनेन सङ्गतं भवति । इत्याद्यभिधायाग्रे– ' अथ सूर्योपलब्धाद्वेदात्पूर्वं वेदे न किञ्चिद्भेदकं विशेषणमासीत् । पश्चात्तु ' अरुणदुत्तमः ' इति न्यायेन श्रीयाज्ञवल्क्योपलब्धं यजुर्भागं शुक्लमभिमन्यमानाः समग्रमाद्यवेदं कृष्णमाचक्षते, तत्तु न विचारसहं सर्ववेदस्य तथात्वे नियामकाभावात् ।

न च– 'तानीमानि शुक्लानि यजूंषि' इति ब्राह्मणं नियामकं तद्ब्राह्मणस्य श्रीयाज्ञवल्क्योद्भावितत्वेन तत्पूर्वमसत्त्वेन तस्यानियामकत्वात्तथा व्यवहारस्यानावश्यकत्वाच्च । अपरवेदस्य नवीनत्वं प्रकटयितुं येषां कृष्णशुक्लभेदार्थमाग्रह एव तैर्याज्ञवल्क्यसंसर्गवतां यजुषां तद्रूपत्वं वक्तव्यम् । तथा च याज्ञवल्क्योपलब्धस्यापरवेदस्य शुक्लत्वं, याज्ञवल्क्याधीतत्यक्तस्य कस्यचिदाद्ययजुर्वेदीयैकभागस्य कृष्णत्वं, न तु समग्रस्याद्यवेदस्येत्येवलभ्यते । स च भागस्तैत्तिरीय इति पुराविदो वदन्ति ।

अत्रोपष्टम्भकं—

शुक्लं कृष्णमिति द्वेधा यजुश्च समुदाहृतम् । शुक्लं वाजसनेयं स्यात्कृष्णं स्यात्तैत्तिरीयकम् ॥

इति स्मृत्यन्तरम् । "एवं सति तदुभयोपाधिविनिर्मुक्तस्य ब्रह्मणा स्मृतस्य वैशम्पायनाध्यापितस्य वेदस्य आद्ययजुर्वेद इति व्यवहारः सिद्ध एव" इत्यादि वस्तुतस्तु– वेदस्य शब्दब्रह्मतया निरुपाधिकस्यैव ब्रह्मत्वेन शुक्लकृष्णोपाध्यनौचित्यम् । " इत्यन्तम् ।

एतस्मिंश्च पं० श्रीरामकृष्णशास्त्रिणो वक्तव्ये सत्यपि भूयसि वैमत्ये, न सर्वोऽप्यंशः परामृश्यते, किन्तु यावानंशः प्रकृतप्रसंगमभिस्पृशति तावानेव । तथाहि- एकशतशाखात्मकस्य यजुर्वेदस्य शुक्लकृष्णतया भेदशालित्वे स्वीयामरुचिं द्यापरभेदवत्तान्यरूपि । परञ्चारुचौ कारणानि नोट्टङ्कितानि । नापि शुक्लत्वकृष्णत्वनिरूपकः प्राङ्निरूपितः प्रामाणिकवचःसमुदायोऽपार्थकः कृतः । तथाऽऽद्यापरभेदवत्त्वे उपष्टम्भकानि मूलवचनानि नोद्धृतानि । अतस्तेषामभिप्रेतं श्रद्धेयं न वेति सन्दिह्यते नश्चेतसा । अस्मन्मते तु– प्रायः सर्वत्रेतिहासपुराणेषु चरणव्यूहादिपरिशिष्टेषु श्रुतिस्मृतिषु शिष्टपरम्परासु चैकशतशाखात्मकस्य यजुर्वेदस्य मध्ये षडशीतिशाखासङ्घः कृष्णः, पञ्चदशशाखासङ्घः शुक्ल इति यो व्यवहारः स मौलिकत्वात्प्रामाणिकत्वाद्वा च वृद्धमा च बालं प्रख्यातत्वाच्चावश्यं समादरणीयः । आद्यापरविभागोत्प्रेक्षणं तु केवलमुपलब्धिपौर्वापर्यमूलं तदितरप्रमाणविधुरमतोऽकिञ्चित्करमिति ।

## यजुर्वेदः ।

अत्र विमृष्टव्यमेव चेद्वास्तविकी स्थितिरन्यादृशी । तथाहि– मूलतो महर्षिणा वैशंपायनेन श्रीमतो वेदव्यासादधीतस्य यजुर्वेदस्य सप्तविंशति शाखाः कृताः । तदुक्तं विष्णुपुराणे तृतीयेंऽशे पञ्चमेऽध्याये—

यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः । वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् । याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विजः ॥
शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा ॥ ' इत्यादि [१-३] सप्तविंशत् ।

सप्तविंशतिः यजुषः प्रधानशाखाः इति तट्टीकायाम् । वैशम्पायननामेति । अस्यैव चरक इति नामान्तरम् । तथा च- 'कलापी वैशम्पायनान्तेवासिभ्यश्च कठचरकाल्लुक् एतत्पाणिनीयसूत्रयोः काशिकावृत्तौ–वैशम्पायनान्तेवासिनो नव । चरक इति वैशम्पायनस्याख्या । तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते । वैशम्पायनान्तेवासी कठः । कठान्तेवासी खाण्डायनः । वैशम्पायनान्तेवासी कलापी' इति । ते च नव शिष्या अनयोरेव सूत्रयोस्तत्त्वबोधिन्यां प्रोक्ताः-- वैशम्पायनान्तेवासिनस्तु नव । १ आलम्बिः, २ कलिङ्गः, ३ कमलः, ४ ऋचाभः, ५ आरुणिः, ६ ताण्ड्यः, ७ श्यामायनः, ८ कठः, ९ कलापी इति । तत्र कठा द्वादश— १ चरकाः, २ आह्वरकाः, ३ भ्राजिष्ठलकठाः, ४

प्राच्यकठाः, ५ कपिष्ठलकठाः, ६ वारायणीयाः, ७ वारायणीयाः, ८ श्वेताः, ९ श्वेताश्वतराः, १० औपमन्यवाः, ११ पाताण्डिनेयाः, १२ मैत्रायणीयाः, इति चरणव्यूहे ।

तत्रापि मैत्रायणीयाः सप्त—१ मानवाः, २ वाराहाः, ३ दुन्दुभाः, ४ ऐकेयाः, ५ हारिद्रवीयाः, ६ श्यामाः, ७ श्यामायणीयाः, इति चरणव्यूहे एव ।

तत्रापि हारिद्रवीयाः पञ्च—१ आसुरिणः, २ गार्ग्याः, ३ शार्कराक्ष्याः, ४ मार्गाः, ५ वासवीयाः, इति चरणव्यूहे एव ।

तथा कालापाश्चत्वारः— १ हारिद्रवीयाः, २ छागलिनः, ३ तौम्बुरुविनः, ४ औलुपिनः, इत्युक्तपाणिनिसूत्रयोः पातञ्जलमहाभाष्ये तत्त्वबोधिन्यां चेति । यद्यप्यत्र हारिद्रवीयानां कठेषु कालापेषु चोभयत्र पाठः— तथापि तेषां न पार्थक्येन परिगणना । अतश्च न सप्तविंशतिसंख्याक्षतिः । ता एताः सप्तविंशति शाखाः प्राच्योदीच्यमध्यदेश्यभेदात् त्रिधा भिद्यन्ते । नव प्राच्या नवोदीच्या नव मध्यदेश्याश्चेति । तथा चाभ्यधायि ब्रह्माण्डपुराणे पूर्वभागे पञ्चत्रिंशत्तमेऽध्याये—

षडशीतिस्तथा शिष्याः संहितानां विकल्पकाः । सर्वेषामेव तेषां वै त्रिधा भेदाः प्रकीर्तिताः ॥
त्रिधा भेदास्तु ते वेदभेदेऽस्मिन्नवके शुभे । उदीच्या मध्यदेश्याश्च प्राच्याश्चैव पृथग्विधाः ॥
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह । मध्यदेश्यप्रतिष्ठाता चारुणिः प्रथमः स्मृतः ॥
आलम्बिरादिः प्राच्यानां त्रयो देश्यादयस्तु ते । इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः ॥' इति

अन्येतरा एकोनषष्टिः शाखा अस्यैव सप्तविंशच्छाखासङ्घस्य मूलाग्ररूपो विस्तरः । तेन 'षडशीतिस्तथा शिष्याः सर्वेषामेव तेषां वै त्रिधा भेदाः' इत्याद्युक्तिर्न विसंवाद्यते इति । [ अत्र दशमे पृष्ठे मुद्रितो यजुर्वेदवृक्षो दर्शनीयोऽस्ति । ]

आसु सप्तविंशतिशाखास्वन्यतमां शाखां महर्षेर्वैशम्पायनादधीतां याज्ञवल्क्यस्तत्याज । तां त्यक्तां शाखामन्ये वैशम्पायनस्य—'१ कठः, २ वारायणः, ३ उपमन्युः' इत्येते त्रयश्चरकाः शिष्यास्तित्तिरिपक्षिणो भूत्वा जगृहुस्ततस्ते तित्तिरयः कृष्णयजुर्वेदिन इति प्रसिद्धिं गताः । इतो याज्ञवल्क्यो भगवन्तमादित्यमाराध्य तस्मादन्यं यजुर्वेदमधीयाय । ततः शुक्लयजुर्वेद इति प्रासिद्धोऽभूत् । शुक्लत्वकृष्णत्वकारणानि तु पूर्वमेव निगदितान्यतो न पुनर्निगद्यन्ते । एष इतिहासः प्रायः सर्वेष्वपि पुराणेषु प्रख्यातोऽतो न मूलवचनान्युद्धृतानि । प्रकृता मैत्रायणी शाखा तु मूलभूतासु सप्तविंशतिषु यजुर्वेदशाखास्वन्तर्भवत्यतस्तस्याः 'यजुर्वेदः' इत्येव शुक्लकृष्णाद्यापरलक्षणोपाधिविवर्जितो व्यवहारोऽस्तु नाम ।

सर्वस्य षडशीति-शाखा-कदम्बकस्य यजुर्वेदस्येदानीन्तना परम्परया सम्प्रवर्तमाना कृष्णत्वप्रसिद्धिरध्ययनधर्माचारकर्मकलापसादृश्यनिबन्धना समानगुरुत्वनिबन्धना चेति वयं प्रतीमः ।

## मैत्रायणी शाखा ।

इयं च मैत्रायणी शाखा चरणव्यूहमनुसृत्य प्राङ्निरूपितानां द्वादशानां चरकाणां कठानां वा मध्येऽन्तिमा शाखेति वेदितव्या । मैत्रायणीयानां सप्त भेदाः, हारिद्रवीयाणां पञ्च भेदाः, कालापानां चतुर्भेदास्तु पूर्वमेव प्रपञ्चिताः । शाखा-नाम-'स्वकुलपारम्पर्यागतस्वाध्यायशब्दवाच्यस्य वेदस्य नाम' इति शामशास्त्रि-द्रविड-विरचिते वेदविचारे । एकस्मिन्नपि वेदेऽनेक-शाखाभेद-हेतुस्तु तत्रैव वेदविचारे— 'स्वरसंस्कार-पाठवाक्यन्यूनाधिक्य-सूत्र-ब्राह्मणादि-वैलक्षण्यमेवेति । एतेन सर्वोऽपि शाखाभेदः संहिताभेदमूल इति सिध्यति ।

'षडशीतिस्तथा शिष्याः संहितानां विकल्पकाः ।'

इत्येष ब्रह्माण्डपुराणस्थो वेदविभागादनन्तरमुपक्रान्त उपक्रमोऽप्ययमुमेवार्थं पुष्णातीति । एतेन यत्कैश्चिदुच्यते काश्चन शाखाः संहिता-भेदमूलाः, काश्चन शाखाः सूत्रभेदमूला इति तत्तुच्छमेवोक्तविरोधात् ।

# सप्तविंशतिशाखात्मको यजुर्वेद-वृक्षः ।




१ अयं च शाखापट्टो चरणव्यूह-ब्रह्माण्डपुराणानुसारी ।

❀ एतच्चिह्नाङ्किता एके एव न भिन्नाः ।

१२+७+५+४=२८-१
२७

आपस्तम्बाः, सत्याषाढाः, हिरण्यकेशिनः, बौधायनाः, भारद्वाजाः, इतीमाः, संज्ञास्तु सूत्रभेदमूलाः ।

यथा आश्वलायनाः, शांखायनाः, कातीयाः, खादिरा इत्याद्याः संज्ञाः । एताश्च सर्वाः संज्ञाः संव्यवहारार्थाः । स च व्यवहारः प्राक्छाखासंघपरिच्छेदे प्रदर्शित एवेति । आस्तां नामेत्येवं मुख्यगणेऽवान्तरगणानां विस्तरः सम्पन्नः ।

एतेनेयं मैत्रायणीया संहिता अद्योपलब्धयावद्यजुर्वेदसंहितासु प्राचीनतमा चेति मन्तव्यमापद्यते ।

## मैत्रायणी-संहिताकालः ।

मैत्रायणी-संहिताया वेदैकदेशत्वात्तद्रूपेणावस्थानकालः— 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' इत्यत्र ब्रह्मसूत्रभाष्ये श्रीमच्छङ्करदेशिकपादैर्वेदत एव सृष्टिसम्भवस्य साधितत्वात् ' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ' इति श्वेताश्वेतरश्रुत्या ।

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

इति स्मृत्या च सृष्ट्यादिरेव ब्रह्मद्वारको वेदाविर्भावकाल इति । संहितात्वेनावस्थानकालस्तु—

ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः । चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ इति ।

एवं चतुर्युगेषु परम्परया प्राप्तास्ते वेदाः द्वापरमादिर्यस्य तद्यनांशलक्षणस्य समयस्य तस्मिन्द्वापरान्ते व्यस्ता विभक्ताः ।

अस्मिन्नप्यन्तरे ब्रह्मन्भगवांल्लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥
पराशरात्सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम् ॥ इति ।

एतेन द्वापरस्य चरमे काले कलेः प्रारम्भात्पूर्वं भगवता व्यासरूपेणावतीर्य ऋगादिरूपेण वेदराशिश्चतुर्धा व्यभाजि, वेदविव्यसनाद्व्यास इति स्वनामान्वर्थमकारि च । तथा—

ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे । अथ शिष्यान्स जग्राह चतुरो वेदपारगान् ॥
ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः । वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् ॥
जैमिनिं सामवेदस्य तथैवाथर्ववेदवित् । सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥

तत्र—

बिभेद प्रथमं विप्रः पैल ऋग्वेदपादपम् । इन्द्रप्रमितये प्रादाद्बाष्कलाय च संहिते ॥
चतुर्धा स विभेदाथ बाष्कलिर्द्विजसंहिताम् । इत्यादि । यजुर्वेदतरोः शाखाः सप्तविंशन्महामुनिः ।
वैशम्पायन नामासौ व्यासशिष्यश्चकार वै । शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ॥

इत्यादि च [ विष्णुपुराणे ३।४-५ ] इत्येवं क्रमेण प्रत्येकस्य ऋगादिवेदस्य संहितारूपेण विभजनं शिष्यप्रशिष्यद्वारा तद्ग्रहणपरम्परयाऽध्ययनं च तदानीमेव द्वापरान्ते कलेरादौ प्रवृत्तमासीदिति सुविशदमवगम्यते । सोऽयं संहितीकरण-कालः प्राचीनानां नवीनानां चैतिह्यविदां मते इतः पूर्वं षट्सहस्र ६०००] संवत्सरात्प्राक्तनः काल इति सुनिश्चितम् ।

अतो मैत्रायणी-संहिताया अपि संहितात्वाद्यजुर्वेदस्य सप्तविंशत्संहितास्वन्यतमत्वाच्च स एव संस्करणकाल + इति ।

## मैत्रायणी-संहिता ।

'मित्रशब्दस्य नडादित्वाद्नडादिभ्यः फगिति फगि कृते आयन्नादेशे मैत्रायण' इति, तस्माच्छतस्थाने इयन्नादेशे च विहिते मैत्रायणीया इति सिध्यति । किञ्च हरिवंशे चतुस्त्रिंशदध्याये—

दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृप । मैत्रायणी ततः शाखा मैत्रेयास्तु ततः स्मृताः ॥ इति ।

---

+ कालनिर्णयानुग्राहकं तादृशं सुदृढमन्तर्गतप्रमाणं तु मैत्रायणी--संहितायां नोपलभ्यते ।

अर्थान्मैत्रेयेण श्रुतर्षिणा प्रवर्तिता संहिता मैत्रायणीसंहितेति प्रसिद्धिमिता । एषा च मैत्रायणी--संहिता द्विषष्ठ्यध्यायात्मिका कण्ठग्राह्यस्वरा ब्राह्मणमिश्रा चेति ।

## एतदध्ययनम् ।

मन्त्राः पूर्वं समुत्पन्नाः कल्पो मन्त्रानुसारगः । ब्राह्मणे तु यदुत्पन्नं तत्प्रमाणं निबोधत ॥
काण्डानि चात्र चत्वारि व्यापकानि तु कर्मणाम् । औपनिषदमारण्यं विज्ञेयं पञ्चमं तथा ॥
षट्शतान्यनुवाकानां वेदे मैत्रायणीयके । त्रयोविंशोत्तराणि स्युरेषा संख्याऽऽनुवाककी ॥
प्रथमं शतं 'प्र वो वाजे' द्वितीयं 'विश्वरूपके' । तृतीयं शत 'मायाहि' चतुर्थं 'हृदये' शतम् ॥
संहितायां समाम्नायां 'खिलादौ' पञ्चमं शतम् । 'प्रैषेषु' च शतं षष्ठमनुवाके त्रिरुत्तरे ॥
पदान्यायुतान्याहुश्चत्वार्यष्टौ शतानि च । गोपथेऽष्टौ सहस्राणि मातरश्च गणाः स्मृताः ॥
एकं शतसहस्रं तु सहस्राणि च विंशतिः । त्रिपञ्चाशच्छतान्याहुः पदानां च द्विसप्ततिः ॥
पुनरुक्ते सहस्राणि पुनरष्टौ शतानि च । एकादशभिरूनानि यानि गायन्ति गोपथे ॥
सखिले पुनरुक्तानां षट्सहस्राणि संख्यया । ऋचां द्वादशसाहस्रं संहिता षट् खिलानि तु ॥
अनुष्टुभा चतुष्पदा छन्दसा सम्मिता बुधैः । अनुष्टुप्पादवृत्तेन यजुषां स्थानमिष्यते ॥
त्रिसहस्रो यजुःपिण्डः कल्पस्त्रिंशच्छतः स्मृतः । द्वादशैव सहस्राणि तथा सप्त शतानि च ॥
सप्तत्रिंशत्तथाऽऽर्चीनां ब्राह्मणं परिचक्षते । अक्षराणां प्रवक्ष्यामि परिसंख्या सुनिश्चितम् ॥
चतुःशतसहस्रं तु न्यूनं षोडशभिः स्मृतम् । अग्रेणाङ्केन संयुक्तं लक्षणेन समायुतम् ॥
'इषे धाः' शतसाहस्री संख्यायोगः स एव तु ॥
मन्त्रब्राह्मणयोर्वेदस्त्रिगुणो यत्र पठ्यते । यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः ॥

मन्त्रब्राह्मणयोर्व्यामिश्रत्वस्य संहितापदक्रमरूपं त्रिविधं पठनं त्रिगुणत्वमित्यर्थः । तथा तत्रैवाग्रे—

मैत्रायणीयशाखायां संहितायां तु कण्डिकाः । द्वे सहस्रे च चत्वारि शतानि सप्ततिस्तथा ॥
अनुवाकास्तु चत्वारि शतानि परिसंख्यया । प्रपाठकास्तु त्रिंशद्वै प्रसंख्याता यथाक्रमम् ॥ इति ।

एवमष्टावक्रकारिकासु मैत्रायणीयाध्ययनं संख्यया सङ्कलितमिति ।

आर्यविद्या-सुधाकरे तु—

अष्टादश सहस्राणि मन्त्रब्राह्मणयोः सह । यजूंषि यत्र पठ्यन्ते स यजुर्वेद उच्यते ॥

इति एवं यजुषां परिसंख्यानमुक्तम् ।
वाराहगृह्ये मानवगृह्ये चोत्सर्गोपाकर्मणी प्रकृत्याध्ययनस्यादावन्ते च शान्तेः पठनमभिहितम् ।
तथा च—

## आदिमा शान्तिः ।

'ऋतं वदिष्यामि, सत्यं वदिष्यामि, ब्रह्म वदिष्यामि, तन्मामवतु, तद्वक्तारमवतु, अवतु मां, अवतु वक्तारं, वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितं, आविरायुर्मयि धेहि, वेदस्य वाणीस्था उपतिष्ठन्तु' इति ।

## अन्तिमा शान्तिः ।

'एतेन धर्मेण, ऋतमवादिषं, सत्यमवादिषं, ब्रह्मावादिषं, तन्माऽऽवीत्, तद्वक्तारमावीत्, आवीदावीन्मामाऽऽवीत्तद्वक्तारं, वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितं, आविरायुर्मयि धेहि वेदस्य वाणीस्थाः प्रतिश्वसन्तु' इति ।

## मैत्रायणीय-संहितायां विषयाः ।

### प्रथमे काण्डे ।

| प्रपा० | विषयः |
|---|---|
| १ | दर्शपूर्णमासौ । |
| २ | अध्वरः । |
| ३ | ग्रहाः । |
| ४ | यजमानब्राह्मणम् । |
| ५ | अग्न्युपस्थानम् । |
| ६ | आधानम् । |
| ७ | पुनराधानम् । |
| ८ | अग्निहोत्रब्राह्मणम् । |
| ९ | चतुर्होतारः (चातुर्होतृकः) |
| १० | चातुर्मास्यानि । |
| ११ | वाजपेयः । |

### द्वितीये मध्यमे काण्डे ।

| प्रपा० | विषयः |
|---|---|
| १-४ | काम्या इष्टयः । |
| ५ | काम्याः पशवः । |
| ६ | राजसूयः । |
| ७-१३ | अग्निचितिः । |

### तृतीये उपरिकाण्डे ।

| | |
|---|---|
| १ | अग्निचितिब्राह्मणम् (जुहूमग्रीवः) |
| २ | '' तत्र दशानः । |
| ३ | '' तत्र स्तोमभागः । |
| ४ | '' तत्र वसोर्धारीयः । |
| ५ | '' '' '' '' |
| ६ | अध्वरादीनां त्रयाणां विधिः । तत्राग्नावैष्णवम् । |
| ७ | '' '' |
| ८ | आसुरः । |
| ९ | सङ्क्रन्ताः । |
| १० | पात्नीवन्ताः । |
| ११ | सौत्रामणीयः । |
| १२-१६ | अश्वमेधः । |

### चतुर्थे खिलकाण्डे ।

| | |
|---|---|
| १ | पुरोडाशब्राह्मणम् । |
| २ | गोनामिकः । |
| ३-४ | राजसूयब्राह्मणम् । |
| ५-८ | अध्वरादीनां त्रयाणां विधिः । |
| ९ | प्रवर्ग्यः । |
| १०-१४ | याज्यानुवाक्याः । |

## मैत्रायणीय-संहितायां स्वर-विमर्शः ।

मैत्रायणीय-शाखायां तावच्चातुःस्वर्यं मुख्यम् । ते च चत्वारः स्वराः—

१ उदात्तः, २ अनुदात्तः, ३ स्वरितः, ४ प्रचयः चेति । तत्र स्वरितः सप्तधाऽऽस्ते—

१ जात्यः, २ अभिनिहितः, ३ प्रश्लिष्टः, ४ क्षैप्रः, ५ तैरोव्यञ्जनः, ६ तैरोविरामः, ७ पादवृत्तः, चेति भेदात् ।

तत्र जात्यादयश्चत्वारः स्वराः प्रकम्पन्तेऽतस्तद्भेदश्चतुर्धा कम्पस्वरः । इति स्वराः ।

### स्वरलक्षणानि स्वरलेखन-पद्धतिश्च ।

(१) उच्च उदात्तः— ऊर्ध्वं रक्तोऽर्थादुद्रेखितश्चोदात्तः । यथा 'प्रं'

(२) नीचोऽनुदात्तः— नीचरक्तोऽर्थादधोरेखितश्चानुदात्तः । यथा 'चु'

(३) उपरि त्रिधारक्तस्तिर्यग्रक्तो वा (ω) स्वरितः । यथा 'सुभूताय कर्मणा, स्वः' (एष ।।।—उपरिलिख्यते)

(४) अकम्पस्वरितपरोऽक्षरमध्ये रक्तः प्रचयः । यथा 'त्र्यम्बकं यजामहे' (एषोऽक्षरमध्ये लिख्यते)

(५) एकपदेऽनुदात्तपूर्वोऽपूर्वो वा स्वरितो जात्यः । अथवा व्यञ्जनैर्यवौ यत्र प्रयुज्येते ततः परम् । अपूर्वो नीचपूर्वो वा जात्यः स्वारः स उच्यते । यथा— 'धान्यम्, तन्वः, अथवा 'धान्यम्, स्वरिति ।
उभयथा प्रवृत्तिः ।

(६) उदात्त एकार ओकारश्च अनुदात्तलोपेऽभिनिहितः । अथवा— एदोतोरुच्चयोर्यत्र नीचोऽकारः परो यदि । एकीभावो भवेत्तत्र स्वारोऽभिनिहितस्तदा ॥ यथा— प्रसुवेऽश्विनोः, स्कुम्भोऽसि, अथवा
वेवोऽसि, येऽराः, योऽह्यः' ।

(७) उदात्तानुदात्तयोर्ह्रस्वयोरिकारः प्रश्लिष्टः स्वरितः । अथवा— इकार उच्चः पूर्वस्मिन्परस्मिन्निहितस्य च । प्रश्लिष्टमाहुराचार्याः स्वरवर्णविदस्तदा ॥ यथा— 'द्विवीव चक्षुराततम्, अभीमम्' ।

(८) उदात्तेकारोकारयोः स्थाने यवयोः परोऽनुदात्तः क्षैप्रः । अथवा–
इ उ स्थाने यवौ जायेते उच्चयोस्तयोः । ताभ्यामुभयतः स्वारः क्षैप्र इत्यभिधीयते ॥
यथा– युयोध्यस्मत्, न्विन्द्रम् ।

(९) उदात्तपूर्वं यत्किञ्चिच्छन्दासि स्वरितं भवेत् । एष सर्वैर्बहुस्वारस्तैरोव्यञ्जन एव च ॥
यथा– केतवो विरश्मयो जनं अनु ।

(१०) अवग्रहात्परो यत्र स्वरितः स्यादनन्तरः । तैरोविरामं तं विन्द्यादुदात्तो यच्च विग्रहः ॥
यथा– गोपता इति गोऽपतौ, यज्ञपतिमिति यज्ञऽपतिम् !

(११) स्वरे चेत्स्वरितो यत्र विवृत्त्या तत्र संयुतः । एतत्तु पादवृत्तस्य लक्षणं परिकीर्तितम् ॥
यथा– ध्रुवाऽअसदन् ।

जात्यादयश्चत्वारः प्रकम्पन्ते उदात्तस्वरितपरत्वे क्रमेण यथा—

स्व१रिति । यो१ह्यः । ये१राः अभी१मम् । ध्य१स्मत् । उ१किम् । देवो१सि ।

उदात्तानुदात्तस्य स्वरितः । यथा– ' इषे त्वा ' ।

नोदात्तस्वरितयोः । यथा– इषे त्वोर्ज्जे, अश्वाश्वः ।

स्वरितात्संहितायामनुदात्तानाम् । यथा– अग्निमीळे ।

नोदात्तः स्वरितयोः । यथा– शन्नो देवीः, व्यचक्षयत्स्वः ।

उदात्तवानेक उदात्तः । यथा– प्रार्प्पयतु, क्वावरम् । इति ।

एकोदात्तं पदं विन्द्यात्तच्छिष्टं निहतं स्मृतम् । उदात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ॥
उदात्तात्स्वरितात्पूर्वो नान्यमापद्यते स्वरम् । इति । स्वरलक्षणानि स्वरपद्धतिश्च ।

प्रकृते संहितामुद्रणे उपरिष्टात्प्रदर्शितायाः स्वरलेखनपद्धतेः क्वचित्क्वचित्स्थले विपरिवर्तनं कृत्वा स्वराणामङ्कनमादृतं मुद्रणसौकर्याय । तच्च स्वरविपरिवर्तनं सङ्केतमात्रेण दिग्दर्शितमादिमे एव पृष्ठे । तदेतत्सर्वत्राप्यनुसन्धेयं वेदवेदिभिरिति ।

वेदवेदार्थपरिज्ञाने स्वरविज्ञानन्तु परमावश्यकम् । यतः स्वरपरिज्ञाने वेदपाठः याथातथ्यः शुद्धश्च भवति । तथा वेदार्थावबोधोऽपि यथार्थतो जायते । अत एवाहुर्विचक्षणवर्ण्याः—

वेदपाठे स्वरा ह्येते शुद्धपाठप्रयोजकाः । वेदार्थस्यानवच्छेदे विशेषज्ञप्तिकारणाः । इति ॥

अत एव च शतपथश्रुत्या– ' श्रीर्वैस्वरः ' । [ श० ब्रा० ११।४।२।१० ]
इति स्वरस्य वेदसम्पद्रूपता प्रतिपादिता । स्वरापरिज्ञानेऽनिष्टफलमपि श्रूयते पाणिनीयशिक्षायाम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ॥

अतोऽवश्यं स्वरपरिज्ञाने प्रयतितव्यमिति यावत् ।

## ऋग्वेदसंहिताया मैत्रायणीयसंहितायाश्च स्वरलेखनपद्धतेस्तारतम्यम् ।

प्रायः ऋग्वेदसंहिताया मैत्रायणीयसंहितायाश्च स्वरलेखनपद्धतिः समाना । क्वचित्क्वचिद्भेदः ॥
स च यथा— ऋक्संहितायामुदात्तस्वरश्चिह्नहीनः, मैत्रायणीयसंहितायामुदात्तस्वर ऊर्ध्वं रेखाङ्कितः, उदाहरणं—

तें देवां रात्रिमसृजन्त [ ते देवा रात्रिमसृजन्त ]।

तथा ऋग्वेदे जात्यः स्वरितः स्वरः उर्ध्वं रेखाङ्कितः, उदाहरणं--वीर्यं । स्वः ।

मैत्रायणीये तु जात्यस्वरितोऽनुदात्तपरत्वेऽधोऽर्धवक्ररेखाङ्कितः उदात्तपरत्वे त्वचिह्नितस्त्र्यङ्कपूर्वः । क्रमेणोदाहरणं—

सोऽकामयत । अ३प्स्वन्तः इति ।

अनेनैवं ज्ञाप्यते वैदिकानां स्वरलेखनपद्धतौ विभिन्नः सङ्केतः परस्परं शाखापार्थक्यप्रदर्शनकारण इति भाति। तत्र केषाञ्चित्स्वरलेखनपद्धतिः स्वरचिह्नानामल्पत्वकल्पनेन लाघवमनुसरति, केषाञ्चित्स्वरचिह्नानां बहुत्वकल्पनया गौरवमावहति । तथापि फलोन्मुखं गौरवं न दोषायते । अत उभयविधाऽपि स्वरलेखनपद्धतिः शास्त्रदृष्ट्या साधीयसीति नश्चेतसा प्रतीयते ।

काश्मीरप्रदेशे ऋग्वेदसंहिता मैत्रायणीयस्वरलेखनपद्धत्यैव विलिखिताऽऽस्ते इति केवलं श्रूयते, परन्त्वद्यावधि न सा दृक्पथमागता । इतोऽधिकविशेषस्तु मैत्रायणीयप्रातिशाख्यादौ द्रष्टव्यः ।

## मैत्रायणीय-संहितायामुल्लिखिता ऋषयः ।

१ कपिवनो भौवायनः [ मै० १।४।५।३४ ]
२ केशिनं वैदार्भ्यं गन्धर्वाप्सरसोऽपृच्छन् । [ मै० १।४।१२।३४ ]
३ एतद्ध स्म वा आह केशी सात्यकामिः केशिनं दार्भ्यम् । [ मै० १।६।५।४६ ]
४ ततः केशी षण्डिकमौद्भारिमभ्यवदत् । [ मै० १।४।१२।६० ]
५ तद्ध स्म वा आह नारदः । [ मै० १।५।८ ]
६ आरुण औपवेशिः । [ मै० १।५।९; ३।६।४-६; ३।७।४; ३।१०।५ ]
७ दाक्षायणाः । [ मै० १।८।९।६० ]
८ क्रौतो वैतहोत्रः कूणां क्रौत्ये । [ मै० ४।२।६।४० ]
९ वसिष्ठ एव प्रायश्चित्तिं विदाञ्चकार । [ मै० १।४।१२।६१ ]
१० वसिष्ठः जमदग्निः ।
११ अगस्तिः कश्यपः ।
१२ एतौ वै विश्वामित्रो यज्ञस्याणी अपश्यत् । [ मै० ४।८।४।७ ]
१३ इति ह स्माह भरद्वाजः । [ मै० ४।८।४।७ ]
१४ एतद्ध स्म वा आह वासिष्ठः सात्यहव्यः । [ मै० ४।८।७।१४ ]

## मैत्रायणीयोपनिषद्युल्लिखिता ऋषयो राजानश्च ।

| | | |
|---|---|---|
| १ शाकायन्यः २।१,६।३० | ८ यौवनाश्वः १।५ | १५ ययातिः १।५ |
| २ कौत्सायनः ५।१ | ९ वध्रियाश्वः ” | १६ अनरण्यः ” |
| ३ मैत्रिः १।३,२ २ | १० अश्वपतिः ” | १७ अक्षसेनः ” |
| ४ सुद्युम्नः १।५ | ११ शशबिन्दुः ” | १८ मरुत्तः ” |
| ५ भूरिद्युम्नः ” | १२ हरिश्चन्द्रः ” | १९ भरतः ” |
| ६ इन्द्रद्युम्नः ” | १३ अम्बरीषः ” | २० बृहद्रथः १।१,२।१ |
| ७ कुवलयाश्वः ” | १४ स्वर्यातिः ” | इत्यादिः |

## मैत्रायणीय-प्रातिशाख्योल्लिखिता ऋषयः ।

| | |
|---|---|
| १ आत्रेयः ५।३३,२।५,६।८ | १० अग्निवेश्यः ९।४ |
| २ वाल्मीकिः ५।३८,२।६,२।३०,९।४ | ११ प्लाक्षायणः ९।६, २।६।२-३ |
| ३ पौष्करसादिः ५।३९-४०,२।१।१६,२।५।६ | १२ वात्सप्रः १०।२३ |
| ४ प्लाक्षिः ५।४०, ९।६,२।६ | १३ अग्निवेश्यायनः २।२।३२ |
| ५ कौण्डिन्यः ५।४०, २।५।४, २।६।३, २।६।९ | १४ शांखायनः २।३।७ |
| ६ गौतमः ५।४० | १५ शैत्यायनः २।५।१, २।५।६, २।६।२-३ |
| ७ साङ्कृत्यः ८।२०, १०।२२, २।४।१७ | १६ कौहलीयपुत्रः २।५।२ |
| ८ उख्यः ८।२१, १०।२१, २।४।२५ | १७ भारद्वाजः २।५।३ |
| ९ काण्डमायनः ९।१, २।३।७ | |

## अन्यत्रोपलभ्यमानानि मैत्रायणीयश्रुतेरुद्धरणानि ।

१ मैत्रायणी श्रुतिः– ' अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत ' इति । विश्वेश्वर्यां यतिधर्मसंग्रहे ।

२ ,, ,, ' त्रीन्वैणवान्दण्डान्दक्षिणे पाणौ धारयेदेकं वा यद्येकं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं च त्रिषु वर्णेष्वेकागारं भैक्षमश्नीयान्माधुकरीं वा ' इति । विश्वेश्वर्यां यतिधर्मसंग्रहे ।

३ ,, ,, ' अथान्यः परिव्राडेकशाटी परिहितो मुण्डी उदरपाच्यरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत् । सायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्षचरणमभिशस्तवर्जम् ' इति । विश्वेश्वर्यां यतिधर्मसंग्रहे ।

४ मैत्रायणीयाः पठन्ति-- ' मनुर्वै यत्किञ्चावदत्तद्भेषजमेवावदत्, इति । [ मै. २।१।५ ] कुल्लुकादि-मनुस्मृति-टीकासु ।

५ मैत्रायणीया श्रुतिः– ' ततो यः सोमोऽत्यरिच्यत तमग्नाऽउपप्रावर्तयत् । स्वाहेन्द्रशत्रुर्वर्धस्व ' इति । (मै. २।४।३) इति– 'यथेन्द्रशत्रुः स्वरतोऽपराधात् । इत्यत्र पाणिनीय–शिक्षा–व्याख्याने ।

६ मैत्रायणी श्रुतिः-- 'अग्निगोदानिको मैत्रायणीरिति श्रुतिः ' (मानवगृह्ये १।२१।१३)

अत्र प्रथमानि त्रीण्युद्धरणानि प्रकृतायां मैत्रायणी-संहितायां ब्राह्मणे वा नोपलभ्यन्ते । प्रायः इमान्युद्धरणानि काठक-ब्राह्मणस्य स्युरिति भाति । यतः क्वचिद्धस्तलिखितपुस्तकादौ उद्धरणानामग्रे– 'इति काठक-ब्राह्मणम् इतिलेखोऽधिको दृश्यते।

७ मैत्रेयोल्लेखः- 'अथातः शौव उद्गीथः तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ' इति छान्दो०(१।१२।१)

८ ,, 'एतद्ध स्मैतद्विद्वाꣳसमेकादशाक्षं मौद्गल्यं ग्लावो मैत्रेयोऽभ्याजगाम, इति गोपथब्राह्मणे पूर्वार्धे (१।३१)

९ ,, सत्याषाढश्रौतसूत्रव्याख्याने गोपीनाथीये मैत्रायणीयब्राह्मणश्रुतिरुद्धृता वर्तते ।

१० ,, न भाल्लवकमस्माभिस्तथा मैत्रायणीयकम् ब्राह्मणं चरकाणां च श्रुतं सन्त्रोपबृंहणम्' इति ऋग्वेदभाष्ये उपक्रमे वेदार्थज्ञानोपायं प्रकृत्य वेङ्कटमाधवः प्राह ।

११ ,, " शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः " इति चरकसंहितायां सूत्रस्थाने प्रथमेऽध्याये लोकोपकारिणी महर्षिसभाघटकमहर्षिसंघे ।

## मैत्रायणीसंहितायाः प्रकरणबद्धता ।

तैत्तिरीय-संहितापेक्षया मैत्रायणीयसंहितायां वाजसनेयिसंहितावत्प्रकरणबद्धता विशिष्टतया दृश्यते । केवलमेकां तैत्तिरीयसंहितां वर्जयित्वा प्रायः सर्वासु संहितासु प्रकरणविष्टत्वमस्ति । तत्र तावत्संहितापदव्युत्पत्तिः पर्यालोचनीया सम्पूर्वाद्धातेः कर्मणि क्ते 'दधातेर्हिः ' (पा. सू. ७।४।४२) इत्येवं संहितापदं निष्पन्नम् । अर्थानुसन्धानपूर्विका व्युत्पत्तिस्तु 'संहन्यन्ते विभिन्नार्षेयच्छन्दोदैवतविनियोगशालिनो मन्त्राः सूक्तानि वा यस्यां प्रकरणाद्यानुपूर्व्या एकत्रीक्रियन्ते सा संहितेत्युच्यते ' । तेन हि संहितात्वसमनियतवृत्तिवत्प्रकरणबद्धत्वमित्यर्थो निष्पद्यते ।

एवं चेत्तर्हि केवलमेकस्यां तैत्तिरीयसंहितायामेव तत्कुतो न विद्यत इति चेत्तत्र बीजमेतदेवाभाति, यत्—

यदैनमुक्तवान्कोपान्मुञ्च विद्यां मयेरिताम् । याज्ञवल्क्यगुरुः श्रीमान्वैशम्पायननामकः ॥१६॥
अष्टाङ्गयोगवित्तस्य शिष्यो वाजसनेयकः । करिणीकर्ममार्गेण विद्यां चच्छर्द सोऽपि ताम् ॥१७॥
भूमौ यजूंषि तान्यासन्सूर्यवर्चांसि सर्वतः । मुक्तानि याज्ञवल्क्येन वैशम्पायनवाक्यतः ॥१८॥
सर्वतः स्थितमालोक्य दीप्तं तं यजुषां गणम् । वान्तं शिष्येण सम्प्राह वैशम्पायननामकः ॥१९॥
शिष्यानन्यानिदं वाक्यं विस्मयाविष्टचेतसः । यथाशास्त्रमधीतानि यजूंषि मुनिसत्तमाः ॥२०॥
याज्ञवल्क्येन मुनिना सूर्यवर्चांसि तान्यतः । गृह्णीध्वं सहसा विप्रास्त्वरितं ब्रह्मणः सभाम् ॥२१॥
इत उत्प्लुत्य गच्छन्ति न्यैतान्यस्मद्धनानि भोः । वान्तानीति विचारं मा कुरुत ब्राह्मणोत्तमाः ॥२२॥
शरीरान्तरतो वान्तं भक्ष्यं भवति देहिनाम् । ततस्तित्तिरिरूपाणि कृत्वा झटिति योगतः ॥२३॥
दिवि भूमौ प्रसर्पन्ति गृह्णन्तु मुनिसत्तमाः । एवमुक्ते मुनिगणास्तेन तित्तिरिरूपिणः ॥२४॥
यजूंषि जगृहुः शीघ्रं सूर्यभानि समन्ततः । यथा तित्तिरयो लोके पतङ्गान्सर्वतः स्थितान् ॥२५॥
भक्षयन्ति क्षुधाऽऽक्रान्ता भूमौ वा नभसि स्थितान् । एवं मुनिगणः सोऽयं तित्तिरिः परिकीर्तितः २६
वान्त्या च भक्षणेनापि कृष्णान्यासन्यजूंष्यपि । ब्रह्मविद्या च तेष्वेषा कथिताऽऽरण्यके सदा ॥२७॥

इत्युपनिषद्रत्ने आत्मपुराणे दशमेऽध्याये तैत्तिरीये आनन्दवल्ल्युपनिषद्व्याख्याने ।

तथा चात्र तट्टीका—

'करिणीकर्म गजवत्पीतस्योद्धरणं तद्रीत्या । स याज्ञवल्क्योऽधीतमत्यजद्गुरूपदेशात् । यजूंषि यजुःसंज्ञा मन्त्रा याज्ञवल्क्येन त्यक्ताः । अभिमानिदेवरूपेण सूर्यवद्भास्वरमूर्तयो भूमौ सर्वतोऽवकीर्णा इत्यर्थः । वान्ता इति । अत्र वान्तत्वमालोच्य विलम्बो न कार्यः देहान्तरेण वान्तभक्षणे दोषाभावादित्यर्थः ' इति ।

किञ्च—

कृष्णं शुक्लमिति द्वेधा तत्कृष्णं तैत्तिरीयकम् । वैशम्पायनशिष्येण याज्ञवल्क्येन यद्यजुः ॥२॥
अधीत्य वान्तमाचार्यकोपभीतेन योगिना । गुरुः शिष्यमुवाचेत्थं क्रुध्वा केनापि हेतुना ॥३॥
प्रत्यर्पय मदीयां त्वं विद्यामत्यर्पयन्स च । योगसामर्थ्यतो विद्यां मूर्तां कृत्वाऽवमत्तदा ॥४॥
गृहीतं तद्यजुर्वान्तमित्यन्यान्गुरुरब्रवीत् । अन्ये तित्तिरयो भूत्वा किञ्चित्किञ्चिदभक्षयन् ॥५॥
प्रवर्तितः खण्डशस्तैर्न सम्यग्बुध्यते नृभिः । आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया ॥६॥
बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीरितम् । याज्ञवल्क्यस्ततः सूर्यमाराध्यासादधीतवान् ॥७॥
व्यवस्थितप्रकरणं तद्यजुः शुक्लं तदीर्यते । पौराणिकीं कथामेतां वेदव्याख्यान आदरात् ॥८॥

इत्यादि काण्वसंहिताभाष्योपक्रमे श्रीसायणाचार्याः ।

एवमाद्याख्यायिकानां तात्पर्येऽर्थे परिगृहीते यदा च याज्ञवल्क्येन वैशम्पायनमहर्षेर्गुरोराज्ञया तदधीतो यजुर्गणस्त्यक्तस्तदानीं स इतस्ततो भूमौ विप्रकीर्णः सन्प्रकरणाद्यानुपूर्वीविच्छेदमापद्यते स्म । तादृगवस्थ एवैष यजुर्गणोऽन्यैर्मुनिभिर्वैशम्पायनगुरोराज्ञयैव तित्तिरिपक्षिरूपमास्थाय भक्षक्रियया स्वायत्तीकृतोऽतस्तत्र प्रकरणाद्यानुपूर्वीनिबद्धता नास्तीति गम्यते ।

किञ्च वेदविचारे तित्तिरीय-यजुर्वेदस्य त्रिगुणत्वं प्रकृत्य मन्त्रब्राह्मणयोर्व्यामिश्रणेऽन्यत्कारणमुपक्षिप्तम् । तथा हि-केचिदनभिज्ञा मत्सरिणो वा यजुर्वेदः पूर्वं वाजसनेयिशाखावदव्यामिश्रतयाऽवस्थितः । तदनन्तरं तैत्तिरीय-शाखायाः सारस्वत--पाठवशान्मन्त्रब्राह्मणयोर्व्यामिश्रतया त्रिगुणत्वं सम्पन्नमिति वदन्ति ।

ननु- सारस्वतपाठेन तैत्तिरीयशाखायाः को विशेषः सम्पन्न इति चेदुच्यते- काण्डेऽकाण्डान्तररूप इति । इदं कुत्र दृष्टमित्युच्यते । तित्तिर्याचार्यकृतकाण्डानुक्रमणिकायां यजुर्वेदस्य पूर्वमेव मन्त्रब्राह्मणव्यामिश्रत्वं सारस्वतपाठात् । काण्डा-

न्तराऽन्यामिश्रत्वं च सविस्तरमभिहितम्।

काण्डशेषाण्यथाकाण्डं विदध्यात्तु विचक्षणः। यथा सारस्वते पाठे ज्ञानमात्रमिहोच्यते॥ इति इत्युक्तम्।

अध्ययनं तु सारस्वतपाठानुसारेणैव कर्तव्यमन्यथा फलाभावात्। तस्माद्यजुर्वेदस्येतरवेदवत्पूर्वं मन्त्रभागास्ततः परं ब्राह्मणभागा इत्यन्यामिश्रता नास्ति। अत एवास्य वेदस्य त्रिगुणत्वमुपपन्नतरम्।

एतद्विषये तु यावन्मूलग्रन्थः काण्डानुक्रमणी न दृश्यते, तावदधिकं लिखितुं न प्रभवामो वयम्।

## मैत्रायणीय-संहितायाः स्वविषये अन्यवेदपारतन्त्र्यं नास्ति।

एषा च मैत्रायणी संहिता तावद्यजुःसंहिताऽतस्तस्या अभिधेयो विषय आध्वर्यवं कर्म। तच्च पारयितुं नास्या अन्यवेदाश्रयणाद्यपेक्षा किन्तु स्वातन्त्र्येणैव प्रभविष्णुरस्तीति।

ननु, एतस्यां संहितायां बहवो ऋङ्मन्त्रा दृश्यन्ते, तेन ऋगाश्रयत्वमस्तीति चेन्न, नायं नियमः यदृग्वेदे एव ऋचः, यजुर्वेदे एव यजूंषि, सामवेदे एव सामानीति। प्रत्युत वेदस्य त्रयीति प्रख्यापकाः 'नियतपादाक्षरावसाना ऋचः, अनियत पादाक्षरावसानानि यजूंषि, प्रगीतिसाध्या ऋच एव सामानि' इत्येतल्लक्षणविशिष्टास्त्रयोऽप्यवयवास्त्रिषु चतुर्ष्वपि वेदेषु सन्तीति। तत्र विशेषस्तावदेतावानेव ऋग्वेदे ये यजुःसामनी तयोर्ऋग्वेदधर्माक्रान्तत्वं, यजुर्वेदे ये ऋक्सामनी तयोर्यजुर्वेदधर्माक्रान्तत्वं, सामवेदे ये ऋग्यजुषी तयोः सामवेदधर्माक्रान्तत्वं, अथर्ववेदे यान्यृग्यजुःसामानि तेषामथर्ववेदधर्माक्रान्तत्वम्। धर्माक्रान्तत्वं नाम तदीयस्वरसंस्कारनिबद्धत्वमिति भावः। इतरस्मिन्वेदे इतरवेदावयवोपालम्भस्तु स्व प्रयोगविधिक्रमागतविनियोगप्रपूर्तिसव्यपेक्षामूलक इति।

अनेनैव न्यायेनैकस्मिन्नपि वेदे बह्व्यः शाखासंहितास्तास्वन्योऽन्यमन्त्रा उपलभ्यन्ते क्वचिद्ब्राह्मणेऽत्रप्युपलभ्यन्ते, तत्रापि एतदेव बीजमिति मन्तव्यम्।

किञ्चैतादृशस्थलेषु एकत्र विद्यमानो मन्त्रोऽन्यत्र क्वचित्समानः क्वचिन्न्यूनः क्वचिदधिकश्च दृश्यते, तथा क्वचिन्मन्त्रसंख्याऽपि न्यूनाधिका दृश्यते। एतच्च वैलक्षण्यं प्रथममध्ययनाध्यापनप्रवचनमूलमग्रे तदेव च शाखाभेदप्रयोजकमभूदतस्तन्निमित्तकमिति चिरन्तना वैदिकाः संवदन्ति।

नैतावता एषा संहिता पूर्वभवा, एषा च तदनन्तरभवा, एषा तु तस्या अपि समनन्तरभवेत्याद्यनुमातुं शक्यं, किन्तु सर्वाः संहिताः समकाला एवेति।

नच शाखाभेदप्रवृत्तीतिहासदृशा तु पौर्वापर्यं दृश्यत एवेति वाच्यम्। तादृशं प्रवृत्तिनिमित्तकं संहिताकालान्तर्वर्ति पौर्वापर्यं तु सर्वैरप्यङ्गीक्रियत एव। अत एव चास्माभिरेषा मैत्रायणीसंहिता प्राचीनेति प्रागवोचि। यादृशं पौर्वापर्यं प्रत्याख्यायते तच्च प्रथमं काचन संहिता जाता ततो बहोः कालादनन्तरं तस्यामेव संहितायां न्यूनाधिक्यं वैलक्षण्यमापाद्यान्या संहिता सम्बभूव। अनयैव रीत्योत्तरोत्तरं संहिताप्रणयनं समभवदित्येतादृशम्। तेन नोक्तविरोधः।

### मैत्रायणीयानामितरद्वाङ्मयम्।

## (१) मानवकल्पसूत्रं स्मार्तं श्रौतं च।

| प्रकरणानि। | ग्रन्थ-संख्या च |
|---|---|
| १. स्मार्तसूत्रं, द्वावध्यायौ | ६२३ |
| २. प्राक्सोमः, अध्यायाष्टकम् | १०१२ |
| ३. अग्निष्टोमः, अध्यायपञ्चकम् | ८१० |

| | |
|---|---|
| ४. इष्टिकल्पः, द्वावध्यायौ | ५२६ |
| ५. चयनकल्पः, द्वावध्यायौ | ४०५ |
| ६. वाजपेयकल्पः, द्वावध्यायौ | ३०० |
| ७. प्रायश्चित्तकल्पः, एकोऽध्यायः | २२५ |
| ८. प्रवर्ग्यकल्पः, एकोऽध्यायः | १८० |
| ९. राजसूयः, अध्यायपञ्चकम् | ९०० |
| १०. अनुग्राहिकम्, एकोऽध्यायः | २५० |
| ११. शुल्बम्, एकोऽध्यायः | ३६५ |
| १२. प्रवराध्यायः, एकोऽध्यायः | २०० |
| १३. श्राद्धकल्पः, एकोऽध्यायः | १०० |
| १४. प्रतिग्राहिकम्, एकोऽध्यायः जननशान्तिपञ्चकरुद्रजपविधानाभ्यां सहितम् | १८० |
| | ६०२६ |

## भाष्याणि ।

| | |
|---|---|
| १ कुमारभाष्यं प्राक्सोमीयम्, अध्यायाष्टकम् | २२०० |
| २ अष्टावक्रभाष्यं स्मार्तकल्पीयम्, द्वावध्यायौ | २३०० |
| ३ शुल्बभाष्यम्, द्वावध्यायौ | ७५० |
| ४ सूत्रवृत्तिः, अध्यायषट्कम् | १६०० |
| मिलित्वा ग्रंथसंख्या ६०२६ + ६८५० = १२८७६ | ६८५० |

## मनुस्मृतिमानवगृह्ययोः परस्परं संवादः ।

१. मनुस्मृतेरुपक्रमो द्वितीयेऽध्याये ब्रह्मचारिधर्मान्प्रकृत्येति । मानवगृह्यस्याप्युपक्रमो ब्रह्मचारिधर्मान्प्रकृत्यैवेति ।

२. मनुस्मृतौ (२।२१९) 'ब्रह्मचारिणः सर्वमुण्डनं वा शिखावर्जं मुण्डनं वा जटासन्धारणम्' । मानवगृह्येऽपि (१।२।६) 'मुण्डो वा स्याजटिलो वा स्यादथवा स्याच्छिखाजटः' ।

३. मनुस्मृतौ (२।२२०) 'सायम्प्रातः सूर्यस्योदयेऽस्तमये च यदि स्वपेत्तदा प्रायश्चित्तम्' । मानवगृह्येऽपि (१।३।१) एवमेव ।

४. मनुस्मृतौ (४।९५) 'श्रावण्यां पौर्णमास्यामुपाकुर्यात्' । मानवगृह्येऽपि (१।४।१) एवमेव ।

५. मनुस्मृतौ (३।४) 'गुरोरनुमतिं गृहीत्वा समावृत्तः स्यात्' । मानवगृह्येऽपि (१।२।१८) एवमेव ।

६. मनुस्मृतौ (४।४०) 'रजस्वलया सह शयनादेर्निषेधः' । मानवगृह्येऽपि (१।२।१३) एवमेव ।

७. मनुस्मृतौ (२।१०४) 'ग्रामाद्बहिर्निर्गत्यारण्ये एकान्ते सन्ध्यामुपासीत' । मानवगृह्येऽपि (१।२।२) एवमेव ।

८. मनुस्मृतौ (२।१७७) 'ब्रह्मचारिणो मधुमांसाशनं स्त्रीस्पर्शादिकं च वर्ज्यम्' । मानवगृह्येऽपि (१।१।११-१२) एवमेव ।

अस्मिन्मानवगृह्ये मन्त्रब्राह्मणे विनाऽन्यः कोऽपि ग्रन्थो नोद्धृतो दृश्यते ।

## (२) वाराहकल्पसूत्रं श्रौतं स्मार्तं च ।

### वाराहगृह्योक्ता परिशिष्टग्रन्थाः ।

अतः परं परिशिष्टं मैत्रायणीय-सूत्रस्य— १. गृह्यमगृह्यं पुरुषः प्रायश्चित्तानुग्राहिक, २. हौत्रक, ३. शुल्बिक, ४. उत्तरेष्टिक, ५. वैष्णव, ६. आध्वर्यविका आर्षक, ७. चातुर्होत्रिक, ८. गोनामिक, ९. अकुलपादरहस्य, १०. प्रतिग्रहयमक, ११. वृषोत्सर्ग, १२. प्रश्न, १३. द्रविण, १४. षट्कारणप्रधान, १५. सान्देहिक, १६. प्रवराध्याय, १७. रुद्रविधान, १८. छन्दोऽनुक्रमणी, १९. अन्तःकल्प, २० प्रवासविधि, २१. प्रातरुपस्थान, २२. भूतोत्पत्तिः ।

इति द्वाविंशतिः परिशिष्टसंख्यानाम् । पञ्चदशे खण्डे ३ (मानवसूत्रानुसारिण्यः) अष्टावक्रकारिकाः, ४ प्रातिशाख्यं इत्यादयो भूयांस आर्षग्रन्थाः सन्तीति । मैत्रायणीयानां संहितायाः पदपाठः, क्रमपाठः जटाद्यष्टविकृतिपाठश्चाप्यस्तीति तच्छाखीयवैदिकानां मुखतः श्रूयते ।

### पदपाठः ।

मैत्रायणीयानां पदपाठो द्विधा दृश्यते । एकः पदपाठः केवलं मन्त्रभागमात्रः डॉ० श्राडरसूरिसम्पादितः पुण्यपत्तनेऽस्तीति भाष्यते तच्छाखीयैः । अपरश्चात्रस्यैतच्छाखीयानां सविधे वर्तमानो मन्त्रब्राह्मणोभयभागयोः पदपाठः । अयं च पदपाठः स्वरदृष्ट्या प्रायः ऋग्वेदसंवादीति दरीदृश्यते ।

## मैत्रायणीयमारण्यकम् अथवा मैत्रायण्युपनिषद् ।

मैत्रायणीयमारण्यकम् अथवा मैत्रायण्युपनिषदेतस्याः संहिताया अन्ते परिशिष्टरूपेणाङ्कयित्वा सन्निविष्टमस्ति । तच्च सप्तप्रपाठात्मकमस्ति । ग्रन्थसंख्याऽनुपाततः ५४७ वर्तते ।

| प्रपाठकः | खण्डाः | प्रपाठकः | खण्डाः |
|---|---|---|---|
| १ | ४ | ४ | ६ |
| २ | ७ | ५ | २ |
| ३ | ५ | ६ | ३८ |
| | | ७ | ११ |

अस्यां चोपनिषदि बृहद्रथराजस्य शाकायन्यमुनेश्च संवादरूपेण शरीरनशाश्वतिकं दुःखसम्मिश्रं कष्टप्रदमित्याद्युपक्रम्य ब्रह्मविद्या न्यरूपि । तथा– 'ज्योतिःप्राणोद्गीथमूर्तामूर्तादित्यगायत्र्यग्निहोत्रषडङ्गसमाधिप्रभृत्यनेकोपास्त्यस्तत्त्वज्ञानजनका विषयाश्च बृहदारण्यकादीतरोपनिषत्समानाश्चात्रापि निरूपिताः सन्ति । तेषु कतिपये विषया उत्तरकालिकोपनिषत्समाना नवीना इव आभान्ति । तथापि न तावता इयमुपनिषन्नवीनेति वक्तुमिष्यते । यतः प्राचीनास्वप्युपनिषत्सु सम्भाव्यते किल शरीरस्य दुःखमयत्वक्षणिकत्वादिवर्णनं यथा गर्भोपनिषदादाविति ।

अत्र च ' अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित् सुद्युम्न--भूरिद्युम्न– इन्द्रद्युम्न-- कुवलयाश्व-- यौवनाश्व-वध्र्यश्व--अश्वपति--शशबिन्दु--हरिश्चन्द्र--अम्बरीष--ननक्तु-- शर्याति-- ययाति--अनरण्य-- अक्षसेनादयोऽथ मरुत्त--भरतप्रभृतयो राजानश्च' इति भारतीयचक्रवर्तिनां राज्ञां नामान्युल्लिखितानि सन्ति । तथा ब्रह्मणोऽनेकविधानि नामानि च निरूपितानि दृश्यन्ते ।

### उपनिषद्व्याख्याः ।

अस्यामुपनिषदि श्रीशंकराचार्यकृतं भाष्यं श्रीरामतीर्थयतिविरचिता दीपिका, श्रीनारायणसूरिप्रणीता दीपिका, श्रीप्रकाशात्मना कृता दीपिका, श्रीविज्ञानभिक्षुविरचितो मैत्रेयोपनिषदालोकः, एवं पञ्च व्याख्याः सन्तीति श्रूयते । तत्र श्रीरामतीर्थयतिविरचिता दीपिका पुण्यपत्तनस्थानन्दाश्रममुद्रिते 'उपनिषदां समुच्चये' मूलयोपनिषदा सह सम्मुद्रिताऽस्तीति । एषा चोपनिषदन्यत्रापि निर्णयसागर--मुंबई इत्यादिषु अष्टोत्तरोपनिषत्समुदायेषु मूलमात्रा मुद्रिता वर्तते, परन्तु तच्च संस्करणमत्यन्तमशुद्धं पाठभेदसङ्कुलितमानुपूर्वीस्वरादिविहीनम् । एतत्प्रकृतं तु संस्करणं सस्वरमपपाठ-

वर्जितमानुपूर्वीयुतमत्यन्तविशुद्धं यथा स्यात्तथा सम्पादितमिति।

## मैत्रायणीयाणां वसतिः।

मयूराद्रिं समारभ्य यावद्गुर्जरदेशतः। व्याप्य वायव्यदेशं वै शाखा मैत्रायणी स्थिता॥ इति महार्णवे।

मयूराद्रिस्तु श्रीमन्नाशिकक्षेत्रोत्तरस्यां दिशि तन्मण्डलान्तर्वर्ति--श्रीमुल्हेरक्षेत्र- प्रत्यासन्नः पर्वतः। तत आरभ्य गुर्जरदेशपर्यन्तं वायव्यप्रदेशे मैत्रायणीया निवसन्तीत्यर्थः। गुर्जरसौराष्ट्रयोर्निवासिनो मैत्रायणीयाश्च मोढज्ञातीया इति व्यवह्रियन्ते। महाराष्ट्रेऽपि नागपूर-नन्दुरबार-भडगांव-नाशिकक्षेत्र-प्रभृति-स्थलेषु एषां भूयस्त्वेन वसतिरास्ते। तथेदानीमप्येतेषु सकलशाखापारगा आहिताग्नयश्चापि समुपलभ्यन्ते। वेदवृक्षपट्टे तु मैत्रायणीयाणां वसतिर्गोदादक्षिणदेशे प्रदर्शिता। स्यात्कदाचित्पूर्वं परमिदानीन्तु न दृश्यते। इति।

## धन्यवादाः।

एतस्या मैत्रायणीयसंहिताया मुद्रापणे श्रीमत्परमहंस--परिव्राजकवर्य--श्रीकृष्णानन्द--सरस्वतीस्वामिमहाभागाः श्रीमन्नासिकपञ्चवटीवासिनः (पूर्वाश्रमस्था मैत्रायणी-शाखाललामभूता विद्वद्वरिष्ठाः पं० श्री० दिनकर गणेश मुठे महोदयाः) इत्येतैः सर्वविधं साहायमकारीति मुदा प्रकाश्य तेभ्योऽस्माकं नतिततयो विलसन्तुतराम्।

तथा— वे० मू० श्री० शंकर हरि जोशी अभोणकर नासिक।

तथा— वे० मू० विनायक शिवराम पुराणिक नासिक।

इत्येताभ्यां मैत्रायणीय-शाखीय--वैदिक--प्रवराभ्यां पुस्तकप्रदान--पत्रसंशोधनप्रभृति--साहाय्यं कृतमतस्तेभ्यो बहून्धन्यवादान्प्रदद्मः। तथा च मैत्रायणीयशाखावलम्बिनां परिषन्मन्त्रिभिः श्रीमद्भिः सखाराम-गोपाल-शेंदुर्णीकर महोदयैरनेकविधं साहाय्यं कृतमतस्तेऽपि धन्यवादयोग्याः।

अपि च श्रीऔंधसंस्थानस्थ-स्वाध्यायमण्डलाध्यक्षैः पण्डितप्रकाण्डैः श्री श्रीपाद दामोदर सातवलेकर शास्त्रिमहाभागैर्मित्रवात्सल्येनैतत्प्रस्तावनालेखनकार्यभारो मयि न्यस्तः। तदीयैषोपकृतिर्न कदापि विस्मराम्यहम्।

प्रख्याते भुवि भारतेऽनलरसव्यालेन्दु (१८६३) संज्ञे शके। वर्षेऽस्मिन्वृषनामके भृगुदिने माघेऽसिते पञ्चमे॥
प्रस्तावोऽभिनवो व्यलेखि समयैर्मैत्रायणीयश्रुतेः। सन्तुष्येयुरनल्पसूक्ष्ममतयो निर्मत्सरा कोविदाः॥१॥
दूरमुत्सार्य मात्सर्यं सदसद्व्यक्तिकारणाः। शास्त्रं गृह्णन्तु संशोध्य प्रार्थयामीति सादरम्॥२॥
श्रीगोदातटगार्च्यनासिकगतो माध्यन्दिनाम्नायवित्। श्रौतस्मार्तविधानकौशलमतिस्त्र्यार्षेयपाराशरः॥
वारे इत्युपनाम सत्कुलजनिर्जैरामपौत्रः सुधीः। आत्याजीसुत आस्त वेदतिलकः श्रीश्रीमदण्णाभिधः॥३॥
श्रौतस्मार्तविधौ कुशाग्रधिषणो धर्मागमे मर्मभित्। मीमांसानयकोविदः श्रुतिकृती वेदार्थबद्धादरः॥
काव्ये तीर्थपदं दधद् द्विजवरः श्रीश्रीधरस्तत्सुतः। सद्विद्याभरणेत्युपाधिसहितः प्रास्ताविकं व्यालिखत्॥४॥

एतादृग्भूरिपरिश्रमेण विलिखिते प्रास्ताविकेऽस्मिन्मितमतिमानुषस्वभावसुलभतया प्रमादादज्ञानाद् दृग्दोषाद्वा यत्स्खलितमन्यथाभूतं वा तन्निर्मत्सरा गुणग्रहणतत्पराः प्राज्ञप्रवराः संशोध्य सारग्रहणं करिष्यन्तीति तान्दयार्द्रदृष्टीन्विबुधगणान्पुनः पुनः साञ्जलिबन्धं सप्रश्रयं विज्ञाप्य विरामि।

| | |
|---|---|
| श्रीक्षेत्र-नासिके | विद्वद्वशंवदः |
| माघकृष्णपञ्चम्यां भृगुवासरे प्रातः | श्रीमन्नासिकक्षेत्रनिवासी वारे इत्युपाह्वः |
| शालिवाहन शकः १८६३ | वैदिक-तिलक |
| (ता० ६।२।१९४२ इ०) | श्रीमदण्णाशास्त्रिसूनुः श्रीधरशर्मा। |

# मैत्रायणी-संहितायाः विषयसूची ।


| प्रपा० | विषयः | पृष्ठं |
|---|---|---|
| | **(आदिम) प्रथमं काण्डम् ।** | |
| १ | दर्श-पूर्णमासौ । | १ |
| २ | अध्वरः । | ६ |
| ३ | ग्रहाः । | १७ |
| ४ | यजमान-ब्राह्मणम् । | २८ |
| ५ | अग्न्युपस्थानम् । | ३९ |
| ६ | आधानम् । | ४९ |
| ७ | पुनराधानम् । | ६३ |
| ८ | अग्निहोत्र-ब्राह्मणम् । | ६६ |
| ९ | चतुर्होतारः । | ७६ |
| १० | चातुर्मास्यानि । | ८२ |
| ११ | वाजपेयः । | ९५ |
| | **(मध्यम) द्वितीयं काण्डम् ।** | |
| १ | काम्या इष्टयः । | १०३ |
| २ | ,, ,, | १११ |
| ३ | ,, ,, | ११९ |
| ४ | ,, ,, | १२७ |
| ५ | काम्याः पशवः । | १३३ |
| ६ | राजसूयः । | १४३ |
| ७ | अग्निचितिः । | १४९ |
| ८ | ,, | १७१ |
| ९ | ,, | १७९ |
| १० | ,, | १८४ |
| ११ | ,, | १९० |
| १२ | ,, | १९३ |
| १३ | ,, | १९७ |
| | **(उपरि) तृतीयं काण्डम् ।** | |
| १ | अग्निचिति-ब्राह्मणम् । (जुहूमग्नीयः) | २१० |
| २ | ,, ,, (दधानः) | २१९ |
| ३ | ,, ,, (स्तोमभागाः) | २३० |
| ४ | ,, ,, (वसोर्धारीयः) | २३९ |
| ५ | ,, ,, ,, | २४८ |
| ६ | अध्वरादीनां त्रयाणां विधिः ।(आग्नावैष्णवम्) | ,, |
| ७ | ,, ,, ,, | २५८ |
| ८ | ,, ,, (आसुराः) | २६८ |
| ९ | ,, ,, (संक्रान्ताः) | २८० |
| १० | ,, ,, (पात्नीवन्ताः) | २८९ |
| ११ | सौत्रामणीयः । | २९६ |
| १२ | अश्वमेधः । | ३०८ |
| १३ | ,, | ३१३ |
| १४ | ,, | ३१६ |
| १५ | ,, | ३१८ |
| १६ | ,, | ३२० |
| | **(खिलं) चतुर्थं काण्डम् ।** | |
| १ | पुरोडाश-ब्राह्मणम् । | ३२९ |
| २ | गोनामिकः । | ३४१ |
| ३ | राजसूय-ब्राह्मणम् । | ३५२ |
| ४ | ,, ,, | ३५९ |
| ५ | अध्वरादीनां त्रयाणा विधिः । | ३६७ |
| ६ | ,, ,, ,, | ३७६ |
| ७ | ,, ,, ,, | ३८६ |
| ८ | ,, ,, ,, | ३९४ |
| ९ | प्रवर्ग्यः । | ४०२ |
| १० | याज्यानुवाक्याः । | ४१३ |
| ११ | ,, | ४२७ |
| १२ | ,, | ४३९ |
| १३ | ,, | ४५६ |
| १४ | ,, | ४६६ |
| | मैत्रायणी-संहितायां ऋग्वेद-मन्त्राः । | ४९५ |
| | मैत्रायणी-संहिता-मन्त्राणां वर्णानुक्रमसूची | ५१६ |
| | मैत्रायणीयमारण्यकम् । | ५४३ |

# मैत्रायणी-संहिताया मुद्रणार्थं स्वरचिह्नानि ।

ॐ इषे त्वा सुभूताय, वायव स्थ, देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणा, आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागं, मा व स्तेन ईशत माघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वी—र्यजमानस्य पशून् पाहि ॥१॥

अत्र स्वरचिह्नान्यक्षराणामुरसि वा सिरसि वारोहन्ति। तानि तथैव मुद्रापयितुमशक्यानि, तादृगायसाक्षराणामभावात्। अतोऽधोलिखितानि स्वरचिह्नानि मैत्रायणी-संहिताया मुद्रणार्थं संकल्प्यन्ते । यथा—

| | | |
|---|---|---|
| त्वा | = | त्वा |
| य | = | यु |
| जु | = | जु |

एतेषां स्वरचिह्नानां संयोजनेनैव मैत्रायणी-संहिताया मुद्रणं भविष्यति । यथा—

ॐ इषे त्वा सुभूताय, वायव स्थ, देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणा, आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागं, मा व स्तेन ईशत माघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वी—र्यजमानस्य पशून् पाहि ॥ १ ॥



अथ यजुर्वेदीय

# मैत्रायणी-संहिता ।

## प्रथमं काण्डम् ।

### अथ प्रथमः प्रपाठकः ।

### दर्श-पूर्णमासौ ।

[ श्रीगणेशाय नमः ॥ ओम् ॥ नमो यजुर्वेदाय ॥]

॥ ॐ ॥ इषे त्वा सुभूताय, वायव स्थ, देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणा,
आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागं, मा व स्तेन ईशत माघशꣳसो ध्रुवा अस्मिन्
गोपतौ स्यात बह्वीः,—र्यजमानस्य पशून् पाहि ॥ १ ॥ १
गोषदसि, प्रत्युष्टꣳ रक्षः, प्रत्युष्टारातिः ॥ २
प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा ।
तयावहन्ते कवयः पुरस्तात् ॥ ३
देवानां परिषूतमसि विष्णो स्तुपोऽतिसृष्टो गवां भागो देवस्य त्वा सवितुः प्रसवे३ऽश्वि-
नोर्बाहुभ्यां पूष्णो हस्ताभ्यां, बर्हिर्देवसदनं दामि ॥ ४
अतस्त्वं बर्हिः शतवलिशꣳ विरोह, सहस्रवलिशा वि वयꣳ रुहेम ॥ ५
अयुपिता योनि,—रदित्या रास्नासीन्द्राण्याः संनहनं, पूषा ते ग्रन्थिं ग्रथ्नातु, सं ते मा
स्थादि,—न्द्रस्य त्वा बाहुभ्यामुद्यच्छे, बृहस्पतेर्मूर्ध्ना हराम्यु३,—र्वन्तरिक्षꣳ वी,—ह्यदित्या-
स्त्वा पृष्ठे सादयामि ॥२॥ ६

---

[ १ ] मै. ४,१,१ । तै. १,१,१ । काठ. १,१ । कपि. १,१ । वा. १,१ । काण्व. १,१-३ । मा. श्रौ. १,१,१ । [ मा व स्तेन...शꣳ। अथर्व. ४,२१,७ ]

[ २ ] मै. ४,१,२ । तै. १,१,२ । काठ. १,२ । कपि. १,२ । मा. श्रौ. १,१,१ । [ देवस्य त्वा० । अथर्व. १९,५१,२ ]

शुन्धध्वं दैव्याय कर्मणे, वसूनां पवित्रमसि शतधारꣳ सहस्रधारमच्छिद्रतनुः ॥ द्यौरसि,
पृथिव्यसि, मातरिश्वनो घर्मः ॥ विश्वहोतुर्धामन् त्सीद ॥ पौषाय त्वा,—ऽदित्या रास्नासि,
कामधुक्षः, सा विश्वायुरस्त्वसौ, कामधुक्षः, सा विश्वभूरस्त्वसौ, कामधुक्षः, सा विश्व-
कर्मास्त्वसौ, हुतं स्तोकौ, हुतो द्रप्सौ, ऽग्ने पाहि विप्रुषः, सुपचा देवेभ्यो हव्यं पचा,—
ऽग्नये त्वा बृहते नाकाय स्वाहा द्यावापृथिवीभ्यामिं,—न्द्राय त्वा भागꣳ सोमेनातनच्मि, विष्णो
हव्यꣳ रक्षस्वा,—ऽऽपो जागृत ॥३॥ ७--१०

वेषाय वां, कर्मणे वाꣳ, सुकृताय वां, देवीरापोऽग्रेगुवोऽग्रेणीयोऽग्रेऽस्य यज्ञस्य प्रेता,
—ऽग्रꣳ यज्ञं नयताग्रꣳ यज्ञपतिꣳ, युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये, यूयमिन्द्रमवृणीध्वꣳ वृत्रतूर्ये,
प्रोक्षिता स्थ, सꣳसीदन्तां दैवीर्विशो, वानस्पत्यासि, वर्षवृद्धमस्यु३,—र्वन्तरिक्षꣳ वीहि,
प्रत्युष्टꣳ रक्षः, प्रत्युष्टाराति,—धूरसि, ध्वर ध्वरन्तꣳ यो अस्मान् ध्वराद्, यꣳ वयं ध्वराम
तं ध्वर ॥४॥ ११

देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतममं,—हुतमसि हविर्धानं, दृꣳहस्व,
मा ह्वा,—विष्णोः क्रमोऽस्यु,—रु वाताय, मित्रस्य वश्चक्षुषा प्रेक्षे, देवस्य वः सवितुः प्रसवे-
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ, यच्छन्तु पञ्च, गोपीथाय वो नारातये, ऽग्नये वो जुष्टा-
न्निर्वपाम्यमुष्मै वो जुष्टानि,—दं देवानामिदमु नः सह, दृꣳहन्तां दुर्या, स्वाहा द्यावापृथिवी-
भ्यां, निर्वरुणस्य पाशादमुक्षि, स्वरभिव्यख्यं ज्योतिर्वैश्वानरमु३,—र्वन्तरिक्षꣳ३ वीह्य,—दित्या
व उपस्थे सादयामि ॥ ५ ॥ १२

देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः । १३

अग्नये वो जुष्टान् प्रोक्षाम्यमुष्मै वो जुष्टान्, यद्वोऽशुद्ध आलेभे तं शुन्धध्व,—मदित्यास्त्व-
गस्य,—वधूतꣳ रक्षो, ऽवधूतारातिर,—दित्यास्त्वगसि, प्रति त्वादित्यास्त्वग्वेत्तु, पृथुग्रावासि
वानस्पत्यः, प्रति त्वादित्यास्त्वग्वेत्त्व,—ग्नेर्जिह्वासि वाचो विसर्जनमा,—युषे वो, बृहद्ग्रावासि
वानस्पत्यो, देवेभ्यो हव्यꣳ शमीष्व, सुशमि शमीष्व, कुटरुरसि मधुजिह्व—स्त्वया वयꣳ

---

[ ३ ] मै. ४,१,३ । तै. १,१,३ । काठ. १,३ । कपि. १,३ । वा. १,२–४ । काण्व. १,४–७ । मा. श्रौ. १,१,३ ।

[ ४ ] मै. ४,१,४ । तै. १,१,४–५ । काठ. १,४ । कपि. १,४ । वा. १,६–८,११,१२ । काण्व. १,९–११,१७,१८ । मा. श्रौ. १,२,१ ।

[ ५ ] मै. ४,१,५ । तै. १,१,४ । काठ. १,४ । कपि. १,४ । वा. १,८–११ । काण्व. १,१२–१५ । मा. श्रौ. १,२,१ ।

[ ६ ] मै. ४,१,६ । तै. १,१,६ । काठ. १,५ । कपि. १,५ । वा. १,१२–१६ । काण्व. १,१६,१८–२४ । मा. श्रौ. १,२,२।

संघातꣳ संघातं जेष्मे,—षमावदो,—र्जमावद, रायस्पोषमावद ॥ ६ ॥ १४

वर्षवृद्धमसि, प्रति त्वा वर्षवृद्धꣳ वेत्तु, परापूतꣳ रक्षः, परापूतारातिः, प्रविद्धो
रक्षसां भागो, ऽदित्यास्त्वगस्य,—वधूतꣳ रक्षो, ऽवधूतारातिर,—दित्यास्त्वगसि, प्रति
त्वादित्यास्त्वग्वेत्तु, धिषणासि पार्वती, प्रति त्वादित्यास्त्वग्वेत्तु, धिषणासि पार्वती, प्रति
त्वा पार्वती वेत्त्व,—दित्या स्कम्भोऽसि, धान्यमसि, धिनुहि देवान्, प्राणाय त्वा,—ऽपानाय
त्वा, व्यानाय त्वा, दीर्घामनु प्रसितिꣳ संꣳस्पृशेथामा,—ऽऽयुषे वो, मित्रस्य वश्चक्षुषावेक्ष्ये,
देवो वः सविता हिरण्यपाणिरुपगृह्णातु ॥ ७ ॥ १५

निर्दग्धꣳ रक्षो, निर्दग्धारातिः, समुद्रं मा धां, ध्रुवमसि, पृथिवीं दृꣳह,—ऽपाग्ने-
ऽग्निमामादं जहि, निः क्रव्यादं नुदस्वा,—ऽग्ने देवयजनꣳ वह, धरुणमस्य,—न्तरिक्षं दृꣳह,
धर्त्रमसि, दिवं दृꣳह, धर्मासि, विश्वा विश्वानि दृꣳह, चिदसि, परिचिदसि, विश्वासु
दिक्षु सीद, सजातानस्मै यजमानाय परिवेशय, सजाता इमꣳ यजमानं परिविशन्तु, वसूनाꣳ
रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम् ॥ १६

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः ।
पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ८ ॥ १७

देवस्य वः सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ संꣳवपामि ।
देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥ १८

समापा ओषधीभिर्गच्छन्ताꣳ समोषधयो रसेन ।
सꣳ रेवतीर्जगतीः शिवाः शिवाभिः समसृक्षतापः ॥ १९
सीदन्तु विशो, जनयत्यै त्वा, घर्मोऽसि विश्वायु,—र्घर्मं घर्मे श्रयस्वो,—रु प्रथस्वो,
—रु ते यज्ञपतिः प्रथताꣳ, सं ते तन्वा तन्वः पृच्यन्ताम् ॥ २०
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ २१
देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके पृथिव्या, अग्ने ब्रह्म गृह्णीष्व ॥९॥ २२

---

[ ७ ] मै. ४,१,७ । तै. १,१,५–६ । काठ. १,५–६ । कपि. १,६ । वा. १,१६,१९,२० । काण्व. १,२५,३१–३४ । मा. श्रौ. १,२,२ ।

[ ८ ] मै. ४,१,८ । तै. १,१,७ । काठ. १,७ । कपि. १,७ । वा. १,१७–१८ । काण्व. १,२७–३० । मा. श्रौ. १,२,३ ।

[ ९ ] मै. ४,१,९ । तै. १,१,८ । काठ. १,८,१० । कपि. १,८;१० । वा. १,२१–२२;११,२५ । काण्व. १,३६–३८;१२,२५ । मा. श्रौ. १,२,३ । [ परि वाजपतिः... दाशुषे । ऋ० ४,१५,३ । सा. ३० ]

❀

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा, वायुरसि तिग्मतेजाः, पृथिवि देवयजनि मा हिंसिषं तामोषधीनां मूलं, व्रजं गच्छ गोस्थानं, वर्षतु ते पर्जन्यो, बधान देव सवितः शतेन पाशैः परमस्यां परावति यो अस्मान् द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान, सोऽतो मा मोचि, मा वः शिवा ओषधयो मूलं हिंसिषं, व्रजं गच्छ गोस्थानं, वर्षतु ते पर्जन्यो, बधान देव सवितः शतेन पाशैः परमस्यां परावति यो अस्मान् द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान, सोऽतो मा मोचि, द्रप्सस्ते दिवं मा स्कान्, व्रजं गच्छ गोस्थानं, वर्षतु ते पर्जन्यो, बधान देव सवितः शतेन पाशैः परमस्यां परावति यो अस्मान् द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान, सोऽतो मा मोचि, वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा, रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा, ऽऽदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा, ऽपारुरुं पृथिव्या अदेवयजनं, सत्यसदस्य,—
तसदसि, घर्मसदसि ॥ २३

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुम् ।
तामैरयंश्चन्द्रमसि स्वधाभिस्तां धीरासः कवयोऽनुदिश्यायजन्त ॥ १० ॥ २४

प्रत्युष्टं रक्षः, प्रत्युष्टारातिः,—रायुः प्राणं मा निर्मार्जी,—श्चक्षुः श्रोत्रं मा निर्मार्जी,—
वींचं पशून् मा निर्मार्जी,—र्यज्ञं प्रजां मा निर्मार्जी,—स्तेजोऽसि, शुक्रमसि, ज्योतिरस्य,—
मृतमसि, वैश्वदेवमसि ॥ २५

हविरसि वैश्वानरमसुन्नीतशुष्मं सत्यौजाः ।
सहोऽसि सहस्वारातिं सहस्व पृतनायतः ॥ २६

सहस्रवीर्यमसि, तन्वा जिन्वा,—ऽऽज्यस्याज्यमसि हविषो हविः सत्यस्य सत्यं,
सत्याभिहितं सत्येन त्वाभिघारयाम्यं,—दब्धेन त्वा चक्षुषावेक्षे रायस्पोषाय सुप्रजास्त्वाय ॥ २७

धामासि प्रियं देवानामनाधृष्टं देवयजनम् । देववीत्यै त्वा गृह्णामि ॥ २८

देवीरापः शुद्धा यूयं देवान् युयुध्वं, शुद्धा वयं सुपरिविष्टाः परिवेष्टारो वो भूयास्म, कृष्णोऽस्याखरेष्ठो, अग्नये घृतं भव, वेदिरसि, बर्हिषे त्वा जुष्टं प्रोक्षामि, बर्हिरसि, वेद्यै त्वा जुष्टं प्रोक्षामि, स्वाहा पितृभ्यो घर्मपावभ्यः ॥११॥ २९

---

[१०] मै. ४,१,१० । तै. १,१,९ । काठ. १,९ । कपि. १,९ । वा. १,२४–२८ । काण्व. १,४०–४५ । मा. श्रौ. १,२,४ ।
[११] मै. ४,१,१२–१३ । तै. १,१,१० । काठ. १,१०–११ । कपि. १,१०–११ । वा. १,२९–३१; २,१; ६,१३ । काण्व. १,४६,४७,४९; २,१–४; ६,१७ । मा. श्रौ. १,२,५ ।

पूषा ते ग्रन्थिं विष्यतु, विष्णो स्तुपोऽस्यु,—रुं प्रथस्वोर्णम्रदं स्वासस्थं देवेभ्यो, गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषमाणो, यजमानस्य परिधिरिडं ईडितं, इन्द्रस्य बाहुरसि दक्षिणो, यजमानस्य परिधिरिडं ईडितौ, मित्रावरुणौ त्वोत्तरतः परिधत्तां, यजमानस्य परिधिरसीडं ईडितः ॥ ३०

नित्यहोतारं त्वा कवे द्युमन्तः समिधीमहि ॥ ३१

वर्षिष्ठे अधि नाके पृथिव्याः सूर्यस्त्वा रश्मिभिः पुरस्तात् पातु कस्याश्चिदभिशस्त्या, विश्वजनस्य विधृती स्थो, वसूनां रुद्राणामादित्यानां सदोऽसि सुचां योनि,—र्द्यौरसि जन्मना जुहूर्नाम प्रिया देवानां प्रियेण नाम्ना, ध्रुवे सदसि सीदा,—ऽन्तरिक्षमसि जन्मनोपभृन्नाम प्रिया देवानां प्रियेण नाम्ना, ध्रुवे सदसि सीद, पृथिव्यसि जन्मना ध्रुवा नाम प्रिया देवानां प्रियेण नाम्ना, ध्रुवे सदसि सीद, ऋषभोऽसि शाक्करो वषट्कारस्य त्वा मात्रायां सादयामि ॥ ध्रुवा असदन्नृतस्य योनौ सुकृतस्य लोके, ता विष्णो पाहि ॥ पाहि यज्ञं, पाहि यज्ञपतिं, पाहि मां यज्ञन्यम् ॥ विष्णूनि स्थ, वैष्णवानि धामानि स्थ प्राजापत्यानि ॥१२॥ ३२--३५

सूयमे मेऽद्य स्तं स्वावृतौ सूपावृता, अग्नाविष्णू विजिहाथां, मा मा हिंसिष्टं, लोकं मे लोककृतौ कृणुतं, मा मोदोषिष्टमात्मानं मे पातं, शिवौ भवतमद्य नो, विष्णो स्थामासी,—तं इन्द्रस्तिष्ठन् वीर्यमकृणोद्देवताभिः समारभ्यः ॥ ३६

ऊर्ध्वो अध्वरो दिविस्पृग्गह्वुतो यज्ञो यज्ञपतेः ।
इन्द्रवान् त्स्ववान् बृहद्भाः ॥ ३७

वीहि मधोर्घृतस्य, स्वाहा, सं ज्योतिषा ज्योतिः ॥ ३८

वाजस्य मा प्रसवेनोद्ग्राभेणोदजिग्रभत् ।
अथा सपत्नानिन्द्रो मे निग्राभेणाधरां अकः ॥ ३९

उद्ग्राभश्च निग्राभश्च ब्रह्म देवां अवीवृधत् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥ ४०

वसुरस्यु,—पावसुरसि, विश्वावसुरस्य,—मुभी रिहाणा व्यन्तु वयो, वशा पृश्निर्भूत्वा मरुतो गछ, ततो नो वृष्ट्यावत ॥ ४१

[१२] मै. ४,१,१३ । तै. १,१,१०-११। काठ. १,११ । कपि. १,११। वा. २,२-६। काण्व. २,२--९ । मा. श्रौ.१,१,६।
[ नित्यहोतारं ( वीतिहोत्रं ) त्वा...समिधीमहि ।( ऋ. ५,२६,३ । सा. १५२३)

[१३] मै. ४,१,१४ । तै. १,१,१२-१३ । काठ. १,१२ । कपि. १,१२ । वा. २,७-९;१६,१८,२१;८,२१; १७,६३--६४ । काण्व. १,१०,१२,१४;१४,३५,३९;९,२१;१८,६३--६४ । मा. श्रौ. १,३; १--४ ।

सꣳस्रावभागा स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवाः ।
इमाꣳ वाचमभि विश्वे गृणन्तः स्वाहा देवा अमृता मादयन्ताम् ॥ ४२
देवा गातुविदो गातुꣳ वित्त्वा गातुमित, मनसस्पते सुधात्विमꣳ यज्ञं दिवि देवेषु वाते
धाः, स्वाहा ॥१३॥ ४३ [४३]

॥ इति प्रथमकाण्डे प्रथमः प्रपाठकः ॥१॥

अथ द्वितीयः प्रपाठकः ।

### अध्वरः ।

आपो देवीः शुन्धत मा मधुमन्तं मधुमतीर्देवयज्यायै ॥ १
ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीः । या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ २
देवश्रुदिमान् प्रवपे, स्वस्त्युत्तरं अशीय ॥ ३
हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुरिहित्वावद्यमापः ।
शतं पवित्रा वितता न्यासु तेभिर्मा देवः सविता पुनातु ॥ ४
आपो मा मातरः सूदयन्तु घृतेन मा घृतप्वः पुनन्तु ।
विश्वꣳ हि रिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ ५
विष्णोः शर्मासि, शर्म मे यछो, र्जै त्वा, महीनां पयोऽस्यपामोषधीनाꣳ रसो, वर्चोधा
असि, वर्चो मे धेहि ॥ वृत्रस्यासि कनीनिका चक्षुषो मे वयोधा, अन्तरहं त्वया द्वेषो
अन्तररातीर्दधे महता पर्वतेन, चक्षुष्पा असि, चक्षुर्मे पाहि ॥ चित्पतिस्त्वा पुनातु,
वाचस्पतिस्त्वा पुनातु ॥ ६--८
देवस्त्वा सविता पुनात्वछिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥ ९
तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तं शकेयम् ॥१॥ १०
आकूत्यै प्रयुजे ऽग्नये स्वाहा, मेधायै मनसे ऽग्नये स्वाहा, दीक्षायै तपसे ऽग्नये स्वाहा,
सरस्वत्यै पूष्णे ऽग्नये स्वाहा ॥ ११
आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्षः ।
बृहस्पतिर्नो हविषा वृधातु । स्वाहा ॥ १२

---

[ १ ] मै. ३,६,२--३ । तै. १,२,१ । काठ. २,१ । कपि. १,१३ । वा. ४,१--४ । काण्व. ४,२--५ । मा. श्रौ. २,१,१ ।
[ हिरण्यवर्णाः (एकपादः) अथर्व. १.३३.१ ] [आपो ( अस्मान् ) मा० । ऋ. १०,१७,१०; अथर्व. ६,५१,२]

[ २ ] मै. ३,६,४;५,८ । तै. १,२,२ । काठ. २,२--३ । कपि. १.१४--१६ । वा. ४,७--१०;५--६ । काण्व. ४,८--११,६,७ ।
मा. श्रौ. २,१,२ । [ विश्वो देवस्य० ऋ० ५।५०।१ ]

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नꣳ वृणीत पुष्यसे । स्वाहा ॥ १३

ऋक्सामयोः शिल्पे स्थ,—स्ते वामारभा, आ मोदृचः पातꣳ, विष्णोः शर्मासि,
शर्म मे यछ, नमस्ते अस्तु, मा मा हिꣳसीः ॥ १४

इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षꣳ वरुण सꣳशिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेयम् ॥ १५

सूर्याग्नी द्यावापृथिवी उरो अन्तरिक्षापः ॥ ओषधया उप मा दीक्षायां दीक्षापतयो ह्वयध्वं,
देव सवितस्त्वं दीक्षायां दीक्षापतिरसी,—त्थं मा सन्तं पा,—ह्वूर्गस्याङ्गिरस्यूर्णम्रदा, ऊर्जं
मयि धेही,—न्द्रस्य योनिरसि, गोपाय मा, नमस्ते अस्तु, मा मा हिꣳसीः ॥ १६–१७

कृषिꣳ सुसस्यामुत्कृषे सुपिप्पला ओषधीस्कृधि ।
विषाणे विष्यैतं ग्रन्थिꣳ यदस्य गुःपितꣳ हृदि मनो यदस्य गुःपितम् ॥ १८

बृहन्नसि वानस्पत्यः, सुद्युम्नो द्युम्नꣳ यजमानाय धेहि, नक्षत्राणां मातीकाशात् पाहि ॥ १९

आ वो देवास ईमहे वामं प्रयत्यध्वरे ।
यद्वो देवास आगुरे यज्ञियासो हवामहे ॥ २०

स्वाहा यज्ञं मनसः स्वाहा दिवः स्वाहा पृथिव्याः स्वाहोरोरन्तरिक्षात् स्वाहा वातात्
परिगृह्णामि, स्वाहा ॥२॥ २१

नक्षत्राणाꣳ सकाशान्मा यौषꣳ, व्रतं चरत ॥ २२

दैवीं धियं मनामहे सुमृडीकामभिष्टये ।
वर्चोधाꣳ यज्ञवाहसꣳ सुतीर्थां नो असद्वशे ॥ २३

ये देवा मनुजाता मनोयुजः सुदक्षा दक्षपितरस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहा ॥ २४

शिवाः पीता भवत यूयमापो अस्माकꣳ योना उदरे सुशेवाः ।
इरावतीरनमीवा अनागसः शिवा नो भवत जीवसे ॥ २५

कामो हविषां मन्दिष्ठोऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्धिषीमहि ।
गोपाय नः स्वस्तये प्रबुधे नः पुनस्कृधि ॥ २६

---

[ ३ ] मै. ३,६,९,१० । तै. १,२,३ । काठ. २,४ । कपि. १,१९ । वा. ४,११,१२,१४–१६;६,२७ । काण्व. ४,१५–१७, १९–२१; ६,३९,४०; १०,८ । मा. श्रौ. २,१,३ ।

पुनर्मनः पुनरायुर्न आगात् पुनः प्राणः पुनराकूतमागात् ।
वैश्वानरोऽदब्धस्तनूपा अपबाधतां दुरितानि विश्वा ॥ २७
त्वमग्ने व्रतपा असि देवा आ मर्त्येष्वा ।
त्वꣳ यज्ञेष्वीड्यो व्रतमस्मासु धारय ॥ २८

पूषा सनीनाꣳ सोमो राधसां, मा पृणन् पूर्त्या विराधिष्ट, माꣳ वयमायुषा वर्चसा च,
रास्त्वेयत् सोमा,—ऽऽ भूयो भर, देवः सविता वसोर्वसुदावा, वायुर्गोपा,—स्त्वष्टाधिपतिः,
पूषा प्रतिग्रहीता, दैवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तꣳ वो मा क्रमीषꣳ,
याः पशूनामृषभे वाचस्ताः सूर्यो अग्रे शुक्रो अग्रे ताः प्रहिणोमि यथाभागꣳ वो अत्र, शिवा नः
पुनरायन्तु वाचो, वायवे त्वा, वरुणाय त्वा, रुद्राय त्वा, निर्ऋत्यै त्वे,—न्द्राय त्वा,
मरुद्भ्यस्त्वा ॥३॥ २९

इयं ते शुक्र तनूरिदꣳ वर्च,—स्तया संभव, भ्राजं गच्छ, जूरसि धृता मनसा जुष्टा विष्णवे,
तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशिय, स्वाहा, शुक्रमसि, चन्द्रमस्य,—मृतमसि,
वैश्वदेवमसि, चिदसि, मनासि, धीरसि, दक्षिणासि, यज्ञियासि क्षत्रियास्य,—दिति-
रस्युभयतः शीर्ष्णि, सा नः सुप्राची सुप्रतीची भव, मित्रस्त्वा पदि बध्नातु, पूषाध्वनः पात्वि,
—न्द्रायाध्यक्षाया,—नु त्वा माता मन्यताम,—नु पिता, ऽनु भ्राता सगर्भ्यो, ऽनु सखा
सयूथ्यः, सा देवि देवमच्छेही,—न्द्राय सोमꣳ, रुद्रस्त्वावर्तयतु, स्वस्ति सोमसखा पुनरेहि,
वस्व्यसि, रुद्रास्य,—दितिरस्या,—दित्यासि, चन्द्रासि, रुद्रासि, बृहस्पतिष्ट्वा सुम्ने
रम्णातु, रुद्रो वसुभिराचके, पृथिव्यास्त्वा मूर्धन्नाजिघर्मि यज्ञिया इडायास्पदे घृतवति-
स्वाहा, ऽस्मे रमस्वा,—ऽस्मे ते राय,—स्तव, राय,—स्तव तव रायो, मा रायस्पोषेण वि-
यौष्म,—स्त्वष्टीमन्तस्त्वा सपेम ॥४॥ ३०

सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकाम् । यदेतशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३१
अपि पन्थामगन्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ ३२

[ पुनर्मनः पुनरा० । अथर्व. ६. ५३. २ ॥ त्वमग्ने व्रतपा० । ऋ० ८. ११. १; अथर्व० १९. ५९. १ ]

[ ४ ] मै. ३,७,५–७ । तै. १,२,४–५ । काठ. २,५ । कपि. १,१७–१८ । वा. ४,१७–२२ । काण्व. ४,२६–३१ । मा. श्रौ. २,१,३; १,४,२ ।

[ ५ ] मै. ३,७,७ । तै. १,२,६–७ । काठ. २,६ । कपि. १,१९ । वा. ४, ३२, २९,२४–२७ । काण्व. ४,३२,३९,४४,४१ । मा. श्रौ. २,१,३–४ ।

आस्माकोऽसि, शुक्रस्ते ग्रह, स्वाहा त्वा विचिद्भ्यः ॥ ३३
अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ३४

प्रजाभ्यस्त्वा, प्रजास्त्वानुप्राणन्तु, प्रजाः पाहि, शुक्रं ते शुक्र शुक्रेण चन्द्रं चन्द्रेणा-
मृतममृतेन क्रीणामि देव सोमः शक्म यत्ते गोर,—स्मै ते चन्द्राणि, तपसस्तनूरसि प्रजापतेर्वर्णः,
सहस्रपोषं पुष्यन्ति, परमेण पशुना क्रियस्वा,—ऽस्मे ते बन्धुः सुवाङ्गभ्राडङ्घारे बम्भारेऽस्तरहस्तः
कृशान एते वः सोमक्रयणा, स्तान् रक्षध्वं, मा वो दभन्, दुश्चक्षा वो मावक्षत्॥५॥ ३५
स्वजा असि, स्वभूरस्य,—स्मै कर्मणे जातं, ऋतेन त्वा गृह्णाम्यृ,—तेन नः पाहि मित्रो
ना एहि सुमित्रधः सह रायस्पोषेणे,—न्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ॥ ३६
उदायुषा स्वायुषोदोषधीनाꣳ रसेन । उत्पर्जन्यस्य धाम्नोदस्थाममृतं अनु ॥ ३७
उ३र्वन्तरिक्षꣳ वीह्य,—दित्याः सदा आसीद ॥ ३८
अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥ ३९
वनेषु३ व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु ।
हृत्सु क्रतुꣳ वरुणं दि३क्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ४०
धूरसि, ध्वर ध्वरन्तꣳ यो अस्मान् ध्वरा,—यꣳ वयं ध्वराम तं ध्वर ॥ ४१
वारुणमसि, वरुणस्त्वोत्तभ्नातु, वरुणस्य स्कम्भोऽसि ॥ ४२
प्रच्यवस्व भुवनस्पते विश्वान्यभि धामानि ।
मा त्वा परिपरिणो मा परिपन्थिनो मा त्वा वृका अघायवो विदन् ॥ ४३
श्येनो भूत्वा परापत यजमानस्य नो गृहे सꣳस्कृतम् । देवेभ्यः सुत्यायै ॥ ४४
नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत ॥ ४५
वारुणमसि, वरुणस्त्वोत्तभ्नातु, वरुणस्य स्कंभसर्जनमसि ॥ ४६

---

[ अभि त्यं देवं० । अथर्व० ७,१४,१–२ ]

[ ६ ] मै. ३,७,८,९ । तै. १,२,८–१० । काठ. २,७ । कपि. १,१९; २,१ । वा. ४,२७,२८,३०,३१,३४–३६; ५,१ । काण्व. ४,३८,४०,४२,४३,४६–४८; ५,१ । मा. श्रौ. २,१,४,५ । [ अस्तभ्नाद्द्यां ( द्यामृषभो ) वृषभो० । ऋ० ३,३०,९; ८,४२,१ ] [ वनेषु (३) व्यन्तरिक्षं० । ऋ. ५,८५,२ ] [नमो मित्रस्य० । ऋ० १०,३७,१]

विचृत्तो वरुणस्य पाशः, प्रत्यस्तो वरुणस्य पाशो, नमो वरुणस्य पाशाया,—ऽग्नेस्तनूरसि, विष्णवे त्वा, सोमस्य तनूरसि, विष्णवे त्वा,—ऽतिथेरातिथ्यमसि, विष्णवे त्वा, —ऽग्नये त्वा रायस्पोषदे, विष्णवे त्वा, श्येनाय त्वा सोमभृते, विष्णवे त्वा, वारुणमसि, वरुणोऽसि धृतव्रतो, वरुणस्य ऋतसदनमासीद, वरुणाय त्वा ॥६॥ ४७

अग्नेर्जनित्रमसि, वृषणौ स्था, उर्वश्यस्या,—युरसि, पुरूरवा असि, गायत्रमसि, त्रिष्टुबसि, जगदसि ॥ भवतं नः समनसौ समोकसौ सचेतसा अरेपसौ ॥ मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ, शिवौ भवतमद्य नः ॥ अग्ना अग्निश्चरति प्रविष्टा ऋषीणां पुत्रो अधिराज एषः ॥ तस्मै विधेम हविषा वयं, मा देवानाꣳ यूयुपाम भागधेयम् ॥ आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि, तनूनप्त्रे शक्मने शाक्वराय शक्मन ओजिष्ठाया,—ऽनाधृष्टमस्य,—नाधृष्यं देवानामोजः ॥ अभिशस्तिपा अनभिशस्तेन्यम् ॥ अनु म इदꣳ व्रतꣳ व्रतपतिर्मन्यतामनु दीक्षां दीक्षापतिरञ्जसा, सत्यमुपागाꣳ, सुविते मा धा, अग्ने व्रतपते या मम तनूरेषा सा त्वय्य, —ग्ने व्रतपते या तव तनूरियꣳ सा मयि, सह नौ व्रतपते व्रतिनोर्व्रतान्यꣳ,—शुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदा, आ त्वमिन्द्राय प्यायस्वा, तुभ्यमिन्द्रः प्यायतामा,—प्यायय सखीन्त्सन्या मेधया, स्वस्ति ते देव सोम सुत्यमशीय स्व३स्त्यौदृचमेष्टा राया, एष्टा वामनि, प्रेषे भगाय, ऋतमृतवादिभ्यो, नमो दिवे, नमः पृथिव्यै ॥ ४८--५५

या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गहनेष्ठा ।
त्वेषꣳ वचो अपावधीरुग्रꣳ वचो अपावधीः ॥ स्वाहा ॥ ५६

या ते अग्ने रजाशया, या ते अग्ने हराशया, या ते अग्ने रुद्रिया तनूस्तया नः पाहि, तस्यै ते स्वाहा ॥ ७ ॥ ५७

तप्तायनी मेऽसि, वित्तायनी मेऽस्य,—वतान्मा नाथितं,—मवताद्व्यथितं,—मग्ने अङ्गिरो-३योऽस्यां पृथिव्यामध्यस्यायुना नाम्नेहि, वसवस्त्वा हरन्तु गायत्रेण छन्दसा, वित्स्व यज्ञपते, —यत्तेऽनाधृष्टं धामानाधृष्यं तेन त्वादधे, अग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामध्यस्यायुना नाम्नेहि, रुद्रास्त्वा हरन्तु त्रैष्टुभेन छन्दसा, वित्स्व यज्ञपते,—यत्तेऽनाधृष्टं धामानाधृष्यं तेन

---

[ ७ ] मै. ३,७,१०; ३,८,२; ३,९,५ । तै. १,२,१०--११ । काठ. २,८ । कपि. २,२--३ । वा. ५,२--८ । काण्व. ५, २--१२ । मा. श्रौ. १,७,१; २,२,१ । [ अग्नाव (अ) ग्निश्चरति० । अथर्व० ४,३९,९ ]

[ ८ ] मै. ३,८,५ । तै. १,२,१२ । काठ. २,९ । कपि. २,३ । वा. ५,९--१३; ३३,३० । काण्व. ५,१३--१८; ३३,३० । मा. श्रौ. १,७,३ । [ विभ्राड् बृहत्पिबतु० । ऋ० १०,१७०,१ । सा० ६२८,१४५३ ]

त्वा॑दधे, अग्ने॑ अङ्गिरो॒ यस्तृ॒तीय॑स्यां पृथि॒व्यामध्य॒स्यायु॑ना ना॒म्नेह्या॑दि॒त्या॑स्त्वा हरन्तु जाग॑तेन छन्द॑सा, वि॒त्स्वं य॑ज्ञपु॒ते,—यत्ते॑ऽना॒धृष्टं॒ धामा॑नाधृ॒ष्यं ते॒न त्वा॑दधे, वि॒देर॑ग्ने॒ नभो॒ नाम॒ यत्ते॑, सि॒ꣳहीर॑सि, महि॒षीर॑सि, दे॒वेभ्यः॑ शुन्धस्व, दे॒वेभ्यः॑ शुम्भस्व,—न्द्रघो॒षास्त्वा॑ पु॒रस्ता॑द्वसु॒भिः पान्तु, पि॒तर॑स्त्वा॒ मनो॑जवा दक्षिण॒तः पान्तु, रु॒द्रास्त्वा॒ प्रचे॑तसः प॒श्चात् पा॑न्तु, वि॒श्वक॑र्मा त्वादि॒त्यैरु॑त्तर॒तः पा॑तु, सि॒ꣳहीर॑सि सपत्नसा॒ही, स्वाहा॑, सि॒ꣳहीर॑सि रायस्पोष॒वनिः॑, स्वाहा॑, सि॒ꣳहीर॑सि सुप्रजा॒वनिः॑, स्वाहा॑, सि॒ꣳहीर॑स्यादित्य॒वनिः॑ सजात॒वनिः॑, स्वाहा॑, सि॒ꣳहीर॑-स्या,—वह दे॒वान् दे॑वाय॒ते यज॑मानाय॒, स्वाहा॑, भू॒तेभ्य॑स्त्वा, वि॒श्वायु॑रसि, पृथि॒वीं दृ॑ꣳह, ध्रु॒व॒क्षिति॑रस्य॒,—न्तरि॑क्षं दृꣳहाच्यु॒त,—क्षि॒द॑सि, दिवं॑ दृꣳहा,—ऽग्नेर्भस्मा॑स्य॒,—ग्नेः पुरी॑षमस्य॒,—ग्नेः कुला॑यमसि ॥ ५८

वि॒भ्राड् बृ॒हत् पि॑बतु सो॒म्यं मध्वायु॒र्दध॑द्य॒ज्ञप॑तावविह्रुतम्।
वात॑जूतो॒ यो अ॑भि॒रक्ष॑ति॒ त्मना॑ प्र॒जाः पि॑पर्ति बहु॒धा वि रा॑जति ॥८॥ ५९

दे॒वश्रु॑तौ दे॒वेष्वा घो॑षेथाम् ॥ ६०

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चितः॑।
वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः ॥ ६१

अप॒ जन्यं॑ भ॒यं नु॑द॒ मा च॒क्रा अ॑वृत्सत। गृ॒हꣳ सोम॑स्य गच्छ॒तं गच्छ॒दिन्द्र॑स्य निः॒कृत॑म् ॥ ६२

इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दा। समू॑ढमस्य पाꣳसु॒रे ॥ ६३

इरा॑वती धेनु॒मती॒ हि भू॒तꣳ सू॑यव॒सिनी॒ मन॑वे यश॒स्ये।
व्य॑ष्कभ्ना॒ रोद॑सी विष्ण ए॒ते दा॒धर्थ॑ पृथि॒वीम॒भितो॑ म॒यूखैः॑ ॥ ६४

सु॒वा॒गा॒व॒द दे॑व दु॒र्यं अ॑रिष्य॒न्नरि॑ष्यतः ॥ ६५

आ नो॑ वी॒रो जा॑यतां कर्म॒ण्यो॑ऽभिशस्ति॒पा अन॑भिशस्ते॒न्यः॑।
यं ब॒हवो॑ऽनु॒जीवा॒न्यो ब॑हू॒नाम॑सद्व॒शी ॥ ६६

वै॒ष्ण॒वम॑सि, विष्णु॒स्त्वोत्त॑भ्नातु ॥ ६७

दि॒वो वि॑ष्ण उ॒त वा॑ पृथि॒व्या उ॒रोर्वा॑ विष्णो बृह॒तो अ॒न्तरि॑क्षात्।
हस्तौ॑ पृणस्व ब॒हुभि॑र्व॒सव्यै॒राप्र य॑च्छ॒ दक्षि॑णा॒दोत स॒व्यात् ॥ ६८

---

[ ९ ] मै. ३,८,७। तै. १,२,१३। काठ. २,१०। कपि. २,४। वा. ५,१४--२१। काण्व. ५,१९--२७। मा. श्रौ. २,२,२।
[ युञ्जते मन०। ५,८१,१ ] [ इदं (ꣳ) विष्णुर्वि०। ऋ. १,२२,१७; अथर्व. ७,२६,४; सा. २२२; १६६९ ]
[ इरावती धेनुमती०। ऋ. ७,९९,३ ] [ दिवो (वा) विष्ण०। अथर्व. ७,२६,८ ]

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ६९
विष्णोः पृष्ठमसि, विष्णो ररराटमसि, विष्णोः शिप्रे स्थो, विष्णोः स्युरसि,
विष्णोर्ध्रुवोऽसि, वैष्णवमसि, विष्णवे त्वा ॥ ७०
प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥९॥ ७१
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽभ्रिरसि, नारिर,—
सीदमहं रक्षसो ग्रीवा अपिकृन्तामी,—दमहं यो मे समानो योऽसमानोऽरातीयति तस्य ग्रीवा
अपिकृन्तामि, बृहन्नसि बृहद्रावा, बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीं,
सम्राडसि सपत्नहे,—दमहं तान्वलगानुद्वपामि यान्मे समानो यानसमानो निचखान ये कुल्फदघ्ने,
निरस्तो वलगः, स्वराडस्यभिमातिहे,—दमहं तान्वलगानुद्वपामि यान्मे सजातो यानसजातो
निचखान ये जानुदघ्ने, निरस्तो वलगो, विराडसि रक्षोहे,—दमहं तान्वलगानुद्वपामि यान्मे
सबन्धुर्यानसबन्धुर्निचखान ये नाभिदघ्ने, निरस्तो वलगः, सत्रराडस्यशस्तिहे,—दमहं ता-
न्वलगानुद्वपामि यान्मे, भ्रातृव्यो यानभ्रातृव्यो निचखान ये अंसदघ्ने, निरस्तो वलगः,
सर्वराडस्यरातीयतो हन्ते,—दमहं तान्वलगानुद्वपामि यान्मे सजन्यो यानसजन्यो निचखान ये
शीर्षदघ्ने, निरस्तो वलगः ॥ ७२
संमृश इमानायुषे वर्चसे च देवानां निधिरसि द्वेषोयवनः ।
युयोध्यस्मद्द्वेषांसि यानि कानि च चकृम ॥ ७३
देवानामिदं निहितं यदस्त्यथाभाहि प्रदिशश्चतस्रः। कृण्वानो अन्यं अधरान् त्सपत्नान् ।१०।७४
पृथिव्यै त्वा,—ऽन्तरिक्षाय त्वा, दिवे त्वा, शुन्धन्तां लोकाः पितृषदना, यवोऽसि,
यावय द्वेषो अस्मद्य,—वयारातिं, पितृषदनं त्वा लोकमवस्तृणामि ॥ ७५
उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषा ।
नितानस्त्वा मारुतो निहन्तु मित्रावरुणौ ध्रुवेण धर्मणा ॥ ७६

---

[ विष्णोर्नु कं० । ऋ. १,१५४,१; अथर्व. ७,२६,१ ] [ प्र तद्विष्णु० । ऋ. १,१५४,२; अथर्व. ७,२६,२-३ ]
[ १० ] मै. ३,८,८ । तै. १,३,१-२ । काठ. २,११ । कपि. २,५ । वा. ५,२२--२४ । काण्व. ५,२८--३० । मा. श्रौ. १,
२,३; १,८,२ । [ देवस्य त्वा० । अथर्व. १९,५१,२ ]
[ ११ ] मै. ३,८,९ । तै. १,३,१-२ । काठ. २,१२ । कपि. २,६ । वा. ५,२६--३०,२५ । काण्व. ५,३३--३८,३१,१२ ।
मा. श्रौ. २,२,३; १,८,२ ।

ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि, ब्रह्म दृꣳह, क्षत्रं दृꣳह रायस्पोषं दृꣳह, प्रजां दृꣳह, सजातानस्मै यजमानाय दृꣳह ॥ घृतेन द्यावापृथिवी आपृण, विश्वजनस्य छायासि ॥ ७७--७८

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः॥७९॥

इन्द्राय त्वेन्द्रस्य स्यूरसी,—न्द्रस्य ध्रुवोऽस्यै,—न्द्रमसी,—न्द्राय त्वा, रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवान्, रक्षोहणं त्वा वलगहनमवसिञ्चामि वैष्णवꣳ, रक्षोहणं त्वा वलगहनमवस्तृणामि वैष्णवꣳ, रक्षोघ्नी वाꣳ वलगघ्नी उपदधामि वैष्णवी, रक्षोघ्नी वाꣳ वलगघ्नी पर्यूहामि वैष्णवी, रक्षोहणं त्वा वलगहनमास्तृणामि वैष्णवम् ॥११॥ ८०

विभूरसि प्रवाहणो, वह्निरसि हव्यवाहनः, श्वात्रोऽसि प्रचेतास्तु,—थोऽसि विश्ववेदा, अवस्युरसि दुवस्वा,—नङ्गारिरसि बम्भारिरुशि,—गसि कविः, शुन्ध्युरसि मार्जालीयः, सम्राडसि कृशानुः, परिषद्योऽस्यास्त३व्यो, नभोऽसि प्रतक्वा, मृष्टोऽसि हव्यसूदनः, संगरोऽसि विश्ववेदा, ऋतधामासि स्वर्ज्योतिः, समुद्रोऽसि विश्वव्यचा, अ३जोऽस्येकपाद,—हिरसि बुध्न्यः, कव्योऽसि कव्यवाहनो, रौद्रेणानीकेन पाहि माग्ने, पिपृहि मा, नमस्ते अस्तु, मा मा हिꣳसीः ॥१२॥ ८१

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः । उरु यन्तासि वरूथꣳ स्वाहा ॥ ८२

जुषाणो अप्तुराज्यस्य वेतु । स्वाहा ॥ ८३

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयो३ध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिꣳ विधेम ॥ ८४

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतवने पिब प्र प्र यज्ञपतिं तिर । स्वाहा ॥ ८५

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।
स नः शर्म त्रिवरूथꣳ वियꣳसत्पातं नो द्यावापृथिवी उपस्थे ॥ ८६

उ३र्वन्तरिक्षꣳ वीहि,—दित्याः सदा आसीद, देव सवितुरेष ते सोम,—स्तꣳ रक्षस्व,

---

[ परि त्वा गिर्वणो० । ऋ. १,१०.१२ ]

[ १२ ] मै. ३,८,१० । तै. १,३,३ । काठ. २,१३ । कपि. २,७ । वा. ५,३१-३४ । काण्व. ५,३९-४३ । मा. श्रौ. २,२,४ ।

[ १३ ] मै. ३,९,१ । तै. १,३,४ । काठ. ३,१ । कपि. २,८ । वा. ५,३५,३६, ३८-४० । काण्व. ५,४४,४५,४८-५० । मा. श्रौ. २,२,४ । [ अग्ने नय० । ऋ. १,१८९,१; अथर्व. ४,३९,१० ] [ उरुविष्णो० । अथर्व. ७,२६,३ ]

मा त्वा दभन्, दुश्चक्षास्ते मावक्ष्यदे,—तत्त्वं देव सोम देवानुपावृत, इदमहं मनुष्यान् त्सह
रायस्पोषेण प्रजया चोपावर्ते, नमो देवेभ्यः, स्वधा पितृभ्यो, निर्वरुणस्य पाशादमुक्षि,
स्वरभिव्यख्यं ज्योतिर्वैश्वानरं,—मग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा त्वं,—य्यग्ने व्रतपते या
मम तनूस्त्वय्यभूदियं सा मयि, पुनर्नौ व्रतपते व्रतिनोर्व्रतानि, यथायथं नौ व्रतपते व्रति-
नोर्व्रतानि, वि व्रतानि सृजावहै ॥ १३॥ ८७

अत्यन्यानगां, नान्यानुपागाम,—र्वाक् त्वा परेभ्यः परोऽवरेभ्योऽविदं, तं त्वा जुषामहे
देवयज्यायै जुष्टं विष्णवे, विष्णवे त्वा ॥ ८८

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतवने पिब प्र प्र यज्ञपतिं तिर । स्वाहा ॥ ८९
ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः । या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ ९०
यं त्वामयं स्वधितिस्तिग्मतेजाः प्रणिनाय महते सौभगाय ।

दिवमग्रेण मा हिंसी,—रन्तरिक्षं मध्येन, पृथिव्याः संभव, भ्राजं गछ ।

वनस्पते शतवलिशो विरोह सहस्रवलिशा वि वयं रुहेम ॥ ९१

पृथिव्यै त्वा,—ऽन्तरिक्षाय त्वा, दिवे त्वा, शुन्धन्तां लोकाः पितृषदना, यवोऽसि,
यावय द्वेषो अस्मद्य,—वयारातिं, पितृषदनं त्वा लोकमवस्तृणामि ॥ स्वावेशोऽस्यग्रेगा नेतॄणां,—
मधि त्वा स्थास्यति, तस्य वित्स्व ॥ घृतेन द्यावापृथिवी आपृण, देवस्त्वा सविता मध्वानक्तु॥
इन्द्रस्य चषालमसि, सुपिप्पला ओषधीस्कृधि, दिवमग्रेणोत्तभाना,—ऽन्तरिक्षं मध्येनापृण,
पृथिवीमुपरेण दृंह ॥ ९२--९५

ता ते धामान्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि ॥ ९६
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ९७

ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि, ब्रह्म दृंह, क्षत्रं दृंह, रायस्पोषं दृंह, प्रजां
दृंह, सजातानस्मै यजमानाय दृंह ॥ ९८

---

[ १४ ] मै. ३,९,२--४ । तै. १,३,५--६ । काठ. ३,२--३ । कपि. २,९--१० । वा. ५,४२,४१,४३; ६,१--६ ।
काण्व. ५, ५२,५१,५३--५५; ६,१-७ । मा. श्रौ. १,८,१--२ । [ शुन्धन्तां (शुम्भन्तां) लोकाः ।
अथर्व. १८,४,६७ ] [ याते धामा० । ऋ. १,१५४,६ ] [ विष्णोः कर्माणि० । ऋ. १,२२,१९;
अथर्व. ७,२६,६; सा. १६७१ ]

तद्विष्णोः परमं पदꣳ शच्या पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ९९.
परिवीरसि, परि त्वा दैवीर्विशो व्ययन्तां, परीमꣳ यजमानं मनुष्यात्सह रायस्पोषेण
प्रजया च व्ययन्तां, दिवः सानूपेष, दिवं ते धूमो गच्छत्व,—न्तरिक्षं ज्योतिः, पृथिवीं भस्म,
स्वाहा ॥१४॥ १००

इषे त्वो,—पावीरस्थ,—पो देवान् दैवीर्विशः प्रागुर्वह्नय उशिजो, बृहस्पते धारया वसूनि,
हव्या ते स्वद, देव त्वष्टर्वसु रण्व, रेवती रमध्वं, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामाददे, ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्य,—मुष्मै त्वा जुष्टं, धर्षा मा-
नुषा, अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षाम्य,—नु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु
सखा सयूथ्यो, ऽनुमानावह देवान् देवायते यजमानाया,—ऽपां पेरुरसि, स्वात्तꣳ सद्धविरापो
देवीः स्वदन्तु, सं ते वायुर्वातेन गच्छताꣳ सꣳ यजत्रैरङ्गानि सꣳ यज्ञपतिराशिषा, घृतेनाक्तौ
पशूꣳस्त्रायेथाम् ॥ १०१

ये बध्यमानमनु बध्यमाना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टं अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया सꣳरराणः ॥ १०२
रेवति प्रेधा यज्ञपतिमाविशो,—रो अन्तरिक्ष सजूर्देवेन वातेन ॥ १०३
त्वमनास्य हविषो यज समस्य तन्वा भव । वर्षीयो वर्षीयसो यज्ञꣳ यज्ञपतौ धाः ॥ १०४
स्वर्विदसि, स्वर्वित्त्वा स्वरिहि३, स्वर्मह्यꣳ, स्वः पशुभ्यो, लोकविदसि, लोकꣳ
वित्त्वा लोकमिहि, लोकं मह्यं, लोकं पशुभ्यो, नाथविदसि, नाथꣳ वित्त्वा नाथमिहि,
नाथं मह्यं, नाथं पशुभ्यो, गातुविदसि, गातुꣳ वित्त्वा गातुमिहि, गातुं मह्यं, गातुं
पशुभ्यः ॥ १०५

न वा एतन्म्रियसे नोत रिष्यसि देवं इदेषि पथिभिः शिवेभिः ।
यत्र यन्ति सुकृतो नापि दुःकृतस्तत्र त्वा देवः सविता दधातु ॥ १०६
शमितार उपेतन यज्ञं देवेभिरन्वितम् । पाशात् पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि ॥ १०७
अदितिः पाशान् प्रमुमोक्त्वेतान् पशोः पाशान् पशुपतेरधि ।

---

[ तद्विष्णोः परमं० । ऋ. १,२२,२०; अथर्व. ७,२६,७; सा. १६७२ ]
[ १५ ] मै. ३,९,६,७ । तै. १,३,७--८ । काठ. ३,४--६ । कपि. २,११--१३ । वा. ६,७--११; २३,१६ । काण्व. ६,८--१५; २५,१८ । मा. श्रौ. १,८,३ । [ न वा (उ) एतन्म्रि० । ऋ. २,१६२,२१; १०,१७,४; अथर्व. १८,२,५५ ]

यो नो द्वेष्टयधुरः स पद्यतां तस्मिन् पाशान् प्रतिमुञ्चाम एतान् ॥ १५ ॥ १०८

नमस्त आताना,—नर्वाक् प्रेहि यजमानाय घृतस्य कुल्यामनु सह रायस्पोषेण, देवीरापः शुद्धा यूयं देवान् युयुध्वं, शुद्धा वयं सुपरिविष्टाः परिवेष्टारो वो भूयास्म, वाचमस्य मा हिंसीः, प्राणमस्य मा हिंसी,—श्चक्षुरस्य मा हिंसीः, श्रोत्रमस्य मा हिंसी,—यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व, देवेभ्यः शुम्भस्व, गात्राण्यस्य मा हिंसीश्च,—रित्राणस्य मा हिंसी,—र्नाभिमस्य मा हिंसी,—र्मेढ्रमस्य मा हिंसीः, पायुमस्य मा हिंसीः,
शमङ्ग्यः ॥ १०९

ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः ।
या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ ११०

पृथिव्यै त्वा, रक्षसां भागोऽसी,—दमहं रक्षोऽवबाध, इदमहं रक्षोऽधमं तमो नया,—मीषे त्वोर्जे त्वा, देवेभ्यः शुन्धस्व, देवेभ्यः शुम्भस्व ॥ घृतेन द्यावापृथिवी प्रोर्णुवाताम्,—मुष्मै त्वा जुष्टं, नमः सूर्यस्य संदृशे ॥ उर्वन्तरिक्षं वीहि, प्रत्युष्टं रक्षः, प्रत्युष्टारातिः,—र्वायोः स्तोकानां, प्रयुता द्वेषांसि, स्वाहो,—र्ध्वनभसं मारुतं देवं गछतम् ॥१६॥
१११--११३

जुष्टं देवेभ्यो हव्यं घृतावद्,—मुष्मै त्वा जुष्टं, रैडस्य,—ग्निष्ट्वा श्रीणात्वा,—पस्त्वा समारिण्वन्वा,—तस्य त्वा ध्राज्यै पूष्णोरंह्या ऊष्माणोऽव्यथिषेऽपामोषधीनां रसो, घृतं घृतपावानः पिबत, वसां वसापावानः पिबता,—न्तरिक्षस्य हविरुसि, स्वाहा त्वा वाताय, दिशः प्रदिश आदिशो विदिश उद्दिशो दिश, ऐन्द्रः प्राणो अङ्गे अङ्गे निदिध्य,—दैन्द्रोऽपानो अङ्गे अङ्गे निबोभुवदै,—न्द्रो व्यानो अङ्गे अङ्गे विबोभुवत् ॥ ११४

देव त्वष्टर्भूरि ते सत्संमेतु सलक्ष्म यद्विषुरूपं बभूव ।
देवत्रा यन्तमवसे सखायो अनु त्वा माता पितरो मदन्तु ॥१७॥ ११५

समुद्रं गछ स्वाहा,—ऽन्तरिक्षं गछ स्वाहा, देवं सवितारं गछ स्वाहा,—ऽहोरात्रे गछ

---

[ १६ ] मै. ३,१०,१ । तै. १,३,८--९ । काठ. ३,६ । कपि. २,१३ । वा. ६,१२--१६ । काण्व. ६,१६--११ मा. श्रौ. १,८,४ ।

[ १७ ] मै. ३,१०,४ । तै. १,३,१० । काठ. ३,७ । कपि. २,१४ । वा. ६,१८-२० । काण्व. ६,१३-२७ । मा. श्रौ. १,८,५ ।

स्वाहा, मित्रावरुणौ गच्छ स्वाहा, द्यावापृथिवी गच्छ स्वाहा, छन्दाꣳसि गच्छ स्वाहा, सोमं गच्छ स्वाहा, यज्ञं गच्छ स्वाहा, दिव्यं नभो गच्छ स्वाहा,—ऽग्निं॑ वैश्वानरं गच्छ स्वाहा, मनो हार्दिं॑ यच्छौ,—प्रधीभ्यस्त्वा ॥ ११६

धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ।

ततो वरुण नो मुञ्च ॥ ११७

उदुत्तमं॑ वरुण पाशमस्मदवाधमं॑ वि मध्यमं॑ श्रथाय ।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ११८

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै सन्तु ।

यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १८ ॥ ११९ [१६२]

॥ इति प्रथमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

अथ तृतीयः प्रपाठकः ।

ग्रहाः ।

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरः ।

हविष्मं आ विवासति हविष्मं अस्तु सूर्यः ॥ १

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि, देवानां भागधेयी स्थ,—न्द्राग्न्योर्भागधेयी स्थ, मित्रावरुणयोर्भागधेयी स्थ, विश्वेषां देवानां भागधेयी स्थ, सुम्नायुव सुम्न्याय सुम्नं धत्त २

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिमम॒ध्वरं दिवि देवेषु होत्रा यच्छ ॥ ३

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।

शृणोतु ग्रावाणो विदुषो नु यज्ञं॑ शृणोतु देवः सविता हवं मे ॥ ४

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यः शुक्रपेभ्यो दात येषां भाग स्थ स्वाहा, कार्ष्यसि, समुद्रस्य वोऽक्षित्या उन्नये, वसूनां॑ रुद्राणामादित्यानां पत्नेजनी स्थ, वसवो रुद्रा आदित्या एता वः पत्नेजनी स्थ, समुद्रं गन्धर्वेष्ठामन्वातिष्ठत वातस्य पत्मनेडिता, वामी ते संदृशि विश्वं॑ रेतो धेषीय तव वामीरनु संदृशि ॥ ५

---

[ १८ ] मै. ३,१०,७ । तै. १,३,११ । काठ. ३,८ । कपि. २,१५ । वा. ६,२१-२२; १२,१२ । काण्व. ६,२८-३१; १३,१३ । मा. श्रौ. १,८,६ । [ धाम्नो धाम्नो... नः ॥ २ ॥ उदुत्तमं वरुण...स्याम ॥ ३ ॥ ऋ. १,२४,१५; सा. ५८९; अथर्व. ७,८३,२-३ ]

[ १ ] मै. ४,५,१-४ । तै. १,३,१२-१३ । काठ. ३,९ । कपि. २,१६ । वा. ६,२३-२९ । काण्व. ६,३३,३४,३६,३८-४२ । मा. श्रौ. २,२,५; २,३,१-२ । [ यमग्ने पृत्सु मर्त्य० । ऋ. १,२७,७; सा. १४१५ ]

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥ ६
जुष्टो वाचो भूयासं, जुष्टो वाचस्पते,—यद्वाचो मधुमत्तस्मै स्वाहा, स्वाहा सरस्वत्यै ॥१॥
७
निग्राभ्या स्थ देवश्रुत,—स्तर्पयत मा,—युर्मे तर्पयत, तर्पयत मा, प्राणं मे तर्पयत,
तर्पयत मा,—ऽपानं मे तर्पयत, तर्पयत मा, व्यानं मे तर्पयत, तर्पयत मा, चक्षुर्मे तर्पयत,
तर्पयत मा, श्रोत्रं मे तर्पयत, तर्पयत मा, मनो मे तर्पयत, तर्पयत मा, वाचं मे
तर्पयत, तर्पयत मा—ऽऽत्मानं मे तर्पयत, तर्पयत मा, प्रजां मे तर्पयत, तर्पयत मा,
गृहान् मे तर्पयत, तर्पयत मा, पशून् मे तर्पयत, तर्पयत मा, गणैर्मा मा वितीतृषत, तर्प-
८
यत मा ॥२॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, ग्रावास्यध्वरकृद्देवेभ्यो,
९
गभीरमिममध्वरं कृधि ॥
इन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तम् ।
इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वादित्यवते ॥ १०
अग्नये त्वा रायस्पोषदे, विष्णवे त्वा, श्येनाय त्वा सोमभृते, विष्णवे त्वा ॥ ११
श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः ।
ता देवीर्देवत्रेमꣳ यज्ञं धत्तोपहूताः सोमस्य पिबत ॥ १२
यत्ते सोम दिवि ज्योतिर्यत् पृथिव्याꣳ यदुरा अन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृध्य,
—धि धात्रे वोचो, मा भे,—र्मा संविक्था, ऊर्जं धत्स्वो,—र्जमस्मासु धेहि, धिषणे
ईडिते इडेथा,—मूर्जं दधाथा,—मूर्जमस्मासु धत्तं, मा वाꣳ हिंसिषं, मास्मान् युवꣳ हिं-
१३
सिष्टम् ॥ ३ ॥
वाचस्पतये पवस्व विष्णो अंशुभ्यां गभस्तिपूतः ॥ देवो देवानां पवित्रमसि येषां भागोऽसि ॥

---

[ २ ] काठ. ३,१० । कपि. २,१७ । वा. ६,३०-३१ । काण्व. ६,४३-४४ । मा. श्रौ. २,३,२; २,४,१ ।

[ ३ ] मै. ४,५,४ । तै. १,४,१ । काठ. ३,१० । कपि. २,१७ । वा. ६,३०,३२-३५ । काण्व. ६,४३,४५-४८ । मा. श्रौ. २,३,३ ।

[ ४ ] मै. ४,५,५,७ । तै. १,४,२,१ । काठ. ४,१ । कपि. ३,१,२,१७ । वा. ७,१-३,६; ६,३६ । काण्व. ७,१-३,५; ६,४९ । मा. श्रौ. २,३,३,४ । [ प्रागपागुदगधराग० । अथर्व. २०,१३४,१-६ ]

मधुमतीर्ना इषस्कृधि, स्वाकृतोऽस्यु,३—र्वन्तरिक्षꣳ वीहि, विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः
पार्थिवेभ्यो, मनस्त्वाष्टु, स्वाहा त्वा सुभव सूर्याय, देवेभ्यस्त्वा मरीचिपेभ्यः, प्राणाय त्वा,
यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा, प्रागपागधरागुदगेतास्त्वा दिशा
आधावु,—न्त्वम्ब निस्मुर, समरिविंदाम् ॥ ४ ॥ १४–१६

उपयामगृहीतोऽसि ॥ १७

अन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्व ।
अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्यु३र्वन्तरिक्षम् ।
सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ १८

वाक्त्वाष्टु, स्वाहा त्वा सुभव सूर्याय, देवेभ्यस्त्वा मरीचिपेभ्योऽपानाय त्वा ॥५॥ १९

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥ २०

उपयामगृहीतोऽसि, वायवे त्वा ॥ २१

इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि ॥ २२

उपयामगृहीतोऽसि, वायव इन्द्रवायुभ्यां त्वै,—ष ते योनिः, सजोषोभ्यां त्वा ॥६॥ २३

अयꣳ वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ॥ २४

उपयामगृहीतोऽसि, मित्रावरुणाभ्यां त्वै,—ष ते योनिर्ऋतायुभ्यां त्वा ॥७॥ २५

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ २६

उपयामगृहीऽतोऽस्य,—श्विभ्यां त्वै,—ष ते योनि,—र्माध्वीभ्यां त्वा ॥ ८ ॥ २७

उपयामगृहीतो,—ऽसि, देवेभ्यस्त्वो—पयामगृहीतोऽसि, विश्वदेवेभ्यस्त्वो,—पयाम-
गृहीतोऽसि, विश्वेभ्यस्त्वा देवेभ्यः ॥ २८

---

[ ५ ] मै. ४,५,६ । तै. १,४,३ । काठ. ४,१ । कपि. ३,१ । वा. ७,४–६ । काण्व. ७,४,५ । मा. श्रौ. २,३,४ ।

[ ६ ] मै. ४,५,८ । तै. १,४,४ । काठ. ४,२ । कपि. ३,२ । वा. ७,७,८ । काण्व. ७,६,७ । मा. श्रौ. २,३,५ ।
[ आ वायो भूष० ऋ. ७,९२,१ । इन्द्रवायू इमे० ऋ. १,२,४ ]

[ ७ ] मै. ४,५,८; ४,६,५ । तै. १,४,५ । काठ. ४,२ । कपि. ३,२ । वा. ७,९,१० । काण्व. ७,८,९ । मा. श्रौ. २,३,५ ।
[ अयꣳ वां मित्रा० । ऋ. १,४७,१ ( द्वि. पादः ); २,४१,४ ]

[ ८ ] मै. ४,६,१ । तै. १,४,६ । काठ. ४,२ । कपि. ३,२ । वा. ७,११ । काण्व. ७,१० । मा. श्रौ. २,३,६ ।
[ या वां कशा० । ऋ. १,२२,३ ]

[ ९ ] तै. ३,२,१० । काठ. ४,२ । कपि. ३,२ । मा. श्रौ. २,३,८ ।

❀

दितेः पुत्राणामदितेरकारिषमुरुशर्मणां बृहताꣳ वरूथिनाम् ।
येषां नामानि विहितानि धामशश्चित्रैर्यजन्ति भुवनाय जीवसे ॥ २९
उपयामगृहीतोऽसि, विष्णोस्त्वोरुक्रमे गृह्णामि, विष्ण उरुक्रमैष ते सोम,—स्तꣳ रक्ष-
स्व, मा त्वा दभन् दु,—श्चक्षास्ते मावक्ष्यद्,—यꣳ वसुः पुरोवसुर्वाक्या वाचं मे पात्व,—यꣳ
वसुर्विदद्वसुश्चक्षुःपाश्चक्षुर्मे पात्व,—यꣳ वसुः सꣳयद्वसुः श्रोत्रपाः श्रोत्रं मे पातु ॥ ९ ॥ ३०
अयꣳ वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ ३१
उपयामगृहीतोऽसि, षण्डाय त्वै,—ष ते योनि,—र्वीरतायै त्वा ॥१०॥ ३२
तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठराजं बर्हिषदꣳ स्वर्दृशम् ।
प्रतीचीनꣳ वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥ ३३
उपयामगृहीतोऽसि, मर्काय त्वै,—ष ते योनिः, प्रजाभ्यस्त्वा ॥११॥ ३४
अपनुत्तौ षण्डामर्कौ सह तेन यं द्विष्मो, ऽच्छिन्नस्य ते देव सोम दक्षस्य रायस्पोषस्य सुवी-
र्यस्याभिग्रहीतारः स्याम ॥ तुथोऽसि जनधाया, देवास्त्वा शुक्रपाः प्रणयन्तु, तुथोऽसि जनधाया
देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि, सुवीराः प्रजाः प्रजनयन् परीहि, सुप्रजाः प्रजाः
प्रजनयन्नभिपरीहि ॥ ३५-३६
इन्द्रेण मन्युना युजावबाधे पृतन्यतः । घ्नता वृत्राण्यप्रति ॥ ३७
संजग्मानौ दिवा पृथिव्या शुक्रौ शुक्रशोचिषौ तौ देवौ शुक्रमन्थिना आयुर्यज्ञे धत्तमायुर्यज्ञ-
पतौ, पुमाꣳसं गर्भमाधत्तं गविण्योः प्राणान् पशुषु यच्छतꣳ, शुक्रस्याधिष्ठानमसि, मन्थिनो-
ऽधिष्ठानमसि, निरस्तः षण्डो, निरस्तो मर्कः सह तेन यं द्विष्मः ॥ ३८
या प्रथमा सꣳस्कृतिर्यज्ञे अस्मिन् यः परमो बृहस्पतिश्चिकित्वान् ।
यो मध्यमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहोत
॥१२॥ ३९

[ १० ] मै. ४,६,३ । तै. १,४,८ । काठ. ४,३ । कपि. ३,३ । वा. ७,१६,१२ । काण्व. ७,१५,११ । मा. श्रौ. २,३,५ ।
[ अयꣳ वेनश्चोदय० । ऋ. १०,१२३,१ ]

[ ११ ] मै. ४,६,३ । तै, १,४,९ । काठ. ४,३ । कपि. ३,३ । वा. ७,१२,१६ । काण्व. ७,११,१५ । [ तं प्रत्नथा पूर्वथा० । ऋ. ५,४४.१ ]

[ १२ ] मै. ४,६,३ । काठ. ४,४ । कपि. ३,३ । वा. ७,१२--१५,१७,१८ । काण्व. ७,१२--१४,१७--१९ । तै. ब्रा. १, १,१,१--५ । ताण्ड्य--ब्रा. १,४,३ । मा. श्रौ. २,४,१ ।

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।

अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ ४०

उपयामगृहीतोऽस्या,—ग्रयणोऽसि स्वाग्रयणो, जिन्व यज्ञं, जिन्व यज्ञपतिम्,—भि सवनानि पाह्य,—तस्त्वा विष्णुः पातु, विशं त्वं पाहीन्द्रियेणै,—ष ते योनि,—र्विश्वेभ्यस्त्वा देवेभ्यः ॥ १३ ॥ ४१

उपयामगृहीतोऽसि ॥ ४२

इन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवम् । यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा ॥ ४३

एष ते योनि,—रिन्द्राय त्वो,—पयामगृहीतोऽसि, देवेभ्यस्त्वा देवायुवं गृह्णामि, पुनर्हविरसि, देवेभ्यस्त्वा देवायुवं पृणाच्मि यज्ञस्यायुषे ॥१४॥ ४४

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।

कविं॰ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ ४५

उपयामगृहीतोऽसि, वैश्वानराय त्वा ॥ ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम, एष ते योनि,—र्वैश्वानराय त्वा ॥ ४६--४७

ध्रुवं ध्रुवेण हविषा वः सोमं नयामसि ।

यथा नः सर्वा इज्जनः संगमे सुमना असत् ॥ ४८

दिवि दिव्यान् दृंहान्तरिक्षे अन्तरिक्ष्यान् पृथिव्यान् पार्थिवान् ॥१५॥ ४९

उपयामगृहीतोऽसि, मधवे त्वा, माधवाय त्वा, शुक्राय त्वा, शुचये त्वा, नभसे त्वा, नभस्याय त्वे,—षाय त्वो,—र्जाय त्वा, सहसे त्वा, सहस्याय त्वा, तपसे त्वा, तपस्याय त्वा ॥१६॥ ५०

---

[ १३ ] मै. ४,६,४ । तै. १,४,१० । काठ. ४,५ । कपि. ३,४ । वा. ७,१९--२० । काण्व. ७,२०--२३ । मा. श्रौ. २,३,५ । [ये देवासो० । ऋ. १,१३९,११; अथर्व. १९,२७,११--१३ ]

[ १४ ] मै. ४,६,५ । तै. १,४,१२ । काठ. ४,५,६ । कपि. ३,४ । वा. ७,२२,२३ । काण्व. ७,२४,२५ । मा. श्रौ. २,३,५; २,४,३ ।

[ १५ ] मै. ४,६,६ । तै. १,४,१३ । काठ. ४,५ । कपि. ३,५ । वा. ७,२४--२५ । काण्व. ७,२६--२८ । मा. श्रौ. २,३,५ । [ मूर्धानं दिवो० । ऋ. ६।७।१; सा. ११४०; ध्रुवं ध्रुवेण...रत् । ऋ. १०,१७३,६; अथर्व. ७,९४.१ ]

[ १६ ] मै. ४,६,७ । तै. १,४,१४ । काठ. ४,७ । कपि. ३,५ । वा. ७,३० । काण्व. ७,३० । मा. श्रौ. २,४,२ ।

इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ ५१

उपयामगृहीतोऽसी,—न्द्राग्निभ्यां त्वै,—ष ते योनि,—रिन्द्राग्निभ्यां त्वा ॥१७॥ ५२

ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांꣳसो दाशुषः सुतम् ॥ ५३

उपयामगृहीतोऽसि, विश्वेभ्यस्त्वा देवेभ्य, एष ते योनि,—र्विश्वेभ्यस्त्वा देवेभ्यः ॥१८॥ ५४

इन्द्र मरुत्व इह पाहि सोमꣳ यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ॥ ५५

उपयामगृहीतोऽसी,—न्द्राय त्वा मरुत्वत एष ते योनि,—रिन्द्राय त्वा मरुत्वते ॥१९॥ ५६

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं यजनञ्जनिष्ठम् ॥ ५७

उपयामगृहीतोऽसी,—न्द्राय त्वा मरुत्वत, एष ते योनि,—रिन्द्राय त्वा मरुत्वते ॥२०॥ ५८

मरुत्वन्तꣳ वृषभꣳ वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवे ॥ ५९

उपयामगृहीतोऽसी,—न्द्राय त्वा मरुत्वत, एष ते योनि,—रिन्द्राय त्वा मरुत्वते ॥२१॥ ६०

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजासि प्रदिवः सुतानाम् ॥ ६१

---

[ १७ ] मै. ४,६,८ । तै. १,४,१५ । काठ. ४,७ । कपि. ३,५ । वा. ७,३१ । काण्व. ७,३१ । मा. श्रौ. २,४,२,३ । [ इन्द्राग्नी आगतꣳ० । ऋ. ३।१२।१; सा. ६६९ ]

[ १८ ] मै. ४,६,८ । तै. १,४,१६ । काठ. ४,७ । कपि. ३,५ । वा. ७,३३ । काण्व. ७,३३ । मा. श्रौ. २,४,२ । [ ओमासश्चर्षणी० । ऋ. १।३।७ ]

[ १९ ] मै. ४,६,८ । तै. १,४,१८ । काठ. ४,८ । कपि. ३,६ । वा. ७,३५ । काण्व. ७,३५ । मा. श्रौ. २,४,४ । [ इन्द्र मरुत्व इह । ऋ. ३।५१।७ ]

[ २० ] मै. ४,६,८ । तै. १,४,१८ । तै. ब्रा २,८,३,४--५ । काठ. ४,८ । कपि. ३,६ । वा. ३३,६४; ७,३५ । काण्व. ३२,६४; ७,३५, । मा. श्रौ. २,४,४ । [ जनिष्ठा उग्रः० । ऋ. १०।७३।१ ]

[ २१ ] मै. ४,६,८ । तै. १,४,१७ । काठ. ४,८ । कपि. ३,६ । वा. ७,३६ । काण्व. ७,३६ । [ मरुत्वन्तꣳ ( न्तं ) वृषभꣳ । ऋ. ३।४७।५ ]

[ २२ ] मै. ४,६,८ । तै. १,४,१९ । काठ. ४,८ । कपि. ३,६ । वा. ७,३८ । काण्व. २८,१० । [ मरुत्वाꣳ ( त्वाँ ) इन्द्र वृषभो० । ऋ. ३।४७।१ ]

उपयामगृहीतोऽसी,—न्द्राय त्वा मरुत्वत, एष ते योनि,—रिन्द्राय त्वा मरुत्वते ॥२२॥६२

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।

जहि शत्रूँरप, मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ ६३

उपयामगृहीतोऽसी,—न्द्राय त्वा मरुत्वत, एष ते योनि,—रिन्द्राय त्वा मरुत्वते ॥२३॥६४

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥ ६५

उपयामगृहीतोऽसि, महेन्द्राय त्वै,—ष ते योनि,—र्महेन्द्राय त्वा ॥२४॥ ६६

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।

अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ ६७

उपयामगृहीतोऽसि, महेन्द्राय त्वै,—ष ते योनि—र्महेन्द्राय त्वा ॥२५॥ ६८

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।

उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥ ६९

उपयामगृहीतोऽस्या,—ऽऽदित्येभ्यस्त्वा ॥

कदा चनः प्रयुच्छस्युभे निपासि जन्मनी । ७०

तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिवि ॥ ७१

उपयामगृहीतोऽस्या,—ऽऽदित्येभ्यस्त्वा ॥ ७२

यज्ञो देवानां प्रत्येतु सुम्नमादित्यासो भवता मृडयन्तः ।

आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् ॥ ७३

अहं परस्तादहमवस्तादहꣳ विश्वस्य भुवनस्य राजा ।

अहꣳ सूर्यमुभयतो ददर्श यदन्तरिक्षं तदु नः पिताभूत् ॥ ७४

---

[ २३ ] मै. ४,६,८ । तै. १,४,४२ । कपि. ३,६ । वा. ७,३७ । काण्व. ७,३८ । मा. श्रौ. २,४,६ ।
[ सजोषा इन्द्र सगणो० । ऋ. ३।४७।२ ]

[ २४ ] मै. ४,६,८ । तै. १,४,२० । काठ. ४,८ । कपि. ३,६ । वा. ७,४० । काण्व. ७,४० । मा. श्रौ. ७,२,४ ।
[ महं ( हाँ ) इन्द्रो य० । ऋ. ८।६।१; अथर्व. २०।१३८।१; सा. १३०७ ]

[ २५ ] मै. ४,६,८ । तै. १,४,२१ । काठ. ४,८ । कपि. ३,६ । वा. ७,३९ । काण्व. ७,३९ । मा. श्रौ. २,४,६ । [ महं ( हाँ ) इन्द्रो नृवदा । ऋ. ६।१९।१ ]

[ २६ ] मै. ४,६,९ । तै. १,४,२; २,४,८,२२ । काठ. ४,१० । कपि. ३,८ । वा. ८,२-४,९ । काण्व. ८,१-३,९ । मा. श्रौ. २,५,१ । [ कदा चन स्तरीरसि० । ऋ. ८।५१।७; कदा चन प्रयुच्छस्युभे० । ऋ. ८।५२।७; यज्ञो देवानां० । ऋ. १।१०७।१ ]

उन्नम्भय पृथिवीं भी३न्ध्यादो दिव्यं नभः ।
उद्नो दिव्यस्य नो धातरीशानो विष्या धृतिम् ॥ २६ ॥ ७५

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो वृधे ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥ ७६

उपयामगृहीतोऽसि, सावित्रोऽसि जनधाया, जिन्व यज्ञं, जिन्व यज्ञपतिम्,—भि सवनानि पाह्य,—तस्त्वा विष्णुः पातु, विशं त्वं पाहीन्द्रियेण ॥ २७ ॥ ७७

उपयामगृहीतोऽसि ॥ सुशर्मासि सुप्रतिष्ठानो, बृहदुक्षे नमः ॥ एष ते योनि,—र्विश्वेभ्यस्त्वा देवेभ्यः ॥ २८ ॥ ७८--७९

उपयामगृहीतोऽसि, बृहस्पतिसुतस्य ता इन्द इन्द्रियावतः ॥ पत्नीवन्तं ग्रहꣳ राध्यासम् ॥ अग्ना३इ पत्नीवा३न् त्सजूस्त्वष्ट्रा सोमं पिब ॥ २९ ॥ ८०--८२

उपयामगृहीतोऽसि, हरिरसि हार्योजनो हरिवान् हर्योः स्थाता, स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषः ॥ हरिवतो हार्योजनस्य हरिवन्तं ग्रहꣳ राध्यासम् ॥ हर्योर्धाना हरिवतीः सहसोमा इन्द्राय, रय्यै त्वा, पोषाय त्वा ॥ ३० ॥ ८३-८५

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ८६

उपयामगृहीतोऽस्य,—ग्नये त्वायुष्मत, एष ते योनि,—रग्नये त्वायुष्मते ॥ ३१ ॥ ८७

ओजस्तदस्य तित्विष उभे यत् समावर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ ८८

उपयामगृहीतोऽसी,—न्द्राय त्वौजस्वत, एष ते योनि,—रिन्द्राय त्वौजस्वते ॥ ३२ ॥ ८९

---

[ २७ ] मै. ४,७,१ । तै. १,४,२४ । काठ. ४,१० । कपि. ३,८ । वा. ३३,६९,८४; ८,७ । काण्व. ३२,६९,८४; ८,६ । मा. श्रौ. २,५,१ । [ अदब्धेभिः सवितः० । ऋ. ६।७१।३; शिवेभिरद्य० । अथर्व. ७।८४।१, रक्षा माकिर्नो० । अथर्व. १९।४७।६ ]

[२८] मै. ४,७,१ । तै. १,४,२६ । काठ. ४,१० । कपि. ३,८ । वा. ८,८ । काण्व. ८,७ । मा. श्रौ. २,५,१ ।

[२९] मै. ४,७,४ । तै. १,४,२७ । काठ. ४,११, । कपि. ३,९ । वा. ८, ९,१० । काण्व. ८,८,१०--११ । मा. श्रौ. २,५,२ ।

[३०] मै. ४,७,४ । तै. १,४,२८ । काठ. ४,११ । कपि ३,९ । वा. ८,११,१२ । काण्व. ८,१२--१३ । मा. श्रौ. २,५,४ ।

[३१] मै. ४,७,३ । तै. १,४,२९ । काठ. ४,११ । कपि. ३,९ । वा. १९,३८; ३५,१६; ८,३८ । काण्व. ८,१९,२०--२१, ४०; २९,३७; ३५,४८ । मा. श्रौ. ७,२,२ ।

[ अग्ना (ग्न) आयूꣳषि० ऋ. ९,६६,१९; सा. ६२७; १४६४; १५१८ ]

[३२] तै. १,४,३० । काठ. ४,११ । कपि. ३,९ । वा. ८,३९ । काण्व. ८,२१ ।

अदृश्रन्नस्य केतवो वि रश्मयो जनं अनु । भ्राजन्तो अग्नयो यथा ॥ ९०

उपयामगृहीतोऽसि, सूर्याय त्वा भ्राजस्वत, एष ते योनिः, सूर्याय त्वा भ्राजस्वते ॥
॥३३॥ ९१

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥ ९२

उपयामगृहीतोऽसी,—न्द्राय त्वा हरिवत, एष ते योनि,—रिन्द्राय त्वा हरिवते ॥३४॥ ९३

उपयामगृहीतोऽसि, प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि, रातं देवेभ्यो दक्षाय
दक्षवृधम,—ग्निह्वरेभ्यस्त्वा ऋतायुभ्या इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यः,
पृथिव्यै त्वा,—ऽन्तरिक्षाय त्वा, दिवे त्वा,—ऽद्भ्यस्त्वौषधीभ्यो वनस्पतिभ्यस्त्वा, प्राणाय
त्वा,—ऽपानाय त्वा, व्यानाय त्वा, सते त्वा,—ऽसते त्वा, भूताय त्वा, भव्याय त्वा,
येन प्रजा अछिद्रा अजायन्त तस्मै त्वा प्रजापतये विश्वकर्मणे विश्वव्यचसे विभूदान्ने विश्वं भागं
जुहोमि, स्वाहा ॥ ९४

तिस्रो जिह्वस्य समिधः परिज्मनोऽग्नेरकृण्वन्नुशिजो अमृत्यवे ।
तासामेकामदधुर्मर्त्ये भुजं लोकमु द्वे उप जामी ईयतुः ॥३५॥ ९५

अग्निः प्रातःसवनात् पात्वस्मान् वैश्वानरो विश्वश्रीर्विश्वशंभूः ।
स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षा स्याम ॥ ९६

अग्नये त्वा प्रवृहामि गायत्रेण छन्दसे,—न्द्राय त्वा प्रवृहामि त्रैष्टुभेन छन्दसा,—ऽऽदित्येभ्यस्त्वा
प्रवृहामि जागतेन छन्दसा, रैशीनां त्वा पत्मन्नाधूनोमि, मान्दानां त्वा पत्मन्नाधूनोमि,
भन्दनानां त्वा पत्मन्नाधूनोमि, पूतनानां त्वा पत्मन्नाधूनोमि, पस्त्यानां त्वा पत्मन्नाधूनोमि,
माध्वीनां त्वा पत्मन्नाधूनोमि, मधूघ्नानां त्वा पत्मन्नाधूनोमि, देवयानीनां त्वा पत्मन्नाधूनो-
म्यु,—पयामगृहीतोऽसि, शुक्रं त्वा शुक्र शुक्राय गृह्णाम्यह्नो रूपे सूर्यस्य रश्मिषु ॥ ९७

---

[ ३३ ] तै. १,४,३१ । काठ. ४,११ । कपि. ३,९-१० । वा. ८,४० । काण्व. ८,२२ । [ अदृश्रमस्य केतवो० । ऋ. १, ५०,३ । अथर्व. १३,२,१८; २०,४७,१५ । सा. ६३४ ]

[ ३४ ] मै. ४,७,६ । तै. १,४,३८ । काठ. ४,११ । कपि. ३,९ । वा. ८,३५ । काण्व. ८,१६ । मा. श्रौ. २,५,१ । [ इन्द्रमिद्धरी वहतो० । ऋ. १,८४,२ । सा. १०३० ]

[ ३५ ] तै. ३,५,८ । काठ. ३०,५,६ । मा. श्रौ. ७,२,४ ।

[ ३६ ] मै. ४,७,७ । तै ३,१,९,५; ३,३,३ । काठ. ३०,६ । वा. ८,४८-५० । काण्व. ८,३०-३२ । मा. श्रौ. ७,१,१ । मै. ४

आ समुद्रा अचुच्यवुर्दिवो धारा असश्चत ॥ ९८

ककुभꣳ रूपꣳ वृषभस्य रोचते, बृहद्वसूनामाधीतौ रुद्राणां कर्मन्नादित्यानां चेतसी,—न्द्राय त्वा विभूवसे जुहोम्यु,—शिक्त्वं देव सोम गायत्रेण छन्दसाग्नेर्धामोपेहि, वशीक्त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य धामोपेह्य,—स्मत्सखा देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि ॥३६॥ ९९

उदु त्यं जातवेदसं देवꣳ वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १००

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥ १०१

द्यां गछ, स्वर्गछ, रूपꣳ वो रूपेणाभ्येमि वयसा वय,—स्तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाके पृथिव्याः ॥ १०२

एतत्ते अग्ने राध एति सोमच्युतं, तन्मित्रस्य पथा नय ॥ १०३

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।

अयꣳ शत्रून् जयतु जर्हृषाणोऽयꣳ वाजं जयतु वाजसातौ ॥ १०४

ऋतस्य पथा प्रेतुश्चन्द्रदक्षिणा, ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम्॥ वि स्वः पश्य३ः व्यन्तरिक्षꣳ, यत स्वः सदस्यै,—रस्मद्राता मधुमतीर्देवत्रा गछत, प्रदातारमाविशता,—ऽनवहायास्मान् देवयानेन पथा सुकृतां लोके सीदत, तन्नः सꣳस्कृतम्॥३७॥ १०५--१०६

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।

विष्णुस्त्वष्टा प्रजया सꣳरराणो यजमानाय द्रविणं दधातु ॥ १०७

---

[ ३७ ] मै. ४,८,२,३ । तै. १,४,४३ । काठ. ४,९ । कपि. ३,७ । वा. ७,४१,४२,४४–४६; १३,४६; ८,४१; ३३,३१। काण्व. ८,२३,२४;९,६-७,९-१२; ३२,३१;१४,४८ । मा. श्रौ. ७,२,५। [ उदुत्यं जातवेदसं० । ऋ. १,५०,१। अथर्व.१३,२,१६;२०,४७,१३ । सा. ३१ । चित्रं देवानां०। ऋ. १,११५,१ । अथर्व.१३,२,३५, । सा. ६२९]

[ ३८ ] मै. ४,८,४ । तै. १,४,४४ । काठ. ४,१२ । कपि. ३,१० । वा. २,२१,२४;८,१७,१५,१६,१४,१८--२२। काण्व. २,३९.४४;९,१७,१५.१४,१८–२२ । मा. श्रौ. २,५,४ । [धाता रातिः सविते० । अथर्व. ७,१७,४ । समिन्द्र णो मनसा० । ऋ. ५,४२,४ । सं वर्चसा पयसा० । अथर्व. ६,५३,३ । यानावह (याँ२ऽआवह) । अथर्व. ७,९७,३ । सुगा वो देवाः० अथर्व. ७,९७,४ । यज्ञ यज्ञं गच्छ०। अथर्व. ७,९७,५–६ । देवा गातुविदो०। अथर्व. ७,९७,७--८ ]

समिन्द्र नो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमतौ यज्ञियानाम् ॥ १०८
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥ १०९
सुगा वो देवाः सदना कृणोमि य आजग्मेदं सवनं जुषाणाः ।
यक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥ ११०
यानावह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवींष्यसुं घर्मं दिवमातिष्ठतानु ॥ १११
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठ विद्वान् प्रजानन्नुपयाहि यज्ञम् ॥ ११२

यज्ञ यज्ञं गच्छ, यज्ञपतिं गच्छ, स्वं योनिं गच्छ, स्वाहै,—ष ते यज्ञो यज्ञपते सहसूक्त-
वाकः सुवीर,—स्तेन संभव, भ्राजं गच्छ, देवा गातुविदो गातुं वित्त्वा गातुमित, मनसस्पते
सुधातुमिमं यज्ञं दिवि देवेषु वाते धा, स्वाहा ॥ ३८ ॥ ११३

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ११४
शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥ ११५
अग्नेरनीकमप आविवेशापां नपात् प्रतिरक्षदसुर्यान् ॥ ११६
दमेदमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् ॥ ११७
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य ते यज्ञपते सूक्तोक्तौ नमोवाके विधेम स्वाहा ॥ ११८

---

[ ३९ ] मै. ४.८,५, । तै. १,४,४५ । काठ. ४,१३ । कपि. ३,११ । वा. ८,१२,२३–२५,२७;३,४८;२०,१८,१९,२२, २३; ३८,२५ । काण्व. ८,१२; ९,२३–२६,२२,४,७; ३८,२४;३,५६ । [ उरुं हि राजा० । ऋ. १,२४,८ । उदु त्ते (त्ये) मधुमत्तमा...इव । कण्वा इव भृगवः० । ऋ. ८,३,१५–१६ । अथर्व. २०,१०,१–२;२०,५९,१–२। सा. २५१,१३६२; १३६३ । एधोऽस्येधिषी ( य ) महि० । अथर्व. ७,८९,४; १९,३१,१२ । अपो (आपो) अद्यान्वचा० । ऋ. १,२३,२३; १०,९,९; अथर्व. ७,८९,१; ९,१,१४; १०,५,४६ ]

❀

अवभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणो, गृहं गृहो,—ऽव नो देवैर्देवकृतमेनो यक्ष्य,—व
मर्त्यैर्मर्त्यकृतं चिकित्वा,—ऽनुरोरा नो देव रिषस्पाहि,—प्सु धौतस्य ते देव सोमनृभिष्टुतस्य यस्ते
गोसनिर्भक्षो यो अश्वसनिस्तस्यु ता उपहूता उपहूतस्य भक्षयामि, विचृत्तो वरुणस्य पाशः,
प्रत्यस्तो वरुणस्य पाशो, नमो वरुणस्य पाशायो,—नेतवैशीयो ना उन्नुयाभिः ॥ ११९

उदुत्ते मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १२०
कण्वा इव भृगुवः सूर्या इव विश्वमिद्धितमानशुः ।
उदेतः प्रजामुत वर्चो दधाना युष्मान् राय उत यज्ञा असश्चतः ॥ १२१
गायत्रं छन्दो अनु संरभध्वमथा स्यात सुरभयो गृहेषु ।
एधोऽस्येधिषीमहि समिदसि समेधिषीमहि ॥ १२२
अपो अद्यान्वचारिषं रसेन समसृक्ष्महि ।
पयस्वानग्ना आगमं तं मा संसृज वर्चसा ॥ ३९ ॥ १२३ [२८५]

॥ इति प्रथमकाण्डे ग्रहो नाम तृतीयः प्रपाठकः ॥ ३ ॥

अथ चतुर्थः प्रपाठकः ।

## यजमान-ब्राह्मणम् ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । १
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥
अग्ने व्रतपते व्रतमालप्स्ये, तत्ते प्रब्रूमस्त,—न्नो गोपाय, तञ्शकेयम् ॥ २
अग्निं होतारमुप तं हुवे देवान् यज्ञियानिह यान्यजामहै ।
व्यन्तु देवा हविषो मे अस्या देवा यन्तु सुमनस्यमानाः ॥ ३
युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ।
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥ ४

[ १ ] मै. १,४,५ । तै. १,५,१०,३; १,६,२--४ । काठ. ४,१४; ५,२--४ । वा. १,५; २,२८,१०; १८,५६ ।
कण्व. १,८; २,५३,१८; २०,२६ । मा. श्रौ. १,४,१ ।

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् ।
अस्माकꣳ सन्त्वाशिषः ॥ ५
आमाशिषो दोहकामा इन्द्रवन्तो हवामहे । धुक्षीमहि प्रजामिषम् ॥ ६
सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा पण्यात् पण्यतरा ॥ ७
अरेडता मनसा देवान् गछ, यज्ञो देवान् गछतु, यज्ञो देवान् गम्यात् ॥ ८
वि ते मुञ्चामि रशनाꣳ वि रश्मीन् वि योक्त्राणि परिचर्तनानि ।
धत्तादस्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भागधां देवतासु ॥ ९
इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिः ।
अङ्गिरसो मे अस्य यज्ञस्य प्रातरनुवाकैरहूषुः ॥ १०

तस्य मा यज्ञस्येष्टस्य वीतस्य द्रविणेहागम्या,—द्वसुर्यज्ञो, वसुमान्यज्ञ,—स्तस्य मा यज्ञस्य
वसोर्वसुमतो वस्विहागछत्व,—दो मागछत्व,—दो मागम्यात् ॥ १ ॥ ११

सꣳ यज्ञपतिराशिषा, सदसि, सन्मे भूयाः, पूर्णमसि, पूर्णं मे भूयाः, सर्वमसि,
सर्वं मे भूयाः, अक्षितमस्य,—क्षितं मे भूयाः, प्राच्या दिशा देवा ऋत्विजो मार्जयन्तां,
दक्षिणया दिशा मासाः पितरो मार्जयन्तां, प्रतीच्या दिशा गृहाः पशवो मार्जयन्ता,—मुदीच्या
दिशापा ओषधयो वनस्पतयो मार्जयन्ता,—मूर्ध्वया दिशा यज्ञः सꣳवत्सरो मार्जयताꣳ, विष्णुः
पृथिव्याꣳ व्यक्रꣳस्त गायत्रेण छन्दसा, निर्भक्तः स यं द्विष्मो, विष्णुरन्तरिक्षे व्यक्रꣳस्त
त्रैष्टुभेन छन्दसा, निर्भक्तः स यं द्विष्मो, विष्णुर्दिवि व्यक्रꣳस्त जागतेन छन्दसा, निर्भक्तः
स यं द्विष्मो, ऽगन्म३ स्वः, सं ज्योतिषाभूमे,—दमहममुष्य प्राणं निवेष्टयामि, तेजोऽसि,
समहं प्रजया, सं मया प्रजा, समहं पशुभिः, सं मया पशवो, ऽग्ने गृहपते सुगृहपतिरहं
त्वया गृहपतिना भूयासꣳ, सुगृहपतिस्त्वं मया गृहपतिना भूया, अस्थूरिणौ गार्हपत्यं दिदा-
ञ्शतꣳ हिमाद्वायू, राधाꣳसि संपृचाना असंपृचानौ तन्वो, ऽसा अनु मा तन्व,—श्छिन्नो
दिव्यस्तन्तु,—र्मा मानुषश्छेदि, दिव्याद्धाम्नो मा छित्सि मा मानुषा,—ज्ज्योतिषे तन्तवे त्वा ॥
॥ २ ॥ १२

[ २ ] मै. १,४,६,७ । तै. १,६,५–६ । काठ. ५,५ । वा. ६,१०; २,२५,२७ । काण्व. ६,१२; २,४६–४७,४९–५० ।
मा. श्रौ. १,४,३; २,३,६ । शत. ब्रा. ३,७,४,१०–११ ।

ये देवा यज्ञहनः पृथिव्यामध्यासते । अग्निर्नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ १३
ये देवा यज्ञमुषः पृथिव्यामध्यासते । अग्निर्नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ १४
यास्ते रात्रयः सवितर्देवयानीः सहस्रयज्ञमभि संबभूवुः ।
गृहैश्च सर्वैः प्रजयान्वग्रे३ स्वो रुहाणास्तरता रजाꣳसि ॥ १५
ये देवा यज्ञहनो अन्तरिक्षे अध्यासते ।
वायुर्नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ १६
ये देवा यज्ञमुषो अन्तरिक्षे अध्यासते । वायुर्नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ १७
अगन्म मित्रावरुणा वरेण रात्रीणां भागो युवयोर्यो अस्ति ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ १८
ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ १९
ये देवा यज्ञमुषो दिव्यध्यासते । सूर्यो नस्तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ २०
येनेन्द्राय समभरन् पयाꣳस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धया माꣳ सजातानां मध्ये श्रैष्ठ्या आ धेहि मा ॥ २१
वेदोऽसि, वेदो मा आभर, तृ३प्तोऽहं, तृप्तस्त्वम् ॥ २२
घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणम् । वेदो वाजं ददातु मे ॥ २३
निर्द्विषन्तं निररातिं दह, रुद्रास्त्वायच्छन्ना,—ऽऽदित्यास्त्वास्तृणन् ॥ २४
गोमं अग्नेऽविमं अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इडावानेषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान् ॥ २५
सं पत्नी पत्या सुकृतेषु गच्छताꣳ यज्ञस्य युक्तौ धुर्या अभूथाम् ॥ २६
आपृणानो विजहुता अरातिं दिवि ज्योतिरुत्तममारभेथाꣳ स्वाहा ॥ २७
पत्नि पत्न्येष ते लोको, नमस्ते अस्तु, मा मा हिꣳसी,—र्या सरस्वती वेशयमनी तस्यै स्वाहा ॥ २८
या सरस्वती वेशभगीना तस्यास्ते भक्तिवानो भूयास्म ॥ २९
अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयाः सन् मनसा कृ३त्तोऽयाः सन् हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ॥ ३ ॥ ३०

---

[ ३ ] मै. १,४,८ । तै. ३,५,४; १,६,६,४ । काठ. ५,६,४ । वा. १५,५०; ३,६३; ४,९ । काण्व. १६,७२; ४,११ । मा. श्रौ. १,४,३,१; १,३,५ । ( गोमं ( माँ ) अग्नेऽविमं ( माँ )० । ऋ. ४,२,५ ]

देवान्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पितृन् जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, मनु३ष्यान्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछत्व,—प ओषधीर्वनस्पतीन्जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पश्चजनं जनमगन्यज्ञ,—स्ततो मा यज्ञस्याशीरागछतु, पश्चानां त्वा वातानां धर्त्राय गृह्णामि, पश्चानां त्वा दिशां धर्त्राय गृह्णामि, पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि, पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि, पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामि, चरोस्त्वा पश्चबिलस्य धर्त्राय गृह्णामि ॥ ३१

धामासि प्रियं देवानामनाधृष्टं देवयजनम् । देवव्रीत्यै त्वा गृह्णामि ॥ ३२

भूरस्माक९, हव्यं देवानामा,—ऽऽशिषो यजमानस्य, देवताभ्यस्त्वा देवताभिर्गृह्णामि४।३३

समृतयज्ञो वा एष यद्दर्शपूर्णमासौ, कस्य वाह यक्ष्यमाणस्य देवता यज्ञमागछन्ति कस्य वा न, बहूना९ समानमहर्यजमानाना९ यः पूर्वेद्युरग्निं गृह्णाति स श्वो भूते देवता अभियजते, ममाग्ने वर्चो विहवेष्वस्त्वि,—ति पूर्वमग्निं गृह्णाति, देवता वा एतत् पूर्वेद्युरग्रहीत्, ताः श्वो भू३तेऽभियजते, बर्हिषा वै पूर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायां, पुरा वत्सानामपाकर्तोर्दम्पत्यश्नीयाता९, हस्ता अवनिज्य दक्षिण३तोऽग्निमुपतिष्ठेता,—ऽग्ने व्रतपते व्रतमालप्स्या, इत्यग्निर्वै देवाना९ व्रतपतिर्ब्राह्मणो व्रतभृद्, व्रतपतय एव प्रोच्य व्रतमालभते, ऽग्नि९ होतारमुप त९ हुवा, इति येनु हविर्निर्वप्स्यन्तस्यात्तदभिमृशेद्, देवताना९ वा एष ग्रहो, देवता वा एतदग्रही,—द्युनज्मि त्वा ब्रह्मणा दैव्येने,—ति परिधिषु परिधीयमाणेषु वदेद,—ग्नेर्वा एष योगो, ऽग्निमेतद्युनक्ति, युक्तोऽस्मै हव्य९ वहत्य,—स्मास्विन्द्र इन्द्रियं दधात्वि,—तीडायामुपहूयमानाया९ वदेदि,—डाया वा एष दोहा, इडा९ वा एतद्दुहे, ऽथो इन्द्रिय९ वा इडे,—न्द्रियमेवात्मन्धत्ता, आमाशिषो दोहकामा, इत्याशिषो वै दोहकामा यजमानमभिसर्पन्ति, ता दक्षिणतो यजमानलोकमुपतिष्ठन्ते, ता यथा धेनवोऽदुग्धा अपक्रामन्त्येवमस्मादाशिषोऽदुग्धा अपक्रामन्ति य एवं न वेदा,—ऽथ य एव९ वेदाशिष एव दुहे, सा मे सत्याशीर्देवान् गम्यादि,—ति प्रस्तरे प्रह्रियमाणे वदेत्, सत्या९ वा एतदाशिषं देवान् गमयित्वाथ वर९ वृणीत, एतद्ध स्म वा आहौपावृज्ञानः श्रुतेह, सहस्रेणेष्ट्वा कमु ष्वीदतोऽधि वर९ वरिष्यामहा, इति सहस्रेण यक्षीये,—ति ह स्म वाव ततः पुराह, वि ते मुञ्चामि रशना९ वि रश्मीनि,—ति परिधिषु प्रह्रियमाणेषु

---

[ ४ ] मै. १,४,१ । तै. १,६,१ । काठ. ५,६ । वा. ८,६०; १,३१ । काण्व. ९,४६; १,४९ । मा. श्रौ. १,४,१ ।
[ ५ ] मै. १,४,१ । तै. १,६,७; १,७,४,३ । काठ. ३१,१५; ३२,२--३ ।

वदेद्, देवता वा एतत् स्वर्गं लोकं गमयित्वा प्रतिष्ठाप्य व्युमोगि,—ष्टो यज्ञो भृगुभिरिति, यज्ञस्य
वा एष दोहो, यज्ञमेतद्दुह, एतद्ध स्म वा आह कपिवनो भौवायनः, किमु स यज्ञेन यजेत
यो गामिव यज्ञं न दुहित, सुदोहतरो हि गौरिति ॥५॥ ३४

सꣳ यज्ञपतिराशिं,—षेति यजमानो यजमानभागं प्राश्नाति, यजमानो वै यज्ञपति,—र्यज्ञो यजमानभागो, यद्यजमानो यजमानभागं प्राश्नाति यज्ञपता एव यज्ञं प्रतिष्ठापयति, यदि प्रवसेत्समिष्टयजुषा सह जुहुया,—दुम्रा एव यज्ञं प्रतिष्ठापयति, यद्धविर्निर्वप्स्यन्नग्नौ निष्टपत्य-ग्नेरेव यज्ञं निर्मिमीते, ऽथ यद्धविर्निर्वप्स्यन्यजमानाय प्राह यज्ञपतेरेवाधि यज्ञं निर्मिमीते, ऽग्निर्वै भूयाꣳसं प्रदहत्ये,—तꣳ वै लोकꣳ यजमानोऽन्वतिमुच्यते यदेता आपोऽतिसृज्यन्ते, ऽछिन्नꣳ स्रावयितव्या, अद्भिर्वा एतद्यजमानोऽग्नेरात्मानुमन्तर्धत्ते, द्वया वै देवा यजमानस्य गृहमागछन्ति सोमपा अन्येऽसोमपा अन्ये हुतादोऽन्येऽहुतादोऽन्ये, एते वै देवा आहुतादो यद्ब्राह्मण, एतद्देवत्य एष यः पुरानीजान, एते वा एतस्य प्रजायाः पशूनामीशते३, तेऽ-स्याः प्रीता इषमूर्जमादायापक्रामन्ति, यदन्वाहार्यमन्वाहरति तामेव तेन प्रीणाति, दक्षिणतः-सद्भ्यः परिहर्तवा आह, दक्षिणावतैव यज्ञेन यजता, आहुतिभिरेव देवान् हुतादः प्रीणाति,
तेऽस्मै प्रीता इषमूर्जं नियछन्ति ॥ ६ ॥ ३५

संदसि, संन्मे भूया, इत्याशिषो वा एता,—स्ता एवावरुन्धे, पूर्णमसि, पूर्णं मे भूया, इति पूर्णो ह वा अमुत्राङ्गैः संभवति, सर्वमसि, सर्वं मे भूया, इति सर्वो ह वा अमुत्राङ्गैः संभवत्य,—क्षितमस्य,—क्षितं मे भूया, इत्यक्षितो ह वा अमुत्राङ्गैः संभवति, प्राच्या दिशा देवा ऋत्विजो मार्जयन्तामि,—त्येता वै यज्ञस्य मृष्टय, एताः शान्तयस्ता, बैजवापयो विदामक्रꣳ,—स्तेषां मृष्टो यज्ञः शान्तो भूदघातुकः पशुपतिः पशूꣳ,—स्तद्य एवꣳ वेद मृष्ट एवास्य यज्ञः शान्तो भवत्य,—घातुकः पशुपतिः पशून्, विष्णुः पृथिव्याꣳ व्यक्रꣳस्त गायत्रेण छन्दसे,—ति विष्णुमुखा वै देवा असुरानेभ्यो लोकेभ्यः प्रणुद्य स्वर्गं लोकमायꣳस्त,—द्विष्णुमुखो वा एतद्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुद्य स्वर्गं लोकमेत्य,—गन्म३ स्वरि,—ति स्वर्गमेव लोकमेति, सं ज्योतिषाभू,—मेति ज्योतिर्हि स्वर्गो लोकं, इदमहममुष्य प्राणं निर्वेष्ट-

[६] मै. १,४,२ । तै. १,७,३ । वा. ६,१० । काठ. ६,१२ ।
[७] मै. १,४,२ । तै. १,७,५--६ । काठ. ३२,५ । वा. २,२५,२७ । काण्व. २,४६,४७,४९,५० ।

यामी,—ति प्राणमेवास्य निवेष्टयती,—त्थं पर्यावर्तत, एवꣳ हि यज्ञः पर्यावर्तते, ऽथो असुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तते, तेजोऽसी,—त्याह, तेजो३ह्यग्निः, स वै हित्वा प्रजां च पशूꣳश्च स्वरेति, यदाह, समहं प्रजया, सं मया प्रजा, समहं पशुभिः, सं मया पशव, इति प्रजायां चैव पशुषु च प्रतितिष्ठत्य,—ग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ, सुगृहपतिस्त्वं मया गृहपतिना भूया, इत्यग्रहणौ संजीर्यतः, संवत्सरमायुरितो, नार्तिं नीतः, पुत्रस्य नाम गृह्णाति, प्रजामेवानु संमतानीत्, स वै मानुषमेवाभ्युपावर्तते, मनुष्यस्य हि नाम गृह्णाति, यदाहाच्छिन्नो दिव्यस्तन्तुर्मा मानुषश्छे,—दीति दिव्यं चैव मानुषं च संमतानीद्, दिव्याद्धाम्नो मा छित्सि मा मानुषा,—दित्युभा इमं लोकं जयतः, सह स्वर्गे लोके भवतः ॥ ७ ॥ ३६

इति य एव देवा यज्ञहनश्च यज्ञमुषश्च पृथिव्यां ताꣳस्तीर्त्वान्तरिक्षमारुहद्, य एव देवा यज्ञहनश्च यज्ञमुषश्चान्तरिक्षे ताꣳस्तीर्त्वा दिवमगन्, य एव देवा यज्ञहनश्च यज्ञमुषश्च दिवि ताꣳस्तीर्त्वा सुजातानां मध्ये श्रैष्ठ्या आधादेनꣳ, शिरो वा एतद्यज्ञस्य यत्पुरोडाशः, केशा वेदो, यद्वेदेन पुरोडाशꣳ संमार्ष्टि यज्ञस्य सर्वत्वायाथो मेध्यत्वाय, यज्ञो वै देवेभ्यस्तिरोऽभवत्, तं देवा वेदेनाविन्दꣳ,—स्तद्वेदस्य वेदत्वꣳ, यद्वेदेन वेद्यामास्ते यज्ञमेवास्मै विन्दति, पत्न्यै वेदं प्रयच्छति, दुरनुवेदो वा अमुत्र यज्ञो, यज्ञमेवास्मै विन्दति, त्रिः प्रयच्छति, त्रिषत्या हि देवा, उपस्था आसते, पुमाꣳसं जानुका भवति, पशवो वै वेद, ओषधयो३ ह्येष, एष खलु वै पशूनां लोको यदन्तराग्नी, स्वे वा एतं लोके यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, ऽर्धमासेऽर्धमासे वै यज्ञो विच्छिद्यते, संततमाहवनीयात् स्तृणन्नेति यज्ञस्य संतत्यै, तꣳ संततमुत्तरेऽर्धमा३सेऽभियजते, गोमं अग्नेऽविमं अश्वी यज्ञ, इति गोमन्तमेवाविमन्तमश्विनꣳ यज्ञमकरि,—डावानेषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावा,—नित्याशिषमेवाशास्ते, सं पत्नी पत्या सुकृतेषु गच्छतामित्येष वै पत्न्या यज्ञस्यान्वारम्भः, सह स्वर्गे लोके भवतो, या वा एतस्य पत्नी सैतꣳ संप्रति पश्चादन्वास्ते, यत् संप्रति पश्चादन्वासीत प्रजामस्या निर्दहेद्, यदाह पत्नि पत्न्येष ते लोक, इति लोकमेवास्या अकर,—निर्दाहुकोऽस्याः प्रजा भवति, या सरस्वती वेशयम,—नीति वेशयमनꣳ, वेशानेवास्मै तेन यच्छत्यु,—तास्याजीवन्तः सजाता उपासते, वाचामिन्वस्य ब्राह्मणस्य वा राजन्यस्य वोपास्महा, इति माꣳसं तु न पचेयु,—

[ ८ ] मै. १,४,३ । तै. ३,५,४ । तै. ब्रा. ३,३,९,११ । काठ. ३२,४,६ । (गोमाँ अग्ने०) ऋ. ४,२,५ ।

स्तस्मिन्नग्नौ यत् पचेयुः क्रव्यादं कुर्यु,—र्न हि तस्मिन्नग्नौ माꣳसं पचन्ति यस्मिन्नाहुतीर्जुहुत्य,—या-
श्चाग्नेऽस्यनभिशस्ति,—श्चेत्यया वै नामैषाग्नेः प्रिया तनू,—रया मर्याधैर्येणे,—ति खलु वा आहु,—
र्यच्चैवात्र यज्ञे क्रियते यच्च न, यां चैवात्र यज्ञस्य प्रायश्चित्तिꣳ विद्म यां च न तस्यैषोभयस्य
प्रायश्चित्तिः ॥ ८ ॥ ३७

देवान् जनमगन्यज्ञ, इति स्कन्नमभिमन्त्रयेत, जनꣳ वा एतद्यज्ञस्य गछति यत् स्कन्दति,
जनो३ ह्रीयमस्मद्दधि, यज्ञस्य वा एतज्जनं गतस्याशिषमवरुन्धे, पञ्चानां त्वा वातानां धर्त्राय
गृह्णामीति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्धा,—ऽयꣳ वाव यः पवत एष यज्ञ,—स्तमेवाग्र-
हीत्, पञ्चानां त्वा दिशां धर्त्राय गृह्णामी,—तीमा एव पञ्च दिशोऽग्रहीत्, पञ्चानां त्वा सलि-
लानां धर्त्राय गृह्णामीति, पशवो वै सलिलं, पशूनेवाग्रहीत्, पञ्चानां त्वा पृष्ठानां धर्त्राय
गृह्णामी,—ति पृष्ठान्येवाग्रहीत्, तेनास्य पृष्ठवन्तौ दर्शपूर्णमासौ संतता अविछिन्नौ भवतः,
पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामीति, छन्दाꣳसि वै पञ्च पञ्चजना,—श्छन्दाꣳस्येवाग्र-
ही,—च्चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामी,—तीमे वै लोकाश्चरुः पञ्चबिल, इमानेव लोकान-
ग्रहीत् ॥ ३८

धामासि प्रियं देवानामनाधृष्टं देवयजनम् । देववीत्यै त्वा गृह्णामि ॥ ३९

इति प्रज्ञात आज्यग्रहः पथागाद्, भूरस्माकꣳ, हव्यं देवाना, माशिषो यजमानस्यै,—ति
भूतिमेवात्मन आशास्ते, हव्यं देवेभ्य, आशिषो यजमानस्य, देवताभ्यस्त्वा देवताभिर्गृह्णा-
मी,—ति देवताभ्य एवैनं देवताभिरग्रहीत् ॥९॥ ४०

देवतानाꣳ वा एतदायतनꣳ यदाहवनीयो, यदन्तराग्नी तत् पशूनां, मनुष्याणां गार्हपत्यः,
पितॄणामोदनः पचनः, सर्वा ह वा अस्य यक्ष्यमाणस्य देवता यज्ञमागछन्ति य एवꣳ वेद, पूर्वं
चाग्निमपरं च परिस्तरीतवा आह, मनुष्याणाꣳ वै नवावसानं, प्रियं नवावसानमेवाक्रमेध्य-
त्वाया,—ऽग्नेर्जिह्वासि वाचो विसर्जन,—मिति पुरोडा३श्यानावपति, देवतानाꣳ वा एष ग्रहो,
देवता वा एतदग्रही,—दुतेद्ध स्म वा आहारुणं औपवेशि,—रहुतासु वा आहमाहुतिषु देवता हव्यं
गमयामि, सꣳस्थितेन यज्ञेनु सꣳस्थां गछानी,—ति तद्य एवꣳ वेदाहुतास्वेवास्याहुतिषु देवता
हव्यं गछति सꣳस्थितेन यज्ञेन सꣳस्थां गछत्यौ,—लूखलाभ्याꣳ वै दृषदा हविष्कृदेहि ॥ इति

[ ९ ] मै. १,४,४ । काठ. ३२,६ । वा. १,३१ । काण्व. १,४९ । मा. श्रौ. ३,१ ।
[ १० ] तै. १,६,८ । काठ. ३२,७ । वा. १,१५ । काण्व. १,२३ ।

देवा यज्ञाद्रक्षाꣳस्यपाघ्नत यदौलूखला उद्वादयन्ति हृषदौ समाघ्नन्ति ॥ हविष्कृदेहि ॥ इत्याह रक्षसामपहत्या, अपः प्रणीय वाचꣳ यच्छति, मनसा वै प्रजापतिर्यज्ञमतनु,—तौलूखलयोरद्वदितोरध्वर्युश्च यजमानश्च वाचꣳ यच्छेतां, प्रजापतिरेव भूत्वा मनसा यज्ञं तन्वाते, न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि, मानुषं तत् क्रियते, नैकमेकं, पितृदेवꣳत्यं तद्, द्वे द्वे सह प्रहृत्ये, याज्यानुवाक्ययो रूपमुपवसत्यु,—भयाꣳस्तेनु पशूनवरुन्धे ग्राम्याꣳश्चारण्याꣳश्च, यद्ग्राम्यस्य नाश्नाति तेन ग्राम्यानवरुन्धे, ऽथ यदारण्यस्याश्नाति तेनारण्या,—नथो इन्द्रियꣳ वा आरण्य,—मिन्द्रियमेवात्मन्धत्ते, न माषाणामश्नीयाद,—यज्ञिया वै माषा, न तस्य सायमश्नीयाद्यस्य प्रातर्यक्ष्यमाणः स्याद,—प्रतिजग्धेन वै देवा हव्येन वसीयोभूयमगच्छन् प्रतिजग्धेनासुराः पराभवꣳस्त,—दप्रतिजग्धेन वा एतद्धव्येन यजमानो वसीयोभूयं गच्छति, परास्य भ्रातृव्यो भवति, यो वै श्रद्धामनालभ्य यजते पापीयान् भवत्या,—ऽऽपो वै श्रद्धा, न वाचा गृह्णन्ते न यजुषा,—ऽति वा एता वाचं नेदन्त्यति वत्रं, मनस्तु नातिनेदन्ति, यदपो गृह्णीयादिमां तर्हि मनसा ध्याये,—दियꣳ वा एतासां पात्रम,—नयैवैना अग्रहीन्, श्रद्धामालभ्य यजते, न पापीयान् भवति ॥१०॥ ४१-४४

ब्रह्मवादिनो वदन्ति, प्रेध्ममुक्षन्ति प्र हवि,—रिध्मः प्रथम आहुतीनां, कस्मादन्येषाꣳ हविषाꣳ याज्यानुवाꣳक्याः सन्ति, कस्मादिध्मस्य नेति ॥ अग्नये समिध्यमानायानुब्रूहि ॥ इति पुरोनुवाक्या सामिधेनी,—र्याज्योपवाकौ वषट्कारौ, यत्र वै यज्ञस्यातिरिक्तं क्रियते तद्यजमानस्यातिरिक्तमात्मन् जायते, यदनाप्तꣳ वै यज्ञश्छिद्यते क्षोधुको यजमानो भवति, परिधानीयया सामिधेनीनामुत्तममिध्मस्य समर्धय,—त्यक्षोधुको यजमानो भवति, नास्यातिरिक्तमात्मन् जायते, यो वै प्रजापतिꣳ सप्तदशꣳ यꣳज्ञेऽन्वायत्तꣳ वेद नास्य यज्ञो व्यथते, प्रजापतौ यज्ञेन प्रतितिष्ठति ॥ ओं श्रावय ॥ इति चतुरक्षरम् ॥ अस्तु श्रौषट् ॥ इति चतुरक्षरम् ॥ यज ॥ इति द्व्यक्षरम् ॥ ये यजामहे ॥ इति पञ्चाक्षरं, द्व्यक्षरो वषट्कार, एष वै प्रजापतिः सप्तदशो यꣳज्ञेऽन्वायत्तो, यद्यनुवाक्याया एति यदि याज्याया, अंतश्चेदेवं नैति नास्य यज्ञो व्यथते, प्रजापतौ यज्ञेन प्रतितिष्ठति, न वै तद्विद्म यदि ब्राह्मणा वा स्मोऽब्राह्मणा वा यदि तस्य वा ऋषेꣳस्मोऽन्यस्य वा यस्य ब्रूमहे, यस्य हꣳत्वेव ब्रुवाणो यजते तं तदिष्टमागच्छति, नेतरमुपनमति, तत् प्रवरे प्रवर्यमाणे ब्रूयात् ॥ देवाः पितरः पितरो देवा, योऽस्मै स सन्युजे, योऽस्मि स सन्करोमि,

[ ११ ] तै. १,६,११।

❀

शुनं म इष्टꣳ शुनꣳ शान्तꣳ शुनं कृतं भूयात् ॥ इति तद्य एवं कश्च स संन्यज्जुते तं तदिष्टमाग-छति, नैतुरमुपनमति ॥ यज्ञस्य त्वा प्रमयाभिमया परिमयोन्मया परि गृह्णामि ॥ इति गायत्री वै यज्ञस्य प्रमा, त्रिष्टुबभिमा, जगती परिमा,—ऽनुष्टुबु,—न्मैतानि वै छन्दाꣳसि यज्ञꣳ वहन्ति, तैरेवैनं परिगृह्णाति ॥११॥ ४५--५९

केशिनꣳ वैदाभ्यं गन्धर्वाप्सरसोऽपृच्छन्, कथा यजमानो यजमानेन भ्रातृव्येण सदृङ्ङसी,—त्यहꣳ वेदा, इत्यब्रवीत्, तेऽब्रुवन्न,—ङ्गा नो यज्ञꣳ व्याचक्ष्वा, इति तेभ्यो यज्ञꣳ व्याचष्ट, तेऽब्रुवन्नु,—तैनेन यजमानो यजमानाद् भ्रातृव्यात् पापीयान्त्स्यादिति, तेऽब्रुवꣳ,—स्तथा वै ते यज्ञꣳ विधास्यामो यथा यजमानो यजमानं भ्रातृव्यमभिभविष्यसी,—ति तस्मा आहुतीर्यज्ञꣳ व्यदधु,—स्ततः केशी षण्डिकमौद्भारिमभ्यभव,—दभि भ्रातृव्यꣳ यज्ञेन भवति य एवꣳ वेद, प्राणो वा आघारः, पूर्वार्धे होतव्यो, मुखत एवास्य प्राणं दधाति, प्राणो वा आघारो, मध्यतो होतव्यो, मध्यत एवास्य प्राणं दधात्या,—ऽऽघारं भूयिष्ठमाहुतीनां जुहुयात्, प्राणो वा आघारः, प्राणमेवास्य भूयिष्ठं करोति, संततमाघारमाघारयेत्,— प्राणो वा आघारः, प्राणस्य संतत्या, ऊर्ध्वमाघारमाघारयेत् स्वर्गकामस्य, यजमानो वा आघारो, यज-मानमेव स्वर्गं लोकं गमयति, यं द्विष्यात्तस्य न्युब्जमाघारयेत्, पापीयान् भवत्य,—भिक्रामन्ती वा एकाहुति,—रपक्रामन्त्येका, प्रतिष्ठितैका, यामभिक्रामं जुहोति साभिक्रामन्ती, यामप-क्रामं जुहोति सापक्रामन्ती, याꣳ समानत्र तिष्ठन् जुहोति सा प्रतिष्ठिता, यं कामयेता,—ऽभि-तरꣳ वसीयाञ्छ्रेयान् त्स्या,—दिति तस्याभिक्रामं जुहुयात्, तेन सोऽभितरꣳ वसीयाञ्छ्रेयान् भवत्य,—थ यं कामयेता,—पतरं पापीयान् त्स्यादिति, तस्यापक्रामं जुहुयात्, तेन सोऽपतरं पापीयान् भवत्य,—थ यं कामयेत, न वसीयान् त्स्यान्न पापीयानिति, तस्य समानत्र तिष्ठन् जुहु-यात्,— तेन स न वसीयान्न पापीयान् भवत्यृ,—तवो वै प्रयाजाः, समानत्र होतव्या ऋतूनां प्रति-ष्ठित्यै, याग्नेराज्यभागस्य सोत्तरार्धे होत३व्या, ततो योत्तरा सा रक्षोदेव३त्या, या सोम-स्याज्यभागस्य सा दक्षिणार्धे होत३व्या, ततो या दक्षिणा सा पितृदेव३त्यै,—तद्वा अन्तराहुती-नां लोकः, क्लृप्ता अस्याहुतयो यथापूर्वꣳ हूयन्ते य एवꣳ वेद, यां धूमे जुहोति तां तमसि जुहोति, ततो यजमानोऽरोचुको भवति, यामङ्गारेषु जुहोति सान्धाहुति,—स्ततो यजमानस्य

---

[ १२ ] तै. १,६,३,१; १,७,१ ।

क्षुः प्रमायुकं भवत्यु,—भे ज्योतिष्मति होत३व्ये, ऽरोचुको यजमानो भवति, नास्य चक्षुः मीयते, यामब्राह्मणः प्राश्नाति सा स्कन्नाहुति,—स्तस्या वसिष्ठ एवं प्रायश्चित्ति॰ विदांचकार ब्रह्मं पाहि ॥ इति पुरोडाशमभिमृशेद्, भजतां भागी, मा भागो भक्त, ब्राह्मणानामिदं॰ विः सोम्याना॰ सोमपानां, नेहाब्राह्मणस्याप्यस्ति, कुर्वतो मे मा क्षेष्ट, ददतो मे मोपदसत् ॥ ति दक्षिणीयेष्वेवं यज्ञं प्रतिष्ठापयत्यस्कन्नमविक्षुब्ध,—मुत यामब्राह्मणः प्राश्नाति सास्य हुतैवं भवति ॥ १२ ॥ ६०—६३

यस्याज्यमनुत्पूत॰ स्कन्दति सा वै चित्रा नामाहुति,—स्ततो यजमानस्य चित्रं प्रमायुकं भवति, चित्रं देय॰, सैवं तस्य प्रायश्चित्ति,—रथ यस्योत्पूत॰ स्कन्दति सा वै स्कन्ना नामाहुति, —स्ततो यजमानः प्रमायुको भवति, वरो देयः, सैवं तस्य प्रायश्चित्ति,—रथ यस्य पुरोडाशौ दुःशृतौ भवतस्तद्धविर्यमदैवत्यु॰, यदा तद्धविः संतिष्ठेताथ चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो जीवतण्डुलमिवोपहरेत्, सैवं तस्य प्रायश्चित्ति,—रथ यस्य पुरोडाशौ क्षायतस्तं॰ यज्ञं॰ वरुणो गृह्णाति, यदा तद्धविः संतिष्ठेताथ तदेवं हविर्निर्वपेद्, यज्ञो हिं यज्ञस्य प्रायश्चित्ति,—रथ यो ऽदक्षिणेनु यज्ञेन यजते त॰ यजमान॰ विद्या,—ददक्षिणेन हिं वा अय॰ यज्ञेन यजते, ऽथ न वसीयान् भवती,—त्युवरा संमृद्धा देयात्, सैवं तस्य प्रायश्चित्ति,—रथ यस्य कपालं भिद्येत तत् संदध्याद्, गायत्र्या त्वा शताक्षरया संदधामि ॥ इति वाग्वै गायत्री शताक्षरा, वाचैवैनत् संदधात्य,—थ यस्य कपालं नश्यति त॰ वा इय॰ स्वर्गाल्लोकानन्तर्दधाति, यदा तद्धविः संतिष्ठेताथाग्नये वैश्वानराय द्वादशकपालं निर्वपे,—दिय॰ वा अग्निर्वैश्वानर, इमामेवं भागधेयेनोपासरत् स्वर्गस्य लोकस्यानन्तार्हित्या, अथ यस्याहुतिर्बहिष्परिधिं स्कन्दति सा वै जीवनडाहुति,—रग्नीधं ब्रूयात् ॥ एता॰ संकुष्य जुहुधि ॥ इत्यग्निर्वै सर्वा देवताः, सर्वाभिरेवास्य देवताभिर्हुतं भवति, पूर्णपात्रमग्नीधे देय॰, सैवं तस्य प्रायश्चित्ति,—र्यजमानो वै जुहू,—र्भ्रातृव्य उपभृ,—न्न प्रक्षिणतेव होत३व्य॰, यत् प्रक्षिणीयाद्यजमानं प्रक्षिणीयाद्, व्यृषतेव होतव्यं, देवेषवो वा एता यदाहुतयो, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, देवेषुभिरेवैन॰ विपृषति, स्तृणुत एवं, पशवो वा आहुतयो रु३द्रोऽग्निः स्विष्टकृ,—न्न सह होत३व्य॰, यत् सह जुहुयाद्रुद्रायास्य पशूनपिदध्या,

[ १३ ] मा. श्रौ. ३,१।

—दुत्तरार्धेपूर्वार्धे होत३व्यमाहुतीनामसꣳसृष्ट्या, अथो एवमस्य रुद्रः पशूननभिमानुको भवति ॥१३॥ ६४-६७

आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासा आलप्स्यमानो, ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालभ्य दर्शपूर्णमासा आलभते, जयानु त्वो जुहुति, देवाश्च वा असुराश्चास्पर्धन्त, स प्रजापतिरेतान्जयानपश्यत्, तानिन्द्राय प्रायच्छत्, तैः सꣳस्तम्भꣳ सꣳस्तम्भमसुरानजयत्, सꣳस्तम्भꣳ सꣳस्तम्भं भ्रातृव्यं जयति यस्यैते हूयन्ते ॥ आकूतं चाकूतिश्च ॥ इति यज्ञो वा आकूतं, दक्षिणाकूतिः ॥ चित्तं च चित्तिश्च ॥ इति मनो वै चित्तꣳ, वाक्चित्तिः ॥ आधीतं चाधीतिश्च ॥ इति प्रजा वा आधीतं, पशवा आधीतिः ॥ विज्ञातं च विज्ञातिश्च ॥ इत्यृग्वै विज्ञातꣳ, साम विज्ञातिः ॥ भगश्च क्रतुश्च ॥ इति प्रजापतिर्वै भगो, यज्ञः क्रतुः ॥ दर्शश्च पूर्णमासश्च ॥ इति दर्शपूर्णमासा एवं तद् द्वादश, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमेवाप्त्वावरुन्द्धे, प्रजापतिः प्रायच्छज्जयानिन्द्राय वृष्ण, उग्रः पृतनासु जिष्णुः ॥ तेभिर्वाजꣳ वाजयन्तो जयेम तेभिर्विश्वाः पृतना अभिष्याम ॥ इति त्रयोदशीमाहुतिं जुहुया,—दस्ति मासस्त्रयोदश,—स्तमेवैतयाप्त्वावरुन्द्धे ॥ अग्ने बलदः सहा ओजः क्रममाणाय मे दा अभिशस्तिकृतेऽनभिशस्तेन्याय ॥ अस्यां जनतायाꣳ श्रैष्ठ्याय स्वाहा ॥ इति जुहुयाद्, यत्र कामयेत, चित्रमस्यां जनतायाꣳ स्यामिति, चित्रमह तस्यां जनतायां भवति, शबलं त्वस्यात्मन् जायते ॥१४॥ ६८-८५

अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेत, भग्यन्नाद स्यामिति, प्रजापतिर्वै भगो, यज्ञः क्रतुः, स इमाः प्रजा भगेनाभिरक्षति, तस्मात् सर्वो मन्यते, मां भगोऽरिष्यति मां भगोऽरिष्यतीति, यदग्नये भगिने भगमेव साक्षादाप्त्वावरुन्धे, भग्यन्नादो भवत्य,—भौ सह दर्शपूर्णमासा आलभ्या, उद्वा अन्यः शृङ्गे सितो मुच्यते, दर्शो वा एतयोः पूर्वः पूर्णमासा उत्तरो, ऽथ पूर्णमासं पूर्वमालभन्ते, तदयथापूर्वं क्रियते, तत् पूर्णमासमालभमानः सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपाल,—ममावा३स्या वै सरस्वती पूर्णमासः सरस्वा,—नुभा एवैनौ यथापूर्वं कल्पयित्वालभता, ऋद्ध्या, ऋध्नोत्येवा,—ऽथो मिथुनत्वाय ॥१५॥ ८६ [३७१]

॥ इति प्रथमकाण्डे यजमान-ब्राह्मणं नाम चतुर्थः प्रपाठकः ॥४॥

---

[ १४ ] तै. ३,४,४ । मा. श्रौ. १,५ ६ ।

अथ पञ्चमः प्रपाठकः ।

## अग्न्युपस्थानम् ।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ २

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दातारा इषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ ३

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ ४

अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ ५

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ ६

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ना आयूंषि तारिषत् ॥ ७

अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ८

अग्निरृषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ ९

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषं रयिं मयि ॥ १०

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥ ११

स नः पावक दीदिवोऽग्ने देवां इहावह । उप यज्ञं हविश्च नः ॥ १२

---

[१] मै. १,५,५,६ । तै. १,५,५ । काठ. ६,९ । कपि. ४,८ । वा. ३,११--१३; १५,१६,१४; १३,१४; १५,२०; १५, २६; ३३,६; १२,५२; १५,५६; २३,३२; १९,३८; ३५,१६; २६,९; ८,३८; १७,८--९ । काण्व. ३,१७–१९,२१, २२,२०; १६,४१,४७; ३२,६; २५,३४; ८,१९; २१,४०; २९,३७; ३५,४८; २८,१२; २९,३८--३९; ८,२०; १८,१० । मा. श्रौ. १, ६,२ । [ उपप्रयन्तो अध्वरं० ऋ. १,७४,१; साम. १३७९ । अग्निर्मूर्धा दिवः० ऋ. ८,४४,१६; सा. २७; १५३२ । उभा वामिन्द्राग्नी० ऋ. ६,६०,१३ । अयं ते योनिर्ऋत्वियो० ऋ. ३,२९,१०; अथर्व. ३,२०,१। अयमिह प्रथमो० ऋ. ४,७,१ । अस्य प्रत्नामनु० ऋ. ९,५४,१ । सा. ७५५ । दधिक्राव्णो० ऋ. ४,३९,६; १०,१८६,१; अथर्व. ४,१०,६;२०,१३७,३; सा. ३५८ । प्र ना ( ण ) आयूंषि तारिषत्० ऋ. १,२५,१२; अथर्व. १२,२,१३;१४.२,६७;१९,३४,४; सा. १८४;१८४० । अग्न आयूंषि पवस० ऋ. ९,६६,१९; सा. ६२७;१४६४;१५१८ । अग्निरृषिः पवमानः० ऋ. ९,६६,२०;सा. १५१९ । अग्ने पवस्व स्वपा०ऋ. ९,६६,२१ । अग्ने पावक० ऋ. ५,२६.१; सा. १५२१ । स नः पावक० ऋ. १,१२,१०। अग्निः शुचिव्रततमः० ऋ. ८,४४,२१ । उदग्ने शुचयस्तव० ऋ. ८,४४,१७; सा. १५३४ । शुक्रा भ्राजन्त ईरते०अथर्व.१३,२,१ ।

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥ १३

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ १४

अग्नीषोमा इमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १५

अग्निस्तिग्मस्तिग्मतेजाः प्रति रक्षो दहतु संहतामरातिम् । अपाघशंसं नुदताम् ॥ १६

अग्ने सपत्नसाह सपत्नान् मे सहस्व । मा मा तितीर्षन्तारीत् ॥ १ ॥ १७

त्वमग्ने सूर्यवर्चा असि, सं मामायुषा वर्चसा सृज, सं त्वमग्ने सूर्यस्य ज्योतिषागथाः ॥ १८

संमृषीणां स्तुतेन सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मीय ॥ १९

इन्धानास्त्वा शतं हिमा द्युमन्तः समिधीमहि ।
वयस्वन्तो वयस्कृतं सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनं सुवीरासो अदाभ्यम् ॥ २०

अग्नेः समिदस्य,—भिशस्त्या मा पाहि, सोमस्य समिदसि, परस्पा म एधि, यमस्य
समिदसि, मृत्योर्मा पाह्या,—ऽऽयुर्दा अग्नेऽस्यायुर्मे धेहि, वर्चोधा अग्नेऽसि, वर्चो मे धेहि,
चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाहि, श्रोत्रपा अग्नेऽसि, श्रोत्रं मे पाहि, तनूपा अग्नेऽसि तन्वं मे
पाहि, यन्मे अग्न ऊनं तन्वस्तन्म आपृणा,—ऽग्ने यत्ते तपस्तेन तं प्रति तप यो अस्मान् द्वेष्टि
यं च वयं द्विष्मो, ऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने
यत्ते अर्चिस्तेन तं प्रत्यर्च यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते हरस्तेन तं प्रति हर यो
अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि यो अस्मान् द्वेष्टि यं च वय
द्विष्मो, ऽग्ने रुचां पते नमस्ते रुचे, मयि रुचं धा,—श्चित्रावसोः स्वस्ति ते पारमशीयार्वाग्वसोः
स्वस्ति ते पारमशीया,—ऽम्भः स्था,—ऽम्भो वो भक्षीय, महः स्थ, महो वो भक्षीयो,—र्ज-
स्थो,—र्जं वो भक्षीय, रायस्पोषः स्थ, रायस्पोषं वो भक्षीय ॥ रेवती रमध्वमस्मिन्योना
अस्मिन्गोष्ठे, ऽयं वो बन्धु,—रितो मापगात, बह्वीर्भवत, मा मा हासिष्ट ॥ संहि-
तासि विश्वरूपा, मोर्जा विशा गौपत्येना प्रजया रायस्पोषेण ॥ मयि वो राय श्रयन्तां,
सहस्रपोषं वोऽशीय ॥ २ ॥ २१-२४

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ २५

---

[ २ ] मै. १,५,८,९ । तै. १,५,५-६ । काठ. ६,९; ७,१ । कपि. ४,८; ५,१ वा. ३,१७-२२ । काण्व. ३,२३-२९ ।
[ योऽस्मान्द्वेष्टि...द्विष्मः० । अथर्व. १०,५,१५-२१,२५-३५; १६,७,५ । ]

राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानꣳ स्वे दमे ॥ २६
स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥ २७
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्युः।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ २८
वसुरग्निर्वसुश्रवा अछा नक्षि द्युमत्तमꣳ रयिं दाः।
स नो बोधि श्रुधी हवमुरुष्या नो अघायतः समस्मात् ॥ २९
अभ्युस्थाꣳ विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह।
बृहस्पतिः सवितेन्द्रस्तदाह पूषा ना आधात् सुकृतस्य लोके ॥ ३०
ऊर्जा वः पश्याम्यूर्जा मा पश्यत। रय्या वः पश्यामि रय्या मा पश्यत ॥ ३१
संपश्यामि प्रजा अहमिडप्रजसो मानवीः। सर्वा भवन्तु नो गृहे ॥ ३२
इडा स्थ मधुकृतः स्योना माविशतेरंमदः। सहस्रपोषꣳ वोऽशीय ॥ ३३
भुवनमसि सहस्रपोषपुषि, तस्य नो रास्व, तस्य ते भक्तिवानो भूयास्मे,—इडासि
व्रतभृत्, त्वयि व्रतꣳ, व्रतभृदसि ॥३॥ ३४
महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः। दुराधर्षꣳ वरुणस्य ॥ ३५
नहि तेषाममा सतां नाध्वसु वारणेषु च। ईशे रिपुरघशꣳसः ॥ ३६
ते हि पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम्। प्र दाशुषे वार्याणि ॥ ३७
सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तꣳ य औशिजः ॥ ३८
यो रेवान्यो अमीवहा वसुवित् पुष्टिवर्धनः। स नः सिषक्तु यः शिवः ॥ ३९
मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिं। द्युम्नं चित्रश्रवस्तमम् ॥ ४०
कदा च न स्तरीरसि कदा च न प्रयुछसि ॥ ४१

---

[ ३ ] मै. १,५,१०। तै. १,५,६। काठ. ७,१। कपि. ५,१। वा. ३,२२–२६। काण्व. ३,३०–३४। [ उप त्वाग्ने दिवे०। ऋ. १,१,७; सा. १४। राजन्तमध्वराणां०। ऋ. १,१,८। स नः पितेव०। ऋ. १,१,९। अग्ने त्वं नो अन्तम०। ऋ. ५,२४,१; सा. ४४८,११०७। तं त्वा शोचिष्ठ०। ऋ. ५,२४,४; सा. ११०९। वसुरग्निर्वसु०। ऋ. ५,२४,२; सा. ११०८ स नो बोधि०। ऋ. ५,२४,३। ]

[ ४ ] मै. १,५,११। तै. १,५,६। काठ. ७,२। कपि. ५,२। वा. ३,३१–३३,२८,२९,३४,३६; ११,६२; ८,२–३। काण्व. ३,३९–४१,३६,३७, ४२,४४; ८,१–२; १२,६४। मा. श्रौ. १,६,२। [ सोमानꣳ स्वरणं०। ऋ. १,१८,१; सा. १३९; १४६३। यो रेवान्यो०। ऋ. १,१८,२। महि त्रीणामवोऽस्तु०। ऋ. १०,१८५,१। नहि तेषाममा०। ऋ. १०,१८५,२। ते हि पुत्रासो०। ऋ. १०,१८५,३। कदा चन स्तरीरसि०। ऋ. ८,५१,७; सा. ३००। परि ते दूडभो०। ऋ. ४,९,८। मित्रस्य चर्षणी०। ऋ. ३,५९,६ ]

परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ४२

निग्रद्धोऽसि३,—न्यहं तं मृद्यासं यो अस्मान् द्वेष्टि यं च वयं द्विष्मो, ऽभिभूरस्य३,—
भ्यहं तं भूयासं यो अस्मान् द्वेष्टि यं च वयं द्विष्मः, प्रभूरसि, प्राहं तमति भूयासं यो
अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ पूषा मा पथिपाः पातु, पूषा मा पशुपाः पातु, पूषा माधिपाः
पातु, प्राची दिगग्निर्देवता, यो मैतस्या दिशो अभिदासादग्निं सा ऋच्छतु, दक्षिणा दिगिन्द्रो
देवता, यो मैतस्या दिशो अभिदासादिन्द्रं सा ऋच्छतु, प्रतीची दिङ्मरुतो देवता, यो
मैतस्या दिशो अभिदासान्मरुतः सा ऋच्छतू,—दीची दिङ्मित्रावरुणौ देवता, यो मैतस्या दिशो
अभिदासान्मित्रावरुणौ सा ऋच्छतू,—र्ध्वा दिक् सोमो देवता, यो मैतस्या दिशो अभिदासात्
सोमं सा ऋच्छतु, धर्मो मा धर्मणः पातु, विधर्मो मा विधर्मणः पात्वा,—ऽऽयुश्च प्रायुश्च चक्षुश्च
विचक्षुश्च प्राङ् चापाङ् चो,—रुक उरुकस्य ते वाचा वयं सं भक्तेन गमेमह्यग्ने गृहपते॥४॥४३--४४

यस्य वा अग्निहोत्रे स्तोमो युज्यते स्वर्गमस्मै भवत्य,—यज्ञो वा एष यत्र स्तोमो न युज्यत,
उपप्रयन्तो अध्वर,—मितीयं वा उपोति,—रित एव स्तोमं युनक्त्य,—थो इमामेव स्तोममुपयुन-
क्त्य,—थो या एव प्रजा भूतानामन्वतीस्ता एव स्तोममुपयुनक्त्य,—स्य प्रत्नामनु द्युत,—मि-
त्यसौ वै लोकः प्रत्न,—ममुत एव स्तोमं युनक्त्य,—थो देवा वै प्रत्न, तानेव स्तोममुपयुन-
क्त्यु,—भयत एव स्तोमं युनक्तीतश्चामुतश्च, देवान् वा एष प्रयुज्य स्वर्गं लोकमेति, यदाहो-
पोपेन्नु मघवन् भूया इन्नु ता, इतीयं वा उपोति,—रस्यामेव प्रतितिष्ठत्य,—थ यदुपवत् पदमाह
या एव प्रजा आभविष्यन्तीस्ता एव स्तोममुपयुनक्ति, परि ते दूडभो रथा, इत्युभयत एवैतया
स्तोमं युक्तं परिगृह्णातीतश्चामुतश्चा,—ऽग्निर्मूर्धे,—ति स्वर्गी तेन, दिवः ककु,—दिति स्वर्गी तेन,
पतिः पृथिव्या अय,—मिति मिथुना तेना,—ऽपां रेतांसि जिन्वती,—ति रेतस्वती पशव्या
सर्वसमृद्धा, गायत्र्योपास्थित, गायत्रो३ह्यग्निर्गायत्रछन्दाः, स्वेनैवैनं छन्दसोपास्थितो,—भा
वामिन्द्राग्नी आहुवध्या, इत्युभौ३ह्येतौ सहा,—ऽमुं वा अयं दिवा भूते प्रविशति, तस्मादसौ
दिवा रोचत, इमामसौ नक्तं, तस्मादयं नक्तं, यदुभा वामित्याहोभा एवैना अछम्बट्का-
रमुपतिष्ठत, उभयोर्लोकयो रोचतेऽस्मिंश्चामुष्मिंश्च, त्रिष्टुभोपास्थिता,—ऽयमिह प्रथमो धायि

---

[ ५ ] मै. १,५,१ । तै. १,५,७ । काठ. ७,४ । कपि. ५,३ । वा. ३,११-१६,३४,३६; ८,२; १५,२६; ३३,६ । काण्व.३, १७-२२,४२,४४; ८,१; १६,४७; ३२,६ । [ उपप्रयन्तो अध्वरं० । ऋ. १,७४,१; सा. १३७९ । अग्निर्मूर्धा दिवः० । ऋ. ८,४४,१६; सा. २७,१५३२ । उभा वामिन्द्राग्नी० । ऋ. ६,६०,१३ । अयं ते योनिर्ऋ० ऋ. ३, २९,१०; अथर्व. ३,२०,१ । अयमिह प्रथमो० । ऋ. ४,७,१ । अस्य प्रत्ना० । ऋ. ९,५४,१; सा. ७५५ ]

धातृभि,—रित्यग्निं२र्ह्यस्यां प्रथमोऽध्रीयत, होता यजिष्ठो अध्वरेष्वीड्या, इत्येष हि होता यजिष्ठो अध्वरेष्वीड्यो यमप्नवानो भृगवो विरुरुचु,—रित्यप्नवानो२ह्येतं भृगवो व्यरोचयन्, वनेषु चित्रं२ विभ्वं२ विशे विशा, इत्येष२हीदं२ सर्वं२ विभू,—र्जगत्योपास्थिता,—ऽस्य प्रत्नामनु द्युत,—मिति स्वर्गो वै लोकः प्रत्नं२, स्वर्ग एव लोके प्रतितिष्ठत्य,—यं ते योनिर्ऋत्विया, इत्येष२ह्येतस्य योनिर्ऋत्वियो, ऽग्निः सूर्यस्या,—ऽनुष्टुभोपास्थित ॥५॥ ४५

उपप्रयन्तो अध्वरं,—मिति प्रवापयत्येवैतया,—ऽग्निर्मूर्धे,—ति प्रवापित एवैतया रेतो दधात्यु,—भा वामिन्द्राग्नी आहुवध्या, इति प्राणापानौ वा इन्द्राग्नी, प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते ॥ अयमिह प्रथमो धायि धातृभि,—रिति गर्भमेवाधा,—दस्य प्रत्नामनु द्युत,—मित्युधरेवाक,—रयं ते योनिर्ऋत्विया, इत्यजीजनच्चैवावीवृधच्च, षड्भिरुपतिष्ठते, षड्वै पृष्ठानि, पृष्ठान्येवाचीक्लृपद्, दधिक्राव्णो अकारिष,—मिति दधिक्रावत्योपतिष्ठत, एषा वा अग्नेर्दधिक्रावती प्रिया तनूः पशव्या सर्वसमृद्धा,—ऽग्नेरेवैतया प्रियं धामोपैत्य,—थो पशुमान् भवत्य,—थो आत्मानमेवैतया यजमानः पुनीते, सप्तभिरुपतिष्ठते, सप्तपदा शक्करी, शाक्कराः पशवः, पशूनेवावरुन्धे, जीर्यति वा एष आहितः, पशु२र्ह्यग्नि,—स्तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे संवत्सरे निर्वपेत्, तेन वा एष न जीर्यति, तेनैनं पुनर्णवं करोति, तन्न स्पृक्ष्यु,—मेताभिरवाग्नेयपावमानीभिरग्न्याधेयस्य याज्यानुवाक्याभिरुपस्थेय,—स्तेन वा एष न जीर्यति, तेनैनं पुनर्णवं करोति, द्वादशभिरुपतिष्ठते, द्वादश मासाः संवत्सरः, संवत्सरमेवाप्त्वावरुन्द्धे, ऽग्नीषोमीयया त्रयोदश्योपस्थेयो, ऽस्ति मासस्त्रयोदशस्तमेवैतयाप्त्वावरुन्द्धे॥६॥ ४६-४७

ब्रह्मवादिनो वदन्ति, कस्मात् सायमग्निमुपतिष्ठन्ते कस्मात् प्रातर्नेत्य,—सौ वा आदित्यः सायमासुवति, तस्मात्सायमुपतिष्ठन्त, एष प्रातः प्रसुवति, तस्मात् प्रातर्नोपतिष्ठन्ते, तस्मात् सायमहुतेऽग्निहोत्रेऽग्निहोत्रिणा नाश्चित२व्यं, तस्मादु प्रातरहुते नाश्चित२व्यं, तस्मात् सायमतिथये प्रत्येनसः, पुण्यत्वात् तु प्रातर्ददति, प्रातरवनेगेन प्रातरुपस्थेयो, ऽधिश्रित उन्नीयमाने वा हस्ता अवनेनिजीत, तत्र विहव्यस्य चतस्रा ऋचो वदेत् प्रातरवनेगे चतस्रः, प्रातरवनेगेन वा अनाप्तमाप्नोत्य,—नवरुद्धमवरुन्द्धे, तदनाप्तमेवैतेनाप्नोत्य,—नवरुद्धमवरुन्द्धे, ऽग्निभेद्वा

[ ६ ] मै. १,५,१। तै. १,५,७। काठ. ७,४। कपि. ५,३-४।
[ ७ ] तै. १,५,९। काठ. ७,५। कपि. ५,४।

❀

एव उद्धृत,—स्तं देवाश्छन्दोभिः पर्यस्तृणन्, यदुपतिष्ठते छन्दोभिरेवैनं परिस्तृणात्यु,—भयमस्मा अक,—रग्नीषोमीयया पूर्वपक्ष उपस्थेयो. ऽग्नीषोमीयो वै पूर्वपक्षो, ऽपरपक्षायैवैनं परिददा,—त्यैन्द्राग्न्यापरपक्ष उपस्थेय, ऐन्द्राग्नो वा अपरपक्षः, पूर्वपक्षायैवैनं परिददाति, सर्वा ह वा एनं देवताः संप्रदायमनपेक्षं गोपायन्ति य एवं विद्वानग्निमुपतिष्ठते ॥७॥ ४८

त्वमग्ने सूर्यवर्चा असी,—ति वसीयसे श्रेयस आशिषमाशास्ते, सं मामायुषा वर्चसा सृजे,—त्यात्मना आशास्ते, सं त्वमग्ने सूर्यस्य ज्योतिषागथा, इति सह ह्येते तर्हि ज्योतिषी भवतः, समृषीणां स्तुतेनेति, छन्दांसि वा ऋषीणां स्तुतं, छन्दोभिरेवैनं समर्धयति, सं प्रियेण धाम्ने,—त्याहुतयो वा अग्नेः प्रियं धामाहुतिभिरेवैनं समर्धयति, समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मीयें,—त्याशिषमेवाशास्ता, इन्धानास्त्वा शतं हिमा, इति पृतनाजिद्वाह्वति,—स्तया राजन्या उपतिष्ठेत, यदा हि राजन्यः पृतना जयत्यथो भवत्यु,—ताराजन्या उपतिष्ठेत, सर्वा हि पृतना जिगीषति, सर्वा बुभूषति, मनोर्वै दश जाया आसन्, दशपुत्रा नवपुत्राऽष्टपुत्रा सप्तपुत्रा षट्पुत्रा पञ्चपुत्रा चतुष्पुत्रा त्रिपुत्रा द्विपुत्रैकपुत्रा, ये नवासंस्तानेक उपसमक्रामन्, येऽष्टौ तान् द्वौ, ये सप्त तांस्त्रयो, ये षट् तांश्चत्वारो, ऽथ वै पञ्चैव पञ्चासं,—स्ता इमाः पञ्च दशत इमान् पञ्च निरभजन्, यदेव किंच मनोः स्वमासीत्, तस्मात् ते वै मनुमेवोपाधावन्, मना अनाथन्त, तेभ्य एताः समिधः प्रायच्छत्, ताभिर्वै ते तान् निरदहं,—स्ताभिरेनान् पराभावयन्, परा पाप्मानं भ्रातृव्यं भावयति य एवं विद्वानेताः समिध आदधात्य,—ग्नेः समिदस्य,—भिशस्त्या मा पाही,—त्यभिशस्त्या एनं पाति, सोमस्य समिदसि, परस्पा म एधी,—ति परस्पा अस्य भवति, यमस्य समिदसि, मृत्योर्मा पाही,—ति मृत्योरेनं पात्ये,—तद्ध स्म वा आह नारद, इदं वावाग्न्युपस्थानमासे,—त्यभिशस्त्या एनं पाति, परस्पा अस्य भवति, मृत्योरेनं पाति ॥८॥ ४९

आयुर्धा अग्नेऽस्या,—ऽऽयुर्मे धेही,—त्यायुरेवास्मिन् दधाति, वर्चोधा अग्नेऽसि, वर्चो मे धेही,—ति वर्च एवास्मिन् दधाति, चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाही,—ति चक्षुरेवास्य पाति, श्रोत्रपा अग्नेऽसि, श्रोत्रं मे पाही,—ति श्रोत्रमेवास्य पाति, तनूपा अग्नेऽसि, तन्वं मे पाही,—

[ ८ ] मै. १,५,२ । तै. १,५,७ । काठ. ७,६ । कपि. ५,५ । वा. ३,१९,१८ । काण्व. ३,२६,२७,२४,२५ ।
[ ९ ] मै. १,५,२ । तै. १,५,७–८ । काठ. ७,६–७ । कपि. ५,५ । वा. ३,१७,१८,२०–२२ । काण्व. ३,२३,२४,२६, २७–२९ ।

ति तन्वमेवास्य पाति, यन्मे अग्न ऊनं त३न्वस्तन्मा आपृणे,—ति यदेवास्यात्मन ऊनंꣳ यत् प्रजाया यत् पशूनां तदेवैतेनापूरयति, तदाप्यायत्य,—ग्ने यत् ते तपा, इत्येता वा अग्नेस्त३न्वो ज्योतिष्मती,—रेतद्ध स्म वा आहारुणं औपवेशि,—र्यान् वसीयसः श्रेयस आत्मनो भ्रातृव्यानभि-प्राज्ञानीमाभिष्टानग्नेस्तनूभिर्ज्योतिष्मतीभिः पराभावयामी,—ति परा पाप्मानं भ्रातृव्यं भावयति य एवंꣳ विद्वानग्निमुपतिष्ठते, ऽग्ने रुचां पते नमस्ते रुचे, मयि रुचं धा, इति शान्तमेव रुचमा-त्मन् धत्ते, तेजस्वी ब्रह्मवर्चसी भवति, चित्रावसो स्वस्ति ते पारमशीये,—ति रात्रिर्वै चित्रावसु, —रहुरवीग्वसु,—रग्निर्वै रात्रि,—रसा आदित्योऽह,—रेतौ वै भङ्क्ते, तौ ईट्टे, त्रिराह, त्रिषत्या हि देवा, रोचते ह वा अस्य यज्ञो वा ब्रह्म वा य एवंꣳ वेदा,—ऽम्भः स्था,—ऽम्भो वो भक्षीये,—त्यम्भो ३ह्येता, महः स्थ, महो वो भक्षीये,—ति महो ३ह्येता, ऊर्जः स्थो,—र्जंꣳ वो भक्षीये, —त्यूर्जो ३ह्येता, रायस्पोषः स्थ, रायस्पोषंꣳ वो भक्षीये,—ति रायस्पोषो ३ह्येता, रेवती रमध्वमस्मिन् योना अस्मिन् गोष्ठ, इति स्व एवैना योनौ स्वे गोष्ठे संꣳवेशयत्य,—यंꣳ वो बन्धु,—रिती मापगात, बह्वीर्भवत, मा मा हासिष्टे,—त्याशिषमेवाशास्ते, वत्समालभते, वत्सनिकान्ता हि पशव, एष वै सहस्रपोषस्येशे, पुष्यति सहस्रं, न सहस्रादवपद्यते य एवंꣳ वेद, संꣳहितासि विश्व,—रूपेति रूपेण रूपेण ३ह्येषा संꣳहिता, रूपैरेवैनाꣳ समर्ध-यति, नामासामग्रही,—न्मित्रमाभिरकृतो,—त हि यदा मित्रस्य नाम गृह्णाति मित्रमेवैनेन कुरुते ॥९॥ ५०

सप्त वै बन्धुमतीरिष्टका अग्नौ चित्या उपधीयन्ते, ता वै ता अमुष्मा एव लोकाय, सप्त ग्राम्या इष्टका,—स्ता अत्रोपधेया, गौश्चाश्वश्चाश्वतरश्च गर्द३भोऽजा चाविश्च पुरुषो, यद्ग्राममाल-भते गवैव चिता भवन्त्य,—थो आलब्ध एवोपधीयन्ते, पराङ् वा एष छन्दोभिः स्वर्गं लोक-मेत्यन्यदन्यच्छन्दः समारोह,—मुप त्वाग्ने दिवे दिवा, इति यदेतेन गायत्रेण तृचेनोपतिष्ठत, इयंꣳ वै गाय३,—त्र्यस्यामेव प्रतितिष्ठत्य,—ग्ने त्वं नो अन्तमा, इत्येषा वा अग्नेरस्तयुः प्रिया तनूर्वरू३थ्या, तामेव प्रैति, नैनमभिदासन्त्स्तृणुते, चतसृभिर्द्विपदाभिरुपातिष्ठते, चतुष्पादो वै पशवो, द्विपाद् यजमानो, गृहा गार्हपत्यो, गृहेषु चैव पशुषु च प्रतितिष्ठ,—त्यूर्जो वः पश्या,—म्यूर्जा मा पश्यते,—त्यूर्जैना: पश्यत्यू,—र्जैनं पश्यन्ति, रय्या वः पश्यामि, रय्या

[ १० ] मै. १,५,३ । तै. १,५,८ । काठ. ७,७-८ । वा. ३,२२,२५ । काण्व. ३,३०,३३ । [ उप त्वाग्ने...एमसि० । ऋ. १,१,७; सा. १४ । अग्ने त्वं नो...वरूथ्यः । ऋ. ५,२४,१; सा. ४४८; ११०७ ]

मा पश्यते,—ति रय्यैनाः पश्यति, रय्यैनं पश्यन्ति ॥ ५१

संपश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे ॥ ५२

इत्यैडीश्च वा इमाः प्रजा मानवीश्च, ता एवावारुद्ध, ता आद्या अकृते,—डाः स्थ मधुकृता, इतीडा ३ह्येता मधुकृतः, स्योना माविशतेरंमदा, इतीरंमदो ३ह्येता, भुवनमसि सहस्रपोषपुषी,—ति भुवनं ३ह्येतत् सहस्रपोषपुषि, तस्य नो रास्व, तस्य ते भक्तिवानो भूयास्मे,—त्याशिषमेवाशास्ता, इडासि व्रतभृदि,—तीडा ३ह्येषा व्रतभृत्, त्वयि व्रतं, व्रतभृदसी,—ति व्रतभृं३द्ध्येषा ॥१०॥ ५३

महि त्रीणामवोऽस्त्वि,—ति प्राजापत्येनु तृचेनोपतिष्ठते, प्राजापत्या वा इमाः प्रजा,—स्ता एवावारुद्ध, ता आद्या अकृता,—ऽथो प्रजापतिमेवोपैति, प्रजापता एव देवतासु प्रतितिष्ठति, सोमानं स्वरुण,—मिति ब्राह्मणस्पत्ययोपतिष्ठते, ब्रह्मणि प्रतितिष्ठत्य,—थो ब्रह्मवर्चसमेवावरुन्द्धे, यो वै ब्रह्मणि प्रतिष्ठितेन स्पर्धते पूर्वोऽस्मात् पद्यत, उभयीर्वा अग्निहोत्रिणि देवता आशंसन्ते याभ्यश्च जुहोति याभ्यश्च न, मित्रस्य चर्षणीधृता, इति मैत्र्योपतिष्ठत, उभयत एवैतया मित्रमकृतेतश्चामुतश्च, कदा च न स्तरीरसी,—त्यैन्द्रीभ्यां बृहतीभ्यामुपतिष्ठत, ऐन्द्रा वै पशव,—स्तानेवावारुन्द्ध, तानाद्यानकृत, परि ते दूडभो रथा, इत्यसौ वा आदित्यो दूडभो रथ, एष वा इमा उभौ लोकौ समीयते, सर्वमेवैतया परिगृह्णाति, निभ्रदोऽसि, ३न्यहं तं मृद्यासं यो अस्मान् द्वेष्टि यं च वयं द्विष्म, इति पार्ष्ण्यावगृह्णीयाद्यदि पापीयसा स्पर्धेता,—ऽभिभूरस्य,—३भ्यहं तं भूयासं यो अस्मान् द्वेष्टि यं च वयं द्विष्म, इति दक्षिणतः पदोऽवगृह्णीयाद्यदि सदृशेन स्पर्धेत, प्रभूरसि, प्राहं तमतिभूयासं यो अस्मान् द्वेष्टि यं च वयं द्विष्म, इति प्रपदेनावगृह्णीयाद्यदि श्रेयसा स्पर्धेत, सर्वानेवैनानभिभवति, सर्वानतिभवति, सर्वानतिक्रामति, पूषा मा पथिपाः पात्वि,—तीयमेव, पूषा मा पशुपाः पात्वि,—त्यन्तरिक्षमेव, पूषा माधिपाः पात्वि,—त्यसा एवैमानेव लोकानुपासर,—देभ्यो लोकेभ्य आत्मानं परिधत्तेऽहिंसायै, प्राची दिगग्निर्देवते,—ति तनूपानामेव दिक्षु निधत्ते, ऽथ येन स्पर्धते येन वा व्यभिचरते स एता एव देवता ऋत्वा पूर्वः पराभवति, सप्त वै पुरुषे महिमान,—स्तै वा एनेनेडचा,—स्तै वै ते सप्तऋषय एव, प्राणा वै सप्तऋषयः, प्राणान् वा एतद्दीष्ट्वा, ईष्टे ह वै स्वान्

[ ११ ] मै. १,५,४ । तै. १,५,८ । काठ. ७,९ । वा. ३,३१,१८; ११,६२; ३,३४,३६; ८,२; ३३,२७; ६,२२; २०, १९; ३५,१२; ३६,२३; ३८,२३ । काण्व. ३,३९,३६; १२,६४; ३,४४,४२; ८,१; ३२,२७; ६,३१; २२,४; ३५,४५; ३६,२३; ३८,२३ । [ महि त्रीणामवो० । ऋ. १०,१८५,१ । मित्रस्य चर्षणी ... स्तमम् । ऋ. ३,५९,६ ]

प्राणान्, वृङ्क्ते भ्रातृव्यस्य प्राणान्, नैनमभिदासन्त्स्तृणुते य एवं वेद, धर्मो मा धर्मणः
पातु, विधर्मो मा विधर्मणः पात्वा,—ऽऽयुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ् चापाङ् चोरुकं,
इत्ययं वा उरुकं, एष विभजति, तद्यदेष भजति तदेतस्मिन्नेव पुनराभजत्य,—ग्ने गृहपते-
ऽग्निं समिन्धे यजमान, एतद्वै यजमानस्य स्वं यदग्नि,—रेतदग्नेर्यद्यजमान, आयतनमिव
वा एतत् क्रियते, ज्योतिषे तन्तवे त्वे,—त्यन्तराग्नी उपविश्य वदे,—द्यामेव पुर आशिषमाशास्ते
यां पश्चात् तामात्मन् धत्ते ॥११॥ ५४

ददन्मा, इति वै दीयते, सददिं वा एष ददाति योऽग्निहोत्रं जुहोति, यद्यत् कामयेत
तत् तदग्निहो३त्र्यग्निं याचे,—दुप हैनं तन्नमति, तदाहु,—र्ऋच्छति वा एष देवान् य एनान्
त्सददिं याचतीति, तस्मात् तर्हि नोपस्थेयो, यमो वा अम्रियत, ते देवा यम्या यममपाब्रुवं,—
स्तां यदपृच्छन्त्साब्रवीद,—द्यामृतेति, तेऽब्रुवन्, न वा इयमिममित्थं मृष्यते, रात्रीं सृजा-
महा, इत्यहर्वाव तर्ह्यासीन्न रात्रि,—स्ते देवा रात्रिमसृजन्त, ततः श्वस्तनमभवत्, ततः सा तम-
मृष्यत, तस्मादाहु,—रहोरात्राणि वावाघं मर्षयन्तीति, सा वै रात्रिः सृष्टा पशूननुभिसममिलत्,
ते देवाश्छन्दोभिरेव पशूनन्वपश्यं,—श्छन्दोभिरेनान् पुनरुपाह्वयन्त, यदुपतिष्ठते छन्दोभिर्वा
एतत् पशूननुपश्यति, छन्दोभिरेनान् पुनरुपह्वयते, ऽथो आहु,—र्वरुणो वै स तद् रात्रिर्भूत्वा
पशूनग्रसतेति, ते देवाश्छन्दोभिरेव वरुणात् पशून् प्रामुञ्चं,—श्छन्दोभिरेनान् पुनरुपाह्वयन्त यदुप-
तिष्ठते छन्दोभिर्वा एतद् वरुणात् पशून् प्रमुञ्चति छन्दोभिरेनान् पुनरुपह्वयते, यज्ञो यज्ञो वै समृच्छते,
ऽथाकस्यविदो मन्यन्ते, सोम एव समृच्छता, इत्यग्नीषोमीयायाः पुरस्ताद्विहव्यस्य चतस्र ऋचो
वदे,—दाग्नेयस्य पुरोडाशस्य द्वे याज्यानुवाक्ये कुर्या,—देतेनैव हवींष्यासन्नान्यभिमृशेद्,
वृ३ङ्क्तेऽन्यस्य यज्ञं नास्यान्यो यज्ञं वृङ्क्ते, संयज्ञो भवत्ययज्ञा इतरः ॥१२॥ ५५

अग्निं वा एते चित्यं चिन्वते य आहिताग्नयो दर्शपूर्णमासिन,—स्तेषां वा अहोरात्राण्येवेष्टका
उपधीयन्ते, यत्र पञ्च रात्रीः संहिता वसेत् तज्जुहुयात्, पञ्च रात्रयः पञ्चाहानि सा दशत्
संपद्यते, तन्नैवं कर्तवा, अयुतं तद्, दशस्वेव रात्रिष्वन्तमं होत३व्यं, तथा यतं क्रियते,
न सर्वेषु युक्तेषु होत३व्यं, वास्तौ जुहुयान्ना, ऽयुक्तेष्वं,—यतं क्रियते, सर्वाण्यन्यानि

[ १२ ] तै. १,५,९ । काठ. ७,१० । कपि. ५,६ ।
[ १३ ] तै. ३,४,१० । मा. श्रौ. १,६,४ । [ अमीवहा...एधि नः० । ऋ. ७,५५,१ । वास्तोष्पते प्रति...चतुष्पदे० । ऋ. ७,५४,१ ]

युक्तानि स्युं,—रग्निष्ठस्य दक्षिणो युक्तः स्यात्, सव्यस्य योक्त्रं परिहृत,—मथ जुहुया,—न्न वास्तौ जुहोति, यतमुत्क्रियते, तन्न स्कृर्य॑, सर्वेष्वेव युक्तेषु होतव्य॑, वास्तोष्पत्य॑ ३ह्येतं,—न्न हीनमन्वाहर्तवै, रुद्राय हि तद्धीयते, यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयु,—र्यद्यनुवाहः स्यात् पूर्वं तं प्रवहेयुरप वोद्धरेयु,—र्यद्धीयेतु हीयेतैव तं,—दथ जुहुयात् ॥ ५६

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥ ५७

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ १३ ॥ ५८

पशून्मे श॑स्य पाहि, तान्मे गोपायास्माकं पुनरागमात् ॥ अग्ने सहस्राक्ष शतमूर्धञ्शतं ते प्राणाः सहस्रमपाना,—स्त्व॑ साहस्रस्यु राय ईशिषे, तस्मै ते विधेम वाजाय ॥ प्रजां मे नर्य पाहि, तां मे गोपायास्माकं पुनरागमा,—दग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयास॑, सुगृहपतिस्त्वं मया गृहपतिना भूया, अन्नं मे बुध्य पाहि, तन्मे गोपायास्माकं पुनरागमात् ॥५९-६१

इमान् मे मित्रावरुणौ गृहान् गोपायत॑ युवम् ।
अविनष्टानविह्रुतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥ ६२

पशून्मे श॑स्य पाहि, तान्मे गोपायास्माकं पुनरागमा,—दित्याहवनीयमुपतिष्ठत, आहवनीयायैव पशून् पुरिदाय प्रैत्य,—ग्ने सहस्राक्ष शतमूर्ध,—न्निति सहस्राक्षो ३ह्येष शतमूर्धा, शतं ते प्राणाः सहस्रमपाना, इति शत॑ ३ह्येतस्य प्राणाः सहस्रमपाना,—स्त्व॑ साहस्रस्यु राय ईशिषे, तस्मै ते विधेम वाजाये,—त्याशिषमेवाशास्ते ॥ प्रजां मे नर्य पाहि, तां मे गोपायास्माकं पुनरागमा,—दिति गार्हपत्यमुपतिष्ठते, गार्हपत्यायैव प्रजां पुरिदाय प्रैत्य,—ग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयास॑, सुगृहपतिस्त्वं मया गृहपतिना भूया, इत्यग्रहणौ संजीर्यतः, सर्वमायुरितो, नार्तिं ३नीतो, ऽन्नं मे बुध्य पाहि, तन्मे गोपायास्माकं पुनरागमा,—दिति दक्षिणाग्निमुपतिष्ठते, दक्षिणाग्नय एवान्नं परिदाय प्रैति ॥ ६३--६४

इमान् मे मित्रावरुणौ गृहान् गोपायत॑ युवम् ।
अविनष्टानविह्रुतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥ ६५

इत्यहोरात्रे वै मित्रावरुणौ, पशवः पूषा, ऽहोरात्राभ्यां चैवं मित्रावरुणाभ्यां च गृहान्पुरिदाय प्रैति ॥ अग्नि॑ समाधेहि ॥ इत्याह, भस्म त्वा उपतिष्ठते ॥ पशून्मे श॑स्याजुगुप,—स्तान्मे

---

[ १४ ] काठ. ७,३,११ । कपि. ६,१ । वा. ३,३७; १७,७१; २,२७ । काण्व. ३,४६; १८,७१; २,४९ । मा. श्रौ. १,६,३।

पुनर्देहि ॥ इत्याहवनीयं पुनरेत्योपतिष्ठत, आहवनीयेनैवं पशून्गुप्तानात्मन्धत्ते ॥ अग्ने सहस्राक्ष शतमूर्धञ्शतं ते प्राणाः सहस्रमपाना,—स्त्वं॰ साहस्रस्यु रायं ईशिषे, तस्मै ते विधेम वाजाय ॥ प्रजां मे नर्याजुगुप,—स्तां मे पुनर्देहि ॥ इति गार्हपत्यं पुनरेत्योपतिष्ठते, गार्हपत्येनैवं प्रजां गुप्तामात्मन्धत्ते ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयास॰, सुगृहपतिस्त्वं मया गृहपतिना भूया, अन्नं मे बुध्याजुगुप,—स्तन्मे पुनर्देहि ॥ इति दक्षिणाग्निं पुनरेत्योपतिष्ठते, दक्षिणाग्निनैवान्नं गुप्तमात्मन् धत्ते ॥ ६६--७५

इमान् मे मित्रावरुणौ गृहान् जुगुपत॰ युवम् ।

अविनष्टानविह्रुतान् पूषैनानभ्युरक्षीदास्माकं पुनरागमात् ॥ ७६

इत्यहोरात्रे वै मित्रावरुणौ, पशवः पूषा, ऽहोरात्राभ्यां चैवं मित्रावरुणाभ्यां च गृहान् गुप्तानात्मन् धत्ते ॥ १४ ॥ ७७ [ ४४८ ]

॥ इति प्रथमकाण्डे अग्न्युपस्थानं नाम पञ्चमः प्रपाठकः ॥५॥

अथ षष्ठः प्रपाठकः ।

## आधानम् ।

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवान् जिगाति सुम्नयुः ॥ १

उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ २

उदग्ने तव तद् घृतादर्ची रोचता आहुतम् । निं॰सानं जुह्वो मुखे ॥ ३

प्रजा अग्ने सं॰वासयेहाशाश्च पशुभिः सह । राष्ट्राण्यस्मिन् धेहि यान्यासन्त्सवितुः सवे ॥४

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ ५

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः॥ ६

त्रिं॰शद्धामा विराजति वाक् पतंगाय हूयते । व्युरुयन्महिषो दिवम् ॥ ७

अन्तश्चरत्यर्णवे अस्य प्राणादपानतः । प्रति वा॰स्वरो अहभिः ॥ ८

---

[ १ ] तै. १,५,३; ५,७,९ । काठ० ७,१२,१३ । कपि० ६,२,४; ७,२ । तै. ब्रा. १,२,१,१३,१६; १,२,७,१; १,१,४,८ । वा. ३,४,१४,६,८,७; १३,३४,१ ( प्र. पा. ); ३,५; १९,३८; ३५,१६ ( प्र. पा. ) । काण्व. ३,४,२०,६,८,७; १४,३६,१ ( प्र. पा. ); ३,५; ८,१९; २१,४०; २९,३७; ३५,४८ ( प्र. पा. ) । मा. श्रौ. १,५,१-३ । [ प्र वो वाजा० । ऋ. ३,२७,१ ] [ आयं गौः० । ऋ. १०,१८९,१ । अथर्व. ६,३१,१; २०,४८,४ । सा. ६३० । त्रिं॰शद्धामा० । ऋ. १०,१८९,३ । अथर्व. ६,३१,३; २०,४८,६ । सा. ६३२ । अन्तश्चरत्य० । ऋ. १०,१८९,२ । अथर्व. ६,३१,२; २०,४८,५ । सा. ६३१ । ]

इतो जज्ञे प्रथमꣳ स्वाद्योनेरधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्या वहतु प्रजानन् ॥ ९
यो नो अग्निः पितरो हृ३त्स्वन्तरमर्त्यो मर्त्यꣳ आविवेश ।
तमात्मनि परिगृह्णीमसीह नेदेषो अस्मानुवहाय परायत् ॥ १०
दोह्या च ते दुग्धभृच्चोर्वरी, तं ते भागधेयं प्रयच्छामि, ताभ्यां त्वादधे, घर्मः शिर,—स्त
दयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यत् ते शुक्र शुक्रं ज्योतिस्तेन रुचा रुचमशीथाः॥
११
मयि गृह्णाम्यहमग्रे अग्निꣳसह प्रजया वर्चसा धनेन ।
मयि क्षत्रं मयि रायो दधामि मदेम शतहिमाः सुवीराः ॥ १२
भूर्भुवो, ऽङ्गिरसां त्वा देवानाꣳ व्रतेनादधे, ऽग्नेष्ट्वा देवस्य व्रतेनादधा, इन्द्रस्य त्वा
मरुत्वतो व्रतेनादधे, मनोष्ट्वा ग्रामण्यो व्रतेनादधे ॥ १३
आछदि त्वा छन्दो दधे द्यौर्महासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थेऽन्नादमग्निमन्नपत्यायादधे ॥ १४
अग्न आयूꣳषि पवसे, ऽग्निरृषिर,—ग्ने पवस्व ॥१॥ १५
या वाजिन्नग्नेः पवमाना प्रिया तनूस्तामावह, या वाजिन्नग्नेः पावका प्रिया तनूस्तामावह,
या वाजिन्नग्नेः शुचिः प्रिया तनूस्तामावह ॥ १६
यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येना ते पक्षा हरिणोत बाहू उपस्तुत्यं जनिम तत् ते अर्वन् ॥ १७
ओजसे बलाय त्वोद्यच्छे वृष्णे शुष्माय, सपत्नतूरसि वृत्रतूः ॥ १८
प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह ।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ १९

---

[२] मै. १,६,७; २,८,१२। तै. ४,२,८,१; ३,५,११,१; १,८,१६,१; ४,६,५,५; ४,४,११। काठ. ७,१३-१४; ४०,७; ३९,१। कपि. ६,३-४; ७,२। वा. ११,८३; २९,१२; १७,६६; ३४,१५; १७,७९,८९-९१; १०,२७; २०,२; ३४,५३,५७; १३,२५; १४,६,१५,१६,२७; १५,५७। काण्व. १२, ८४; ३१,२४; १८,६६,७९; ३३,९; १९,३-५; ११,३७; २१,९३; ३३,४१.४५; १४,२६; १५,५,१६,३१; १६,७९। तै. ब्रा. १,१,७,१-३। मा. श्रौ. १,५,४-५। [ यदक्रन्दः प्रथमं०। ऋ. १,१६३,१। इडा ( ळा ) यास्त्वा पदे०। ऋ. ३,२९,४। समुद्रादूर्मिं०...आततान ( आविवेश )। ऋ. ४,५८,१-३। निषसाद धृत०। ऋ. १,२५,१०। उत नोऽहिर्बुध्न्यः। ऋ. ६,५०,१४। प्र नूनं ब्रह्मण०। ऋ. १,४०,५ ]

अभ्युस्थाꣳ विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिः सवितेन्द्रस्तदाह पूषा मा धात् सुकृतस्य लोके ॥ २०

भुवः ३स्वर्,—ङ्गिरसां त्वा देवानाꣳ व्रतेनादधे, ऽग्नेष्ट्वा देवस्य व्रतेनादधा, इन्द्रस्य त्वा
मरुत्वतो व्रतेनादधे, मनोष्ट्वा ग्रामण्यो व्रतेनादधे ॥ २१

आछंदि त्वा छन्दो दधे द्यौर्महासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थेऽन्नादमग्निमन्नपत्यायादधे ॥ २२

यत् ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादधे ॥ २३

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ २४

सम्राट् च स्वराट् चाग्ने ये ते त३न्वौ ताभ्यां मा ऊर्जꣳ यछ, विराट् च प्रभूश्चाग्ने ये ते
त३न्वौ ताभ्यां मा ऊर्जꣳ यछ, विभूश्च परिभूश्चाग्ने ये ते त३न्वौ ताभ्यां मा ऊर्जꣳ यछ ॥२५

समुद्रादूर्मिर्मधुमं उदारदुपाꣳशुना संममृतत्वमानट् ।
घृतस्य नाम गुह्यꣳ यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ २६

वयं नाम प्रब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ २७

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रेधा बद्धो वृषभो रोरवीति महो देवो मर्त्यं आततान ॥ २८

ये अग्नयः समनसा ओषधीषु वनस्पतिषु प्रविष्टाः ।
ते विराजमभिसꣳयन्तु सर्वा ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ २९

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त ऋत्विजः सप्तधा त्वा यजन्ति सप्त होत्रा ऋतुथा नु विद्वान् त्सप्त योनीरापृणस्व
घृतेन स्वाहा ॥ ३०

ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जꣳ वसानाः ।
ते अस्मा अग्नये द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहा ॥
निषसाद धृतव्रतो वरुणः प३स्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ३१-३२

❀

उत नो ऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः ।
स्तुता मन्त्राः कविशस्ता अवन्तु न एना राजन् हविषा मादयस्व ॥ ३३
प्र नूनं ब्रह्मणस्पतिर्मन्त्रꣳ वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाꣳसि चक्रिरे ॥ ३४

घर्मः शिर,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शꣳ योर,
—र्को ज्योति,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शꣳ
यो,—र्वातः प्राण,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसि, यच्छा तोकाय तनयाय शꣳ
योः ॥ अविषं नः पितुं पच ॥ ३५–३६

कल्पेतां द्यावापृथिवी कल्पन्तामापा ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ ३७
ये अग्नयः समनसा ओषधीषु वनस्पतिषु प्रविष्टाः ।
ते विराजमभिसꣳयन्तु सर्वा ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥ २ ॥ ३८

प्रजापतिर्वा इदमग्र आसीत्, तꣳ वीरुधोऽभ्युरोह,—न्नसु३र्यो वा एता यदोषधय,—स्ता अतितिष्ठिघिपन्नतिष्ठिघं नाशक्नोत्, सोऽशोचत्, सोऽतप्यत, ततोऽग्निरसृज्यत, तमग्निꣳ सृष्टꣳ वीरुधां तेजोऽगच्छत्, ता अशुष्यं, न ततः पुराशुष्यन्, तस्मं प्रजापतिरग्निमाधत्ते,—मा एवा सहा, इति ता असहत, तत् साढ्यै वावैष आधीयते, तद्यथादो वसन्ताशिशि३रेऽग्निर्वीरुधः सहत एवꣳ सपत्नं भ्रातृव्यमवर्तिꣳ सहते य एवꣳ विद्वानग्निमाधत्त, एतावद्वा अस्या अनभिमृतꣳ यावद्वेदिः परिगृहीता, तामुद्धत्यापं उपसृज्याग्निमाधत्ते, यज्ञियामेवैनां मेध्यां कृत्वाधत्ते, ऽग्नेर्वा इयꣳ सृष्टादविभेद,—ति मा धक्ष्यतीति, यदुप उपसृज्याग्निमाध३त्तेऽस्या अनतिदाहाय,—पा वै प्रजापतेः सर्वता तनूर्यदापः, सर्वत एनं प्रजाः सर्वतः पशवोऽभि पुण्येन भवन्ति य एवꣳ विद्वानप उपसृज्याग्निमाधत्ते, यावद्वै वराहस्य चषालं तावतीयमग्र आसीद्, यद्वराहविहतमुपास्याग्निमाधत्त इमामेव तन्नापाराड,—स्या एनं मात्रायामध्याधत्ते, तस्मादेषा वराहाय विम्रदत, एष ३ह्यस्या मात्रां बिभर्ति, देवपाणयो वै नामासुरा आसꣳ,—स्ते देवगवीरपाजꣳ,—स्ता अन्वगछꣳ,—स्ता अभ्याजꣳ,—स्तासां पयोऽहीयत, तेऽब्रुवन्, यद्वा आसाꣳ वरमभूत्तद्धास्तेति, तद्वराहो भूत्वासुरेभ्योऽधि देवानागछत्, तस्माद्वराहं गावोऽनुधावन्ति स्वं

[३] काठ. ८,२ । कपि. ६,७ ।

यो जानाना,—स्तद्यावत् प्रियमेव पशूनां द्विपदां चतुष्पदां पयस्तावत्प्रियः पशूनां द्विपदां चतुष्पदां भवति य एवं विद्वान् वराहविहतमुपास्याग्निमाधत्ते, एतद्वा अस्या अनभिमृतं यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाध३त्तेऽस्या एवैनमनभिमृतेऽध्याधत्ते, रसो वा एष३ोऽस्या उद्दैषद्य-द्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाध३त्तेऽस्या एवैनं रसेऽध्याधत्ता, ऊर्ग्वा एष३ोऽस्या उद्दैषद्यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाध३त्तेऽस्या एवैनमूर्ज्यध्याधत्ते, प्रजापतेर्वा एष स्तनो यद्वल्मीको, यद्वल्मीकवपामुपकीर्याग्निमाधत्ते प्रजापतिरेवास्मै स्तनमपिदधात्य,—न्नाद्यमस्मा अवरुन्धे, ऽक्षुध्यता स्वानां पुरःस्थाता भवति य एवं वेद,—तावद्वा अमुष्या इहं यज्ञियं यदूषा, यदूषानुपकीर्याग्निमाध३त्तेऽमुष्या एवैनं यज्ञियेऽध्याधत्ते, न वा अनूषारिहः पशवो रेतो दधते, यदूषानुपकीर्याग्निमाधत्ते रेत एवैतद्दधाति, पशूनां पुष्ट्यै प्रजात्या, एष वा अग्निर्वैश्वानरो यदसा आदित्यः, स यदिहासीत्तस्यैतद्भस्म यत्सिकता, यत्सिकता उपकीर्या-ग्निमाधत्ते स्व एवैनं योनौ स्वे भस्मन्नाधत्ते, शिथिरा वा इयमग्र आसीत्, तां प्रजापतिः शर्कराभिरदृंहद्, यं शर्करा उपकीर्याग्निमाधत्ते, इमामेव तद् दृंहति धृत्यै, तद्यथेमां प्रजापतिः शर्कराभिरदृंहदेवमस्मिन् पशवो दृंहन्ते य एवं विद्वाञ्शर्करा उपकीर्याग्निमाधत्ते, इन्द्रो वै वृत्राय वज्रं प्राहरत्, तस्य या विप्रुषा आसंस्ताः शर्करा अभवन्, यं शर्करा उपकीर्या-ग्निमाधत्ते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, वज्रमेवास्मै प्रहरति, स्तृणुत एव, पुरीषी,—ति वै गृहमेधिनमाहुः, पुरीषस्य खलु वा एतन्निरूपं यदाखुकिरि,—र्यदाखुकिरिमुपकीर्याग्निमाधत्ते पुरीषी गृहमेधी भवति ॥ ३ ॥ २९

अग्निं वै देवा विभाजं नाशक्नुवन्, यत्प्राञ्चमहरन्त्सर्वः पुरोऽभवद्, यत्प्रत्यञ्चमहरन्त्सर्वः पश्चाभवत्, तमश्वेन पूर्ववाहोदवहंस्तदश्वस्य पूर्ववाहः पूर्ववाट्त्वम्,—ग्नेर्वै विभक्त्या अश्वोऽग्न्याधेये दीयते, ऽविभक्तो वा एतस्याग्निरनाहितो योऽश्वमग्न्याधेये न ददात्य,—थ योऽश्वमग्न्याधेये ददाति विभक्त्यै, विभाज्यैवैनमाधत्ते, स्तोमपुरोगवा वै देवा असुरानभ्युजयन्ने,—ष खलु वै स्तोमो यदश्वो, यदश्वं पुरस्तान्नयन्त्यभिजित्या, अभिजित्यैवैनमाधत्ते, प्रजापतेर्वै चक्षुर-श्वयत्, तस्य यः श्वयथा आसीत् सोऽश्वोऽभवद्, यदश्वं पुरस्तान्नयन्ति यजमानायैव चक्षुर्दधाति, न पराङवसृज्यो, यत् पराञ्चमवसृजेद्यजमानं चक्षुर्जह्याद,—न्धः स्यात्, प्रत्यवगृह्याधेयो,

[ ४ ] तै. ब्रा. १,१,५ । काठ. ८,५ । कपि. ७,१-२ ।

यजमानायैव चक्षुः प्रत्यवग्रही,—न पदं आधेयो, वास्तव्यं कुर्याद्रुद्रोऽस्य पशूननुभिमानुकः स्यात्, पार्श्वतं इतो वेतो वाधेयो, न वास्तव्यं करो,—त्यघातुकोऽस्य पशुपतिः पशून्भवति, गायत्रीं वै देवा यज्ञमच्छ प्राहिण्वन्, ता रिक्तागच्छत्तस्या अग्निस्तेजः प्रायच्छत्, सोऽजोऽभवद्, यदजमग्न्याधेये ददाति तेज एवावरुन्धे, ऽग्नीधे देयो, यज्ञमुखं वा अग्नी,—द्यज्ञमुखेनैव यज्ञमुखं समर्धयति, धेनुं चानड्वाहं च ददाति, तत्सर्वं वयोऽवरुन्द्ध, एतद्वै सर्वं वयो यद्धेनुश्चानड्वां,—श्चेतौ वै यज्ञस्य माता च पिता च यद्धेनुश्चानड्वां,—श्चाज्यं च पयश्च धेन्वाः पुरोडाशश्च चरुश्चानडुह,—स्तदाहुः, कामदुघां वा एषोऽवरुन्द्धे योऽग्न्याधेये धेनुं चानड्वाहं च ददातीति, तद्येषां पशूनां भूयिष्ठं पुष्टिं कामयेत तेषां दित्यौहीं वयसो दद्यादित्यवाहं च मुष्करं, तन्मिथुनं पशूनां पुष्ट्यै प्रजात्यै, वाग्वै सोमक्रयणी, दित्यौहीं वयसः सोमक्रयणी, यद्दित्यौहीं वयसो ददाति वाचमेवावरुन्धे, चारु वदति य एवं वेदो,—पबर्हणं सर्वसूत्रं देयं, छन्दसां वा एतन्निरूपं यदुपबर्हणं सर्वसूत्रं, यदुपबर्हणं सर्वसूत्रं ददाति छन्दांस्येवावरुन्द्धे, पशवो वै छन्दांसि, पशूनेवावरुन्द्धे, ऽयज्ञियो वै पुरुषोऽमेध्य आहनस्याज्जायते, पुरुषक्षीरं धयति, हिरण्यं ददात्यात्मानमेव तेन पुनीते, शतमानं भवति, शतायुर्वै पुरुषः शतवीर्या, आयुरेव वीर्यमाप्नोति, पूर्वयोर्हविषोर्द्वे त्रिंशन्माने देये, उत्तरस्मिंश्चत्वारिंशन्मानं, तदेनमुदग्रहीत्, तेन स उत्तरं वसीयाञ्श्रेयान्भव,—त्यजातो वै तावत्पुरुषो यावदग्निं नाधत्ते, स वै तर्ह्येव जायते यर्ह्यग्निमाधत्ते, क्षौमे वसाना अग्निमादधीयातां, ते अध्वर्यवे देये, उल्बस्य वा एतन्निरूपं यत् क्षौम,—मुल्बमेवोपलुम्पेते, हिरण्यं सुवर्णमुपास्याग्निराधेयो, हिरण्यं वा अग्नेस्तेजः, सतेजसमेवैनमाधत्ते, तन्न निरस्तवै, यथानुहितं निरस्येदेवं तद्यन्निरस्येदनुध्यायी क्षोधुकः स्यात्, तन्न निरस्तवा, अननुध्याय्यक्षोधुको भवति ॥ ४ ॥ ४०

यो वा अस्यायं मनुष्योऽग्निरेतमुपासीतो,—न्नमत्येतमु,—पासीनः प्रजां विन्दत, एतमुपासीनं पशवा उपतिष्ठन्ते, यदेतमभागधेयमुत्सादयेत तस्मा आवृश्चेता, ऽनुध्यायी क्षोधुकः स्यात्, तद्ये वनस्पतय आरण्या आढ्यं फलं भूयिष्ठं पच्यन्ते तस्य पर्णीभ्यां यवमयश्चापूपो व्रीहिमयश्च संगृह्योपास्याधेय,—स्तदेनं द्वयं भागधेयमभ्युत्सादयामकग्राम्यं चारण्यं च, तेन तस्मै नावृश्चते, ऽननुध्याय्यक्षोधुको भवति, यवो वै पूर्व ऋतुमुखे पच्यत, इतः खलु वा एतं प्राञ्चमुद्धरन्ति,

[५] कपि. ६,१। तै. ब्रा. १,१,५; १,१,३।

तस्माद्यवमयः पश्चोपास्यो व्रीहिमयः पुर,—स्तद्यस्यैतर्ह्यवमयमेव तस्य पश्चोपास्येद्व्रीहिमयं पुरः,
प्रजापतेर्वा एतौ स्तनौ, यज्ञमस्य देवा उपजीवन्ति वर्षं मनुष्या, अन्नाद्यमस्मा अवरुन्द्धे,
ऽक्षुध्यता स्वानां पुरः स्थाता भवति य एवं वेद,—तद्ध स्म वा आह केशी सात्यकामिः
केशिनं दार्भ्यम्,—न्नादं जनताया एवमिव वयमेतस्मा अग्न्याधेयेऽन्नमवारुध्म यथैपोऽन्नमत्ति,
तदाहुः, सर्वं वावैतस्येदमन्नं, यजमानं ३त्वेवास्यैतदासन्नपिदधाति, तदेवं वेदितोर्नं
३त्वेवं कर्तवा इति, त्रिर्वा इदं प्रजापतिः सत्यं व्याहरत्॥ भूर्भुवः स्वः॥ इतीदं वाव भूरिदं
भुवोऽदः ३स्व,—स्तद्यो ब्राह्मण आङ्गिरसः स्यात् तस्यादध्याद्, भूर्भुवोऽङ्गिरसां त्वा देवानां
व्रतेनादधा, इति पश्चा, भुवः ३स्वरि,—ति पुरो, द्विःपश्चा द्विः पुर,—स्तद् द्वेधा यज्ञः
सत्ये प्रत्यष्ठाद् द्वेधा यज्ञपतिर,—थ यो ब्राह्मणो वैश्वानरः स्यात् तस्यादध्याद्, भूर्भुवो, ऽग्नेष्ट्वा
देवस्य व्रतेनादधा, इति पश्चा, भुव ३स्वरि,—ति पुरो, द्विः पश्चा द्विः पुर,—स्तद् द्वेधा
यज्ञः सत्ये प्रत्यष्ठाद् द्वेधा यज्ञपतिर,—थ राजन्यस्यादध्याद्, भूर्भुवा, इन्द्रस्य त्वा मरु-
त्वतो व्रतेनादधा, इति पश्चा, भुव ३स्वरि,—ति पुरो, द्विः पश्चा द्विः पुरस्तद्, द्वेधा
यज्ञः सत्ये प्रत्यष्ठाद् द्वेधा यज्ञपतिरै,—न्द्रो वै राजन्यो देवतया मारुतीं विड्वि,—शा खलु वै रा-
जन्यो भद्रो भवति, विशमस्मा अवरुन्धे, ऽथ वैश्यस्यादध्याद्, भूर्भुवो, मनोष्ट्वा ग्राम-
ण्यो व्रतेनादधा, इति पश्चा, भुवः ३स्वरि,—ति पुरो, द्विः पश्चा द्विः पुरस्तद्, द्वेधा
यज्ञः सत्ये प्रत्यष्ठाद् द्वेधा यज्ञपति,—ग्रामणीथ्येन खलु वै वैश्यो भद्रो भवति, ग्रामणीथ्यमस्मा
अवरुन्धे, ऽग्निर्वै सृष्ट उल्बमपलुम्पं नाशक्नोत्, तस्य प्रजापतिराग्नेयपावमानीभिरुल्बमपालु-
म्पद्, यदाग्नेयपावमानीभिराश्वत्थीः समिध आदधात्युल्बमेवास्यापलुम्पति, पुनात्येनं, यथा
शिशुं माता रेढि वत्सं श्वा गौरेवमेनं रेढच,—ग्नेर्वै सृष्टस्य तेजा उददीप्यत, तदश्वत्थं प्राविशद्,
यदाश्वत्थीः समिध आदधाति तेज एवावरुन्धे, ऽग्निर्वै सृष्टो बिभिवाभवन्नतिष्ठदसमिध्यमानः,
स प्रजापतिरबिभेन्, मां वावायं हिंसिष्यतीति, तं शम्या समैन्धत्, तमशमयत्,
तं शम्याः शमीत्वं, यं शमीमयीः समिध आदधाति समेनमिन्धे, शमयत्येव, स शं
यजमानाय भवति शं पशुभ्यो, देवा यत्रोर्जं व्यभजन्त तत उदुम्बरा उदतिष्ठद्, यदौदुम्बरीं
समिधमादधात्यूर्जमेवावरुन्द्धे ॥५॥ ४१

विप्रियो वा एष पशुभिराधीयत, एष हि रुद्रो यदग्निस्तद्, वाचयेद्, घर्मः शिरस्त,—
दयमग्निः संप्रियः पशुभिर्भव, पुरीषमसीति, तदेनं संप्रियं पशुभिः पुरीषिणमकु,—र्यत्ते

[ ६ ] तै. ब्रा. १,१,७।

शुक्र शुक्रं ज्योतिस्तेन रुचा रुचमशीथा, इति रुचमेवैनमजीगमदे,—ष वा अग्निर्वैश्वानरो यदसा आदित्यो, यदुत्तरतो हरेदेषोऽतः स्याद्,—यमितो जीवन्तमेवैनं प्रदहेत्, सदक्षिणत एवं हा-३र्यः, स यदा समयाध्वं गछेदथ यजमानो वरं दद्यात्, तद्विराजं मध्यतोऽधित, विराड्वा-स्याग्नीन्विदधते, पशवो वै विराट् पशून्वा एतन्मध्यतोऽधित, ऽसृष्टो वा अग्निरासीद,—थु प्रजापतिः प्रजा असृजत, ता अन्धे तमसीमाँल्लोकाननुव्यनश्यन्, त्सोऽशोचत्, सोऽतप्यत, ततोऽग्निरसृज्यत, तमग्निꣳ सृष्टमधोऽन्यदधात्, तꣳ या अस्मिँल्लोक आसꣳस्ता अभिसमावर्तन्त, तं कुल्फदघ्नमुदगृह्णात्, तꣳ या उत्तरस्मिँल्लोक आसꣳस्ता अभिसमावर्तन्त, तं जानुदघ्नं तं नाभिदघ्नं तमꣳसदघ्नं तं कर्णदघ्नमुदगृह्णात्, तꣳ या उत्तरस्मिँल्लोक आसꣳस्ता अभिसमावर्तन्त, तं कर्णदघ्नं नात्युदृह्यो, यत्कर्णदघ्नमत्युदृह्णीयाद्, यजमानो वर्षिष्ठः पशूनाꣳ, यजमानमुपरिष्टादग्निरभ्यवदहेत्, तदाहुः, कथमद्यैतं ब्रह्मणाहितं प्रच्यावयेयुः, शिथिरꣳ वावैनमेतद्दकः, परैनꣳ वपतीति, तमनिधायैवाथ जानुदघ्नमुद्गृह्णीयाद,—थ नाभिदघ्नमथाꣳसदघ्नं तद्यथैवं प्रजापतिः प्रजा एभ्यो लोकेभ्योऽभिसमावर्तन्तैवमेवं यजमानं पशव एभ्यो लोकेभ्योऽभिसमावर्तन्ते य एवꣳ विद्वानग्निमाधत्ते, ऽग्निना वै देवतया विष्णुना यज्ञेन देवा असुरान् प्रव्लीय वज्रेणान्ववासृजन्, यः सपत्नवान् भ्रातृव्यवान्वा स्यात्तस्य रथचक्रं त्रिरनुपरिवर्तयेयुस्तद्, यथैव देवा असुरानग्निना देवतया विष्णुना यज्ञेन प्रव्लीय वज्रेणान्ववासृजन्नेवमेव यजमानः सपत्नं भ्रातृव्यमग्निना देवतया विष्णुना यज्ञेन प्रव्लीय वज्रेणान्ववसृजति य एवꣳ विद्वानग्निमाधत्ते ॥६॥ ४२

एष वै प्रजापती रूपेण यत् पूर्णाꣳस्रुग्, यत् पूर्णाꣳ स्रुचं जुहोति प्रजापतिमेवाप्नोति, सप्त ते अग्ने समिधः सप्त जिह्वा, इत्येतावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त, या वा अस्यैता अग्निमादधानो वितर्षयति वि ह तृष्यति, ता एवास्य तर्पयति, शमीमयीस्तिस्रः समिधा आदधाति घृतान्वक्ता घृतस्तोम्याभिः, समेनमिन्धे, शमयत्येव, स शꣳ यजमानाय भवति शं पशुभ्यो-ये वा एषु त्रिषु लोकेष्वग्नयस्ते समागछन्त्य,—स्य द्रविणमाददामहा, अति नोऽक्रमीद्, हव्यवाड् भवतीति, तज्जुहुयात् ॥ ४३

ये अग्नयो दिवो ये पृथिव्याः समागछन्तीषमूर्जꣳ वसानाः ।
ते अस्मा अग्नये द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत ॥ ४४

[ ७ ] मै. १,६,२ । तै. ब्रा. १,१,८ । वा. १७,७९; ३४,१५ । काण्व. १८,७९; ३३,९ ।

स्वाहेति तदिममेव द्रविणवन्तं कृत्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परा-
यन्ति, तद्वाचयेद्, घर्मः शिर,—स्तदयमग्निः संप्रियः पशुभिर्भव, पुरीषमसीति, तदेनꣳ
संप्रियं पशुभिः पुरीषिणमक,—र्यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादधा, इति संतेज-
समेवैनमाधत्ते ॥ ४५

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ ४६

इति हव्यवाहमेवैनमक,—रग्नेर्वै सृष्टस्य पशवोऽक्ष्या अवक्शाय प्रापतन्, तꣳ प्रजापतिर्वारवन्ती-
यमसृजत, तानवारयतै,—तर्हि खलु वा एष सृज्यते यर्ह्याधीयते, तद्यथैतस्मात्सृष्टात्पशवः
प्रापतन्नेवमस्मादाहितात्पशवः प्रपतन्त्ये,—ष हि रुद्रो यदग्नि,—स्तद्य एवꣳ विद्वान्वारवन्तीयं
गायते पशूनेव वारयते, वारवन्तीयꣳ वै सृष्ट्वा प्रजापतिर्यं काममकामयत तमाप्नोत्, तमेव
काममृध्नोति यजमानो यं कामं कामयमानोऽग्निमाधत्ते य एवꣳ विद्वान्वारवन्तीयं गायते, ऽग्निर्वै
क्रव्याद्विश्वदाव्य इमाँल्लोकानदहत्, तं प्रजापतिर्वारवन्तीयं गायमानो वरुणं बिभ्रत् प्रत्यैत्,
तमशमयद्, यदेवास्य क्रव्याद्यद्विश्वदा३व्यं तच्छमयति य एवꣳ विद्वान् वारवन्तीयं गायते,
तस्माद्वरुणो यज्ञावचरः स्या,—न्न त्वेनेन जुहुयाद्, यद्वा इदꣳ सर्वम्भूतꣳ यद्भुवद्यद्भविष्यद्यदिमे
अन्तरा द्यावापृथिवी तद्वामदेव्यं तदेवावरुन्द्धे य एवꣳ विद्वान् वामदेव्यं गायते, ब्रह्मणो वा एष
रसो यद्यज्ञायज्ञियꣳ, यद्यज्ञायज्ञियं गायते ब्रह्मण्येव रसं दधाति ॥ ७ ॥ ४७

अग्निꣳ वै सृष्टं प्रजापतिः पवमानेनाग्रा उपाधमद्, यत् पवमानाय निर्वपत्युपैवैनं तद्धमति, यत्
पावकाय पुनात्येनꣳ, यच्छुचये यदेवास्यापूतं तदेतेन पुनाति, यत् पवमानाय निर्वपति,
पशवो वै पवमानः पशूनेवावरुन्धे, यत् पावकाया,—ऽन्नꣳ वै पावक,—मन्नमेवावरुन्धे, यच्
छुचये, पूत एवास्मिन् रुचं दधाति, यं कामयेता,—ऽपतरं पापीयान्त्स्यादिति, तस्यैकमेकꣳ
हवीꣳषि निर्वपेत्, तदेनमपाग्रहीत्, तेन सोऽपतरं पापीयान् भवत्य,—थ यं कामयेत, न वसी-
यान्त्स्यान्न पापीयानिति, तस्य सर्वाणि साकꣳ हवीꣳषि निर्वपेत्, तदेनꣳ सꣳरुणद्धि, तेन
स न वसीयान्न पापीयान् भवत्य,—थ यं कामयेतो,—त्तरꣳ वसीयाञ्छ्रेयान् त्स्यादिति, तस्या-
ग्नये पवमानाय निरुप्याथ पावकाय च शुचये चोत्तरे हविषी समानबर्हिषि निर्वपेत्, तदेनमुदग्रहीत्,
तेन स उत्तरꣳ वसीयाञ्छ्रेयान् भवत्य,—थ यस्य त्रिष्टुभौ वानुष्टुभौ वा जगती वा सꣳया३ज्ये
स्यातामति गायत्रं क्रामे,—दुर्वीक् छन्दोभ्योऽवपद्येत, तद्यस्यैतेसद्गायत्र्या एवं तस्य सꣳयाज्ये

[इडा (ळा) यास्त्वा। ऋ० ३,२९,४] [८] तै. ब्रा. १,१,६।

कुर्याद्, गायत्रो३ ह्यग्निर्गायत्रछन्दाः, स्व एवैनꣲ योनौ स्वे छन्दसि प्रतिष्ठापयत्या,—ग्रावैष्णवमेकादशकपालं निर्वपे,—दग्निर्वै सर्वा देवता विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालब्ध, विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुं निर्वपेद्, यद्विष्णवे, विष्णुर्वै यज्ञो, यज्ञमेवालब्ध, यं शिपिविष्टं, पशवो वै शिपिविष्टं, पशूनेवावरुन्द्धे, यत् त्र्युद्धौ, त्रयो वा इमे लोका, इमानेव लोकानाप्नोति, यद् घृते, तेजो वै घृतं, तेज एवावरुन्ध, आदित्यं घृते चरुं निर्वपेत् पशुकामो, धेन्वा वै घृतं पयोऽनडुहस्तण्डुला,—स्तन्मिथुनं पशूनां पुष्ट्यै प्रजात्या, अग्नीषोमीयं पुरोडाशं द्वितीयमनुनिर्वपेत्, तद्भूयो हव्यमुपागा,—न्नो अस्यान्य ईशे, यर्हि वा एतं पुरा ब्राह्मणा निरवपꣲस्तर्ह्येषां न कश्चनैश, न हि वा एतमिदानीं निर्वपन्त्य,—थैषाꣲ सर्व ईशे, यदाग्नेयं,—स्तेजो वा अग्नि,—स्तेज एवावरुन्द्धे, यत्सौम्यः, सोमो वै शुक्रो ब्रह्मवर्चसं, ब्रह्मवर्चसं ब्रह्मवर्चसमेवावरुन्द्धे, त३द्योऽसा आदित्यो घृते चरुस्तं ब्रह्मणे परिहरेयु,—स्तं चत्वारः प्राश्नीयु,—स्तेभ्यः समानो वरो देय,—श्चतुर्वा इदमग्रे मिथुनमोद्यते,—कश्चैका च, द्वौ च द्वे च, त्रयश्च तिस्रश्च, चत्वारश्च चतस्रश्च, तन्मिथुनं पशूनां पुष्ट्यै प्रजात्यै ॥८॥ ४८

फल्गुनीपूर्णमासे ब्राह्मणस्यादध्यात्, फल्गुनीपूर्णमासो वा ऋतूनां मुख,—मग्निर्देवतानां, ब्राह्मणो मनुष्याणां, ग्रीष्मे राज३न्यस्यादध्याद्, ग्रीष्मे वा इन्द्रो वृत्रमहन्, वृत्रं खलु वै राज३न्यो बुभूषन् जिघाꣲसति, शरदि वैश्यस्यादध्या,—दन्नꣲ वै शर,—दन्नेन वैश्यो भद्रो भवत्य,—न्नाद्यमस्मा अवरुन्द्धे, यद्यन्यस्मिन्नृता आदधीत यदि वा अस्मै स एक ऋतुः शिवः स्यादथास्मा इतरेऽशिवा दुर्योणा भवेयु,—स्तद्यस्यैतर्सैत् फल्गुनीपूर्णमास एव तस्यादध्यात्, तदस्मै सर्व ऋतवः शिवा भवन्ति, सर्व एनमृतवो जिन्वन्ति, सꣲवत्सरस्य वा एतदा३स्यꣲ यत् फल्गुनीपूर्णमा३स्यमह,—र्यत् फल्गुनीपूर्णमा३स्यमहरादध्यात् सꣲवत्सरस्यैनमास्ये न्निदध्याद्, द्व्यहे वा पुरैकाहे वाधेय,—स्तद् द्वितीयस्य ऋतोरभिगृह्णाति, नैनꣲ सꣲवत्सरस्यास्येऽन्निदधाति, तद्यद् द्वितीयस्य ऋतोरभिगृह्णाति द्वितीयमेव सपत्नस्य भ्रातृव्यस्येन्द्रियं पशून् क्षेत्रꣲ वृञ्जान एति, कृत्तिकासु ब्राह्मणस्यादध्या,—दाग्नेयीः कृत्तिका, आग्नेयो ब्राह्मणः, स्व एवैनꣲ योनौ स्वेऽह्नाधत्ते, प्रजापतेर्वा एतच्छिरो यत् कृत्तिका, अग्निरास्यꣲ, शीर्ष्णान्नमद्यते, ऽन्नाद्यमस्मा अवरुन्धे, सप्त कृत्तिकाः, सप्त शीर्षन् प्राणाः, प्राणानस्मिन् दधाति, रोहिण्यां पशुकामस्यादध्यात्, सोमस्य वा एतन्नक्षत्रꣲ यद्रोहिणी, सोमो रेतोधा, रेतोऽस्मिन् दधात्यृ,—क्षा वा इयमग्र

[ ९ ] काठ. ८,१। कपि. ६,६। तै. ब्रा. १,१,२। मा. श्रौ. १,५,१।

सीत्, तस्यां देवा रोहिण्यां वीरुधोऽरोहयं,—स्तद्यथेमा अस्यां वीरुधो रूढा एवमस्मिन्
वो रोहन्ति य एवं विद्वान् रोहिण्यामग्निमाधत्ते, रोहिण्यां स्वर्गकामस्याद्दध्याद्,
हिण्यां वै देवाः स्वरायन्, त्स्वरेवैति, कालकाञ्जा वा असुरा इष्टका अचिन्वत, दिवमा-
स्यामा, इति तानिन्द्रो ब्राह्मणो ब्रुवाण उपैत्, स एतामिष्टकामप्युपाधत्त, प्रथमा इव
र्गमाक्रमन्ता,—ऽथ स तामावृहत्, तेऽसुराः पापीयांसो भवन्तोऽपाभ्रंशन्त, या उत्तमा
स्तां तौ युमश्वा अभवतां, येऽधुरे त ऊर्णावाभयो, यां तामिष्टकामावृहत् सा चित्राभवद्,
सपत्नवान् भ्रातृव्यवान् वा स्यात् स चित्रायामग्निमादधीत, तद्यथैतस्यामावृढायामसुराः
पीयांसो भवन्तोऽपाभ्रंशन्तैवमस्य सपत्नो भ्रातृव्यः पापीयान्भवन्नपभ्रंशते य एवं विद्वां-
त्रायामग्निमाधत्ते, यः कामयेत, भग्यन्नादः स्यामिति, स पूर्वासु फल्गुनीष्वग्निमादधीत,
स्य वा एतदहर्यत् पूर्वाः फल्गुनी,—भग्यन्नादो भवत्य,—थ यः कामयेत, दानकामा मे
जाः स्युरिति, स उत्तरासु फल्गुनीष्वग्निमादधीता,—ऽर्यम्णो वा एतदहर्यदुत्तराः फल्गुनी,—
नमर्यमा, दानकामा अस्मै प्रजा भवन्ति, तासु राज३न्यस्याद्दध्याद्, दानं ३ह्येप प्रजानामु-
जीवति, दानमर्यमा, दानकामा अस्मै प्रजा भवन्ति, प्रजापतेर्वा एतौ स्तनौ यत्पौर्णमासी
मावास्या च, यत्पौर्णमास्यां वामावास्यायां वाग्निमाधत्ते प्रजापतिमेव प्रत्तं दुहे, देवा-
ं वा एते सदोहविर्धाने यत्पौर्णमासी चामावास्या च, यत्पौर्णमास्यां वामावास्यायां
ग्निमाधत्त उभे पुण्याहे उभे यज्ञिये ॥ ९ ॥ ४९

न पुरा सूर्यस्योदेतोर्मन्थितवा, असु३र्यो विदेवा आधीयत, उद्यत्सु रश्मिषु मथ्य,—स्तत्स-
ः सैन्द्र उभयोरह्नो रूप आधीयते, चतुर्विंशत्यां प्रक्रमेष्वाधेय,—श्चतुर्विंशत्यक्षरा वै गाय-
, गायत्रमग्नेश्छन्दः, स्व एवैनं योनौ स्वे छन्दस्याधत्ते, तद्यस्यैतत्सेदपरिमित एव तस्याद-
यात्, क्षेष्णु वै परिमित,—मपरिमितमेवास्मै जीवनमवरुन्द्धे, ऽग्निर्वै सृष्टः प्रजापतेरध्युदक्रा-
त्, स प्रजापतिरबिभे—दुद एवासा अभूदिदमहमिति, तस्मिन्ननुनिष्क्रम्याजुहो,—देतर्हि खलु
एष सृज्यते यर्ह्याधीयते, तदाहु,—रम्ण एवानुद्रुत्याथाग्निहोत्रं होत३व्यमिति, तन्नैवं
र्तवा, अयुतं तत् कुण्ड्याग्रीयं तद्यज्ञस्य क्रियते यद्योनेः परमवरं कुर्याद,—प्रजनिष्णुः स्या,—

[ १० ] काठ. ८,३ । कपि. ६.८ । वा. ३,९ । काण्व. ३,९-१० ।

❁

हवीꣳष्येव पूर्वाणि निरुप्याथ सायमग्निहोत्रं जुहुयात् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ इति तत्सायं ज्योतिषा रेतो मध्यतो दधाति ॥ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ इति प्रातस्तत्सायं ज्योतिषाꣳ रेतो मध्यतो हितं ॥ प्रातः प्रजनयामक,—र्देवाश्च वा असुराश्च सꣳयत्ता आस,—न्नथेन्द्रोऽग्निमाधत्त, ते देवा आबिभयु,—रद एवासा अग्निं गोपायमानोऽग्निहोत्रं गोपायमानो भविष्यति, न ना उपैष्यत्य,—भि नो जेष्यन्तीति, तेऽब्रुवन्, यदेव त्वं किंच करवो यद्धना यज्जिना यद्विन्दासै तत्तेऽग्निहोत्रं कुर्मो, ऽथेहीति, स वा एतु, तस्माद्राजन्यस्याग्निहोत्रमहोत३व्यꣳ, यद्ध्येवैष किंच करोति यद्धन्ति यज्जिनाति यद्विन्दते यदेनꣳ विश उपतिष्ठन्ते तद्राजन्यस्याग्निहोत्रꣳ होतव्यꣳ, राजन्यस्याग्निहोत्रा३न्न होत३व्या,—मिति मीमाꣳसन्ते, यद्धुत्वा न जुहुयाद्वि यज्ञं छिन्द्या,—ज्जीयेत वा प्र वा मीयेत, पौर्णमासीममावास्याꣳ वा प्रति होत३व्य,—मथो अग्न्युपस्थानꣳ वा चयित३व्य,—स्तेनास्य दर्शपूर्णमासौ संतता अविच्छिन्नौ भवतः ॥१०॥ ५०-५५

यं कामयेत, पशुमान्त्स्यादिति, यो बहुपुष्टस्तस्य गृहादग्निमाहरेयु,—र्यथा वा एतꣳ सृज्यमानं पशवोऽन्वसृज्यन्तैवमेनमाह्रियमाणं पशवोऽन्वाय,—न्त्येष हि रुद्रो यदग्नि,—रथ यं कामयेता,—ऽन्नादः स्यादिति, तस्य भ्राष्ट्राद्दक्षिणाग्निमाहरेयु,—रेष वा अग्नीनामन्नादो, ऽन्नकरणं भ्राष्ट्र,—मन्नाद्यमस्मा अवरुन्द्धे, तदाहु,—र्यथा वृषलो निजः पुल्कुकश्चिकित्सेदेवꣳ स, इति स मध्य एवं, स शꣳ यजमानाय भवति शं पशुभ्यो, यः सोमेनायक्ष्यमाणोऽग्निमादधीत न पुरा सꣳवत्सराद्धवीꣳषि निर्वपेद्, रुद्रोऽस्य पशूनभिमानुकः स्या,—देते वै पशवो यद्व्रीहयश्च यवाश्च, तेषां चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो जीवतण्डुलमिवोपहरेत्, तद्याभ्यो देवताभ्योऽग्निमाधत्ते यत्ताभ्यो न जुहुयात्ताभ्या आवृश्चेता,—ऽनुध्यायी क्षोधुकः स्यात्, ताभ्या आज्यस्य होत३व्यं, तेन ताभ्यो नावृश्चते, ऽननुध्याय्यक्षोधुको भवति, सꣳवत्सरे हवीꣳषि निर्वपति, तदस्य सꣳवत्सरान्तर्हितो रुद्रः पशून्न हिनस्ति, सꣳवत्सरमग्निहोत्रमहौषीत्, तत्तपोऽविदत्, स सर्वेण साकꣳ स्वर्गं लोकꣳ समारुक्षत्, त्रिर्वा इदꣳ विराड् व्यक्रमत गार्हपत्यमाहवनीयꣳ सभ्यं, तद्विराजमाप,—दन्नꣳ वै विरा,—डन्नꣳ वावैतदापन्, मध्याधिदेवने राजन्यस्य जुहुयाद्वारुण्यर्चा, वरुणो वै देवानाꣳ राजा, राज्यमस्मा अवरुन्द्धे, हिरण्यं निधाय जुहोत्य,—ग्निमत्येव जुहोत्यायतनवत्य,—न्धोऽध्वर्युः स्याद्यदनायतने जुहुयाच्, शतमस्मा अक्षान् प्रयच्छेत्,

[ ११ ] काठ. ८,७,१२ । कपि. ७,३-४ ।

न्विचिनुयात्, शतायुर्वै पुरुषः शतवीर्यो, आयुरेव वीर्यमाप्नोति, गामस्य तदहः सभायां
व्येयु,—स्तस्याः परूंषि न हिंस्यु,—स्तां सुभासङ्ख्या उपहरेत्, तया यद्गृह्णीयात् तद्ब्राह्म-
भ्यो देयं, तत् सभ्यमन्नमवरुन्द्धे ॥ ११ ॥ ५६

यस्या रात्र्याः प्रातरग्निमाधास्यमानः स्यात्तां रात्रीं चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो जीव-
ण्डुलमिवोपहरे,—ददितिर्वै प्रजाकामौदनमपचत्, सोञ्छिष्टमाश्नात्, तस्या धाता चार्यमा चाजा-
तां, सापरमपचत, सोञ्छिष्टमाश्नात्, तस्या मित्रश्च वरुणश्चाजायेतां, सापरमपचत्,
ोञ्छिष्टमाश्नात्, तस्या अंशश्च भगश्चाजायेतां, सापरमपचत्, सैक्षतो,—ञ्छिष्टं मेऽश्नत्या
ौ द्वौ जायेते, इतो नूनं मे श्रेयः स्याद्यत् पुरस्तादश्नीयामिति, सा पुरस्तादशित्वोपाहरत्,
ा अन्तरेव गर्भः सन्ता अवदता,—मावमिदं भविष्यावो यदादित्या इति, तयोरादित्या निर्हन्ता-
मैछं,—स्ता अंशश्च भगश्च निरहतां, तस्मादेतौ यज्ञेन यजन्ते, ऽंशप्रासोऽंशस्य
ागधेयं, जनं भगोऽगछत्, तस्मादाहु,—र्जनो गन्त३व्य,—स्तत्र भगेन संगछता इति, स
ा इन्द्र ऊर्ध्वं एव प्राणमनुदश्रयत, मृतमितरमाण्डमवापद्यत, स वाव मार्ताण्डो यस्येमे मनुष्याः
जा, सा वा अदितिरादित्याननुप्राधाव,—दस्त्वेव म इदं, मा म इदं मोघं परापप्तदिति,
ेऽब्रुव,—न्नथै३षोऽस्माकमेव ब्रवातै, न नोऽतिमन्याता, इति स वाव विवस्वानादित्यो यस्य
मनुश्च वैवस्वतो यमश्च, मनुरेवास्मिंल्लोके य३मोऽमुष्मि,—न्नेतौ वै देवयानान् पथो गोपायन्ति,
यदादित्यास्तं इयक्षमाणं प्रतिनुदन्ते, यो वा एतेभ्योऽप्रोच्याग्निमाधत्ते तमेते स्वर्गाल्लोकात्प्रतिनु-
दन्ता, उञ्छिष्टभागा वा आदित्या, यदुञ्छिष्टे विवर्तयित्वा समिध आदधाति तदादित्येभ्योऽ-
ग्न्याधेयं प्राह, नैनं स्वर्गाल्लोकात् प्रतिनुदन्ते, संवत्सरमुत्सृजेताग्निमाधास्यमानो, नास्याग्निं
गृहाद्धरेयु,—र्नान्यता आहरेयुः, संवत्सरे वृद्धा गर्भाः प्रजायन्ते, प्रजातमेनं वृद्धमाधत्ते,
द्वादश रात्रीरुत्सृजेत, द्वादश वै रात्रयः संवत्सरस्य प्रतिमा, संवत्सरे वृद्धा गर्भाः प्रजा-
यन्ते, प्रजातमेनं वृद्धमाधत्ते, तिस्र उत्सृजेत, त्रयो वा इमे लोका, इमानेव लोकाना-
प्नोत्यै,—कामुत्सृजेतै,—को वै प्रजापतिः प्रजापतिमेवाप्नोति, पुरूरवा वा ऐड उर्वशीमविन्दत
देवीं, तस्या आयुरजायत, स देवान्त्स्वर्गं लोकं य३त्तोऽनूदैत्, तेऽब्रुवं,—स्तद्वयं देवा
इमः, ३क्कायं मनुष्यो गमिष्यतीति, सोऽब्रवीद्, बहवो वै मे समाना,—स्ते मा वक्ष्यन्ति,
किंमयं देव्याः पुत्रो देवेभ्यो मातुर्भ्रात्रेभ्या आहार्षी,—दस्त्वेव मे किंचिदिति, तस्मा अग्निर्यज्ञियां

[ १२ ] काठ. ७,१५; ८,१०। कपि. ६,५; ७,६। तै. ब्रा. १,१,९।

त३न्वं प्रायच्छत्, तामुत्सङ्गेऽवधायाहरत्, तामुखायामवादधात्, सोऽश्वत्थ आरोहोऽभवद्, योखा सा शमी, तस्मादेतौ यज्ञावचरौ, पुण्यजन्मानौ ३ह्य,—ग्निर्वै वरुणं ब्रह्मचर्यमागछत् प्रवसन्तं, तस्य जायाꣳ संमभवत्, तं पुरस्तादायन्तं प्रतिक्षाय प्रत्यङ् निरद्रवत्, सोऽवेत्, सर्वꣳ वा इन्द्रियं नृम्णꣳ रेतो निर्लुप्य हरतीति, तदनुपराहाय निरलुम्पद्, यद्रेता आसीत्सोऽश्वत्थ आरोहोऽभवद्, यदुल्बꣳ सा शमी, तस्मादेतौ यज्ञावचरौ, पुण्यजन्मानौ हि, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, सोऽश्वो भूत्वा सꣳवत्सरं ३न्यङ् भूम्याꣳ शिरः प्रतिनिधाया-तिष्ठत्, तस्याश्वत्थो मूर्ध्न उदभिनत्, तदश्वत्थस्याश्वत्थत्वं, तस्मादेष यज्ञावचरः, प्राजा-पत्यो हि ॥१२॥ ५७

मनुर्वै प्रजाकामोऽग्निमाधास्यमानो देवतायै देवताया अजुहोत्, ततो मित्रावरुणयोराहुत्या प्रफर्व्युदतिष्ठत्, तस्या घृतं पदोरक्षरत्, सा मित्रावरुणा ऐत्, ता अब्रूता,—माहुत्या वै त्वमावयोरजनिष्ठा, मनोस्त्वं त्वमसि, तं परेहीति, सा मनुमैत्, सोऽब्रवी,—दसुरा वा इमे पुण्यमन्या अग्निमादधते, तान् परेहीति, सा परै३त्, तेऽमुमग्रा आदधताथेमंमथेमꣳ, सा पुन-रैत्, तामपृच्छत्, किमभ्युगन्निति, साब्रवी,—दमुमेवाग्रा आधिषताथेमंमथेममिति, सोऽब्रवीत्, सकृद्वावासुराः श्रियोऽन्तमगुः, परा तु भविष्यन्तीति, सोऽब्रवीद्, देवा वा इमे पुण्य-मन्या अग्निमादधते, तान् परेहीति, सा परैत्, त इममग्रा आदधताथामुमथेमꣳ, सा पुनरैत्, तामपृच्छत्, किमभ्युगन्निति, साब्रवी,—दिममेवाग्रा आधिषताथामुमथेममिति, सोऽब्रवीत्, सकृद्वाव देवाः सर्वेण साकꣳ स्वर्गं लोकꣳ समारुक्ष,—न्नितः प्रदानात्तु यज्ञमुपजीविष्यन्तीति, यः सर्ववेदसं दास्यन्त्स्यात्स इममग्रा आदधीताथामुमथेमं, तद्यथैव देवाः सर्वेण साकꣳ स्वर्गं लोकꣳ समारोहन्नेवमेव यजमानः सर्वेण साकꣳ स्वर्गं लोकꣳ समारोहति य एवꣳ विद्वानग्नि-माधत्ते,—सोऽब्रवी,—दृषयो वा इमे पुण्यमन्या अग्निमादधते, तान्परेहीति, सा परैत्, त इममग्रा आदधताथेमंमथामुꣳ, सा पुनरैत्, तामपृच्छत्, किमभ्युगन्निति, साब्रवी,—दि-ममेवाग्रा आधिषता,—ऽथेमंमथामुमिति, सोऽब्रवी,—दहꣳ वावाग्न्याधेयꣳ विदांचकार, सर्वेषु वा एषु लोकेष्वृषयः प्रत्यष्ठुरिति, प्रति प्रजया च पशुभिश्च तिष्ठति य एवꣳ विद्वानग्निमाधत्ते, यदमुमाधायेममादध्यादप तदादध्याद्, यद्वावेममाधायामुमादध्यादप तदादध्यात्, तदिममेवाधा-यथेमंमथामुं, तथा समृद्धा आधीयते, प्राचीनप्रवण आधेय,—स्तथा समृद्धा आधीयते,

---

[ १३ ] काठ. ८,४ । कपि. ६,९ । तै. ब्रा. १,१,४ ।

प्राचीनं मध्यमाद्वंशादाधेय,—स्तथा समृद्धा आधीयते, या वै सा प्रफव्यासीत सा गौरभवत्
सैडा सा मानवी घृतपदी मैत्रावरुणी ॥१३॥ ५८ [५०६]

॥ इति प्रथमकाण्डे आधानं नाम षष्ठः प्रपाठकः ॥६॥

अथ सप्तमः प्रपाठकः ।

## पुनराधानम् ।

यत्त्वा क्रुद्धः पुरोवप मन्युना सुमनस्तर । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥ १
यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे । आदित्या विश्वे तद्देवा वसवः पुनराभरन् ॥ २
यत्ते भामेन विचकुरानीशानो हृदस्परि । पुनस्तदिन्द्रश्चाग्निश्च वसवः समचीक्लपन् ॥ ३
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुधीते अग्ने ।
घृतेन त्वं तन्वं वर्धयस्व रायस्पोषा यजमानं सचन्ताम् ॥ ४
त्रयस्त्रिंशत्तन्तवो यं वितन्वत इमं च यज्ञं सुधया ददन्ते ।
तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो अप्येतु देवान् ॥ ५
मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञं समिमं दधातु ।
इमं यज्ञं सप्ततन्तुं ततं न आ देवा यन्तु सुमनस्यमानाः ॥ ६
बृहस्पतिर्नो हविषा घृतेन विच्छिन्नं यज्ञं समिमं दधातु ।
या इष्टा उषसो याश्च या३ज्यास्ताः संदधामि मनसा घृतेन ॥ ७
अग्नेऽभ्यावर्तिन्नभि मावर्तस्वायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण ॥ ८
अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
अथा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥ ९
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः ॥ १०
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ११
सलिलः सलिगः सगरस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा, केतः सुकेतः सकेतस्ते
न आदित्या हविषो जुषाणा व्यन्तु स्वाहा, देवजूते विवस्वन्नादित्य ते नो देवाः सत्यां देवहूतिं
देवेभ्यासुवध्व,—मादित्येभ्यः स्वाहा ॥१॥ १२

[ १ ] मै. १,७,४,५ । तै. १,५,३; १,५,१०; ४,२,१,२,३; ४,२,३,४ । काठ. ८,१४; ३४,१९ । कपि. ८,२ । वा. १२, ४४; ८,६१; २,१३; १२,७–१०,४०,४१ । काण्व. १२,८५; १३,४५; २,२९; १३,८–११,४१,४२ । [ यत्त्वा क्रुद्धः० । अथर्व. १२,२,५ । पुनस्त्वादित्या रुद्रा० । ऋ. १०,११६,८; अथर्व. १२,२,६ ]

अग्नेर्वै भागः पुनराधेयु,—मेतꣳ वै भागं प्रेप्सन् व्युर्धयति, यद्यादधानो मन्येत, वि स्या ऋध्यता, इत्युत्साद्य पुनरादधीत, यमेव भागं प्रेप्सन् व्यर्धयति तं प्राप्यार्धयत्येवं, सर्वमेवाग्नेयं क्रियते, यत्किंच सर्वमेवाग्नये भागं प्रदाय सर्वामृद्धिमृध्नोति, न संभाराः संभृत्या, न यजुः कर्तवा, इत्याहुः, संभृतसंभारो ३ह्येष कृतयजु,—स्तदाहुः, संभृत्या एव संभाराः, का३र्यꣳ यजुरिति, पुनरुत्स्यूतꣳ वासो देयं पुनर्णवो रथः पुनरुत्सृष्टोऽनड्वा,—नेतानि वै पुनराधेयस्य रूपाणि, रूपाण्येवास्याप्त्वावरुन्द्धे, ऽग्निर्वा उत्सीदन्नप ओषधीरभ्युत्सीदति, दर्भा वा आपा ओषधयो, यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्योऽध्याप्त्वावरुन्द्धे, देवा असुरैर्विजयमुपयन्तोऽग्नौ प्रियास्तन्वः संन्यदधत, यन्नो जयेयुरिमा अभ्युपधावेम, यद्यु जयेमेमा अभ्युपावर्तेमहीति, ता देवा जित्वान्वैछन्, त्सर्वेषां नः सहेति, ३सोऽग्निरब्रवीद्, य एवं मा मद्देवत्य आदधातै स एताभिस्तनूभिः संभुवादिति, तं देवा आदधत, त एताभिस्तनूभिः समभवन्, पशवो वै देवानां प्रियास्तन्वः, पशुभिरेव समभवꣳ,—स्तद्य एवꣳ विद्वान् पुनराधेयमाधत्त एताभिरेवाग्नेस्तनूभिः संभवति, पशवो वै देवानां प्रियास्तन्वः, पशुभिरेव संभवति, मनुः पुष्टिकामा आधत्त, स इमान् पोषानपुष्यत्, तेन ऋद्धं, त्वष्टा पशुकामा आधत्त, त इमे त्वाष्ट्राः पशवः प्राजायन्त, तेन ऋद्धं, प्रजापतिः प्रजाकामा आधत्त, ता इमाः प्रजाः प्राजापत्याः प्राजायन्त, तेन ऋद्धꣳ, यो वै तमग्रा आधत्त स तेन वसुना समभवत्, तत् पुनर्वसोः पुनर्वसुत्वं, तस्मात् पुनर्वसा आधेयः, पुनर्हि स तेन वसुना समभुवद्, यो वै तमाधत्तार्ध्नोत्, स तस्मादनुराधास्वाधेया ऋद्ध्या, ऋध्नोत्येवा,—ऽथो मिथुनत्वाय ।।२।। १३

अग्निर्वा उत्सीदन्त्सꣳवत्सरमभ्युत्सीदति, सप्तदश सामिधेनीः का३र्याः, पञ्च ऋतवो, द्वादश मासा, एष सꣳवत्सरः, सꣳवत्सरादेवैनमध्याप्त्वावरुन्द्धे, तदाहुः, पञ्चदश सामिधेनीः का३र्या न सप्तदशी,—त्येतद्वै सꣳवत्सरस्य संक्रमणतम,—मेतेनाशिष्टमाप्यते, पञ्चदश सामिधेनीः, पञ्चदशार्धमासस्य रात्रय,—स्ताभिरेव ता आप्यन्ते, यावन्ति वै सामिधेनीनामक्षराणि तावन्ति सꣳवत्सरस्याहानि, तैरेव तान्याप्यन्ते, ऽग्निर्वा उत्सीदन्त्सꣳवत्सरमभ्युत्सीदति, षड्वा ऋतवः सꣳवत्सर,—स्तस्मात् षड्विभक्तयः, सꣳवत्सरो वा अग्निर्वैश्वानरो, यत् षड्विभक्तयः सꣳवत्सरादेवैनमध्याप्त्वावरुन्द्धे, ऽथ यदग्निर्बहुधा विह्रियत इमान् पोषान्

[ २ ] तै. १,५,१–२ । काठ. ८,१५ । कपि. ८,३ । मा. श्रौ. १,६,५ ।

[ ३ ] तै. १,५,२ । काठ. ९,१ । कपि. ८,४ । मा. श्रौ. १,६,५ ।

पौष, तस्मादग्निरेतावतीर्विभक्तीरानशे नान्या देवता,—थ यद् त्र्यक्षराः सतीश्चतुरक्षराः क्रियन्त,
ाचतुरꣳ हि पशवो द्वन्द्वं मिथुना, ऋतवो वै प्रयाजा, अन्नमृतवो, यत् प्रयाजाननन्तरियाद्-
मन्तरियाद्, यज्ञमुखꣳ वै प्रयाजा, यत् प्रयाजाननन्तरियाद्यज्ञमुखमन्तरियात्, तद्यस्यैतस्यैतस्यो-
रिष्टात् प्रयाजानाꣳ विभुक्तीः कुर्याद्, वी३र्यꣳ वै प्रयाजा, वी३र्यꣳ विभक्तयो, वीर्यादेवाधि
षट्करोति, ताजगृद्धिमभिक्रामति, नानाग्नेयं क्रियते, ऽथ कस्मात्सह विभक्तयः प्रयाजैरिति,
ꣳवत्सरꣳ वै प्रयाजाः परीज्यन्ते, कस्मादाग्नेयं क्रियते, तस्मान्नानाग्नेयम् ॥३॥ १४

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥ १५

इति पुरस्तात् प्रयाजानां जुहुयात् ॥ १६

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ १७

इत्युपरिष्टादनुयाजानां जुहुया,—दूर्जा वा एष पशुभिरुत्सीदन्त्सहोत्सीदति, पुनरूर्जा निव-
स्वे,—ति तदूर्जमेव पशून् पुनरवरुन्द्धे, ऽथो तानेव भागिनः करोत्य,—थो उभयत एष यज्ञ-
स्याशिष ऋध्नोति, नानाग्नेयं क्रियते, ऽथ कस्मादाज्यभागा इज्येते इति, चक्षुषी वा एते यज्ञस्य
यदाज्यभागौ, यदाज्यभागा अन्तरियाच्चक्षुषी यज्ञस्यान्तरियाद,—ग्ना आयूꣳषि पवसा, इति
सोमस्य लोके कुर्याद्, यदाग्नेयी तेनाग्नेयी, यत् पावमानी तेन सौमी, नानाग्नेयं क्रियते, न
सोममन्तर्यन्त्य,—ग्निर्मूर्धा दिवः ककुदि,—ति प्रजाकामो वा पशुकामो वा सोमस्य लोके कुर्याद्,
यन्मिथुना तेन प्रजननवती, यद्रेतस्वती तेन सौमी, यज्ञेन वा एष व्यृध्यते३यो ऽग्निमुत्साद-
युते, पाङ्क्तो यज्ञो, यत् पञ्चकपालो यज्ञमेव पुनरालभते, ऽष्टाकपालः कार्यो, गायत्रो
३ह्यग्निर्गायत्रछन्दा, आग्नेयꣳ वा एतत् क्रियते यत् पुनराधेयं, तस्मादष्टाकपाल,—स्तन्न सूक्ष्यं,
पञ्चकपाल एव कार्युः, पञ्चमाद्वा अध्यृतोः षष्ठ ऋतुरभवत्, समानमेतद्यत् पञ्चमश्च ऋतुः
षष्ठश्च, यत् पञ्चकपालः सꣳवत्सरादेवैनमध्याप्त्वावरुन्द्धे, प्रजननꣳ वा ऋतवो, ऽग्निः
प्रजनयिता, यत् पञ्चकपालः प्रजननादेवैनं प्रजनयिता प्रजनयाति ॥४॥ १८

वीरहा वा एष देवानाꣳ३योऽग्निमुत्सादयते, शतदायो वीरो, यदेताः शताक्षराः पङ्क्तयो
भवन्ति वीरꣳ वावैतद्देवानामवदयते, ऽन्यस्मै वै कमाधेयमन्यस्मै पुनराधेयं, न वै तदाधेयेन

[ ४ ] मै. १,७,१ । तै. १,५,२ । काठ. ९,१-३ । कपि. ८,४-५ ।
[ ५ ] तै. १,५,२; ४,४ । काठ. ९,२-३ । कपि. ८,५-६ ।

स्पृणोति यस्मै कं पुनराधेयं, पुनराधेयेन वाव तत्स्पृणोति, जरा वै देवहितमायु,—रेतावतीर्हि समा एति यदेताः शताक्षराः पङ्क्तयो भवन्ति, यावदेवायुर्वा३र्यं तदाप्नोति, तत्स्पृणोति, तदवरुन्द्धा, आयुषा वा एष वीर्येण व्यृध्यते ३यो ऽग्निमुत्सादयता, आयुर्वा३र्यं हिरण्यं, यद्धिरण्यं ददात्यायुषैवैनं वीर्येण समर्धयति, शतमानं भवति, शतायुर्वै पुरुषः शतवीर्या, आयुरेव वीर्यमाप्नोत्या,—दित्या वा इत उत्तमाः स्वर्गं लोकमायं,—स्ते व्यतृष्यन्नि,—तः प्रदानाद्धि देवा यज्ञमुपजीवन्ति, तें वा एतं पुनरादधत, तं आर्ध्नुवन्ना,—दित्या वा अस्मिल्लोके ऋद्धा आदित्या अमुष्मिन्, पशवोऽस्मिन्नृतवोऽमुष्मिं,—स्तद्य एवं विद्वान् पुनराधेयमाधत्त उभयोरेव लोकयोर्ऋध्नोत्यस्मिंश्चामुष्मिंश्च, सलिलः सलिगः सगुरस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा, केतः सुकेतः संकेतस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा, देवजूते विवस्वन्नादित्य ते नो देवाः सत्यां देवहूतिं देवेष्वासुवध्वमादित्येभ्यः स्वाहे,—त्यैतैर्वै तेतं पुनरादधत, तं आर्ध्नुवं,—स्तद्यदेतैः पुनराधत्तेऽथ अध्नोत्या,—दित्या हि पुनराधेयम् ॥५॥

१९ [५१५]

॥ इति प्रथमकाण्डे पुनराधानं नाम सप्तमः प्रपाठकः ॥७॥

अथाष्टमः प्रपाठकः ॥

## अग्निहोत्र-ब्राह्मणम् ।

प्रजापतिः प्रजा असृजत, स वा अग्निमेवाग्रे मूर्धतोऽसृजत, स यतोऽग्निमसृजत तत् पर्यमार्ट्, ततो लोहितमवाहरत्, तन्न्युमार्ट्, तत उदुम्बरः समभवत्, तस्मादुदुम्बरः प्राजापत्यं,—स्तस्माल्लोहितं फलं पच्यते, सोऽस्मात् सृष्टः पराङैद्भागधेयमिच्छमानः, स तदेव नाविन्दत् प्रजापतिर्यदहोष्यत्, स स्वं चक्षुरादायाजुहोत् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ इति तद्वा अदश्चक्षुर्मन्यन्ते यदसा आदि३त्यो, ऽमुं वा एतदस्मिन् जुह्वतो मन्यन्ते, सत्यं वै चक्षुः, सत्येनाग्निहोत्रं जुहोति य एवं विद्वान् जुहोति, भविष्णुः सत्यं भवति य एवं वेद, कस्मै कमग्निहोत्रं हूयता, इति ब्रह्मवादिनो वदन्त्य,—ग्नये वा एतद्धृत्यै गुप्त्यै हूयते, यत् सायं जुहोति रात्र्यै तेनु दाधार, यत् प्रातरह्ने तेना,—ग्नौ सर्वान् यज्ञान् संस्थापयन्त्यं,—थ कस्मा-

[ १ ] काठ. ६,१–२ । कपि. ४,१ । तै. ब्रा. २,१,२ । वा. ३,९ ( प्र. पा. ) । काण्व. ३,९ ( तृ. पा. ) ।

तदेवाग्निहोत्रमुच्यता, इति ब्रह्मवादिनो वदन्ति, होत्रा वै देवेभ्योऽपाक्रामन्नग्निहोत्रे भाग-
युमिच्छमाना, यत् ॥ अग्निहोत्रम् ॥ इत्याह तेन होत्रा आभजति, तेनैना भागिनीः करोत्ये,—
वा अग्रेऽग्ना आहुतिरहूयत, तदग्निहोत्रस्याग्निहोत्रत्वं९, सोऽस्मात् सृष्टः पराङैद्भाग-
युमिच्छमानः, स तदेवं नाविन्दत् प्रजापुतिर्यैदहोष्यत्, तं९ स्वा वागभ्युवद,—जुहुधीति,
इत एवोन्मृज्याजुहोत्। स्वाहा॥ इति स्वा ह्येनं९ वागभ्यवदत्, तत् स्वाहाकारस्य जन्म,
स्मादग्निहोत्रे स्वाहाकार,—स्तस्माछलाटे च पाणौ च लोम नास्त्यं,—तो हि स तदादायाजुहोत्,
स्माद्यस्य दक्षिणतः केशा उन्मृष्टास्तमाहु,—र्ज्येष्ठलक्ष्मीति, प्रजापुति३र्ह्येतदग्रे ज्येष्ठ उद-
ष्टा,—नैन संमिता सुक्का३र्या,—नैन वा अग्रेऽग्ना आहुतिरहूयत, तस्या आहुत्याः पुरुषो
सृज्यत, द्वितीयामजुहोत्, ततोऽश्वोऽसृज्यत, तस्मादश्व उभयादन्न,—नन्तर्हितो हि
रुषादसृज्यत, तस्मादेनं प्रत्यञ्चं तिष्ठन्तं मन्यन्ते, ऽश्वो नू पुरुषा, इति तृतीयामजुहोत्,
तो गौरसृज्यत, चतुर्थीमजुहोत्, ततोऽविरसृज्यत, पञ्चमीमजुहोत्, ततोऽजासृज्यत,
ष्ठीमजुहोत्, ततो यवोऽसृज्यत, सप्तमीमजुहोत्, ततो व्रीहिरसृज्यत,—ते सप्त ग्राम्याः
शवोऽसृज्यन्त, तानेवावरुन्द्धे य एवं९ विद्वानग्निहोत्रं जुहोति ॥१॥ १-६

अष्टमीमजुहोत्, ततो वसन्तोऽसृज्यत, नवमीमजुहोत्, ततो ग्रीष्मोऽसृज्यत, दश-
मीमजुहोत्, ततो वर्षा असृज्यन्तै,—कादशीमजुहोत्, ततः शरदसृज्यत, द्वादशीमजुहोत्,
ततो हेमन्तोऽसृज्यता,—द्यता त्रयोदश्याहुतिरासीद,—थ शिशिरमसृज्यत, तस्मादेतद्दुतूना-
मशान्तं क्रूर,—महुताद्धि समभुव,—दहुतादसृज्यत, तदाहु,—र्ब्रह्मवादिन, ऋतवः पूर्वे
ऽसृज्यन्ता३ पशवा३, इत्युत ऋतव उत पशवा, इति ब्रूया,—दुभये३ह्येते सहासृज्यन्त,
स वा एनमित एव पुनः प्राविश,—देतद्वा अग्निधानं९ हस्तस्य यत् पाणि,—स्तस्मादेतो हस्त-
स्याग्निनैतमा९ विदहति, यद्धन्यमानो हस्तौ प्रतिप्रसारय,—त्यग्नौ वा एतन्न्यञ्चनमिछते,
ऽग्निं९ वै पशवः प्रविशन्त्यग्निः पशून्, प्र ह वा एनं पशवो विशन्ति प्र स पशून् य एवं९
वेदै,—तद्ध स्म वा आह नारदो, यत्र गां९ शयानां निर्जानाति मृतामेनामविद्वान् मन्यते, ऽत्यग्निं९
३ह्येवैते प्रविशन्त्यग्निरेतां९,—स्तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्ति, न ३ह्येत ऋ३तेऽग्नें,
—र्यज्जातः पशूनविन्दत तज्जातवेदसो जातवेदस्त्वं, तामप्सु प्रासिञ्चत्, सापो न्वदहत्,

[ २ ] काठ. ६,२-३ । कपि. ४,१-२ ।

❁

ता अग्नये वज्रोऽभवꣳ,—स्तस्माद्धवीꣳषि प्रोक्षताग्निरभि न प्रोक्ष्यो, यदभिप्रोक्षेद्वज्रेणैनु यज्ञेन यजेत्, ताꣳ वै प्रजापतिरन्वैछत्, तामप्स्वन्वविन्दत्, तामोषधीषु न्यमार्ट्, तस्मादोषधयोऽनभ्यक्ता रेभन्ता, ओषधीभ्यः पशवः, पशुभ्यो मनुष्या, अनभ्यक्तो ह रेभते य एवꣳ वेद, तद्यो वसन्ताशिशिरे कक्षः स उपाधेय, एतद्वै तदग्नेः प्रियं धामै,—षा वाव साहुतिः श्रायत्य,—ग्नेरेवैतया प्रियं धामोपैत्य,—थो पशुमान् भवत्य,—थो आत्मानमेवैतया यजमानः पुनीते, सह वा एता आस्तामग्निश्च सूर्यश्च समाने योना अयसि लोहिते, स आदित्य ऊर्ध्वं उदद्रवत्, तस्य रेतः परापतत्, तदग्निर्योनिनोपागृह्णात्, तदेनꣳ व्यदहत्, तस्मादयोऽग्नौ प्रतिधुक् क्षीरꣳ विदहति, तस्मादेतज्जुहति, पशूनाꣳ वा एतत् पयो यद् व्रीहियवौ, तस्मादेतज्जुहति, नातिशृतं कार्यꣳ, रेतः शोषयेद्, यद्विष्यन्देतोन्मादुको ऽस्य प्रजायामाजायेता, ऽमुष्य वा एतदादित्यस्य रेतो हूयतेऽमेध्यमशृतꣳ, समुद्रन्तꣳ होत३-व्यं, तद्धि शृतं मेध्यं मिथुनं प्रजननिष्णुः ॥२॥ ७

स्थाल्या दुहत्य,—नया वा एतदुपसीदन्ति, नहीमामितो नेतः स्कन्दत्यस्कन्नत्वाया,—र्यकृती भवत्यूर्ध्वकपाला सदेवत्वाय, सा हि सदेवा, ऽसुर्यꣳ वा एतत् पात्रꣳ यत्कुलालकृतं चक्रवृत्तꣳ, यत्र स्कन्देत्तदपो निनये,—दापो वै शान्ति,—रापो निष्कृति,—रापो भेषजा, यत्र वा एता अस्या उपयन्ति तत् प्रशस्ततरा ओषधयो जायन्ते बꣳहीयसी,—र्यदि दुह्यमानावभिन्द्यादन्यया स्थाल्या निर्णिज्य दोह्या, यज्ञो हि यज्ञस्य प्रायश्चित्ति,—र्यद्यधिश्रितꣳ स्कन्देद्यदुद्वास्यमानꣳ यद्युद्वासितꣳ यद्युन्नीयमानꣳ यद्युन्नीतꣳ यदि पुरः पराहृतꣳ होमाय पुनरवनीयान्याभिदुह्या, यज्ञो हि यज्ञस्य प्रायश्चित्ति,—र्वारुणीमृचमनूच्य वारुण्या होत३व्यꣳ, वरुणो वा एतद्यज्ञस्य गृह्णाति यदार्छन्ति, निष्कृतिरेवैषा प्रायश्चित्ति,—रप्रतिषेक्यꣳ स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्या,—ऽथो तुस्तूर्षमाणस्या,—ऽथो यः कामयेत, वीरो मा आजायेते,—त्यप्रतिषिक्तो वै घर्म,—स्तेजो ब्रह्मवर्चसं, तेजस्वी ब्रह्मवर्चसी भवति, स्तृणुते यं तुस्तूर्षता, आ ह्यस्य वीरो जायता, आज्येन होत३व्यꣳ यस्याप्रतिषेक्यꣳ स्या,—देतद्वा अप्रतिषिक्तं, न तु स्कन्नस्य प्रायश्चित्तिरस्त्य,—थो न पशुमानिव भवति, पशूनाꣳ वा एतत् पयः प्रवृज्यते, शुचं पशुषु दधाति, तेजोऽशान्तं पशून्निर्दहति, तस्मात् प्रतिषेक्यमेव स्याद्, यदाद्भिः प्रतिषिञ्चेद्वरो विनयेद्,

---

[ ३ ] काठ. ६,३ । कपि. ४,२ । तै. ब्रा. २,१,३ । मा. श्रौ. १,६,१; १,३,२ ।

ांदोहसंनेजनेन प्रतिषिच्यं, तद्धि नापो न पय,—स्तदाहुः, स्कन्दति वा एतद्, यर्हि वा
तद्दोहनात् पर्याक्रियते तर्हि स्कन्नम,—न्तर्हिता ३ह्यस्या वनस्पतया, इति तदद्भिरेव प्रतिषि-
यꣳ, स्तोकेनैकेन न हरो विनयति, शुचं पशूनाꣳ शमयति, पशवो वै तेजो ब्रह्मवर्चसं,
मिथुनꣳ वा आपश्च पयश्च, मिथुनात् खलु वै प्रजाः पशवः प्रजायन्ते, तन्मिथुनं, तस्मादेव
मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायत, ओदनेन होत३व्यꣳ यस्य प्रतिषे३क्यꣳ स्या-
,—ष हि प्रतिषिक्तः शान्तो मेध्यो मिथुनः प्रजनिष्णुः ॥३॥ ८

प्रजापतिः प्रजा असृजत, ता वै तपसैवासृजत, स वै स वाचमेवायछत, तपो वा एष
उपैति यो वाचꣳ यछति, सृष्टिः प्रजानामग्निहोत्रं,—मुभयत एव प्रजा असृजत इतश्चामुतश्च,
नेमुक्ते सूर्ये वाग्यन्तव्याथो दुह्यमानायामथो अधिश्रित, उन्नीयमान एव यन्त३व्या,—स्तदेव
क्लृप्ततमम् ॥ उद्धृत्रः स्थ ॥ इत्यत्रेक्षेत ॥ उदहं प्रजया पशुभिर्भूयासम् ॥ इति प्रजायाः पशूनाꣳ
सृष्ट्या, अथो अ३भ्येवैनद्धारयति मेध्यत्वाया, ऽग्निहोत्रे वै दंपती व्यभिचरेते, पूर्वो यजमा-
नस्य लोकोऽपुरः पत्न्या, यत् प्राचीनमुद्वासयेद्यजमानः प्रमीयेत, यत् प्रतीचीनं पत्नी,
कं घर्ममभ्युदवीवसा, इति ब्रह्मवादिनो वदन्त्यु,—दीचीनमेवोद्वास्य,—मग्रहणौ संजीर्यतः, स-
र्वमायुरितो, नार्तिं नीत,—श्चतुरुन्नयति, चतुष्पदस्तेन पशूनवरुन्द्धे, द्विर्जुहोति, द्विपदस्तेन,
यं कामयेता, ऽनुज्येष्ठं प्रजया ऋध्नुयादिति, तस्य पूर्णमग्रा उन्नयेदथ कनीयोऽथ कनीयो,
ऽनुज्येष्ठं प्रजया ऋध्नोति, तदाहुः, कनीयाꣳसꣳ वा एष यज्ञक्रतुमुपैति कनीयसीं प्रजां कनी-
यसः पशून् कनीयोऽन्नाद्यं, पापीयान् भवति, संमितमिवाग्रा उन्नयेदथ भूयोऽथ भूयः, पूर्णि-
मुत्तमꣳ, यज्ञस्याभिक्रान्त्यै, तदाहु,—र्ज्यायाꣳसꣳ वा एष यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः
पशून् भूयोऽन्नाद्यꣳ, वसीयान् भवत्य,—र्धकोऽस्य पुत्रः कनिष्ठो भवतीति, यदि काम-
येत, सर्वे सदृशाः स्युरिति, सर्वान् त्समावदुन्नयेत्, सर्वे ह सदृशा भवन्ति, न पश्चादु-
पसादये,—दपक्रान्तिः सा यज्ञस्य, यत्रैवोन्नयेत् तत्सादयेत्, प्रतरꣳ वा यज्ञस्याभिक्रान्त्या,
अनुध्यायिनꣳ वा एतदपरं करोति यदपरस्मिꣳस्तपन्ति पूर्वास्मिन् जुह्वति, समयाग्निꣳ हरन्ति,
तेनैवैनं प्रीणात्य,—थो अग्निहोत्रस्य वा एतत् पवित्र,—मपुपोदेवैन,—दपरस्माद्वै पूर्वꣳ सृष्टं,
तमेतावत्यरमयꣳ,—स्तस्मात् पुरोऽनुद्रुत्य जुहोति ॥ आयुर्मे यछ ॥ इति सादयत्या,—युरेवा-
स्मिन् यछति ॥ वर्चो मे यछ ॥ इति सादयति, वर्च एवास्मिन् यछत्यो,—पृथीवी इमा रुद्रा

[ ४ ] काठ. ६,४--५ । कपि. ४,३--४ । तै. ब्रा. २,१,३--४ । मा. श्रौ. १,६,१ ।

विषेणाञ्जं,—स्ताः पशवो नालिशन्त, ते देवाः प्रजापतिमेवोपाधावन्, तस्मै प्रजापतिरब्रवीद्, वार्यं वृणै, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुवन्, तस्मोऽब्रवी,—न्मदेव३त्यैव समिद्-सदिति, तस्मात् प्राजापत्या समिद्, देवेषु ह्यस्यैषा वार्यवृता, द्वे समिधौ का३र्ये, द्वे ह्याहुती, एकैव कार्यै,—को हि प्रजापतिरे,—कधा खलु वै समिद्ध, उत बह्वीराहुतयो हूयन्ते, ता अग्निनान्वव्याकरोत्, ता अस्वदयत्, ताः पुनर्णवा अजायन्तै,—तर्हि खलु वा अग्निहोत्रिणे दर्शपूर्णमासिने सर्वा ओषधयः स्वदन्ते, यत्समिधमादधाति सर्वा एवास्मा ओषधीः स्वधयामकः ॥४॥

९-१७

भूर्भुवः स्वः॥ इति पुरस्ताद्धोतोर्वदेदे,—तद्वै ब्रह्मे,—तत्सत्यमे,—तदृतं, न वा एतस्मादृते यज्ञोऽस्ति, तस्मादेवं वदितव्यम्॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा॥ इति गर्भिण्या वाचा गर्भं दधाति, मिथुनया वाचा मिथुनं प्रजनयति, यद्वाचा च जुहोति यजुषा च तन्मिथुनं, यत्तूष्णीं च जुहोति मनसा च तन्मिथुनं, स्थाणुर्वै पूर्वाहुतिर,—तिहाय पूर्वामाहुतिमुत्तरा होतव्या, स्थाणुमेव छम्बट्कुरोत्यु,—त्तराहुतिर्भूयो होतव्या यज्ञस्याभिक्रान्त्यै, पशूनेव पूर्वयाहुत्या स्पृणोति ब्रह्मवर्चसमुत्तरया, ऽऽग्नेयी सायमाहुति,—स्तया रेतः सिञ्चति, तद्रेतः सिक्तं रात्र्यै गर्भं दधाति, तत्सौर्या प्रातः प्रजनयामकरि,—यं होतव्याथ परांथ पुनरवस्तात् प्रातरवस्ताद्धि प्रजानां प्रजातिः, प्रजननं हि सौरी, तन्न सूक्ष्यं, परापरैव होतव्या यज्ञस्याभिक्रान्त्या, उदङ्ङुद्दिशति॥ अनाभो मृड, धूर्ते नमस्ते अस्तु, रुद्र मृड॥ इत्येता वै रुद्रस्य तन्वः क्रूरा एतानि नामान्ये,—ताभिर्वा एष पशूञ्शमायते, ता एवास्य भागधेयेन शमयत्य,—वाचीनं सायमवमार्ष्टि, तस्मात्सायमवाची प्रुष्वै,—त्यूर्ध्वं दिवोन्मार्ष्टि, तस्मादूर्ध्वा दिवैति, पराचीनमिव वा एतद्यदग्निहोत्रं, यत्पुरस्ताद्यजुर्वदति धृत्या अनिर्मार्गाय, यो वा अग्निहोत्रस्य वैश्वदेवं वेदाघातुक एनं पशुपतिर्भवत्यघातुकोऽस्य पशुपतिः पशून्, प्राङासीनो जुहोति, देवांस्तेन प्रीणाति, हुत्वोञ्शिंषति, पशूनेव यजमानायोञ्शिंषत्यु,—दङ्ङुद्दिशति, रुद्रं तेन निरवदयते, दक्षिणतो निमार्ष्ट्यो,—षधीश्च तेन पितॄंश्च प्रीणाति, प्राश्नाति, मनु३ष्यांस्तेन प्रीणात्य,—ङ्गुल्या प्राश्नाति, यदुत्वाय न दतो गमयेद्, यद्दतो गमयेत् सर्पा एनं घातुकाः स्युः, सर्पानेव शमयत्यहिंसायै॥ पूषासि॥ इति यजुर्वदेत्, पशवो वै पूषा, पशूनेवावरुन्द्धे, ऽशान्तो वा एषोऽप्रीतः, पुरुषमेधं वा एष प्रतीक्षते यजमानमेव हव्यं, यद्-

[ ५ ] काठ. ६,५। कपि. ४,४,६। वा. ३,९। काण्व. ३,९। तै. ब्रा. २,१,४। मा. श्रौ. १,६,१।

ग्निहोत्रहवणीं निष्टपत्यशान्तस्तेनाग्निहोत्रहवणीं प्रतप्य हस्तोऽवधेयो, हस्तो वा प्रतप्याग्निहो-
त्रहवण्यामवधेय,—स्तेनैवैन१९ शमयति, तेन प्रीणाति, शान्त एनं प्रीतो न हिनस्ती,—त्थं
पर्यावर्तत, एव१९ हि यज्ञः पर्यावर्तते, ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तते,
होत३व्यं गार्हपत्या३न्न होत३व्यामि,—ति मीमा१९सन्ते, ऽनुध्यायी वा एष रूक्षो, होत-
व्यमेव ।। अग्ने गृहपते परिषद्य जुषस्व स्वाहा ।। इति जुहुयात्, तेनैवैन१९ शमयति, तेन प्रीणा-
त्य,—थो तेनैवैनमननुध्यायिनमरुक्षं करोत्य,—थ यत्पूर्वामाहुति१९ हुत्वोत्तरा१९ होष्यन्प्रतीक्षते ते-
नैवैन१९ शमयति, तेन प्रीणात्य,—थो तेनैवैनमननुध्यायिनमरूक्षं करोत्य,—थ यत्पूर्वामाहुति१९
हुत्वोत्तरा१९ होष्यन् प्रतीक्षते तेनैवैन१९ शमयति, तेन प्रीणात्य,—थो तेनैवैनमननुध्यायिनमरूक्षं
करोत्य,—थ यदेवास्य गृहे उपह्रियते यदेनमग्निमभिता आसीना याचन्ति तेनैवैन१९ शमयति,
तेन प्रीणात्य,—थो तेनैवैनमननुध्यायिनमरूक्षं करोति ।।५।। १८-२७

द्वे दुहन्त्यग्निहोत्राय, ज्यायान्वा एकस्या दुग्धादग्निहोत्रिणो लोको, यद् द्वे दुहन्ति ज्याया१९स१९
वा एतं लोक१९ यजमानोऽभिजयति, मनुश्च वा इदं मनायी च मिथुनेन प्राजनयता१९, यत्स्था-
ल्यां च दोहनेन च दुहन्ति मिथुनादेव प्रजायते ।। सजूर्जातवेदो दिवा पृथिव्या जुषाणो अस्य ह-
विषो वीहि स्वाहा ।। इति जुहुयादे,—षा वा अस्य जातवेदस्या तनूः क्रूरै,—तया वा एष पशून्
शमायते, तामेवास्य भागधेयेन शमयति, यदि तदति शमायेत ।। अग्ने दुःशीर्तितनो जुषस्व
स्वाहा ।। इति जुहुया,—देषा वा अस्य शृणती तनूः क्रूरै,—तया वा एष पशून् शमायते, तामे-
वास्य भागधेयेन शमयति, यदि तदति शमायेत।। द्वादश रात्रीः साय१९ सायं जुहुयाद्, द्वादश
वै रात्रयः स१९वत्सरस्य प्रतिमा, स१९वत्सरो वा अग्निर्वैश्वानरं,—स्तमाहिताग्नयो दर्शपूर्णमासिन
इन्धते, तेषा१९वा ऋतव एव दारूणि, ये स्थविष्ठा अङ्गारास्ते मासा, ये क्षोदिष्ठास्तेऽर्धमासा,
अहोरात्राणि मुर्मुरा, यत्सधूमं ज्योतिस्तद्वैश्वदेव१९, यल्लोहितं तद्वारुण१९, यत्सुवर्णं तद्बार्हस्प-
त्य१९, यन्न लोहितं न सुवर्णं तन्मैत्र१९ यदङ्गारेषु व्यवशान्तेषु लेलाय वीव भाति तद्देवानामा३
त्यम,—थो अमुष्य च वा एतदादित्यस्य तेजो मन्यन्तेऽग्नेश्च, तस्मात्तर्हि होत३व्य१९, य३
दुद्येवासन्नुपिदधाति तद्विनोत्या,—विर्वै नामैषाहुति,—राविर्भूयं देवमनुष्येषु गच्छति य एव१९ वेद,
न समिदभिहोतवा, अप्रतिष्ठिता साहुति,—र्नो यथा ग्रीवावसन्नवेद,—युता सा, तत्तथैव होत-
३व्य१९ यथाग्नि१९ व्युवेयात्, सा हि यता, सा प्रतिष्ठिता, तस्मान्महानग्निहोत्रस्येध्मः का३र्यो,

[ ६ ] काठ. ६,७ । कपि. ४,६ ।

यो वै बहु दुदिवान्बह्वीजा३नोऽग्निमुत्सादयुते ऽक्षित्तद्वै तस्य, तदीजाना वै सुकृतोऽमुं लोकं नक्षन्ति, ते वा एते यन्नक्षत्राणि, यदाहु,—र्ज्योतिरवापादि तारकावापादीति, ते वा एते ऽवपद्यन्त, आप्त्वा स्थिते त इदंᳫ यथालोकंᳫ सचन्ते यदामुतः प्रच्यवन्ते, ऽथ यो बहु दुदिवान् बह्वीजानोऽग्निहोत्रं जुहोति दर्शपूर्णमासौ यजते चातुर्मास्यैर्यजते बहूनि सत्राण्युपैति तस्य वा एतद-क्षय्यमपरिमितं, तिरो वा ईजानाद्यज्ञो भवति, तदाभ्यामेवाग्निभ्यां दग्ध३व्यः, स्वंᳫ वा एत-दिष्टमन्वारोह,—त्यपरेण दुग्ध३व्या३ः पूर्वेणा३, इति मीमाᳫसन्त, उभौ सुमाहृत्या,—न्तराद-ग्ध३व्य,—स्तदवकुसतमं गृह्णीयान्नक्तमग्निं,—मुसु३र्या वै रात्रि,—र्ज्योतिषैव तमस्तरति, दिवा ह वा अस्मा अस्मिँल्लोके भवति, प्रास्मा असौ लोको भाति य एवंᳫ वेद ॥ भूर्भुवः स्वः ॥ इति पुर-स्ताद्धोतोर्वदे,—देभ्यो वा एतल्लोकेभ्या इष्टका उपदधाति स्वर्गस्य लोकस्य समष्ट्यै, यत्सायं जुहोति सहस्रं तेन कामदुघा अवरुन्द्धे, यत्प्रातः सहस्रं तेन, यदस्याग्निराधीयते सहस्रं तेन, यमराज्यंᳫ वा अग्निष्टोमेनाभिजयति, सोमराज्यमुकथ्येन, सूर्यराज्यंᳫ षोडशिना, स्वारा-ज्यमतिरात्रेणै,—तानि वै सर्वाणीन्द्रोऽभव,—देतानि सर्वाणि भवति य एतैर्यजते, सर्वमे-तद्भवति य एवंᳫ वेद, हविष्मान् वा एको, देवयाज्येकः, सहस्रयाज्येको, योऽग्निहोत्रं जुहोति स हविष्मान्, यो दर्शपूर्णमासौ यजते स देवयाजी, यश्चातुर्मास्यैर्यजते स सहस्रयाज्यु-ग्निहोत्रे वै सर्वे यज्ञक्रतवः सर्वान् यज्ञक्रतूनवरुन्द्धे य एवंᳫ विद्वानग्निहोत्रं जुहोति ॥६॥

२८-३५

प्रैयमेधा वै सर्वे सह ब्रह्मविदु,—स्तेऽग्निहोत्रेण समराधयंᳫ,—स्तेषां त्रिरेकोऽजुहोद् द्विरेकः सकृदेकंᳫ,—स्तेषाᳫ यस्त्रिरजुहोत्तमपृच्छन्, कस्मै त्वमहौषीरिति, सोऽब्रवीत्, त्रेधा वा इदं,—म-ग्नये प्रजापतये सूर्याये,—त्यथ यो द्विरजुहोत्तमपृच्छन्, कस्मै त्वमहौषीरिति, सो ऽब्रवीद्, द्वे-धा वा इदं,—मग्नये च प्रजापतये च सायंᳫ, सूर्याय च प्रजापतये च प्रातरि,—त्यथ यः सकृ-दजुहोत्तमपृच्छन्, कस्मै त्वमहौषीरिति, सोऽब्रवी,—देकधा वा इदं, प्रजापतय एवेति, ते-षाᳫ यो द्विरजुहोत् स आर्ध्नोत्, तस्येतरे साजात्यमुपायन्, ऋध्नोति य एवंᳫ विद्वानग्निहोत्रं जुहो,—त्युपास्य समानाः साजात्यंᳫ यन्ति, प्रदोषमग्निहोत्रंᳫ होत३व्यंᳫ, व्युष्टायां प्रातर्वृद्धान् गर्भान् प्रजनयति, तदाहुः, परा वा एतस्याग्निहोत्रं पतति यस्य प्रदोषं न जुह्वतीति, यदि मन्येत, ऋतुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वदेत्, तेनैव सर्वं नान्तरेति ॥ दोषा वस्तो-

[ ७ ] काठ. ६,६,८ । कपि. ४,५,७ ।

मः स्वाहा ॥ इति जुहुयाद्, ऋतुमेव नात्येनै,—द्धोतव्या३न्न होतव्या३मिं,—ति मीमांसन्ते, स्याहुतमग्निहोत्रं सूर्योऽभ्युदियाद्धोतव्यमेवा,—ऽग्नये वा एतद्धुत्यै गुप्त्यै हूयते, प्रजननं तु छम्ब-ट्करोति, यदि मन्येत, ऋतुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वदेत्, तेनैव वं नान्तरेति॥ प्रातर्वस्तोर्नमः स्वाहा॥ इति जुहुयाद्, ऋतुमेव नात्युनैत्, तद्यथा कारुद्वेषिणो जुह्वत्येवमस्य हुतं भवति, यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेद्यो ब्राह्मणो बहुवित्स उद्धरेत्, स-र्णेनैनं ब्रह्मणोद्धरत्य,—ग्निहोत्रेणानुद्रवेद्, भागधेयेनैवैनं प्रणयत्य,—थो भागधेयेनैवैनं समर्धयति, रो दक्षिणा, सर्वत एवैनं दिग्भ्यो वरेण च्यावयति, यस्योभा अनुगता अभिनिम्रोचेद्यस्य वा-भ्युदियात् पुनराधेयमेव तस्य प्रायश्चित्ति,—र्यथा वै पथो वर्तनी एवं दर्शपूर्णमासौ, यथान्तरेवमग्नि-ोत्रमेवं वा अग्निहोत्रिणे दर्शपूर्णमासिने स्वर्गो लोकोऽनुभात्यु,—पान्यानि हवींषि वसन्त्य,—थ स्मादग्निहोत्रं नोपवसन्तीति, ब्रह्मवादिनो वदन्ति, प्रततं वा एतदपरिमितमसंस्थितम,—प्नोति मांसं,—मुपस्त्रियमेति, तस्मान्नोपवसन्ति, पशुव्रतेन भवितव्यं, तूष्णीमिव पशवः भवन्ति, ते मेध्या, यत्तूष्णीं स्त्रियमुपैति मेध्यतरस्तेन भवति, हिंकृत्योपेयाद्,—वमिव हि पशव उपयन्ति मेध्यत्वाय, संस्थाप्या३न्न संस्थाप्या३मिं,—ति मीमांसन्ते, ऽग्निहो-त्रं यत्संस्थापयेत्तृणमक्त्वानुप्रहरेत्, सा ह्यग्निहोत्रस्य संस्थितिस्त,—दाहु,—र्यदा वै जीर्यते दा प्रमीयते यदार्तिमार्छत्यथाग्निहोत्रं संतिष्ठता इति, तन्न संस्थाप्य, मनुसा वा इमां प्र-जापतिः पर्यगृह्णादि,—यं वा अग्निहोत्रस्य वेदि,—र्यमुपयाम, ओषधयो बर्हिः, प्रुष्वा ोक्षुणी,—दिशः परिधयो, यत् किंचाभ्याधीयते स इध्मो, यजमानो यूप, उन्नीयमाने स्थे-मे,—वमिव हि यूपः समृद्ध्यै, मध्यतो वा एष यज्ञः प्रततो यदग्निहोत्रं, तस्मादग्निहोत्री दर्शपूर्णमासी सर्वं बर्हिष्यं ददाति, मध्यतो३ह्येतद्यज्ञस्य दीयते यदग्निहोत्रं, होतव्यं राजन्य-स्याग्निहोत्रा३न्न होतव्या३मिं,—ति मीमांसन्त, आमादिव वा एष यद्राजन्यो, बहु वा षोऽयज्ञियममेध्यं चरत्य,—त्युनन्नं जिनाति ब्राह्मणं, तस्माद्राजन्यस्याग्निहोत्रमहोतव्यं,—तं वै सत्यमग्निहोत्रं, ब्राह्मणं ऋतं सत्यं, तस्माद्ब्राह्मणस्यैव होत३व्यम,—थो ब्राह्मणा-वास्याग्रतो गृह आहरेयुस्त,—द्धुतमेवास्याग्निहोत्रं भवत्य,—थो य ऋतमिव सत्यमिव चरेत् स्य होतव्यमनुसंतत्यै ॥७॥ २६–४४

याग्निहोत्रायोपसृष्टा निषीदेद्यस्यान्नं नाद्यात् तस्मै तां दद्याद्,—वर्तिं वा एषा यजमानस्या-

[ ८ ] तै. २,२,४,६–८; ४,२,५,१ । वा १३,३४–३५; ३५,१९ ( च. पा. ); ५,३; १२,६० । काण्व. १४,३६–३७; ३५, ५२ ( च. पा. ); ५,३; १३,६१ । मा. श्रौ. ३,३।

नुत्सद्य निषीदति, तयैवैना॑ꣳ सह निरवदयते, गृहे तु तस्य ततः परो नाश्नीयाद्, यदश्नी-
यादार्तिमार्छेद्, यस्याहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निना च सहाग्निहोत्रेण चोद् द्रवेद्, भागधे-
येनैवैनं प्रणयत्य,—थो भागधेयेनैवैनꣳ समर्धयत्य,—थाभिमन्त्रयेत ॥ ४५

इत एव प्रथमं जज्ञे अग्निरेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥ ४६

इत्येते वा एतस्य योनयः, स्वेभ्य एवैनꣳ योनिभ्योऽधि प्रजनयति ॥ इषे राये रमस्व सहसे
द्युम्नायोर्जेऽपत्याय ॥ इत्येतान्येवावरुन्द्धे, ऽथो रमयत्येवैनम् ॥ सम्राडसि स्वराडसि,
सुषदा सीद ॥ इति सुषदैवैनꣳ सादयति ॥ सारस्वतौ त्वोत्सौ प्रावताम् ॥ इत्यृक्सामे वै सारस्वता
उत्सौ, ताभ्यामेवैनं प्रावति, ताभ्याꣳ समर्धयत्य,—ग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्वारुणꣳ
यवमयं चरुꣳ यस्याहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेत्, तमो वा एतस्य यज्ञꣳ युवते यस्याहुतेऽग्नि-
होत्रे पूर्वोऽग्निरनुगच्छति, यदग्नये ज्योतिष्मते ज्योतिषैवास्य यज्ञꣳ समर्धयति, वारुणी रात्रि,—
र्यद्वारुणो वरुणादेवास्याधि यज्ञꣳ स्पृणोति, यस्याहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेत् तत एव
प्राञ्चमुद् धृत्यान्ववसायाग्निहोत्रं जुहुयाद,—थाभिमन्त्रयेत ॥ भवतं नः समनसौ समोकसौ सचे-
तसा अरेपसा, इति समनसा एवैनौ करोति यजमानस्याहिꣳसाया, एतौ वै तौ या आहुर्ब्र-
ह्मवादिनो, नैकः कुञ्जिद्वौ व्याघ्रौ विन्याचै,—त्यग्नयेऽग्निमतेऽष्टाकपालं निर्वपेद्यस्याग्ना अग्नि-
मभ्युद्धरेयु,—र्देवताभ्यो वा एष समदं करोति यस्याग्ना अग्निमभ्युद्धरन्ति, यदग्नयेऽग्निमते देवता
एवास्मै भूयसीर्जनयति, वसीयान् भवति ॥८॥ ४७-५४

अन्वग्निरुषसामग्रमक्शदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥ ५५

इत्यभिमन्त्रयेत यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियाद,—नुक्शायैवैनत् पुनरवरुन्द्धे, तदा-
हुर,—मुꣳ वा एष लोकꣳ समारोहयति सह प्रजया पशुभिश्च यजमानस्य, तस्मादुत बहुरा-
हिताग्निरपशुर्भवतीति, तदुपस्थेयः ॥ इहैव क्षेम्य एधि, मा प्रहासीर्मामुमामुष्यायणम् ॥
इत्यस्मिन् वावैनमेतं लोके दाधार, सह प्रजया पशुभिश्च यजमानो वसीयान् भवति, मैत्रे

[ देवेभ्यो...प्रजानन्- ऋ. १०,१६,९; अथर्व. १२,२.८]

[ ९ ] मा. श्रौ. ३,३-४ । वा. ११,१७; ८,६१; ५,१५ [ अन्वग्नि ( प्रत्यग्नि ) रुषसा...आ ( विवेश; ततान )
ततन्थ- अथर्व० ७,८२,४-५; १८,१,२७ । प्रत्यग्निरुषसा०- ( प्र. पा. ) ऋ. ४,१३,१ ।

रुं निर्वपेत्सौर्यमेककपालꣳ यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियान्मित्रो वा एतस्य यज्ञꣳ
वते यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदेति, मित्रमह,—यन्मैत्रो मित्रादेवास्याधि यज्ञꣳ स्पृ-
ोत्यथ,—थ यत् सौ३र्योऽमुनैवास्यादित्येन पुरस्ताद्यज्ञꣳ समर्धयति, यस्याहुतमग्निहोत्रꣳ
ूर्योऽभ्युदियादग्निꣳ समाधाय वाचꣳ यत्वा दंपती सर्वाहमुपासीयातां, द्वयोर्गावोः सायमग्नि-
त्रं जुहुयाद्,—भयमेवास्मै भागधेयं प्रयच्छति सायन्तनं च प्रातस्तनं च, यद्वै पुरुषस्यामयत्य-
ाती३ नाश्नाती३, इति वै तमाहु,—र्नाश्नातीति, चेदाहुस्तद्वाव सोऽमृतेति, यन्नाश्नीतो
व्याहरतोऽन्वेवैनमम्नातां, तपसैनं पुनरवरुन्धाते, अग्नये व्रतपतयेऽष्टाकपालं निर्वपेद्,—
ग्निर्वै देवानाꣳ व्रतपति,—स्तमेव भागधेयेनोपासरत्, स एनꣳ व्रतमालम्भयति यस्याग्नि-
पक्षायेद्, यत्रैवैनमनुपरागच्छेत् तत् समाधायान्ववसायाग्निहोत्रं जुहुयादे,—ति वा एतदग्निर्यद-
क्षायति, यत्रैवैनमनुपरागच्छति तत एनं पुनरवरुन्द्धे, ऽग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्या-
ग्निरुपक्षायेद्, बहिष्पथꣳ वा एष एति यस्याग्निरुपक्षायत्य,—ग्निर्वै देवानां पथिकृत्, तमेव भाग-
धेयेनोपासरत्, स एनं पन्थामपिनयत्य,—नड्वान् दक्षिणा, स हि पन्थामपिवहत्य,—ग्नये शुचये
ष्टाकपालं निर्वपेद्यस्याभ्यादाव्येन सꣳसृज्येता,—ऽशुचितर इव वा एष यदभ्यादा३व्यो, यदग्नये
ुचये शुचिमेवैनं मेध्यं करोत्य,—ग्नये क्षामवतेऽष्टाकपालं निर्वपेद्यस्याहिताग्नेः स३तोऽग्निर्गृहान्
हेद्,—ग्निर्वा एतस्य क्षामो गृहानभ्युच्यति, स दहत्येवापुरꣳ, यदग्नये क्षामवते यैवास्य क्षामा
प्रिया तनूस्तामेवास्य भागधेयेन शमयत्य,—दाहुकोऽस्यापरमग्निर्गृहान् भवति, यस्याग्निरनुग-
छेत् तेभ्य एवावक्षाणेभ्योऽधि मन्थित३व्य,—स्तदेनꣳ स्वाद्योनेः प्रजनयति, यदि न तादृशानि
ावक्षाणानि स्युर्भस्मनारणी सꣳस्पृश्य मन्थित३व्यः, स्वादेवैनꣳ योनेः प्रजनयत्य,—ग्नये
पस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेद्यस्याग्निरनुगच्छे,—न्न हि वा एतस्मा अपिधीयतेऽथैषोऽ
ुगछ,—त्यौषधयो वै पावका, ओषधीरेवास्मै पावका भागधेयमपिदधाति प्रजननाय॥५६–५८

त्रयस्त्रिꣳशत् तन्तवो यꣳ वितन्वत इमं च यज्ञꣳ सुधया ददन्ते ।
तेभिश्छिद्रमपिदध्मो यदत्र स्वाहा यज्ञो अप्येतु देवान् ॥ ५९

इति जुहुयाद्यद्यनो वा रथो वान्तरा वियायादे,—तावन्तो वै यज्ञस्य तन्तवो, देवता वा एता,—
स्तान्वा एतत्समवृक्षत्, ताः संदधात्ये,—तद्ध स्म वा आहु,—र्दाक्षायणास्तन्तून् त्समवृक्षद्,
ामन्वत्यावर्तयेति, गौर्हि यज्ञिया मेध्ये,—दꣳ विष्णुर्विचक्रमा, इति पदꣳ गोपयति,

[ इदं विष्णुर्वि० — ऋ. १,२२,१७; अथर्व. ७,२६,४; सा. २२२; १६६९ ]

*

विष्णोः स्विदेवं यज्ञस्य विक्रान्तमकर३पोऽन्वातिष्ठति शान्त्यै ॥९॥ ६०

रौद्रं गवि सद्, वायव्यमुपावसृष्टमा,—ऽश्विनं दुह्यमानꣳ, सौम्यं दुग्धꣳ, वारुणमधिश्रितं, मैत्रꣳ शरोगृहीतं, मारुतं बिन्दुमत्, पौष्णमुदन्तꣳ, सारस्वतꣳ विष्यणꣳ, वैष्णवं प्रतिनीयमानꣳ, स्व३र्ग्यमुद्वासितं, त्वष्टुरुन्नीयमानं, धातुरुन्नीतꣳ, वैश्वकर्मणमुद्यतꣳ, सावित्रं प्रणीयमानं, द्यावापृथिवीयं प्रह्रियमाणमै,—न्द्राग्नमुपसन्नं, प्राजापत्यꣳ समिधि, वैश्वदेवꣳ हुतम् ॥१०॥ ६१[५८६]

॥ इति प्रथमकाण्डे अग्निहोत्र-ब्राह्मणं नाम अष्टमः प्रपाठकः ॥८॥

अथ नवमः प्रपाठकः ।

## चतुर्होतारः ।

चित्तिः स्रुक्, चित्तमाज्यꣳ, वाग्वेदिरा,—धीतं बर्हिः, केतो अग्नि,—र्विज्ञातमग्नीद्, वाचस्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युरि,—न्द्रं गच्छ स्वाहा, पृथिवी होता, द्यौरध्वर्युस्त्वं,—ष्टाग्नी,—र्मित्र उपवक्ता, वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे, यज्ञपतये वार्यमा स्वस्क,—र्वाचस्पतिः सोममपा,—ज्जजनदिन्द्रमिन्द्रियाय, सोमः सोमस्य पिबतु, शुक्रः शुक्रस्य पिबतु, श्रातास्त इन्द्र सोमा वातापयो हवनश्रुतो, ऽग्निर्होता,—ऽश्विनाध्वर्यू, रुद्रो अग्नीद्, बृहस्पतिरुपवक्ता, वाचस्पते हिन्विधे नामन् विधेम ते नाम, विधेस्त्वमस्माकं नाम, वाचस्पतिः सोममपादा,—ऽस्मासु नृम्णं धात्, सोमः सोमस्य पिबतु, शुक्रः शुक्रस्य पिबतु, श्रातास्त इन्द्र सोमा वातापयो हवनश्रुतो, महाहविर्होता, सत्यहविरध्वर्युर,—च्चित्तपाजा अग्नीद,—च्चित्तमना उपवक्ता,—ऽनाधृष्यश्चाप्रतिधृष्यश्चाभिगरा, अयास्य उद्गाता, विधे नामन् विधेम ते नाम, विधेस्त्वमस्माकं नाम, मा देवानां तन्तुश्छेदि मा मनुष्याणां, नमो मात्रे पृथिव्यै ॥१॥ १

अग्निर्यजुर्भिः, सविता स्तोमै,—रिन्द्र उक्थामदै,—र्बृहस्पतिश्छन्दोभिर,—दितिरपश्च बर्हिश्चा,—ऽऽदित्या आज्यै,—र्मरुतः सदोहविर्धानै,—र्विष्णुर्दीक्षातपोभ्यां, मित्रावरुणौ धिष्ण्यैर,—श्विना आशिरा, त्वष्टा समिधा, पूषा स्वाहाकारै,—र्वाग्वायोः पत्नी, पथ्या पूष्णः,

[ १ ] मै. १,९,३-६ । काठ. ९,८ । कपि. ८,११ ।
[ २ ] मै. १,९,८ । काठ. ९,१० ।

ृथि३व्यग्नेः, सैनेन्द्रस्य, धेना बृहस्पते,—र्गायत्री वसूनां, त्रिष्टुब् रुद्राणां, जग-
यादित्यानाम,—नुष्टुब् मित्रस्य, विराड्वरुणस्य, पङ्क्तिर्विष्णो,—र्दीक्षा सोमस्य ॥२॥ २

प्रजापतिर्वा एक आसीत्, सोऽकामयत, यज्ञो भूत्वा प्रजाः सृजेयेति, स दशहोतारꣳ
यज्ञमात्मानꣳ व्यधत्त, स चित्तिꣳ स्रुचमकुरुत, चित्तमाज्यꣳ, वाचꣳ वेदिमा,—ऽधी-
तं बर्हिः, स दशधात्मानꣳ विधाय मिथुनं कृत्वायतनमैछत्, स वै त्रिवृत एव प्राणानाय-
तनमचायत्, तैः प्रजा असृजतो,—र्ध्वं उदतृणत् पूर्वपक्षः पञ्चदश,—स्तैनु देवानसृजत,
ते देवा ऊर्ध्वा आप्यायन्तो,—र्ध्वं आप्यायते य एवꣳ वेदा,—ऽवाङ्वातृणदपरपक्षः पञ्चदश,—
स्तैनासुरानसृजत, तेऽसुरा अवाञ्चः प्राध्वꣳसन्त, प्रास्य भ्रातृव्यो ध्वꣳसते य एवꣳ वेद,
दिवा देवानसृजत नक्तमसुराꣳ,—स्ते देवाः शुक्ला अभवन् कृष्णा असुराः, सत्येनु देवानसृ-
जतानृतेनासुराꣳ,—स्ते देवाः सत्यमभुवन्ननृतमसुरा, दक्षिणेन हस्तेन देवानसृजत सव्येनासुराꣳ,
स्ते देवा वीर्यवन्तोऽभवन्मृद्धा असुरा,—स्ततो देवा अभवन् परासुरा,—स्तद्य एवꣳ वेद भवत्या-
त्मना, परास्य भ्रातृव्योऽभवति, सोऽमन्यत, क्व होष्यामीति, स तदेव नाविन्दत् प्रजा-
पतिर्यत्राहोष्य,—न्नो अस्यान्यद्धोत्वमासीत् प्राणात्, स वा इन्द्रमेवान्तरात्मनायतनमचायत्,
सं, इन्द्रं गछ स्वाहे,—त्यपानद्वी३र्यꣳ वै प्राणो, वी३र्यमिन्द्रो, वीर्य एव वीर्यमजुहोत ॥३॥
३

ते वै चतुर्होतारो न्यसीदन् त्सोमगृहपतया, इन्द्रं जनयिष्यामा इति पृथिवी होतासीद,
द्यौर्ध्वर्युस्त्वष्टाग्नी,—न्मित्र उपवक्ता ते वा एतौ ग्रहा अगृह्णत, वाचस्पते वाचो वीर्येण संभृ-
ततमेनायक्षसे, यज्ञपतये वार्यमा स्वस्कर्रिति, त एकविꣳशमायतनमचायꣳ, स्तैनेन्द्रमज-
नयꣳ,—स्त इन्द्रं जनयित्वाब्रुवन्, त्स्वरयामेति, ते वै पञ्चहोतारो न्यसीदन् वरुणगृहपतयो,
ऽग्निर्होतासीद,—श्विनाध्वर्यू, रुद्रो अग्नीद्, बृहस्पतिरुपवक्ता, यदश्विनेति, तेन पञ्चहो-
ता, ते वा एतौ ग्रहा अगृह्णत, वाचस्पते हिन्विधे नामन् विधेमु ते नाम, विधेस्त्वमस्माकं

---

[ ३ ] मै. १,९,१ । काठ. ९,११ । तै. ब्रा. २,२,३ ।

[ ४ ] मै. १,९,१ । काठ. ९,११–१२ । कपि. ८,१२ । वा. १,१०,२१,२४; २,११; ५,२२,२६; ६,१,९,३०; ९,३०, ३८; ११,९,२८; १८,३७; २०,३; ३७,१; ३८,१; ७,४७–४८। काण्व. १,१३, ३६,४०; २,२२; ५,२८,३३; ६, १,१०,४३; १०,३९; ११,४; १२,९,२८; २०,७; २१,९३; ३७,१,३८,१; ९,१२–१४ । मा. श्रौ. ११,१,५,२, १४ ।

नामेति, तं त्रिणवमायतनमचाय९,—स्तं९ सेतुं कृत्वा स्वराय९,—स्तेनु पशूनसृजन्त, तान्दे-
वताभ्योऽनयन् यमायाश्वमनय९,—स्तस्याधमिन्द्रियस्यापाक्रामत्, स एतं प्रतिग्रहमपश्यत् ॥ देव-
स्य त्वा सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि, यमाय त्वा मह्य९ वरुणो
ददाति, सोऽमृतत्वमशीय, मयो दात्रे भूया,—न्मयो मह्यं प्रतिग्रहीत्रे ॥ इति३सोऽर्धमिन्द्रिय-
स्योपाधत्ता,—ऽर्धमिन्द्रियस्योपधत्ते य एवं९ विद्वानश्वं प्रतिगृह्णात्य,—थ योऽविद्वान् प्रतिगृह्णात्यर्ध-
मस्येन्द्रियस्यापक्रामति, रुद्राय गामनय९,—स्तस्य तृतीयमिन्द्रियस्यापाक्रामत्, स एतं प्रति-
ग्रहमपश्यत् ॥ रुद्राय त्वा मह्य९ वरुणो ददाति, सोऽमृतत्वमशीय, मयो दात्रे भूया,—न्मयो
मह्यं प्रतिग्रहीत्रे ॥ इति स तृतीयमिन्द्रियस्योपाधत्त, तृतीयमिन्द्रियस्योपधत्ते य एवं९ विद्वान् गां
प्रतिगृह्णात्य,—थ योऽविद्वान् प्रतिगृह्णाति तृतीयमस्येन्द्रियस्यापक्रामत्य,—ग्नये हिरण्यमनय९,—
स्तस्य चतुर्थमिन्द्रियस्यापाक्रामत्, स एतं प्रतिग्रहमपश्यत् ॥ अग्नये त्वा मह्य९ वरुणो ददाति,
सोऽमृतत्वमशीय, मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स चतुर्थमिन्द्रियस्योपा-
धत्त, चतुर्थमिन्द्रियस्योपधत्ते य एवं९ विद्वान् हिरण्यं प्रतिगृह्णात्य,—थ योऽविद्वान् प्रति-
गृह्णाति चतुर्थमस्येन्द्रियस्यापक्रामति, बृहस्पतये वासोऽनय९,—स्तस्य पञ्चममिन्द्रियस्या-
पाक्रामत्, स एतं प्रतिग्रहमपश्यत् ॥ ग्नास्त्वाकृन्तन्न,—पसोऽतन्वत, धियोऽवयन्, बृहस्प-
तये त्वा मह्य९ वरुणो ददाति, सोऽमृतत्वमशीय, मयो दात्रे भूया,—न्मयो मह्यं प्रतिग्र-
हीत्रे ॥ इति स पञ्चममिन्द्रियस्योपाधत्त, पञ्चममिन्द्रियस्योपधत्ते य एवं९ विद्वान् वासः
प्रतिगृह्णात्य,—थ योऽविद्वान् प्रतिगृह्णाति पञ्चममस्येन्द्रियस्यापक्रामत्यु,—त्तानायाङ्गिरसाया-
प्राणदनय९,—स्तस्यु षष्ठमिन्द्रियस्यापाक्रामत्, स एतं प्रतिग्रहमपश्यत् ॥ उत्तानाय त्वाङ्गि-
रसाय मह्य९ वरुणो ददाति, सोऽमृतत्वमशीय, मयो दात्रे भूया,—न्मयो मह्यं प्रतिग्रहीत्रे ॥
इति स षष्ठमिन्द्रियस्योपाधत्त, षष्ठमिन्द्रियस्योपधत्ते य एवं९ विद्वानप्राणत् प्रतिगृह्णात्य,—थ
योऽविद्वान् प्रतिगृह्णाति षष्ठमस्येन्द्रियस्यापक्रामति ॥ क इदं कस्मा अदात्, कामः कामायादात्,
कामो दाता, कामः प्रतिग्रहीता, कामाय त्वा प्रतिगृह्णामि, कामैतत्ते ॥ इति समुद्रो वै
कामो, दक्षिणा कामो, दक्षिणयैव दक्षिणां प्रतिगृह्णाति, यो वै तां देवता९ वेद याग्रे
दक्षिणामनयद्दक्षिणीयो ह भवति, नयति दक्षिणाम् ॥४॥ ४-१६

तं वै स्वयन्तोऽब्रुव,—न्नतो नो यूयं प्रयछत, केनायतनेनात्रैव वेत्स्यथे,—त्यब्रुव९,—
स्ते वै सप्तहोतारो न्यसीदन्नर्यमगृहपतयो, महाहविर्होतासीत्, सत्यहविरध्वर्युर,—चित्तपाजा

[ देवस्य त्वा सवितुः— अथर्व. १९,५१,२ । कोदात्कस्मा०— अथर्व. ३,२९,७ ]

[ ५ ] मै. १,९,१ । काठ. ९,१२–१३ ।

अग्नीद्,—चित्तमना उपवक्ता,—ऽनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ, अयास्य उद्गाता, ते वा एतं ग्रहमगृह्णत, विधे नामन्विधेमु ते नाम, विधेस्त्वमस्माकं नामेति, ते त्रयस्त्रिꣳशमायतन-मचायꣳ,—स्तेनेदꣳ समतन्वन्, त्सप्तहोत्रा च वा इदꣳ संततं त्रयस्त्रिꣳशेन च, यदिदं देव-मनुष्या अ३न्योऽन्यस्मै संप्रयच्छंते, प्राणो वै दशहोता, चक्षुश्चतुर्होता, श्रोत्रं पञ्चहोता, वाक्चात्मा च सप्तहोता,—ऽग्निहोत्रꣳ वै दशहोता, दर्शपूर्णमासौ चतुर्होता, चातुर्मास्यानि पञ्च-होता, सौम्योऽध्वरः सप्तहोता,—ऽऽयुषे कमग्निहोत्रꣳ हूयते, सर्वमायुरेति य एवꣳ वेद, चक्षुषे कं दर्शपूर्णमासा इज्येते, न चक्षुषो गृहे य एवꣳ वेद, श्रोत्राय कं चातुर्मास्यानीज्यन्ते, न श्रोत्रस्य गृहे य एवꣳ वेद, वाचे चात्मने च कꣳ सौम्योऽध्वर इज्यते, न वाचो नात्मनो गृहे य एवꣳ वेद, प्रजापतिर्वै दशहोतै,—कः संन्भूयिष्ठभाग् व्याहृतीना—,मैकः संन्भूयिष्ठो भवति य एवꣳ वेद, तेजसे कं पूर्णमा इज्यते, सौम्यो वै ब्राह्मणो देवतया गायत्रछन्दा, गाय३त्रोऽग्निः, स्वे वावास्मा एतद्देवते संप्रस्थे अक्र,—नास्यान्यो योगक्षेमस्येशा, आयुषे कममावास्येज्यते, समीव वा एष आम्रियते, सर्वमायुरेति य एवꣳ वेद, स्वर्गाय लोकाय कꣳ सौम्योऽध्वर इज्यता, एति स्वर्गं लोकꣳ य एवꣳ वेद, दशहोत्राग्निहोत्रमुन्नीतमभिमृशेद्, दशहोत्रा वै देवा अग्निहोत्रमसृजन्त, प्रजातमेनत् सृष्टमालब्ध, चतुर्होत्रा दर्शपूर्णमासा अभिमृ-शे,—चतुर्होत्रा वै देवा दर्शपूर्णमासा असृजन्त, प्रजाता एनौ सृष्टा आलब्ध, पञ्चहोत्रा चातु-र्मास्यान्यभिमृशेत्, पञ्चहोत्रा वै देवाश्चातुर्मास्यान्यसृजन्त, प्रजातान्येनानि सृष्टान्यालब्ध, सप्तहोत्रा सौम्यमध्वरमभिमृशेत्, सप्तहोत्रा वै देवाः सौम्यमध्वरमसृजन्त, प्रजातमेनꣳ सृष्ट-मालब्ध, दशहोतारꣳ वदेत् पुरस्तात् सामिधेनीनां, प्रजापतिर्वै दशहोता, यज्ञमुखꣳ सामि-धेन्यो, मिथुनꣳ वावास्यैतद्यज्ञमुखे दधाति, चतुर्होतारꣳ वदेत् पुरस्तात् प्रयाजानां, चतु-र्होत्रा वै देवा इन्द्रमजनयन्नि,—न्द्रꣳ वावास्यैतद्यज्ञेऽजीजनत्, सेन्द्रेण यज्ञेन यजते, पञ्च-होतारꣳ वदेत् पुरस्ताद्धविषां, पञ्चहोत्रा वै देवाः पशूनसृजन्त, परासुरानभावयन्, पशूनेव सृजते, परा भ्रातृव्यं भावयति, सप्तहोतारꣳ वदेत् पुरस्तादनुयाजानाꣳ, सप्तहोत्रा वै देवाः स्वरायन्, त्स्वरेवैति, दशहोतारꣳ वदेत् पुरस्ताद् बहिष्पवमानस्य, प्रजापतिर्वै दशहोता, यज्ञमुखं बहिष्पवमानं, मिथुनꣳ वावास्यैतद्यज्ञमुखे दधाति, चतुर्होतारꣳ वदेत् पुरस्तादाज्यानां, पञ्चहोतारꣳ वदेत् पुरस्तान्माध्यंदिनस्य पवमानस्य, सप्तहोतारꣳ वदेत् पुरस्तादार्भवस्य पवमा-

नस्य, सप्तहोत्रा वै देवाः स्वरायन्,—त्स्वरेवैति, यो वै चतुर्होतॄननुसवनं तर्पयित३व्यान् वेद
तृप्यति प्रजया च पशुभि,—श्चैते वै चतुर्होतारोऽनुसवनं तर्पयित३व्या, यद् ब्राह्मणा बहुविदस्ता-
नेव तर्पयति, त एनं तृप्ताः प्रजया च पशुभिश्च तर्पयन्ति ॥५॥ १७

यः प्रजया पशुभिर्न प्रजायेत स द्वादशाहानि बरासीं परिधाय तप्तं पिबन्नधः शयीत, तपो वै
तप्त्वा प्रजापतिर्विधायात्मानं मिथुनं कृत्वा प्रजया च पशुभिश्च प्राजायता,—ऽविहितो हि वा एषो
ऽमिथुनो, ऽथैष न प्रजायते, तत्तप एव तप्त्वा विधायात्मानं मिथुनं कृत्वा प्रजया च पशु-
भिश्च प्रजायते, प्रजापतिर्वै दशहोता, ज्यायान् वै प्रजापतिर्होमात्, तस्मात्तन्न जुह्वति, प्रा-
ण्यापाने,—दपानं एव प्राणं जुहोति, संग्रामिणं चतुर्होत्रा याजये,—च्चतुर्गृहीतमाज्यं कृत्वा चतुर्हो-
तार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं, चतुर्होत्रा वै देवा इन्द्रमजनय,—न्यतर-
स्मिन् खलु वै संग्राम इन्द्रो भवति स जयती,—न्द्र९ वावास्यैतत्संग्रामेऽजीजन,—ज्जयति संग्रामं,
प्रजाकामं चतुर्होत्रा याजये,—च्चतुर्गृहीतमाज्यं कृत्वा चतुर्होतार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जु-
हुयादुत्तरेणार्धं, चतुर्होत्रा वै देवा इन्द्रमजनय,—न्यतरस्मिन् खलु वै संग्राम इन्द्रो भवति
स जयती,—न्द्र९ वावास्यैतत् संग्रामेऽजीजन,—ज्जयति संग्रामं, प्रजाकामं चतुर्होत्रा या-
जये,—च्चतुर्गृहीतमाज्यं कृत्वा चतुर्होतार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं,
चतुर्होत्रा वै देवा इन्द्रमजनयन्, प्रजामस्मै जनयति, नैव त्वपरोऽनुजायते, तेजस्वीव
तु भवति, सर्वेण ह्येनमिन्द्रियेण जनयति, पशुकामं पञ्चहोत्रा याजये,—च्चतुर्गृहीतमा-
ज्यं कृत्वा पञ्चहोतार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं, पञ्चहोत्रा वै देवाः
पशूनसृजन्त, पशूनेव सृजते, भ्रातृव्यवन्तं पञ्चहोत्रा याजये,—च्चतुर्गृहीतमाज्यं कृत्वा पञ्च-
होतार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं, पञ्चहोत्रा वै देवा असुरान् पराभावयन्,
परा पाप्मानं भ्रातृव्यं भावयति, स्वर्गकामं पञ्चहोत्रा याजये,—च्चतुर्गृहीतमाज्यं कृत्वा पञ्चहो-
तार९ व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धं, पञ्चहोत्रा वै देवाः स्वरायन्, त्स्वरेवैति,
यो यज्ञस्य स९स्थामनु पापीयान्मन्येत त९ सप्तहोत्रा याजयेत्, सप्तहोत्रा वै देवा इद९ समतन्वन्,
त्संमतत ताजक्, तादृङ् पुनर्भवति यादृक् संन्यजते ॥६॥ १८

[६] मै. १,९,१। काठ. ९,१४।

ब्रह्मवादिनो वदन्ति, यदेको यज्ञश्चतुर्होताथ कस्मात् सर्वे चतुर्होतार उच्यन्ता इति, चत्वा-
वा एते यज्ञा,—स्तेषां चत्वारो होतारस्त,—च्चतुर्होतृणां चतुर्होतृत्वं, चतुर्णामेकः संवत्सरं
ाश्नीयात्, तद् व्रतम,—न्नं वै चतुर्होतारो, ऽन्नवान्भवति य एवं वेदा,—ऽथ यमनूचानं सन्तं
ोपन्नमेत्सोऽरण्यं परेत्य ब्राह्मणमुपद्रष्टारं कृत्वा चतुर्होतॄन् व्याचक्षीत, ब्रह्मणो वा एतदुदरणं
चतुर्होतारो, ब्राह्मण उपद्रष्टा,—पद्रष्टुरेवान्ते ब्रह्माविरुक्,—स्तदेनमाविर्भूतमाविदं गमयत्य,—थ
ो विशपेयाताम्,—हं भूयो वेदाहं भूयो वेदे,—त्येष वाव भूयो वेद यश्चतुर्होतॄन् वेद, चतुर्होतारो
यज्ञस्य योनि,—श्चतुर्होतृभ्योऽधि यज्ञो निर्मितो, नैनं विशसं हिनस्ति, चतुर्होतारं व-
दशमेऽहन्नन्नकामो, ऽन्नं वै चतुर्होतारो, ऽन्तो दशममह,—रन्तमेव गत्वान्नाद्यमवरुन्द्ध,
तद्वा अस्यैतर्ह्यप्रयुक्तमे,—तदनवरुद्धं तदेव प्रयुङ्क्ते, तदवरुन्द्ध, इयं वै सर्पराज्ञी, तस्या
ा एतदुक्थं यच्चतुर्होतारो, होता वदति, स्तुतं वा एतदनुशंसति, न हि स्तुतमननु-
स्तमस्ति ॥७॥ १९

देवाश्च वा असुराश्चास्पर्धन्त, ते वै समावद्देव यज्ञे कुर्वाणा आयन्, यदेव देवा अकुर्वत त-
सुरा अकुर्वत, तेन व्यावृतमगछं,—स्ते देवा अब्रुवन्,—तेमं यज्ञं तिर उपर्यसुरेभ्यस्तं-
यामहा इति, तमेतावञ्श आदायोदक्राम,—न्नग्निर्यजुर्भिः, सविता स्तोमैरि,—न्द्र उक्थामदै,
—र्बृहस्पतिश्छन्दोभिरिति, ते तिर उपर्यसुरेभ्योऽतन्वत, तमेषां यज्ञमसुरा नान्ववायं,—
तेन वा एनानपानुदन्त, ततो देवा अभवन्, परासुरा,—स्तद्य एवं वेद तिर उपरि भ्रातृव्या-
ज्ञं तनुते, भवत्यात्मना, परास्य भ्रातृव्यो भवत्य,—तैरेव जुहुयात् समृतयज्ञे, चतुर्भिश्च-
भिरन्वाकशायं पुरस्तात् प्रातरनुवाकस्यै,—तावान्वै यज्ञो, यावानेव यज्ञस्तं वृङ्क्ते, संयज्ञो
वत्य,—यज्ञा इतर, एतैरेव जुहुयात् पुरस्ताद्दीक्षाया, एषा वै प्रत्यक्षं दीक्षा, तामेवालब्धे,—
रेव जुहुयात् पुरस्ताद्द्वादशाहस्यै,—ष वै प्रत्यक्षं द्वादशाह,—स्तमेवालब्धे,—तैरेवातिथ्यमभिमृशेद्,
ज्ञेनैव यज्ञमालब्ध, दक्षिणतो वै देवानसुरा यज्ञमजयं,—स्त उदञ्चः पत्नीभिः सहाग्नीध्रं प्रा-
द्रुं,—स्तान् पत्नीभिः सह प्रक्शाय जिह्रियतोऽसुरा अपावर्तन्त, तांस्तत एवानूत्थायाजयं,

[७] काठ. ९,१५।
[८] मै. १,९,१। काठ. ९,१५।

—स्ततो देवा अभवन्, परासुरा,—स्तद्य एवं वेद भवत्यात्मना, परास्य भ्रातृव्यो भवति, नास्य भ्रातृव्यो गृहान्न पशूनभ्यारोहत्य,—भि भ्रातृव्यस्य गृहानाभि पशूनारोहति य एवं वेद,—तान्येवाग्नीधेऽनुब्रूयाद,—ग्नीद्धि पात्नीवतस्य यजति, तृप्ता पत्नी रेतो धत्ते, प्र प्रजया च पशुभिश्च प्रजायत, एतैरेव जुहुयादन्तरा त्वष्टारं च पत्नीश्च सꣳवत्सरं प्रजाकामो, मिथुनं वै त्वष्टा च पत्नीश्च, त्वष्टारꣳ वा एतन्मिथुनेऽप्यसृाट् प्रजननाय, तन्मिथुनं, तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते, विन्दते प्रजामा,—स्य वीरो जायते, यदि सꣳवत्सरं जुहुन्न विन्देन्नाहृत्यम् ॥८॥ २०[६०६]

॥ इति प्रथमकाण्डे चातुर्होतृको नाम नवमः प्रपाठकः ॥९॥

अथ दशमः प्रपाठकः ।

## चातुर्मास्यानि ।

आग्नेय्योऽष्टाकपालः, सौम्यश्चरुः, सावित्रो द्वादशकपालः, सारस्वतश्चरुः, पौष्णश्चरु,—र्मारुतः सप्तकपालो, वैश्वदेव्यामिक्षा, द्यावापृथिवीया एककपालो, वाजिनाꣳ वाजिनमा,—ग्नेय्योऽष्टाकपालः, सौम्यश्चरुः, सावित्रोऽष्टाकपालः, सारस्वतश्चरुः, पौष्णश्चरुरै,—न्द्राग्नो द्वादशकपालो, मारुत्यामिक्षा, वारुण्यामिक्षा, कायं एककपालो, वाजिनाꣳ वाजिनम,—ग्नयेऽनीकवते प्रातरष्टाकपालो, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरु,—र्मरुद्भ्यो गृहमेधेभ्यः सर्वासां दुग्धे सायमोदनं, इन्द्रस्य निष्काषो, मरुद्भ्यः क्रीडिभ्यः साकꣳ रश्मिभिः सप्तकपाल, आग्नेय्योऽष्टाकपालः, सौम्यश्चरुः, सावित्रोऽष्टाकपालः, सारस्वतश्चरुः, पौष्णश्चरुरै,—न्द्राग्नो द्वादशकपाला, इन्द्राय वृत्रघ्ने चरु,—र्वैश्वकर्मणं एककपालं, आग्नेय्योऽष्टाकपालः, सौम्यश्चरुः, सावित्रोऽष्टाकपालः, सारस्वतश्चरुः, पौष्णश्चरु,—र्वायव्या यवागूः प्रतिधुग्वै,—न्द्राय शुनासीराय द्वादशकपालः, सौर्य एककपालः षट्कपालः पुरोडाशो धाना मन्थः, प्रतिपुरुषं पुरोडाशा एककश्चाभ्यादित्यश्चरुः ॥१॥ १

अग्ने वेर्होत्रꣳ, वेर्दूत्यम,—वतां त्वां द्यावापृथिवी, अव त्वं द्यावापृथिवी, स्विष्टकृदिन्द्राय देवेभ्यो भवा,—ऽस्य घृतस्य हविषो जुषाणो वीहि स्वाहा ॥ २

[१] तै. १,८,२; ३,४,७ । काठ. ९,४-५ । कपि. ८,७-८ । मा. श्रौ. १,७,१,५ ।
[२] तै. १,८,३-४ । काठ. ९,४-५ । कपि. ८,७-८ । वा. २,९; ३,४४-४७,४९,५०;२०,१७ । काण्व. १,१२-२४; ३,५२-५५; ११,४ । मा. श्रौ. १,७,४ ।

प्रघास्यान् हवामहे मरुतो यज्ञवाहसः । करम्भेण सजोषसः ॥ ३
मो षू ण इन्द्रात्र पृत्सु देवास्तु स्म ते शुष्मिन्नवयाः ॥ ४
मही चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥ ५
यद्ग्रामे यदरण्ये यत् सभायाँ यदिन्द्रिये ।
यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
तदेकस्यापि चेतसि तदेकस्यापि धर्मणि ।
तस्य सर्वस्याꣳहसोऽवयजनमसि ॥ ६
अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा ।
देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥ ७
पूर्णा दर्वे परा पत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो ॥ ८
देहि मे ददामि ते नि मे धेहि नि ते दधौ ।
अपामित्यमिव संभर क्रौ अम्वादददते ददत् ॥२॥ ९
अत्र पितरो मादयध्वम् ॥ १०
सुसंदृशं त्वा वयꣳ वसो मघवन् मन्दिषीमहि ।
प्र नूनं पूर्णबन्धुर स्तुतो यासि वशां अनु योजा न्विन्द्र ते हरी ॥ ११
यदन्तरिक्षं पृथिवीमुत द्याꣳ यन्मातरं पितरꣳ वा जिहिꣳसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्या उन्निनेतु दुष्कृताज्ज्ञातवेदाः ॥ १२
अमीमदन्त पितरो, नमो वः पितर इषे, नमो वः पितर ऊर्जे, नमो वः पितरः शु-
माय, नमो वः पितरो रसाय, नमो वः पितरो यज्जीवं तस्मै, नमो वः पितरो यद्घोरं
तस्मै, स्वधा वः पितरो, नमो नमो वः पितरः ॥ एषा युष्माकं पितर, इमा अस्माकं,
जीवा वो जीवन्तः इह सन्तः स्याम ॥ १३-१४

---

[ मो षू ण इन्द्रात्र० । ऋ. १,१७३,१२ । यदेनश्चकृमा वयम्० । अथर्व. १०,३,८ । पूर्णा दर्वे ( दर्वि ) परा० । अथर्व. ३,१०,७ ]

[ ३ ] मै. १,१०,१९ । तै. १,८,५; १,७,१२,२ । काठ. ९,६ । कपि. ८,९ । वा. २,३१,३२; ३,५१-५५; १५,४४; १७,७७; १९,५८ । काण्व. २,५६,५७; ३,५९-६३; १६,६६; १८,७७; २१,५९ । मा. श्रौ. १,७,६; १,१,२ । [ सुसंदृशं त्वा वयꣳ० । ऋ. १,८२,३ । यदन्तरिक्षं पृथिवी० । अथर्व. ६,१२०,१ । अमीमदन्त...नमो वः...स्याम— अथर्व. १८,४,८१-८५ ।

*

परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्येभिः ।
दधथ नो द्रविणꣳ यच्च भद्रꣳ रयिं च नः सर्ववीरं नियच्छत ॥ १५
अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वां यत् तनूं तन्वामैरयत ॥ १६
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ १७
मनो न्वाहुवामहे नाराशꣳसेन स्तोमेन । पितॄणां च मन्मभिः ॥ १८
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ १९
पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवꣳ व्रातꣳ सचेमहि ॥ २०
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा ता ओहैः ॥३॥ २१

आखुं ते रुद्र पशुं करोम्ये,—ष ते रुद्र भाग,—स्तं जुषस्व सह स्वस्राम्बिकया स्वाहा ॥ २२
अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् ।
यथा नो वस्यसस्करद्यथा नः श्रेयसस्करत् ॥ २३
यथा नो भूयसस्करद्यथा नः प्रतरं तिराद्यथा नो व्यवसाययात् ।
भेषजं गवे अश्वाय पुरुषाय भेषजम् ।
अथो अस्मभ्यं भेषजꣳसुभेषजꣳयथासति सुगं मेषाय मेष्यै ॥ २४
त्र्यम्बकꣳ यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ २५
रुद्रैष ते भाग,—स्तेनावसेन परो मूजवतोऽतीहि ॥ २६
पिनाकहस्तः कृत्तिवासा अवततधन्वा ॥४॥ २७
देवाश्च वा असुराश्चास्मिंल्लोक आसन्, त्सं प्रजापतिरकामयत, प्रासुरान्नुदेय, प्रजाः सृजेयेति,

---

आ यात ( परेतन ) पितरः० । अथर्व. १८,४,६२--६३ । अया विष्ठा० । अथर्व. ७,३,१ । अक्षन्नमी० । ऋ. १,८२,२; अथर्व. १८,४,६१ । मनो न्वाह्वामहे० । ऋ. १०,५७,३ । आ न एतु० । ऋ. १०,५७,४ । क्रत्वे दक्षाय जीवसे । अथर्व. ६,१९,२ । ज्योक् च सूर्यं दृशे । अथर्व. १,६,३ । पुनर्नः पितरो० । ऋ. १०,५७,५ । अग्ने तमद्याश्व० । ऋ. ४,१०,१; सा. ४३४,१७७७ ]

[ ४ ] मै. १,१०,२० । तै. १,८,६ । काठ. ९,७ । कपि. ८,१० । वा. ३,५७--६१ । काण्व. ३,६५--६८,७०,( ६९ ) । [ त्र्यम्बकं यजामहे...मृतात् । ऋ. ७,५९,१२ । त्र्यम्बकं यजामहे...मुतः । अथर्व. १४,१,१७ ]

चातुर्मास्यान्यपश्य,—च्चातुर्मास्यैर्वै सोऽसुरान् प्राणुदत, चातुर्मास्यैः प्रजा असृजत, तद्य एवꣳ
द्वाꣳश्चातुर्मास्यैर्यजते प्र भ्रातृव्यं नुदते प्र प्रजया च पशुभिश्च प्रजायते, ऽग्निष्टोमाद्वैश्वदेवꣳ
ज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजतो,—क्थ्याद्वरुणप्रघासान् यज्ञक्रतुं निर्मायेमाः प्रजा वरुणे-
ाग्राहय,—दतिरात्रात् साकमेधान् यज्ञक्रतुं निर्मायेन्द्रो वृत्रमहन्, त्सृष्टा वा अन्याः प्रजा आसन्न-
ष्टा अन्या, अथ प्रजापतिरकामयत, प्रजाः सृजेयेति, सꣳवत्सरो वै यज्ञो, यज्ञः प्रजापतिः,
एते मिथुने पयसी आत्मन्नधत्तोधन्यं च बह्वं चा,—ऽथैताभ्यो देवताभ्य एतानि हवीꣳषि भागं नि-
वपत्, तैः प्रजा असृजत, ऋतुभ्यो वै ताः प्रजाः प्राजायन्त, ऋतवो वा एतानि पञ्च हवीꣳषि,
श्च ३ह्यतव,—स्ततः प्रजायते, ऽग्निरेव प्रावापयत्, सोमो वै रेतोऽदधा,—न्मिथुनꣳ वा अग्निश्च
ोमश्च, सविता प्रासुवत् प्रजननाय, सꣳवत्सरो वै सविता, द्वादश मासाः सꣳवत्सरं,—
तस्माद्द्वादशकपालो, ऽथो वैश्वदेवत्वायैव द्वादशकपाल, उपाꣳशु यजत्यं,—निरुक्तो हि सꣳ-
त्सरः, सरस्वत्येव सृष्टासु वाचमदधात्, पूषणं प्रतिष्ठामभ्यसृज्यन्त, वाग्वै सरस्वती,
शवः पूषा, मिथुनꣳ वाक्च पशवश्च, मध्यतः प्रजापतिनासृज्यन्ता,—ऽन्ततो मिथुनाद्विषूचीः
ाजायन्त, तन्मध्यत एवैतत् प्रजापतिना सृज्यन्ते, ऽथादो ऽन्ततो मिथुनाद्विषूचीः प्रजायन्ते,
ात्रघ्नानि वा एतानि हवीꣳष्य,—ग्निना वा अनीकेनेन्द्रो वृत्रमहन्, त्सोमेन राज्ञा सवितृप्रसूतः
रस्वत्या चेत्रा पूषेनꣳ वी३र्येणान्वातिष्ठत्, विजितिर्वा एतानि हवीꣳषी,—न्द्रो वै वृत्रमहन्,
सं विष्वङ् वीर्येण व्यार्छत्, तदिदꣳ सर्वं प्राविशदुप ओषधीर्वनस्पतीꣳ,—स्तेनु देवा अश्राम्यꣳ,
—स्तत्समनयꣳ,—स्तत्सान्नाय्यस्य सान्नाय्यत्वं, तद्य एवꣳ विद्वान्त्सान्नाय्येन यजत ऋभ्नो-
ति ॥५॥ २८

मिथुनꣳ वै दधि च शृतं चा,—ऽथ यत् सꣳसृष्टमाण्डमिव मस्त्विव परीव ददृशे गर्भ एव स,
तपसो वै ताः प्रजाः प्राजायन्त, तपस्त्वꣳ वा एतद्गच्छति यं शृतत्वं गच्छति, ततः प्रजायते,
ऽथैषा वैश्वदे३व्यामिक्षा, प्रजापतिः प्रजा असृजत, ता वैश्वदेवेनैवासृजत, तस्मादिमा वैश्व-
देवीः प्रजा, विश्वान् देवान् यजति, स्तोका वै विश्वे देवा,—स्तान् वा एतद्यजत्य,—थो अमु-
तःप्रदानाद्धि मनुष्या यज्ञमुपजीवन्ति, योनिर्वा एष प्रजानां, तं मरुतोऽभ्यकामयन्त, ततोऽꣳ-
होगृहीता असृज्यन्त, यत्स्वतवद्भ्यः स्वत्वायैव निष्कृत्यै, प्रजननो वा एष पशूनाꣳ, यन्मा-

[ ५ ] तै. ब्रा. १,६,१--२ ।
[ ६ ] काठ. ३६,१ । तै. ब्रा. १,६,२ ।

रुतः सप्तकपालो भवति, सप्त हि मरुतो, विण्मरुतो, ऽथो निरवस्या एवं मारुतो, ऽथो
ग्राम्यमेवैतेनान्नाद्यमवरुन्द्धे ॥६॥ २९

तां वैश्वदेवेनु सृष्टा विषूचीर्न्युदायꣳ,—स्ताः प्रजापतिर्द्यावापृथिवीयेन पर्यगृह्णाद्, यद् द्यावापृ-
थिवीयः प्रजानाꣳ सृष्टानां परिगृहीत्यै, यदेककपालस्तेन प्राजापत्यः, प्रजापता एवं देवतासु प्र-
तितिष्ठति, यजमानो वा एककपाल, आहवनीयः स्वर्गो लोको, यत् सर्वहुतं करोति हवि-
र्भूतमेवैनꣳ स्वर्गं लोकं गमयति, यजमानꣳ वै हूर्छन्तं प्रजा अनुहूर्छन्ति, यजमानं प्रतितिष्ठन्तं
प्रजा अनुप्रतितिष्ठ,—न्त्यृजुहोत३व्यः प्रतिष्ठित्यै, सर्वहुतं करोति प्रतिष्ठित्यै, यजमानो वा
एककपालः, पशवो घृतं, तदभिपूर्यः, पशुभिरेवैनꣳ समर्धयति, यदभिपूरयेदधरमेनं पशुभ्यः
कुर्या,—दभुञ्जन्त एनं पशवा उपतिष्ठेयु,—रावि: पृष्ठः कार्यः, पशुभ्य एवैनमुत्तरमक,—भुञ्जन्त
एनं पशवा उपतिष्ठन्ते, तन्न सूक्ष्यं,—मभिपूर्य एवं, न हि पशवो न भुञ्जन्ति, यत् प्राङ्
पद्येत यजमानः प्रमीयेत, यद्दक्षिणा प्रजामस्य निर्दहेद्, यत् प्रत्यङ् पत्नी प्रमीयेत, यदुदङ्
पशूनस्य निर्दहेद्, यदुत्तानः पतेत् पर्जन्योऽवर्षुकः स्यात्, पुनरादायाभिघार्य होत३व्यो यजमा-
नस्य प्रतिष्ठित्यै, वरो दक्षिणा, वरेणैव वरꣳ स्पृणोत्या,—त्मा हि वरं,—स्त्रेधासंनद्धं बर्हिर्भवति,
त्रेधासंनद्धं इध्म,—स्त्रेधाविहितानि चातुर्मास्यानि, सꣳवत्सरꣳ वै चातुर्मास्यानि, सꣳवत्सरे-
णाग्निं मन्थन्त्य,—ग्निꣳ वै प्रजा अनुप्रजायन्ते, प्रजननो वा एष मथ्यते, ऽथो वृषाणꣳ वा
एतद्यजमानाय जनयन्ति, वसन्ता यष्टव्यं प्रजननाय, प्रवणे यष्टव्यं प्रजननाय, नोत्तरवे-
दिमुपवपन्ति प्रजननाय, प्रस्वो भवन्ति, प्र मा जनयानीति, पशवो वै पृषदाज्यं, ना-
नारूपा वै पशव,—स्तस्मान्नानारूपमाग्नेयं घृतमै,—न्द्रं दध्यै,—न्द्राग्नं पृषदाज्यं देवतया,
प्राणापानौ वा इन्द्राग्नी, मिथुनं प्राणापानौ, मिथुनयोनयः प्रजा, मिथुनात् खलु वै
प्रजाः पशवः प्रजायन्ते, तन्मिथुनं, तस्मादेव मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते,
यदि वसन्ता यजेत द्विरुपस्तृणीयात्, सकृदभिघारये,—दोषधयो वै पशवा, ओषधीष्वेव
पशून् प्रतिष्ठापयति, यदि प्रावृषि यजेत सकृदुपस्तृणीयाद्, द्विरभिघारयेद्, वृष्ट्यैव पशूनभि-
जिघर्ति ॥७॥ ३०

प्राणेभ्यो वै ताः प्रजाः प्राजायन्त, प्राणा वा एतानि नव हवीꣳषि, नव हि प्राणा,

---

[७] काठ. ३६,१-२ । तै. ब्रा. १,६,३ ।
[८] काठ. ३६,२-३ । तै. ब्रा. १,६,३ ।

आत्मा देवता, ततः प्रजायते, नव प्रयाजा, नवानुयाजा, द्वा आज्यभागा, अष्टौ हवींष्य,—ग्नये समवद्यति, वाजिनो यजति, तत् त्रिंशं,—त्रिंशदक्षरा विराड्, विराजेव प्रतितिष्ठति, विराजो वै योनेः प्रजापतिः प्रजा असृजत, विराजो वा एतद्योनेर्यजमानः प्रजायते, त्रिंशत् त्रिंशद्वै रात्रयो मासो, यो मासः स संवत्सरः, संवत्सरः प्रजापति,—स्तत् प्रजापतेश्च वा एतद्विराजश्च योनेर्मिथुनाद्यजमानः प्रजायता, एकैकया वा आहुत्या द्वादश द्वादश रात्रीरयुवत, ता यावतीः संख्याने तावतीः संवत्सरस्य रात्रयः, संवत्सरमेव भ्रातृव्याद्युवते, वैश्वदेवेन चतुरो मासोऽयुवत, वरुणप्रघासैः परांश्चतुरः, साकमेधैः परांश्चतुर,—स्तानेव भ्रातृव्याद्युवत, ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यो, यो, वसन्तोऽभूत् प्रावृडभूच्छरदभूदि,—तियजते स ऋतुयाज्य,—थ यस्त्रयोदशं मासं संपादयति त्रयोदशं मासमभियजते स चातुर्मास्ययाज्य,—जूंस्त्रीनिष्ट्वा चतुर्थमुत्सृजेत, ऋजू द्वौ परा इष्ट्वा तृतीयमुत्सृजेत, ये वै त्रयः संवत्सरास्तेषां षट्त्रिंशत् पूर्णमासा, यौ द्वौ तयोश्चतुर्विंशति,—स्तं द्वेऽमी षट्त्रिंशत्यधि तानस्यां चतुर्विंशत्यामुपसंपादय,—त्येष वाव स त्रयोदशो मास,—स्तमेवैतत् संपादयति, तमभियजते, वैश्वदेवेन यजेत पशुकामो, न वरुणप्रघासैर्न साकमेधैः, सर्वो वै पुरुषः साहस्रो जायते, यावत्तरसं त्वेवेति, प्रजननं वा एतद्धविर्यद्वैश्वदेवं यद्वैश्वदेवेन यजते प्रजननाय वा एतद्यजते, स्वां मात्रां गच्छानीति, स यदा सहस्रं पशून् गच्छेदथ वरुणप्रघासैर्यजते, यदेवादः सहस्रमगंस्तस्यैतदंहोऽवयजति ॥८॥ २१

यद्बर्हिः प्रयाजेषु यजत्योषधीस्तद्यजति, यद्बर्हिरनुयाजेषु फलं तद्, यद्बर्हिर्वीरितीनां यदेवादः फलात् प्रजायते तदेतद्यजति, यद्दुर उपस्थं तद्, यदुषासानक्ता व्युष्टिं चैव निम्रुक्तिं च, यज्जोष्ट्री यदेव जातं च जनिष्यमाणं च, यदूर्जाहुती यदेवात्ति च, पिबति च, यद्दैव्या होतारेमे एव, यत्तिस्रो देवी,—र्वाग्वै तिस्रो देवी,—र्वाचं वा एतद्यजत्य,—थो छन्दांसि वै वाक्, छन्दांसि वा एतद्यजति, तनूनपाद्वै यज्ञोऽप्रसूतो, नराशंसः प्रसूत,—स्तस्मात् तनूनपातं प्रयाजेषु यज,—त्यप्रसूतो हि तर्हि यज्ञ,—स्तस्मादु नराशंसमनुयाजेषु यजति, प्रसूतो हि तर्हि यज्ञो, वनस्पतिं यजति, सोमो वै वनस्पतिः, सौमीरिमाः प्रजाः, प्रजास्वेव रसं दधाति, त्वष्टारं यजति, त्वष्टा हि रूपाणि विकरोति, वाजिनो यजति, पशवो वै वाजिन,—स्तान् वा

[ ९ ] काठ. ३६,३-४ । तै. ब्रा. १,६,३ ।

एतद्यजत्य,—थो छन्दाꣳसि वै वाजिन,—श्छन्दाꣳसि वा एतद्यजति, पशवो वै वाजिन,—स्तान्न
सꣳस्थाप्यꣳ, यत्सꣳस्थापयेत् तानेव सꣳस्थापये,—दसꣳस्थिता३ह्येते सुदुर्दि प्रजायन्ते, न
वा एष सुयज्ञ इव, सꣳस्थिते हि प्रहुतेषु परिधिषु जुहोति, यदन्यवानꣳयजति तेनु यज्ञः क्रि-
यते, ऽनुयजति समिष्टया एव प्रतिष्ठित्यै, बर्हिरनुषिञ्चन् गृह्णात्य,—पभेष्वेव रेतो दधात्य,—
र्ध्वज्ञुरासीनो यजत्य,—र्ध्वज्ञुवो हि पशवः पशुषु रेतो दधत्य,—थो ऊर्ध्वज्ञुर्हि प्रजापतिः प्रजा अ-
सृजत, दिग्भ्यो जुहोती,—मा एव दिशो रसेन व्युनक्ति, प्राचीमुत्तमां जुहोति, प्राचीमेव
दिशं पुनरुपावर्तन्ते, समुपह्वयन्ते, सोमपीथ इव३ह्येष, ऋत्विजः प्राश्नन्ति॥ वाजिनो मे यज्ञꣳ
वहान् ॥ इति समावञ्शो भक्षयन्ति, समावञ्श एव वाजꣳ विभजन्त, आत्मना प्राश्नात्या,—
त्मन्नेव वाजं धत्ते ॥ ९ ॥ ३२-३४

ता वैश्वदेवेन सृष्टास्तस्मिꣳस्तरुणिमनि वरुणोऽगृह्णात्, तदाहुर,—ति वै ताः प्रजापतिमचरꣳ,
स्ता अतिचरन्तीर्वरुणेनाग्राहयत्, तस्मात् पिता नातिचरितवा इति, वैश्वदेवेन वै प्रजापतिः
प्रजा असृजत, तस्य मरुतो हव्यꣳ व्यमथ्नत, ततोऽꣳहोगृहीता असृज्यन्त, ताभ्यो भेषज-
मैच्छत्, तद्वा आत्मन्नेवैच्छत्, स एतत् पय आत्मनोऽधि निरमिमीत, तेनाभ्योऽꣳहोऽवायजत्,
तदꣳहसो वा एषावेष्टिर्यद्वरुणप्रघासा, यद्वरुणप्रघासैर्यजत सर्वस्याꣳहसोऽवेष्टयै, जग्धाद्वै ताः
प्रजा वरुणोऽगृह्णात्, तस्माद्वरुणप्रघासा, यावत् कुमा३रेऽम्णो जातं एनस्तावदस्मिन्नेनो भवति
यो वरुणप्रघासैर्यजते, सावि३त्रोऽष्टाकपालो भवति, गायत्रो वै देवानाꣳ सविता द्वादशकपाल
ऐन्द्राग्नो देवतया, यद्वै तद्वरुणगृहीता अवेव्लीयन्तेव तदास्विन्द्राग्नी बलमधत्ताꣳ, शिथिरा वै
ताः प्रजा वरुणोऽगृह्णात्, तास्विन्द्राग्नी बलमधत्ता,—मोजो वै वीर्यमिन्द्राग्नी, ओजो वा एत-
द्वीर्यं मध्यतः प्रजानां धीयते, न वै ताः प्राणꣳ,—स्ता अप्राणतीर्वरुणोऽगृह्णात्, प्राणापानौ
वा इन्द्राग्नी, प्राणापानौ वा एतन्मुखतः प्रजानां धीयते, अथैतानि पञ्च हवीꣳषि संतत्यै,
निरवत्यै मारुती, निर्वरुणत्वाय वारुणी, कन्त्वाय काया, यद्वै तद्वरुणगृहीताभ्यः कमभुवत्
तस्मात् कायः, प्रजापतिर्वै कः, प्रजापतिर्वै ताः प्रजा वरुणेनाग्राहयद्, यत् कायं आत्मन
एवैना वरुणान् मुञ्चति ॥१०॥ ३५

ऋतꣳ वै सत्यꣳ यज्ञो, ऽनृतꣳस्त्र्य,—नृतꣳ वा एषा करोति या पत्युः क्रीता सत्यथान्यैश्च-
रत्य,—नृतमेव निरवदाय ऋतꣳ सत्यमुपैति यन्मिथुया प्रतिब्रूयात्, प्रियतमेन याजयेद,—थ

---

[ १० ] काठ. ३६,५ । तै. ब्रा. १,६,४ ।
[ ११ ] काठ. ३६,६ । मा. श्रौ १,७,४ । तै. ब्रा. १,६,५; १,४,४ ।

यद्वाचंयुति मेध्यामेवैनां करोत्या,—मपेषा भवन्ति सर्वस्याᳲहसोऽवेष्ट्यै, यद्भूज्येयुरनवेष्टमᳲहः स्यात्, पात्रेभ्यो वै ताः प्रजा वरुणोऽगृह्णाद्, यत् पात्राणि पात्रेभ्य एवैना वरुणान् मुञ्चति, प्रतिपुरुषं भवन्ति, प्रतिपुरुषमेवाᳲहोऽवयजत्यै,—कुमधि भवति, गर्भेभ्यस्तेनु निरवदयते, ऽन्नाद्वै ताः प्रजा वरुणोऽगृह्णाञ् शूर्पेणान्नं बिभ्रति, तस्मात् शूर्पेण जुहुतः, स्त्रीपुᳲसौ जुहुतो, मिथुना एव प्रजा वरुणान् मुञ्चतः, पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ जुहुतः, पुरस्तादेवाᳲहोऽवयजतो, यत् पात्राणि, य एव द्विपादः पशवो मिथुनास्तेषामेतत् पुरस्तादᳲहोऽवयजतो, ऽथ यन्मेषश्च मेषी च, य एव चतुष्पादः पशवो मिथुनास्तेषामेतदुपरिष्टादᳲहोऽवयजत, उभयत एवाᳲहोऽवयजतः पुरस्ताच्चोपरिष्टाच्च ॥ ११ ॥ ३६

यद्वै प्रजा वरुणो गृह्णाति शम्यं चैव यवं चापि न गृह्णाति, हेमन्तो हि वरुणो, या एवावरुणगृहीतौ ताभ्यामेवैना वरुणान् मुञ्चति, वरुणो वै यवो वरुणदेव३त्यः, स्वेनैवैना भागधेयेन वरुणान् मुञ्चत्य,—नृताद्वै ताः प्रजा वरुणोऽगृह्णाद्, यदेता अनृतपशू अनृतादेवैना वरुणान् मुञ्चतो, मिथुनौ भवतो, मिथुना एव प्रजा वरुणान् मुञ्चतो, लोमशौ भवतो मेध्यत्वाय, ये हि पशवो लोम जगृहुस्ते मेधं प्रापुः, शमीपर्णानि भवन्ति शंत्वाय, भूर्जो वै नामैष वृक्षः, कार्या एतस्य स्रुचः, प्रजापतिर्वा अन्नाद्यमवरुन्धं नाशक्नोत्, तं शतेध्मेनावरुन्द्ध, परःशतानि कार्याण्यन्नाद्यस्यावरुद्ध्यै, सहस्रेध्मो ह३त्वेवाᳲहसोऽवेष्टिᳲ विव्याच, परःसहस्राणि कार्याणि सर्वस्याᳲहसोऽवेष्ट्यै, यदा पात्राणि जुह्वत्यथाग्निᳲ संमार्ष्टि, यस्मिन्नेवाᳲहोऽवायाक्षुस्तस्मिन्नुत्पूते देवता यजा, इतीन्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायच्छत्, तेषाᳲवा एतानि शीर्षाणि यत् खर्जूराः, सोमपीथो वा एष३षोऽस्या उदैपद्, यत् करीराणि, सौम्यानि वै करीराणि, सौमी ह३त्वेवाहुतिरमुतो वृष्टिं च्यावयति, यत् करीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै ॥ १२ ॥ ३७

प्रजापतेर्वा एतज्ज्येष्ठं तोकᳲ यत् पर्वता,—स्ते पक्षिण आसᳲ,—स्ते पुरापातमासत यत्र यत्राक्रामयन्ता,—ऽथ वा इयं तर्हि शिथिरासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमामदृᳲहद्, ये पक्षा आसᳲस्ते जीमूता अभवᳲ,—स्तस्मादेते सदर्दि पर्वतमुपप्लवन्ते, योनिर्ह्येषामेष, ततो यः प्रथमो रसः प्राक्षरत् तानि करीराण्यभवᳲ,—स्तदेतदुत् प्रावृषि जीमूताः प्लवन्ते, यजन्ते वरुणप्रघासैः,

---

[१२] काठ. ३६,६-७। तै. ब्रा. १,६,४,५।
[१३] काठ. ३६,७। वा. २०,२३,३८,२५। काण्व. २२,७; ३८,२४।

करीराणि भवन्ति, वृष्टिं तैः संतनोति, तस्मात् तर्हि भूयिष्ठꣳ वर्षति, वृष्टिꣳ हि संतनोति,
न वै वैश्वदेव उत्तरवेदिमुपवपन्त्यु,—पात्र वपन्ति, प्रजाताः प्रजाः प्रतिगृभ्णादिति, येयमुत्तरा
वेदिर्या अत्रीः प्रजास्तासामेषा योनि,—स्ता एतामनुप्रजायन्ते, येयं दक्षिणा वेदिर्या आद्याः प्रजा-
स्तासामेषा योनि,—स्ता एतामनुप्रजायन्त, उभयीरेव प्रजाः प्रजनयत्यत्रीश्चाद्याश्चा,—ऽयꣳ वाव
हस्त आसीन्नायं, तद्येयं दक्षिणा वेदिस्तयेममविन्दꣳ,—स्तस्मादेष एतस्य परिवेष्टा, कनीयान्
हि, तस्मात् कनीयान् ज्यायाꣳसं परिवेवेष्टि, समे प्राची भवतः, समौ३हीमौ प्राञ्चौ हस्ता
असंभिन्ने भवतः सर्वस्याꣳहसोऽवेष्टयै, यत्संभिद्युरनवेष्टमꣳहः स्यादे,—कस्यां पश्चात् संभिनत्य-
नुसंतत्या, उपेमाꣳ वपति, नेमामन्वभ्यारोहयत्, क्षत्रꣳ वा इन्द्रो, विण्मरुतो, नाना
यजतः पापवसीयसस्य व्यावृत्त्यै, यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति, तस्माद्यद्राजा
करोति तद्विट्करोति, न वै वैश्वदेवे त्रिꣳशदाहुतयः सन्ति न साकमेधेषु, वरुणप्रघासेषु वाव
त्रिꣳशदाहुतयो, वैराजो वै पुरुषो, दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा, यत्तर्ह्यवभृ-
थमभ्यवयन्ति यजमानस्य निर्वरुणत्वाय, यद्वै यज्ञस्य स्वगाकृतिं न प्राप्नोति तद्वरुणो गृह्णाति,
यन्निष्कार्पेणावभृथमभ्यवयन्ति, यदेवात्र वरुणस्य न्यक्तं तस्यैषा निरवत्तिर,—नपेक्षमाणा आयन्ति
वरुणस्यानन्ववायाय, परोगोष्ठं मार्जयन्ते, परोगोष्ठमेव वरुणं निरवदयन्ता, एधोऽस्येधिषी-
महीति, निर्वरुणा एव भूत्वैधितुमुपयन्ति, समिदसि समेधिषीमही,—ति समिद्ध्या एव॥१३॥
३८

प्रजाः सृष्ट्वाꣳहोऽवयज्य सोऽकामयत, वृत्रꣳ हन्यामिति, स एताभिर्देवताभिः सयुग्भूत्वा
मरुद्भिर्विशाग्निनानीकेनोपप्लायत, स वृत्रमेत्य वृत्रं दृष्ट्वोरुस्कम्भगृहीतोऽनभिधृष्णुवन्नतिष्ठत्,
तं मरुतोऽध्येयन्त, तेऽत्यैषꣳ,—स्तस्य यदा मर्मागच्छन्नथाचेष्टत्, सꣳ वा एनं तदतपꣳ,—
स्तस्मात् सांतपना, अग्निना वा अनीकेनेन्द्रो वृत्रमहꣳ,—स्तदनीकत्वायैवैषो, ऽथो अग्निर्वै दे-
वानाꣳ सेनानी,—स्तत्सेनोत्थापनीयमेवैतदि,—न्द्रो वै वृत्राय वज्रमुद्यमं नाशक्नोत्, स एतं
मरुद्भ्यो भागं निरवपत्, तꣳ वीर्याय समतपꣳ,—स्तं तेन वी३र्येणोदयच्छन् त्सꣳ वा एनं तद-
तपꣳ,—स्तस्मात् सांतपना, मध्यंदिने चरुनिरुप्य,—स्तर्ह्युभा अन्ता तपति, चरुः स्यात्, तꣳ
हि सर्वतस्तपति, देवा वै वृत्रस्य मर्म नाविन्दꣳ,—स्तं मरुतः क्षुरपविना व्ययुः, सꣳ वा एनं
तदतपꣳ,—स्तस्मात् सांतपनाः ॥१४॥ ३९

---

[ एधोऽस्येधिषीय ( महि ) समिदसि समेधिषीय ( महि )। अथर्व. ७,९४,४ ]

[ १४ ] काठ. ३६,८। तै. ब्रा, १,६,६,२।

तं वै श्वो भूते वृत्रꣳ हनिष्यन्ता उपावसꣳ,—स्तेऽब्रुवन्, कस्य वाहेदꣳ श्वो भविता कस्य
पचतेति, त एतमोदनमपचꣳ,—स्तेन पशूनचिकयु,—स्तेऽविदु,—र्यतरान् वा इमं उपाव-
र्त्स्यन्ति त इदं भविष्यन्तीति, तेभ्यो वा एतेन प्रातिष्ठꣳ,—स्तानेतेनायच्छꣳ,—स्तत् पशूनाꣳ
वैषा युति,—स्ते वै श्वोविजयिनोऽवसꣳ,—स्तेऽब्रुवन्, कस्य वाहेदꣳ श्वो भविता कस्य वा
वतेति, त एतमोदनमपचꣳ,—स्तेऽब्रुवन्, माहुतमाशिष्मेति, तं मरुद्भ्यो गृहमेधेभ्योऽजु-
हुः, पशवो वै मरुतो गृहमेधाः, पशुभ्यो वै तं तमजुहवु,—स्ते वै संꣳयत्ता आसꣳ,—स्तेऽ
रा देवेभ्यः क्षुधं प्राहिण्वꣳ,—स्तां देवाः प्रतिश्रुत्यैतमोदनमपचन्, सा देवेषु लोकमवित्त्वा
नरसुरान् प्राविशत, ततो देवा अभवन्, परासुरा,—स्तद्य एवꣳ विद्वानेतमोदनं पचति भव-
त्यात्मना, परास्य भ्रातृव्यो भवत्य,—पि प्रतिवेशं पचेद्भ्रातृव्यायैव क्षुधं प्रहिणोति, यद्वै चातु-
र्मास्यानां पाकयज्ञस्यैव तदेषां पशव्यं, पशव्यो गृहमेधो, न प्रयाजान् यजति नानुयाजान्,
सामिधेनीरन्वाहा,—ऽऽज्यभागौ यजति यज्ञताया, अग्नये समवद्यत्य,—ग्निर्वै संमिष्टिर,—ग्निः
प्रतिष्ठितिः, संमिष्ट्या एव प्रतिष्ठित्या, इडामुपह्वयन्ते, पशवो वा इडा, पशव्यो गृहमेध,—
स्तस्मादिडामुपह्वयन्ते, निष्कासं निदधात्यनुसंतत्यै ॥१५॥ ४०

तेषाꣳ वा उभयेषामिन्द्रः प्रावसत्, ते देवा एतमिन्द्राय भागं न्यदधुर,—स्मान् श्वो निहि-
भागो घृणता, इत्यृषभमाह्वयन्ती,—न्द्रꣳ वा एतं निह्वयन्ते, रुवथो वषट्कारो, ऽथो
सुराणाꣳ वा एतदृषभमत्याह्वयन्त्य,—स्मान् प्रजनयादिति, संवत्सा गावो वसन्ति साकमेध-
त्वाय, यत्स्त्र्यश्नाति साकमेधत्वाय, यत्स्त्री नाश्नीयादसाकमेधाः स्युर,—थ य३त्स्त्र्यश्नाति सा-
कमेधत्वाय, निर्ऋतिर्वा एतद्यज्ञस्य गृह्णाति य३त्स्त्र्यश्नाति, निर्ऋतिर्हि स्त्री, निर्ऋतिगृहीता
दर्वि,—स्तस्मꣳ ह्यवचरत्ये,—ष खलु वै स्त्रिया हस्तो यद्दर्वि,—र्यद्दर्व्या जुहोति निर्ऋतिगृहीतयैव
निर्ऋतिं निरवदयते, स वै श्वो भूते वृत्रꣳ हन्तुमुपप्लायत, तं मरुतः परिक्रीडन्त आसꣳ,—
तेऽस्याप्त्वा व्यनयꣳ३,—स्तेऽभ्युधर्षयꣳ,—स्तस्मात् क्रीडय,—स्ते वै संꣳयत्ता आसꣳ,—स्ते देवा
असुराणां परमन्तं न परापश्यꣳ,—स्ते मरुतः क्रीडीन् क्रीडतोऽपापश्यꣳ,—स्ताञ्जितमनसो वा इमं
इति, तेभ्यो वा एतं भागं निरवपꣳ,—स्ततो वा अजयꣳ,—स्तज्जित्या एवै३षो, ऽसौ वा आदि-
त्य इन्द्रो, रश्मयः क्रीडयः, साकꣳ रश्मिभिः प्रचरन्ति विजित्यै, देवा वै वृत्रꣳ हतं न व्य-

[ १५ ] काठ. ३६,९ । तै. ब्रा. १,६,६,४ ।
[ १६ ] काठ. ३६,९-१० । तै. ब्रा. १,६,७ ।

*

जानꣳ,—स्तं मरुतः क्रीडयोऽध्यक्रीडꣳ,—स्तस्मात् क्रीडयो, ऽथैतानि पञ्च हवींꣳषि संतत्या, अथैष ऐन्द्राग्न, इन्द्राग्नी एवास्मै वज्रमन्वविभृतामि,—न्द्राग्नी अस्मै वज्रमभ्युवहताम,—थैष ऐन्द्र, उद्धारꣳ वा एतमिन्द्रा उदहरत, वृत्रꣳ हत्वा तदुद्धार एवास्यैष भाग एव, तस्माद् राजा संग्रामं जित्वोदाजमुदुजते, ऽथैष वैश्वकर्मणो, विश्वानि मे कर्माणि कृतान्यासन्निति, विश्वकर्मा हिं, सोऽभवद्वृत्रꣳ हत्वा,—ऽथैष आघार आहुतीनाꣳ संतत्यै त्रिꣳशत्वाय ॥१६॥ ४१

प्रजाः सृष्ट्वांꣳहोऽवयज्य वृत्रꣳ हत्वा ते देवा अमृतत्वमेवाकामयन्त, स्वर्गो वै लोकोऽमृतत्वꣳ, सꣳवत्सरः स्वर्गो लोको, यद् द्वादशाहुतयोऽमृतत्वमेव तेन स्पृणोत्या,—पद्वा एतत् सꣳवत्सरम,—ति वा एतत् सꣳवत्सरमक्रमीद्, यद् द्वादशाहुतयः सꣳवत्सरमेव पुनरभिपर्यावर्तता, आपद्वा एतत् सꣳवत्सरꣳ, सꣳ वा एतत् सꣳवत्सरमकृक्षद्, यत् षट् षट् संपादयुति, षड्वा ऋतव,—स्तान् वा एतत् संपादयति, तानपिपादयति, तानुपिपद्यमानानन्वपिपद्यता, आपद्वा एतत् सꣳवत्सरं, पितरो वा ऋतव,—स्तान् वा एतत् प्रजनयति, तान् प्रजायमानाननु प्रजायते, ततः प्रजायत, एतद्वा अस्य सꣳवत्स३रो३ऽभीष्टोऽभूद,—भीष्टा ऋतवो, ऽथ वा अस्य पितरोऽनभीष्टा, यदेष पितृयज्ञस्तेनैवास्य पितरोऽभीष्टाः प्रीता भवन्ति, दक्षिणतो निरुप्यं, दक्षिणा हि पितृणाम,—थो आहु,—रुभयत एव निरुप्यमि,—त्युभये३ही ज्यन्ते, तन्न सूक्ष्यं, दक्षिणत एव निरुप्यं, दक्षिणा हि पितृणाꣳ, षट्कपालः पुरोडाशो भवति, षड्वा ऋतव,—स्त एवास्यैतेनाभीष्टाः प्रीता भवन्ति, न वै धानाभिर्न मन्थेनु यज्ञो, यदेष पुरोडाशस्तेनु यज्ञो, ऽथैता धानाः, स्वधा वा एता अमुष्मिल्लोके, ऽथो अपरिमिता वै सꣳवत्सरस्य रात्र्य,—स्ता एवास्यैताभिरभीष्टाः प्रीता भवन्ति, न वै धानाभिर्न पुरोडाशेन पितृयज्ञो, यदेष मन्थस्तेन पितृयज्ञो, ऽभिवान्याया गोर्दुग्धे स्यात्, सा हिं पितृणां, नैदिष्ठं दक्षिणासीना उपमन्थति, दक्षिणा हिं पितृणामे,—कयोपमन्थत्ये,—का हि पितृणा,—मिक्षुशलाकयोपमन्थति, सा हिं पितृणां, न प्राच्युद्धत्या, पितृयज्ञो हि, न दक्षिणा, यज्ञो३ह्यु,—भे दिशा अन्तरोद्धन्त्यु,—भये३ही ज्यन्त, उपमूलं बर्हिर्दाति, तेन पितृणाꣳ, यद्दतेमूलं तेनु देवाना,—मुभये ३हीज्यन्ते, परिश्रयन्त्य,—न्तर्हिता वा अमुष्मादादित्यात् पितरो, ऽथो अन्तर्हिता हि देवेभ्यश्च मनुष्येभ्यश्च पितर,—स्तस्मात् परिश्रयन्ति, समन्तं, बर्हिः परिस्तृणाति, समन्तꣳ ३हीम ऋतवः परिविष्टा, अथो समन्तान्मा पितरोऽभिसमागछानि,—त्यमुष्मिन् वै पूर्वस्मिन्नितरा देवता

[१७] काठ. ३६, ११-१२। तै. ब्रा. १,६,८।

ज्यन्ते, यत्तत्र जुहुयादाहुतीः संसृजेत्, समदं कुर्याद्, गार्हपत्ये शृतं कुर्वन्ति यज्ञताया,
ादनुपचनादग्निमाहरन्ति, तत् स्विन्नान्यता आहरन्ति ॥१७॥ ४२

उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥ ४३

इत्यन्वाहो,—शन्तो हि पितरो, ऽनुष्टुभमन्वाहा,—ऽन्तो वा अनुष्टुब्,—न्तः पितर,—स्तस्मादनु-
भमन्वाहै,—कामन्वाहै,—कलोका हि पितरस्त्रि,—रन्वाह, तृतीये हि लोके पितरो, यदेकाम-
वाह तेन पितृणां, यत्त्रिस्तेनु देवाना,—मुभये ३हीज्यन्ते, न होतारं वृणीते नार्षेयं,
त्योरेवैना उत्सृजत्य,—पबर्हिषः प्रयाजान् यजति, प्रजा वै बर्हिः, प्रजा एव मृत्योरुत्सृजति,
ंव्ययते वै मनुष्येभ्यः करिष्यन्, दक्षिणतो देवेभ्या उपव्ययते, ऽथात्रप्राचीनावीतिन भ-
यं व्यावृत्त्यै, दक्षिणतोऽवदायोदङ्ङतिक्रम्य दक्षिणा तिष्ठन् जुहोति, दक्षिणा हि पितृणां,
ोममग्रे यजति, सोमो वै पितृणां देवता, पितृदेव३त्यः सोमो, यत् सोमं पितृमन्तं यज-
ि सोमपांस्तत् पितॄन् यजति, यद्बर्हिषदो यज्वनस्तद्, यदग्निष्वात्तान् गृहमेधिनस्तद्, यदग्निं
व्यवाहनं, द्वे वा अग्नेस्तन्वौ, हव्यवाहन्या देवेभ्यो हव्यं वहति कव्यवाहन्या पितृभ्यः,
मिष्टचा एव प्रतिष्ठित्यै, द्वे वै देवानां याज्यानुवा३क्ये, प्राण्यया यच्छति, गमयत्यन्य-
या,—ऽथात्र तिस्रः का३र्याः, परे हि देवेभ्यः पितर,—स्तद्यैषा तृतीयात्येवैतया प्रादात्, पञ्च
कृत्वोऽवद्यति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्धः॥ स्वधा नमः॥ इति वषट्करोति,
स्वधाकारः पितृणाः, नमस्कारो देवाना,—मुभये३हीज्यन्ते, स्रक्तिषु निदधाति, देवान् वै पि-
ॄन् मनुष्या अनुप्रपिबन्ते, देवानेव पितॄनयाट्, त्रिर्निदधाति, त्री३न्हीदं पुरुपानभि स्म,—
त्रीन् परानन्वाचष्टे, त्रयो हि परे, पिता पुत्रः पौत्रोऽनुसंतत्यै, सर्वासु स्रक्तिषु निदधाति,
र्वासु हि दिक्षु पितरः, सर्वा एवैनं दिशो गमयति, नामुष्यां निदधाति, यदमुष्यां नि-
दध्यान्मृत्युनैनाः परिवेशयेत्, तामेवानूद्यन्त्य,—थ यत्तस्यां निमार्ष्टि तामेव तेन प्रीणाति ॥१८॥
४४-४६

अत्र पितरो मादयध्वमि,—त्युक्त्वा परायन्ति, त आहवनीयमुपतिष्ठन्ते, सुसंदृशं त्वा
वयमि,—त्या तमितोस्तिष्ठन्त्य,—ग्निमेवोपद्रष्टारं कृत्वान्तं प्राणस्य गच्छन्त्य,—मीमदन्त पितरा,

---

[ १८ ] काठ. ३६, १२-१३ । तै. ब्रा. १,६,९ । वा.१९,७० । काण्व. २१,७० ।

[ उशन्तस्त्वा……अत्तवे– ऋ. १०,१६,१२; अथर्व० १८,१,५६; १८,२,३४ ]

[ १९ ] मै. १,१०,३ । काठ. ३६,१३ । तै. ब्रा. १,६,९,८ । वा. २,३१; ३,५२;१९,५८ । काण्व.२,५६; ३,६०; २१,५९ ।

इत्युक्त्वा प्रपद्यन्ते, तं ऊर्णां दशाꣳ वा न्युस्यन्ति, यद्देवान् निर्गच्छन्ति तस्यैषा निरवत्तिः, परेतन पितरः सोम्यासा, इत्याहा,—ऽनुषक्ता वा एतान् पितरः स्युर्व्यावृत्त्यै, समन्तमपः परिषिञ्चन् पर्येति, मार्जनमेवैषां, तदपरिषिञ्चन् पुनः पर्ये,—त्यमुꣳ वा एते लोकं निर्गच्छन्ति ये पितृयज्ञेन चरन्ति, प्रजापति३स्त्वेवैनाꣳस्तता उन्नेतुमर्हन्ति, यत् प्राजापत्यामृचमन्वाह प्रजापतिरेवैनाꣳस्तता उन्नयत्य,—थ यदपरिषिञ्चन् पुनः पर्येत्यमुꣳ वा एतं लोकं पुनरुपावर्तन्ते, पितॄन् वा एतद्यज्ञोऽगन्, पाङ्क्तो यज्ञो, यत् पङ्क्त्या पुनरायन्ति सहैव यज्ञेनायन्ति, मनस्वतीभिरायन्ति, मन एव पुनरुपह्वयन्ते ॥१९॥ ४७

एतद्वा अस्य सꣳवत्स३रो३ऽभीष्टोऽभूदभीष्टा ऋतवो, ऽथ वा अस्य रुद्रा अनभीष्टा, यदेते त्र्यम्बकास्तेनैवास्य रुद्रा अभीष्टाः प्रीता भवन्त्ये,—ककपाला भवन्ति, न वै पुरुषः कपालैराप्य, एकधैवैनमाप्नोत्य,—थो एका वा इयं,—मस्यामेव प्रतितिष्ठत्य,—भिघार्या३ नाभिघार्या३, इति मीमाꣳसन्ते, यदाभिघारयेद् रुद्रायास्य पशूनपिदध्यात्, तन्न सूक्ष्यं,—माभिघार्या एवं, न हि हविरनभिघृतमस्त्यु,—कोल्मुकꣳ हरन्त्ये,—कोल्मुकꣳ हि रुद्राणां, धूपायद्धरन्ति, धूपायद्धि रुद्राणामे,—तां दिशꣳ हरन्त्ये,—षा हि रुद्राणां दिक्, पराचीनꣳ हरान्ति, पराञ्चमेव रुद्रꣳ हरन्त्या,—खुं ते रुद्र पशुं करोमी,—त्याखुकिरा एकमुपवपति, पशुभ्यस्तेन निरवदयते, तस्मात् तान् पशुपतिर्घातुक,—श्चतुष्पथे याजये,—च्चतुष्पथे वै रुद्राणां गृहा, गृहेष्वेव रुद्रं निरवदयत, एष ते रुद्र भाग,—स्तं जुषस्व सह स्वस्राम्बिकया स्वाहेति, शरद्वै रुद्रस्य योनिः, स्वसाम्बिकै,—ताꣳ वा एषोऽन्वभ्यवचरति, तस्माच् शरदि भूयिष्ठꣳ हन्ति, तयैवैनꣳ सह निरवदयते, मध्यमपर्णेन जुहोति, तद्धचरक्षो हतमारण्येन जुहो,—त्यरण्य एव रुद्रं निरवदयते, यत् पात्रेण जुहुयाद्रुद्रं प्रजास्वन्ववनयेत्, तस्मादारण्येन जुहोत्य,—बाम्ब रुद्रमदिमही,—त्यनृणा एवाभुवन्, भेषजं गवे अश्वाय पुरुषाय भेषजमि,—त्यनृणा एव भूत्वा भेषजमक्रत, त्र्यम्बकꣳ यजामहा, इति परियन्ति, तत्रापि पतिकामा पर्येति, पतिवेदनमेवास्या,—स्तत्तानूर्ध्वानुदस्य प्रतिलभन्ते, भगमेव प्रतिलभन्ते, तान् यजमानाय समावपन्ति, भगमेवास्मै समावपन्ति, या पतिकामा स्यात् तस्यै समावपेयु,—र्भगमेवास्यै समावपन्ति, तान् मूते कृत्वा वृक्ष आसजन्ति ॥ रुद्रैष ते भाग,—स्तेनावसेन परो मूजवतोऽतीहि पिनाकहस्तः कृत्तिवासा अवततधन्वा ॥ इति गिरिर्वै रुद्रस्य योनिर,—तो वा एषोऽन्वभ्यवचारं प्रजाः शमायते, स्वेनैवैनं भागधेयेन स्वꣳ योनिं गमयत्य,—नपेक्षमाणा आयन्ति रुद्रस्यानन्ववायाय, परोगोष्ठ

[ २० ] मै. १,१०,४ । काठ. ३६,१४ । तै. ब्रा. १,६,१० । वा. ३,५७–६१ । काण्व. ३,६५–७० ।

ार्जयन्ते, परोगोष्ठमेव रुद्रं निरवदयन्ते, ऽम्बी वै स्त्री भगनाम्नी, तस्मात् त्र्युम्बका, यस्य
 हविरप्रतिष्ठितमप्रतिष्ठितः सो, ऽप्रतिष्ठिता अस्य त्र्युम्बका, आदित्यं घृते चरुं निर्वपेत्
ुनरेत्य गृहेष्वि,—यं९ वा अदितिरि,—यं प्रतिष्ठा, यदादि३त्योऽस्यामेव प्रतितिष्ठति ॥२०॥
४८–५०[६५६]

॥ इति प्रथमकाण्डे चातुर्मास्यानि नाम दशमः प्रपाठकः॥१०॥

अथैकादशः प्रपाठकः।

## वाजपेयः ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं पुनातु वाचस्पतिर्वाचमद्य स्वदातु नः ॥ १
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
विश्व९ ह्यस्यां भुवनमाविवेश तस्यां देवः सविता धर्म९ साविषत् ॥ २
अ३प्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिषु । अश्वा भवत वाजिनः ॥ ३
वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तवि९शतिः। ते अग्रे अश्वमयुञ्ज९स्ते अस्मिन् जवमादधुः॥४
अपां नपादाशुहेमन् य ऊर्मिः प्रतूर्तिः ककुम्वान् वाजसाः । तेन वाज९ सेषम् ॥ ५
देवस्य सवितुः प्रसवे सत्यसवसो वर्षिष्ठं नाक९ रुहेयम् ॥ ६
देवस्य वय९ सवितुः प्रसवे सत्यसवनस्य बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्म ॥१॥ ७
वाज९ वाजिनो जयताध्वान९ स्कभ्नुवन्तो योजना मिमानाः ॥ ८
काष्ठां गछत ॥ ९
शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहि९ वृक९ रक्षा९सि सनेम्यस्मद्युयवन्नमीवाः ॥ १०

---

[ १ ] १,११,६-७ । तै.१,७,७ । काठ. १३,१४ । वा ९,१; ११,७; ३०,१; ९,५; १८,३०; ९,६,७,१०, ( ९ ),१३ । काण्व. १०,१; १२,७; ३४,१; १०,७;; २०,१; १०,९,१०,८, ( १४ ), १८ । मा. श्रौ. १,७,१–२ ।
[वाजस्य नु०......साविषत् । अथर्व. ७,६,४ । अप्स्वन्तर०......सेन् । ऋ. १,२३,१९; अथर्व. १,४,४]

[ २ ] तै. १,७,८ । काठ. १३,१४ । वा. ९,१३.१६; २१,१०; ९,१८; २१,११; ९,१७,१४,१५ । काण्व. १०,१९,२२; २३,१०,१२; १०,२४,२३; २३,११; १०,२०,२१ । मा. श्रौ. ७,१,२ ।
[ शं नो भवन्तु०...... मीवाः । ऋ. ७,३८,७ ।]

वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ ११
तं नो अर्वन्तो हवनश्रुतो हवꣳ विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्यवो महो ये धना समिथेषु जभ्रिरे ॥ १२

एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिपक्ष आसन् ।
क्रतुं दधिक्रामनु सꣳसनिष्यदत् पथामङ्काꣳस्यन्वापनीफणत् ॥ १३
उत स्माऽस्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।
श्येनस्येव द्रवतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥२॥ १४
आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वशंभूः ।
आ मा गन्त पितरो विश्वरूपा आ मा सोमो अमृतत्वेन गम्यात् ॥ १५

इन्द्राय वाचꣳ वदते,—न्द्राय वाचꣳ संꣳवदते,—न्द्रꣳ वाजं जापयते,—न्द्र वाजं जये,—यꣳ
वः सा सत्या सꣳवागभूद्यामिन्द्रेण समदध्व,—मजीजपत वनस्पतया, इन्द्राय वाचꣳ विमुच्यध्वꣳ,
वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतꣳ, वाजिनौ वाजजितौ वाजं जित्वा बृह-
स्पतेर्भागे निमृज्येथाꣳ, स्वो रोहावेहि, स्वो रोहावेहि, स्वो रोहावा,—ऽऽयुर्यज्ञेन कल्पते,
प्राणो यज्ञेन कल्पते, चक्षुर्यज्ञेन कल्पते, श्रोत्रꣳ यज्ञेन कल्पते, मनो यज्ञेन कल्पते, वाग्य-
ज्ञेन कल्पते, ब्रह्मा यज्ञेन कल्पते, पृष्ठꣳ यज्ञेन कल्पते, स्वर्यज्ञेन कल्पते, यज्ञो यज्ञेन
कल्पते, वाजाय स्वाहा, प्रसवाय स्वाहा,—ऽपिजाय स्वाहा, क्रतवे स्वाहा,—ऽहर्पतये
स्वाहा, वाक्पतये स्वाहा, वसवे स्वाहा, स्वर्मूर्धा वैयश्नो व्यश्यन्नान्त्योऽन्त्यो भौवनो,
भुवनस्य पतयेऽधिपतये स्वाहा,—न्नाय त्वा, वाजाय त्वा, वाजजित्यायै त्वे,—षे त्वो,—र्जे
त्वा, रय्यै त्वा, पोषाय त्वा, स्वर्देवा अगामा,—ऽमृता अभूम, प्रजापतेः प्रजा अभूम॥३॥
१६

[वाजे-वाजेऽवत०......देवयानैः । ऋ. ७,३८,८ । तेनो अर्वन्तो०......जभ्रिरे । ऋ. १०,६४,६ । एष स्य वाजी०...... स्वाहा । ऋ. ४,४०,४। उत स्मास्य०...तरित्रतः । ऋ.४,४०,३,]

[ ३ ] मै. १,११,७--८ । तै. १,७, ८--९ । काठ. १४,१ । वा. ९,१९,११,१२,९,२१; १८,२९; २२,३३; ९,२०; १८,२८, २२,३२; ९,२२; १४,२२ । काण्व. १०,२५--२६, १५-१७,१३,२९,२८; १९,४२-४३; २४,४६; १०,२७; १९, ४०; २४,४५; १०,३१; १५,२४। मा. श्रौ. ७,१,३ ।

अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव। प्र नो यच्छ विशस्पते धनदा असि नस्त्वम्॥
प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः। प्र देवीः प्रोत सूनृता प्र वाग्देवी ददातु नः॥
अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचँ विष्णुँ सरस्वतीँ सवितारं च वाजिनम्॥
सोमँ राजानँ वरुणमग्निमन्वारभामहे। आदित्यान् विष्णुँ सूर्यं ब्रह्माणं च बृहस्पतिम्॥
इन्द्रवायू सुसंदृशा सुहवेह हवामहे। यथा नः सर्वा इज्जनः संगमे सुमना असत्॥१७-२१

वाजस्येमं प्रसवः सुषुवेऽग्रे सोमँ राजानमोषधीष्वप्सु।
स विराजं पर्येतु प्रजानन् प्रजां पुष्टिँ वर्धयमानो अस्मे॥ २२
वाजस्येमां प्रसवः शिश्रिये दिवँ स ओषधीः समनक्तु घृतेन।
ता अस्मभ्यं मधुमतीर्भवन्तु वयँ राष्ट्रे जागृयामा पुरोहिताः॥ २३
वाजस्येदं प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः॥ २४
अदित्सन्तं दापयतु प्रजानन् रयिं च नः सर्ववीरं नियच्छतु॥ २५

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्या वाचा यन्तुर्यन्त्रेण बृ-
पतिँ साम्राज्यायाभिषिञ्चामी,—न्द्रँ साम्राज्यायाभिषिञ्चाम्यु,—पयामगृहीतोऽसि, दृषदं
नृषदमायुषदमिन्द्राय जुष्टं गृह्णाम्ये,—ष ते योनि,—रिन्द्राय त्वो,—पयामगृहीतोऽसि,
पवीषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्ये,—ष ते योनि,—रिन्द्राय त्वो,—पयामगृ-
तोऽस्य,—प्सुषदं त्वा घृतसदं भूतसदमिन्द्राय जुष्टं गृह्णाम्ये,—ष ते योनि,—रिन्द्राय त्वो,—
यामगृहीतोऽसि, ग्रह विश्वजनीन नियन्तर्विप्रायाम ते॥ २६

यास्तिस्रः प्रथमजा दिव्यः कोशः समुक्षितः। तासाँ विशिश्नानामिषमूर्जँ समग्रभम्॥२७
इन्द्राय त्वा जुष्टं गृह्णाम्ये,—ष ते योनि,—रिन्द्राय त्वो,—पयामगृहीतोऽसि॥ २८

अपाँ रससमुद्वयसँ सूर्ये शुक्रँ समाभृतम्। अपाँ रसस्य यो रसस्तं ते गृभ्णाम्युत्तमम्॥
२९

---

४ ] तै. १,७,१०,१२। काठ. १४,२-३। वा. ९,२८,२९,२७,२६; ३३,८६; ९,२३--२५,३०,२,४,३; १०,३२; १९,६; २३,३८,२,४। काण्व. १०,३५,३७,३८,३६,३२--३४,३९, २--५; ११,४५; २०,५;२५,४०,२,४। मा. श्रौ. ७,१, १,३; ७,२,५--६ [ अग्ने अच्छा०। ऋ. १०.१४१.१; अथर्व० ३,२०,२। प्र नो यच्छ०। ऋ. १०, १४१,२; अथर्व.३,२०, ३। अर्यमणं बृहस्पति०। ऋ. १०,१४१,५; अथर्व. ३,२०,७। सोमँ राजा०। ऋ० १०,१४१,३; अथर्व. ३,२०,४; सा.९१। इन्द्रवायू सुसंदृशा०। ऋ. १०,१४१,४; अथर्व. ३,२०,६। अदि-(उतादि) त्सन्तं०। अथर्व. ३,२०,८। वाजस्य नु प्रसव०। अथर्व ३,२०,८। देवस्य त्वा- अथर्व.०१९,५१,२
मै० १३

इन्द्राय त्वा जुष्टं गृह्णाम्ये,–ष ते योनि,–रिन्द्राय त्वा ॥ ३०

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं॰ वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषा नम उक्तिं न जग्मुः ॥ ३१

उपयामगृहीतोऽसि, प्रजापतये त्वा जुष्टं गृह्णाम्ये,–ष ते योनिः, प्रजापतये त्वा ॥ अर्था विष्ठा, प्रजापतये त्वा ॥४॥ ३२-३३

देवा वै नाना यज्ञानपश्य,–न्नथ वा एतं॰ सर्वेऽपश्यं॰,–स्तस्मिन् वा अयतन्त, तस्मिन् व्याजिग्युः,–स्तं बृहस्पतिरुदजयद्, बृहस्पतिर्वै देवानां पुरोहितो, यद्वै पुरोहितो ब्राह्मणं॰ शृणोति, तद्राज्ञे, तेनेन्द्रमयाजयत्, स स्वाराज्यमगछत्, स एष स्वाराज्यो यज्ञः, स्वाराज्यं गछति य एतेन यजते, यद् बृहस्पतिरुदजयत् तस्माद् ब्राह्मणो यजेत, यदिन्द्रमयाजयं॰स्तस्माद्राजन्यो, देवा वै नाना यज्ञानाहरन्नि,–ममहमिमं त्वमिं,–त्यथ वा एतं प्रजापतिराहरत्, तस्मिन् वा अपित्वमैछन्त, तेभ्यश्छन्दां॰स्युज्जितीः प्रायछद,–थ वा एतेन प्रजापतिरयजत, स स्वाराज्यमगछत्, स एष स्वाराज्यो यज्ञः, स्वाराज्यं गछति य एतेन यजते, ऽन्नं॰ वै वाज,–स्तद्य एवं॰विद्वानन्नमत्ति वाजयति ह वा एनमन्नमद्यमानं॰, सोमो वै वाजपेय,–स्तद्य एवं॰ विद्वान् त्सोमं पिबति वाजं॰ ह गछति, यावन्तो हि देवाः सोममपिबं॰स्ते वाजमगछं॰,–स्तस्मात् सर्वः सोमं पिपासति, वाजं॰ ह गछति, वाग्घि वाजस्य प्रसवः, सा वै वाक् सृष्टा चतुर्धा व्यभव,–देषु लोकेषु त्रीणि तुरीयाणि, पशुषु तुरीयं॰, या पृथिव्यां॰ साग्नौ सा रथन्तरे, यान्तरिक्षे सा वाते सा वामदेव्ये, या दिवि सा बृहति सा स्तनयित्ना,-वथ पशुषु, ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधु,–स्तस्माद् ब्राह्मण उभयीं॰ वाचं॰ वदति यश्च वेद यश्च न, या बृहद्रथन्तरयोर्यज्ञादेनं तयागछति, या पशुषु तय ऋतेयज्ञं, तद्य एवं॰ वेदाह वा एनमप्रतिक्शातं गछति, यावती वाक्तां॰ हि वेद, वाचा हि दीयते, वाचा प्रदीयते, यो गाथानाराशं॰सीभ्यां॰ सनोति न तस्य प्रतिगृह्य,–मनृतेन हि स तत् सनोति, न मत्तस्य, यदा हि तस्य मदो व्येत्यथ तं तत् तपति ॥५॥ ३४

सप्तदश वा एते द्व्या ग्रहाः प्राजापत्याः, सप्तदशः पुरुषः प्राजापत्य,–श्चत्वार्यङ्गानि शिरोग्रीवमात्मा, वाक् सप्तमी, दश प्राणा, अङ्गेऽङ्गे वै पुरुषस्य पाप्मोपश्लिष्टो, यद्ध्रुतिषजन्

---

[ कुविदङ्ग यवमन्तो० । ऋ. १०,१३१,२; अथर्व. २०,१२५,२ ।]

[ ५ ] काठ. १४,५

[ ६ ] मै. १,११,१ । काठ. १४,६-७ । वा. ९,१; ११,७; ३०,१; ९,५-७ । काण्व. १०,१; १२,७; ३४,१; १०,७,९-१० ।

हान् गृह्णात्यङ्गादङ्गादेवैनं पाप्मनो मुञ्चति, श्रीर्वै सोमः, पाप्मा सुरोपयामा, आगते काले
ञ्चः सोमैरुत्क्रामन्ति, प्रत्यञ्चः सुरोपयामैः, पाप्मनैवैनꣳ विपुनन्ति, तस्मादाहु,—र्वा-
पेययाऽऽज्येव पूत इति, पाप्मना ह्येनꣳ विपुनन्ति, देव सवितः प्रसुव यज्ञं, प्रसुव यज्ञ-
तिं भगायेति, परुषि परुषि जुहोत्यु,—त्सन्नयज्ञो वा एष, को ह तद्वेद यदेतस्य क्रियते
न्नं, सर्वत्वायैव प्रसवाय, वाजस्य नु प्रसवे मातरं महीमि,—ति रथमुपावहरती,—यꣳ वा
दितिर,—नयैवैनं प्रसूतꣳ सवित्रा चोपावहरति वाजस्योज्जित्या, अप्स्वन्तरमृतमप्सु भेषज-
,—त्यश्वान् त्स्नपयन्त्य,—प्सुजा वा अश्वा, स्वादेवैनान् योनेर्जनयन्ति, वायुर्वा त्वा मनुर्वा
,—ति युनक्ति, न वा एतन्मनुष्या योक्तुमर्हन्ति, देवताभिरेवैनान् युनक्त्य,—पां नपा-
ाशुहेम,—न्निति ररांटानि प्रतिमार्ष्टि, पूर्वमेव यजुरुदितमनु वदति, दुन्दुभीन्निह्रादयन्ति,
ाग्वा एषैकारण्यं प्राविशत्, तामेवोज्जयत्य,—थो या वनस्पतिषु वाक्तामेवावरुन्द्धे, सप्तदशः
र्वो भवति, प्रजापतिर्वै सप्तदशः, प्रजापतिमेवाप्नोत्यु,—त्सन्नयज्ञो वा एष, सꣳवत्स-
द्वा अध्युत्सन्नयज्ञोऽवरुध्यते, सꣳवत्सरादेवैनमध्याप्त्वावरुन्द्धे ॥६॥ ३५

देवस्य सवितुः प्रसवे सत्यसवसो वर्षिष्ठं नाकꣳ रुहेयमि,—ति ब्रह्मा रथचक्रꣳ सर्पति, स-
वितृप्रसूत एव वज्रꣳ सर्पति वाजस्योज्जित्या, अथो प्रजापतिर्वै ब्रह्मा यज्ञस्य, प्रजापतिरेवै-
ꣳ वज्रादधि प्रसुवति वाजस्योज्जित्यै,—साम गायते, सत्यꣳ वै साम, सत्येनैवोज्जयत्यु,—
ज्जितिर्वाजयत्य,—न्नꣳ वै वाजो, ऽन्नाद्यस्योज्जित्यै, देवस्य वयꣳ सवितुः प्रसवे सत्यसव-
स्य बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्मे,—ति रथमभ्यातिष्ठति, सवितृप्रसूत एव रथमभ्या-
तिष्ठति वाजस्योज्जित्यै, वाजिनामृचोऽन्वाह वाजस्योज्जित्या, आजिं धावन्ति वाजस्योज्जि-
त्या, अनुदिष्टे रथैर्धावन्ति, दक्षिणयैव स्वर्गं लोकमेति, यदनुदिष्टे रथैर्धावन्ति दक्षिणया
ा एतद्यजमानः सह स्वर्गं लोकमे,—त्यथैष नैवारः सप्तदशशरावो, देवा ओषधीषु पक्कास्वा-
जिमयु,—स्ता बृहस्पतिरुदजयत्, स एतान्निवारान् न्यवृणीत, तन्निवाराणां निवारत्वं, बृह-
स्पतिर्वै ता उदजयत्, तमेव भागिनं करोत्यहिꣳसायै, तमधश्चात्वालꣳ हरन्ती,—ह वा
असा आदित्य आसीत्, तमितोऽध्यमुं लोकमहरꣳ,—स्तद्यतोऽध्यमुं लोकमहरन् यच्चात्वालेऽव-
दधति यजमानमेव स्वर्गं लोकꣳ हरन्त्या, मा वाजस्य प्रसवो जगम्यादि,—ति रथेषु पुनरासृ-
तेषु जुहोति, यमेव वाजमुदजैषुस्तमात्मन्धत्ते, ऽजीजपत वनस्पतया, इन्द्राय वाचꣳ विमु-

[ ७ ] मै. १,११,१;३ । काठ. १४,७-८ । वा. ९,९,१०,१३,१९,१२ । काण्व. १०,१३,१४,१७,२५,२६ ।

*

च्यध्वमि,—ति रथविमोचनीयं जुहोति, यजुषैव युज्यन्ते, यजुषा विमुच्यन्ते, वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतमि,—ति भागिना एवैना अक, —र्वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागे निमृज्येथामि,—ति सर्वानेवैनान् प्रीणात्य,—र्धवशां च सुरोपयामांश्च हरन्ति य आजिं धावन्ति, तेभ्यो यमेव वाजमुदजैषुस्तं परिक्रीणीते, मधुष्ठालं ब्रह्मणे, ब्रह्मण एव तेन परिक्रीणीते, कर्कुभो राजपुत्रः प्राश्नाति, वी३र्यं वै कर्कुब्, वीर्यमेवात्मन् धत्ते ॥७॥

३६

स्वो रोहावेहि, स्वो रोहावेहि, स्वो रोहावेति, ३स्वर्वा एतद्रोक्ष्यन् पत्न्या संवदते, ऽथो अन्वारम्भो वा एष यज्ञस्य, पत्न्या सह स्वर्गे लोके भवता, आयुर्यज्ञेन कल्पते, प्राणो यज्ञेन कल्पता, इत्येतावान् वै पुरुषो, यावानेव पुरुषस्तमाप्नोति, स सर्वो भूत्वा स्वर्गं लोकमेति, दर्भमयं वासो भवति पवित्रत्वाय, गोधूमं चषालं, प्राजापत्या वै गोधूमा, अथ प्रत्यासामोषधीनां सहैवान्नाद्येनामुं लोकमेति, वाजाय स्वाहा, प्रसवाय स्वाहेति, त्रयोदश वा एता आहुतय,—स्त्रयोदश मासाः संवत्सरः, संवत्सरं वावास्मा एतदुपदधाति स्वर्गे लोके, तस्मिन्नेव प्रतितिष्ठ,—त्यन्नाय त्वा, वाजाय त्वा, वाजजित्यायै त्वे,—त्यूषपुटैरर्पयन्ति, प्राजापत्या वा ऊषाः, श्वः श्वो भूयांसो भवन्त्य,—न्नाद्येनैवैनमर्पयन्त्ये,—ति वा ए३षोऽस्माल्लोका३द्योऽमुं लोकमेति, यदूषपुटैरर्पयन्ति तेनास्माल्लोकान्नैति, तेनास्मिंल्लोके धृतो हिरण्यमभ्यवरोहति, तेजो वै हिरण्यं, तेजस्येव प्रतितिष्ठति, बस्ताजिनमभ्यवरोहति, पशवो वै बस्ताजिनं, पशुष्वेव प्रतितिष्ठ,—त्यन्नस्यान्नस्य जुहोति वाजप्रसव्याभि,—रन्नं वै वाजो, ऽन्नाद्यस्यावरुद्ध्या, उभयं ग्राम्यं चारण्यं च जुहोत्युभयस्यान्नाद्यस्यावरुद्ध्या, औदुम्बरेण स्रुवेण जुहो,—त्यूर्ग्वा उदुम्बर, ऊर्जोऽवरुद्ध्यै, सप्तभिर्जुहोति, सप्त वै छन्दांसि, छन्दोभिरेवास्मा अन्नाद्यमवरुन्द्धे, ऽथ वाग्वै छन्दांसि, वाचैवास्मा अन्नाद्यं प्रयच्छति ॥८॥

३७

अथैतेऽतिग्रा३ह्या, यदेवादः परमन्नाद्यमनवरुद्धं तस्यैतेऽवरुद्ध्यै गृह्यन्ते, ऽथैते पशवा आलभ्यन्ते यज्ञक्रतूनामवरुद्ध्यै, यदाग्नेयोऽग्निष्टोमं तेनावरुन्द्धे, यदैन्द्राग्न उ३क्थ्यं तेन, यदैन्द्रो वृष्णिः षोडशिनं तेन, यत् सारस्वती मेषी यदेवादः सप्तदशं स्तोत्रमनाप्तमनवरुद्धं तदे-

[ ८ ] मै. १,११,३ । काठ. १४,८ । वा. ९,२१; १८,२९; २२,३३; १८,२८; २२,३२ । काण्व. १०,२८; १९,४२ २४.४६; १९,४०; २४,४५ ।

[ ९ ] मै. १,३,३१ । काठ. १४,९–१० मा. श्रौ. ७,२,५,६ ।

तयाप्नोति, तदवरुन्द्धे, ऽथैषा वशा, देवाश्च वा असुराश्चास्पर्धन्त, नेमे देवा आसन्नेमेऽ-
रा,—स्ते देवा एताꣳ वशामपश्यꣳ,—स्तया लोकं द्वितीयमवृञ्जतासुरलोकꣳ, यस्यावद्यति स
वलोकाꣳ, यस्य नावद्यति सोऽसुरलोकं,—स्तं लोकमेवैतया द्वितीयꣳ यजमानो वृङ्क्ते भ्रातृ-
यलोकमेव, सारस्व३त्यन्येषामुत्तमा भवति, सारस्व३त्यन्येषां प्रथमा, वाग्वै सरस्वती,
ाचा यज्ञः संततो, वाचैव यज्ञꣳ संतनोति, यद्वै यज्ञस्य विद्वान्न करोति यच्चाविद्वानन्तरेति
च्छिद्रं, तद्वाचैव सरस्वत्या कल्पय,—त्यनिरुक्तः प्रातःसवः, प्रजापतिमेव तेनाप्नोति,
वैयोनिर्वै वाजपेयः प्राजापत्यः, स निरुक्तसामा, यदनिरुक्तः प्रातःसवस्तेन संयोनि रथन्तरꣳ
ाम भवत्याशीया, उज्जित्या, अथो इयꣳ वै रथन्तरम्,—स्यामेव सूयते, वाजवतीर्मा-
ध्यन्दिने पवमाने भवन्त्य,—न्नꣳ वै वाजो, ऽन्नाद्यस्यावरुद्ध्यै, चित्रवतीरार्भवे पवमाने भवन्ति
स्वर्गस्य लोकस्य समष्ट्यै, शिपिविष्टवतीषु स्तुवत, एषा वै प्रजापतेः पशुष्ठास्तनूर्यच्छिपि-
विष्टं, तस्माच्छिपिविष्टवतीषु स्तुवत, आष्टादꣳष्ट्रमुत्तममुक्थानां भव,—त्युत्तरे एव स्तोत्रे अ-
भिसंतनोति, यद्वै यज्ञस्यातिरिच्यतेऽमुं तं लोकमभ्यतिरिच्यते, बृह३त्स्वेवामुं लोकमाप्तुमर्हता,—
न्द्रियꣳ वै वीर्यं बृहद्, यद् बृहता स्तुवते, इन्द्रिये वा एतद्वीर्ये ततो यज्ञस्य यजमानः प्रति-
तिष्ठति ॥९॥ ३८

अग्निरेकाक्षरामुदजयद्,—श्विनौ द्व्यक्षराꣳ, विष्णुस्त्र्यक्षराꣳ, सोमश्चतुरक्षराꣳ, सविता
पञ्चाक्षरां, पूषा षडक्षरां, मरुतः सप्ताक्षरां, बृहस्पतिरष्टाक्षरां, मित्रो नवाक्षराꣳ, व-
रुणो दशाक्षरा,—मिन्द्र एकादशाक्षराꣳ, विश्वे देवा द्वादशाक्षराꣳ, वसवस्त्रयोदशाक्षराꣳ,
रुद्राश्चतुर्दशाक्षरा,—मादित्याः पञ्चदशाक्षरा,—मदितिः षोडशाक्षरां, प्रजापतिः सप्तद३शो,
ऽग्निरेकाक्षरया वाचमुदजयद्,—श्विनौ द्व्यक्षरया प्राणापानावुदजयताꣳ, विष्णुस्त्र्यक्षरया त्रीं-
णिमांल्लोकानुदजयत्, सोमश्चतुरक्षरया चतुष्पदः पशूनुदजयत्, सविता पञ्चाक्षरया पञ्च दिशा
उदजयत्, पूषा षडक्षरया षडृतूनुदजय,—न्मरुतः सप्ताक्षरया सप्तपदाꣳ शक्करीमुदजयन्, बृ-
हस्पतिरष्टाक्षरयाष्टौ दिशा उदजय,—च्चतस्रो दिशश्चतस्रोऽकुशली,—मित्रो नवाक्षरया नव प्राणा-
नुदजयद्, वरुणो दशाक्षरया विराजमुदजय,—दिन्द्र एकादशाक्षरया त्रिष्टुभमुदजयद्, विश्वे
देवा द्वादशाक्षरया जगतीमुदजयन्, वसवस्त्रयोदशाक्षरया त्रयोदशं मासमुदजयन्, रुद्राश्चतुर्द-
शाक्षरया चतुर्दशं मासमुदजय,—न्नादित्याः पञ्चदशाक्षरया पञ्चदशं मासमुदजय,—न्नदितिः षोड-

[ १० ] तै. १,७,११। काठ. १४,४। वा. ९,३१-३४। काण्व. १०,४०-४३।

शाक्षरया षोडशं मासमुदजयत्, प्रजापतिः सप्तदश३शो, ऽग्निरेकाक्षरयोदजयन्मामिमां पृथिवी,—मश्विनौ द्व्यक्षरया प्रमामन्तरिक्षं९, विष्णुस्त्र्यक्षरया प्रतिमां९ स्वर्गं लोकं९, सोमश्चतुरक्षरयाश्रीवीर्नक्षत्राणि, सविता पञ्चाक्षरयाक्षरपङ्क्तिमुदजयद्, या३ह्यक्षरपङ्क्तिः सा पङ्क्ति,—श्चतुर्धा ३ह्येतस्याः पञ्च पञ्चाक्षराणि, पूषा षडक्षरया गायत्रीमुदजय,—चतुर्धा ३ह्येतस्याः षट् षुडक्षराणि, मरुतः सप्ताक्षरयोष्णिहमुदजय९,—श्चतुर्धा ३ह्येतस्याः सप्त सप्ताक्षराणि, बृहस्पतिरष्टाक्षरयानुष्टुभमुदजय,—चतुर्धा ३ह्येतस्या अष्टा अष्टा अक्षराणि, मित्रो नवाक्षरया बृहतीमुदजय,—चतुर्धा ३ह्येतस्या नव नवाक्षराणि, वरुणो दशाक्षरया विराजमुदजय,—चतुर्धा ३ह्येतस्या दश दशाक्षराणी,—न्द्रा एकादशाक्षरया त्रिष्टुभमुदजय,—चतुर्धा ३ह्येतस्या एकादशैकादशाक्षराणि, विश्वे देवा द्वादशाक्षरया जगतीमुदजय९,—श्चतुर्धा ३ह्येतस्या द्वादश द्वादशाक्षराणि, वसुवस्त्रयोदशाक्षरया त्रयोदशं मासमुदजयन्, रुद्राश्चतुर्दशाक्षरया चतुर्दशं मासमुदजय,—न्नादित्याः पञ्चदशाक्षरया पञ्चदशं मासमुदजय,—न्नदितिः षोडशाक्षरया षोडशं मासमुदजयत्, प्रजापतिः सप्तदश३शो, ऽग्नये एकाक्षराय छन्दसे स्वाहा,—ऽश्विभ्यां द्व्यक्षराय छन्दसे स्वाहा, विष्णवे त्र्यक्षराय छन्दसे स्वाहा, सोमाय चतुरक्षराय छन्दसे स्वाहा, सवित्रे पञ्चाक्षराय छन्दसे स्वाहा, पूष्णे षडक्षराय छन्दसे स्वाहा, मरुद्भ्यः सप्ताक्षराय छन्दसे स्वाहा, बृहस्पतयेऽष्टाक्षराय छन्दसे स्वाहा, मित्राय नवाक्षराय छन्दसे स्वाहा, वरुणाय दशाक्षराय छन्दसे स्वाहे,—न्द्रायैकादशाक्षराय छन्दसे स्वाहा, विश्वेभ्यो देवेभ्यो द्वादशाक्षराय छन्दसे स्वाहा, वसुभ्यस्त्रयोदशाक्षराय छन्दसे स्वाहा, रुद्रेभ्यश्चतुर्दशाक्षराय छन्दसे स्वाहा,—ऽदित्येभ्यः पञ्चदशाक्षराय छन्दसे स्वाहा—ऽदित्यै षोडशाक्षराय छन्दसे स्वाहा, प्रजापतिः सप्तदशः ॥१०॥

३९[६९५]

॥ इति प्रथमकाण्डे वाजपेयाभिधान एकादशः प्रपाठकः ॥११॥

॥ इति प्रथमकाण्डं समाप्तम् ॥

# अथ द्वितीयं काण्डम् ।

## अथ प्रथमः प्रपाठकः ।

### काम्या इष्टयः ॥१॥

ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयायु,—रोजो वै वीर्यमिन्द्राग्नी, ओजसैवैनान्
वीर्येण पुनरुपास्यत, ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवा,—नोजो वै वीर्यमिन्द्राग्नी, ओ-
जसैवैनान् वीर्येणाभिभवत्यै,—न्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामो योऽलं प्रजायै सन् प्रजां
न विन्देत, प्रजापतेर्वा इन्द्राग्नी प्रजामपगूहतां, ता एतेन भागधेयेनोपाधावत्, ता अस्मै
प्रजां पुनरदत्ता,—मिन्द्राग्नी खलु वा एतस्य प्रजामपगूहतो योऽलं प्रजायै सन् प्रजां न विन्दते,
ता एव भागधेयेनोपासरत्, ता अस्मै प्रजां पुनर्दत्तो, त्रिन्दद्वती याज्यानुवाक्ये भवतो विंत्या
वै,—न्द्राग्नमेकादशकपालं निर्वपेत् संग्राममभिप्रयो,—नोजो वै वीर्यमिन्द्राग्नी, ओजसैवैनं वी-
र्येणाभिप्रयात्यै,—न्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं संयत्यो,—जो वै वीर्यमिन्द्राग्नी, ओ-
जसैवैनं वीर्येण जयति, स यदा संग्रामं जयेदथैन्द्राग्नमेकादकपालं निर्वपे,—दोजसा वा एष
वीर्येण व्युध्यते यः संग्रामं जयत्यो,—जो वीर्यमिन्द्राग्नी, ओजसैवैनं वीर्येण समर्धयत, ऐ-
न्द्राग्नमेकादशकपालं निर्वपेत् पौष्णं चरुं जनतामभिप्रयो,—नोजो वै वीर्यमिन्द्राग्नी, ओजसैवैनां
वीर्येणाभिप्रयाति, पूषा वीर्यस्यानुप्रदाता, सोऽस्मै वीर्यमनुप्रयछत्यै,—न्द्राग्नमेकादशकपालं
निर्वपेत् पौष्णं चरुं क्षेत्रस्य पतये चरुं क्षेत्रमध्यवस्यं,—न्नोजो वै वीर्यमिन्द्राग्नी, ओजसैवास्मै
वीर्येण लोकं विन्दतः, पूषा वीर्यस्यानुप्रदाता, सोऽस्मै वीर्यमनुप्रयछती,—यं क्षेत्रस्य पत्न्य,—
स्यामेव प्रतितिष्ठति ॥१॥ १

अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् कामाय, संवत्सरो वा अग्निर्वैश्वानरः, संवत्सरे
काम आप्यते, संवत्सरमेवापत्, सोऽस्मै काममाप्नोति यत्कामो भवत्य,—ग्नये वैश्वानराय द्वाद-
शकपालं निर्वपेत् समान्तमभिप्रोक्ष्यन्, त्संवत्सरो वा अग्निर्वैश्वानरः, संवत्सराय समम्य-
ते, संवत्सरमेवाप्त्वावरुणं कामुमभिद्रुह्यत्य,—ग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सनिं प्रे-
ष्यन्, त्संवत्सरो वा अग्निर्वैश्वानरः, संवत्सराय प्रतिगृह्यते, संवत्सरमेवाप्त्वा सातां
सनिं वनुते, स यदा वन्वीताथाग्नये वैश्वानराय द्वादशकपालं निर्वपेत्, संवत्सरो वा अग्नि-

[ १ ] तै. २,२,१ । काठ. ९,१७ ।
[ २ ] तै. २,२,६ । काठ. १०,३-४ ।

वैश्वानरः, सꣳवत्सरमेष प्रयुङ्क्ते, सꣳवत्सर एतस्मै वनुते, तमेव भागिनमक,—स्तꣳ व्यमौग्, यं द्विष्यात्तस्मै दक्षिणां दद्यात्, पाशेन वा एष चरति, तमेवास्मिन् प्रतिमुञ्चत्यै,—कूहायनो गौर्दक्षिणा, स हि सꣳवत्सरस्य प्रतिमा,—ऽग्नये वैश्वानराय द्वादशकपालं निर्वपेदन्नमत्स्यन्, त्सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सरायैवैनदप्युधात्, स यदानन्नमद्यादथाग्नये वैश्वानराय द्वादशकपालं निर्वपेद्, यदेवादोऽनन्नमत्ति तदस्मै सꣳवत्सरः स्वदयति, स्वदितमेवात्ति, सीसं दक्षिणा कृष्णꣳ वा वासो, ऽनन्नꣳ वै सीसम,—नन्नं कृष्णमु,—नन्नेनैवानन्नमुपहत्यान्नाद्यमात्मन् धत्ते, ऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत् संग्राममभिप्रयान्, त्सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सरेणैवैनमभिप्रयात्य,—ऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत् संग्रामꣳ सꣳयत्य, यतरो वै संगृभाणयोरायतनवत्तरो भवति स जयती,—यꣳ वा अग्निं वैश्वानरं, इमामेवायतनमकृता,—ऽस्यां पराक्रꣳस्त, जयति संग्रामꣳ, स यदा संग्रामं जयेदथाग्नये वैश्वानराय द्वादशकपालं निर्वपेत्, सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सरमेष प्रयुङ्क्ते, सꣳवत्सर एतस्मै जयति, तमेव भागिनमक,—स्तꣳ व्यमौग,—ग्नये वैश्वानराय द्वादशकपालं निर्वपेद्यः कामयेता,—ऽनेन राज्ञेमान्यवान् व्रीहीन् वाद्धीयेति, सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्स३रोऽन्नाद्यस्य प्रदाता, तमेव भागधेयेनोपासरत्, सोऽस्मा अन्नाद्यं प्रयच्छत्य,—ग्नये वैश्वानराय द्वादशकपालं निर्वपेद्, वारुणꣳ यवमयं चरुमामयाविनꣳ याजयेद्, वरुणगृहीतो वा एष य आमयावी, वरुणादेवैनं तेन मुञ्चत्य,—सौ वा आदि३त्योऽग्निर्वैश्वान३रो, ऽमुना वा एनमेतं निगृहीतꣳ वरुणो गृह्णाति, तत एनं मुक्त्वा यावानेवास्यात्मा तꣳ वरुणान् मुञ्चति, वारुणं चरुं निर्वपेद्यवमयमीयन्त,—मग्नये वैश्वानराय द्वादशकपालं भूतिकामꣳ याजयेद्, वरुणगृहीतो वा एष यो भूतिकामो, वरुणादेवैनं तेन मुञ्चती,—याꣳश्चरुर्भवत्ये,—तावान् वा आत्मा, यावानेवास्यात्मा तꣳ वरुणान् मुक्त्वा,—ऽसौ वा आदि३त्योऽग्निर्वैश्वान३रो, ऽमुमेनमन्वारम्भयत्य,—मुष्यैनमादित्यस्य मात्रां गमयति ॥२॥ २

अग्नये जातवेदसेऽष्टाकपालं निर्वपेद्दधिक्राव्णा एकादशकपालमग्नये वैश्वानराय द्वादशकपालꣳ यः सर्ववेदसीं प्रथमामिष्टिमालभेता,—ऽग्निर्वा एतस्य तद्वेद यत्रास्येष्टꣳ यत्र सुकृतम,—ग्निरेवास्मै तद्विन्दत्य,—मेध्यो वा एष यः सर्वं ददाति, तद्दधिक्रावैवैनं मेध्यं करोति, सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सरो वा एतस्य तद्वेद यत्रास्येष्टꣳ यत्र सुकृतꣳ, सꣳवत्सर एवास्मै तद्विन्दत्य,—ग्नये सुरभिमतेऽष्टाकपालं निर्वपे,—दभिशस्यमानꣳ याजयेद्, रथप्रोतꣳ वै दार्भ्य-

[ ३ ] तै. २,२,३-५ । वा. ३,२ । काण्व. ३,२ । [ अग्नये जातवेदसे । ऋ० ५,५,१ ]

भ्युश९स९,—स्तं कौलकावर्ती अब्रूतां, तथा त्वा याजयिष्यावो यथा तेऽनुमत्स्यन्ति, यत्र
म्यस्य पशोर्नोपशृण्वस्तद्गच्छ, यस्त्वा कश्चोपायत् तूष्णीमेवास्वेति, त९ ह स्म वै व्याघ्रा उप-
ायं तूष्णीमेवापक्रामन्ति, तौ वै तत्रैव श्वो भूते यज्ञायुधैरन्वैत्याग्निं मथित्वाग्नये सुरभिमतेऽष्टा-
पालं निरवपतां, ततो वा एनं न पर्यवृञ्जन्, यमभिश९सेयुस्तमेतया याजयेद्, दुरभि वा
तमारद्यमभिश९सन्त्ये,—षा वा अग्नेर्भेषजा तनूर्यत्सुरभि,—भेषजमेवास्मा अकः, सुरभिमेन-
कः, शमयत्येवा,—ऽग्नये पवमानायाष्टाकपालं निर्वपेद्दधिक्राव्णा एकादशकपालमग्नये वैश्वानराय
ादशकपालं पुनरेत्य गृहेषु, पवमान एवैनं पुनात्य,—ग्निनैष्टपत्य,—पूतो वा एष यमभिश९-
न्ति, नैनं दधिक्रावा चनं पावयांक्रियादि,—ति खलु वा आहु,—स्तद् दधिक्रावैवैनं पावयति,
९वत्सरो वा अग्निर्वैश्वानरः, स९वत्सर एवैन९ स्वदयत्या,—ग्नेयमष्टाकपालं निर्वपेदग्नीषोमीयमे-
ादशकपालं द्यावापृथिवीयं द्विकपाल९ यः संग्रामं जिगीषेन्नृज्यायं९ वा जिज्यासेद्, ऋद्ध्या एवा-
३यो, ऽग्नीषोमाभ्या९ वै वी३र्येणेन्द्रो वृत्रमहन्, वृत्रं खलु वा एष हन्ति यः संग्रामं जयति
ज्यायं९ वा जिनाति, तद्वात्रघ्नमेवैत,—दिन्द्रो वै वृत्राय वज्रमुदयच्छत्, तं द्यावापृथिवी नान्वम-
येतां, तमेतेन भागधेयेनान्वमन्येता९, यद् द्यावापृथिवीयो वज्रस्यानुमत्या, अथो अनुमतवज्रो
सदिति, स यदा संग्रामं जयेन्नृज्यायं९ वा जिनीयादथाग्नेयमष्टाकपालं निर्वपेदैन्द्राग्नमेकादशक-
लं द्यावापृथिवीयं द्विकपालं, ऋद्ध्या एवाग्ने३या, ऽग्नीषोमाभ्या९ वै वी३र्येणेन्द्रो वृत्रमहन्,
। ओजसा वा वीर्येण व्यार्ध्यत, स एतमैन्द्राग्नमपश्यत्, तेनौजो वीर्यमात्मन्नधत्तौ,—जसा
। एष वीर्येण व्यृध्यते यः संग्रामं जयति नृज्यायं९ वा जिनात्यो,—जो वीर्यमिन्द्राग्नी, ओज-
वैन९ वीर्येण समर्धयतो, ऽथ यद् द्यावापृथिवीयो, वा ये एवास्मै वज्रमन्वम९सातां ताभ्यामेष
ागः क्रियते ॥३॥ ३

अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्राह्मणः कामाया,—ऽग्नीषोमीयो वै ब्राह्मणो देवतया, स्वा-
वदेवतां कामाय भागधेयेनोपासरत्, ता अस्मै काम९ समर्धयतो यत्कामो भवत्य,—ग्नीषोमीयमे-
ादशकपालं निर्वपेद्ब्राह्मणं भूतिकाम९ याजयेद्, देवा वै सत्रमासत कुरुक्षे३त्रेऽग्निः सोमा इन्द्र,—
ेऽब्रुवन्, यतमं नः प्रथम९ यश ऋच्छात्तं नः सहेति, तेषा९ वै सोम९ यश आर्छत्, तमु-
ुसंमगछन्त, तस्मात्सोममभिसंगछन्ते, स हि यशस्वितम,—स्तद्वै सोमो न्यकामयत, स
ुरिमगछत्, तमग्निरन्वगछत्, तौ गिरा अग्नीषोमौ संमभवतां, तस्मात्सदुदि गिरा अग्निर्दहति
ुरौ सोमः, स वा इन्द्रः शिथिरं इवामन्यत, ३सोऽग्नीषोमा अन्वगछत्, ता अब्रवीद्,

[४] तै. २,३,३; २,४,४,३ । काठ. १०,२ ।

याज्युतं मेति, तं वा एतयाग्नीषोमा अयाजयतां, तस्मिंस्तेजोऽग्निरदधादिन्द्रियं सोम,—स्तेता इन्द्रोऽभवद्, यो भूतिकामः स्यात्तमेतया याजयेत्, तेज एवास्मिन्नग्निर्दधातीन्द्रियं सोमो, भवत्येवा,—ऽग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं वसन्ता ब्रह्मवर्चसकामो, ऽग्नीषोमौ वै ब्रह्मवर्चसस्य प्रदातारौ, ता एव भागधेयेनोपासरत्, ता अस्मै ब्रह्मवर्चसं प्रयछतो, वसन्ता यजेत, वसन्तो वै ब्राह्मणस्य ऋतुः, स्व एवास्मा ऋतौ ब्रह्मवर्चसं प्रयछतो, यत्पुरोडाशस्तेनाग्नेयो, यच्छ्यामाकस्तेन सौम्यः, सर्वमेवाग्नीषोमाभ्यां हव्यं संप्रादात्, ता अस्मै सर्वं ब्रह्मवर्चसं प्रयछतः, सौमाग्नी संयाज्ये स्यातां, तेजो वा अग्निरिन्द्रियं सोम,—स्तेजसा च वावास्मा एतदिन्द्रियेण चोभयतो ब्रह्मवर्चसं परिगृह्णाति, सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः, सोमो वै रेतोधाः, पूषा पशूनां प्रजनयिता, सोम एवास्मै रेतो दधाति, पूषा पशून् प्रजनयति, सौमेन्द्रं चरुं निर्वपेत् पुरोधाकामः, सौम्यो वै ब्राह्मणो देवतया,—न्द्रो राजन्यो, ऽनपदोष्यं खलु वै सोमः प्रयछति, तमेव भागधेयेनोपासरत्, सोऽस्मा अनपदोष्यं राष्ट्रं प्रयछत्या,—ग्निवारुणं चरुं निर्वपेत् समान्तमभिद्रुह्यामयावी वा,—ऽनृतं वा एष करोति यः समान्तमभिद्रुह्यति, देवता वा एष आरद्योऽनृतं करोत्य,—ग्निर्वै सर्वा देवता, अत्र वै सापि देवता यामारत्तत एनं मुञ्चति, यद्वारुणो वरुणादेवैनं तेन मुञ्चति, तत् क्राजवं वा एतत् क्रियते सर्वस्याविष्टिः सर्वस्य प्रायश्चित्तिः ॥४॥ ४

सौमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्, तं सोमारुद्रा अभिषज्यतां, तस्य वा एतेनैव शमलमपाहता,—मेतेनास्मिंस्तेजोऽधत्तां, यो ब्रह्मवर्चसकामः स्यात्तमेतया याजयेच्, शमलमेवास्यापहन्ति, तेजोऽस्मिन् दधाती,—यांश्चरुर्भवत्ये,—तावान् वा आत्मा, यावानेवास्यात्मा तावदस्मिंस्तेजो दधाति, शुक्ला व्रीहयो भवन्ति, श्वेता गा आज्याय दुहन्ति, तेज एवैतत्संश्रियते, घृतं प्रोक्षणं भवति, घृतेन मार्जयन्ते, घृते भवति, भूय एवास्मिंस्तेजो दधाति, यस्या रात्र्याः प्रातर्यक्ष्यमाणः स्यान्नास्य तां रात्रीमपो गृहान् प्रहरेयुरा,—पो वै शान्तिः, शमयेयुरेव, परिश्रिते याजयन्ति तेजसः परिगृहीत्यै, साकं रश्मिभिः प्रचरन्ति, साकमेवास्य रश्मिभिः शमलमपघ्नन्ति, तिष्यापूर्णमासे याजयेत्, सौमो वै चन्द्रमा, रुद्रस्तिष्यः, संप्र३त्येवैना उपासरत्, प्राचीनं वै सौमीरोषधयः, प्रतीचीनं रौद्री,—र्न हि प्राचीनं शुष्यन्ति, शुष्यन्ति प्रतीचीनं, मनोर्ऋचो भवन्ति, मनुर्वै यत्किंचावदत्तद्भेषजमेवावदत्, तद्भेषजत्वायैवै,—ताः शक्करीर्भवन्ति शक्त्यै, नाराशंसीर्भवन्ति

[५] तै. २,२,१०। काठ. ११,५।

न्त्यै, किलासत्वाद्वा एतस्य, भयमति ह्युपहन्ति, सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः,
म्यो वै ब्राह्मणो देवतया, पशवः पूषा, स्वाꣳ वा एतद्देवतां पशुभिर्व्यꣳहयते, त्वचमे-
कृत ॥५॥ ५

सौमारौद्रं चरुं निर्वपेत् कृष्णानाꣳ व्रीहीणामभिचरन्, त्सौमीर्वा ओषधय,—स्तत एनं निर्या-
य रुद्रायास्य पशूनपिदधाति, कृष्णा व्रीहयो भवन्ति, तमो वै कृष्णं, मृत्युस्तमो, मृत्यु-
वैनं ग्राहयति, शरमयं बर्हिर्भवति, वैभीदक इध्मः, शृणादिति शरमयं बर्हिर्भवति,
भित्त्यै वैभीदक इध्मः, सौमारौद्रं चरुं निर्वपेदुदश्वित्यविचितानाꣳ व्रीहीणाꣳ यः कामयेत द्वि-
यमस्य लोके जनेयामिति, सौमीर्वा इमाः प्रजा, द्वितीयमेवास्य लोके जनयति, नेमꣳ
रमयं बर्हिर्भवति नेममशरमयं, नेमो वैभीदक इध्मो नेमोऽवैभीदको, द्वितीयमेवास्य लोके
नयति, सौमारौद्रीमामिक्षां निर्वपेदामयाविनꣳ याजये,—दाग्नेयो वै प्रमीतः, सौम्यो जीव,—
भयत एवैनं निष्क्रीणाति, पयो वै पुरुषः, पय एतस्यामयति, पयसैवास्य पयो निष्क्री-
त्य,—पिनद्धाक्षो होता स्यात्, तमरण्यं पराणीय विक्शापयेत्, तस्मा अनड्वाहं दद्यात्, तं
ीत, तस्याश्नीयात्, यत्तस्य नाश्नीयात् प्रमीयेत ॥६॥ ६

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्नभिचर्यमाणो वा, सरस्वतीमप्याज्यस्य यजे,—द-
ग्नेर्वै सर्वा देवता, देवताभिरेवास्य देवताः प्रतिचरति, विष्णुर्यज्ञो, यज्ञेन यज्ञꣳ, वा-
सरस्वती, वाचा वाचं, तदभिचर्याभिप्रयुक्ता,—ऽथो प्रतिचर्यात्येव प्रयुक्ता,—ऽऽग्नावैष्णवं घृते
रुं निर्वपेच्चक्षुष्कामो, ऽग्निर्वै मनुष्याणां चक्षुषः प्रदाता विष्णुर्देवाना,—मेतौ वै चक्षुषः प्रदातारौ,
ा एवं भागधेयेनोपासरत्, ता अस्मै चक्षुः प्रयछतो, धेन्वा वै घृतं पयोऽनडुहस्तण्डुला,—स्त-
न्मिथुनं, मिथुनं चक्षु,—र्मिथुनेनैवास्मै मिथुनं चक्षुर्जनयतः, पयो वै घृतं, पयश्चक्षुः, पयसैवास्मै
पयश्चक्षुर्जनयत,—स्तेजो वै घृतं, तेजश्चक्षु,—स्तेजसैवास्मै तेजश्चक्षुर्जनयतो, हिरण्यं ददात्या,—
युर्वै हिरण्य,—मायुश्चक्षु,—रायुषैवास्मा आयुश्चक्षुर्दधाति, शतमानं भवति, शतायुर्वै पुरुषः
शतवीर्या, आयुरेव वीर्यमाप्नोत्या,—ग्नावैष्णवमेकादशकपालं निर्वपेदभिचर्यमाणो, ऽग्निर्वै सर्वा
देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चास्तृत्यै मध्यतः प्रविशत्या,—ग्नावैष्णवमेकादशकपालं
निर्वपेत् संग्रामे, सरस्वतीमप्याज्यस्य यजे,—दग्निर्वै सर्वा देवता, देवताभिरेवास्य देवताः

[ ६ ] तै. २,२,१० । काठ. ११,५ ।
[ ७ ] तै. २,२,९ । काठ. १०,१ ।

*

प्रणुदते, विष्णुर्यज्ञो, यज्ञेनु यज्ञꣳ, वाक्सरस्वती, वाचा वाचꣳ, यदि मन्येत,
प्रति पुरस्ताचरन्तीति, द्वे पुरोनुवाक्ये कुर्यादेकाꣳ याज्याꣳ, सममेव द्वाभ्यां क्रियते, ऽत्यै-
कया प्रयुङ्क्त, आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुमा,—ग्नावैष्णव-
मेकादशकपालं मध्यंदिने सारस्वतं चरुं बार्हस्पत्यं चरुमा,—ग्नावैष्णवं द्वादशकपालमपराह्णे सार-
स्वतं चरुं बार्हस्पत्यं चरुꣳ यस्य भ्रातृव्यः सोमेन यजेता,—ऽग्निर्वै सर्वा देवता, देवताभिरेवास्य
देवता आप्नोति, विष्णुर्यज्ञो, यज्ञेनु यज्ञꣳ, वाक्सरस्वती, वाचा वाचं, ब्रह्म बृहस्प-
ति,—ब्रह्मणैवास्य ब्रह्माप्नोति, कपालैश्छन्दाꣳसि, पुरोडाशैः सवनानि, मैत्रावरुणमेक-
कपालं निर्वपेत् पयस्याꣳ वा,—ऽनूबन्ध्यामेवैतेनाप्नोति, सैषाध्वरकल्पेष्टि,—र्यज्ञमेवैतयाप्नोति॥७॥
७

आग्निमारुतं चरुं निर्वपेद् वृष्टिकामः, समान्या मृदश्चरुं च कुर्युः कुम्भं च, यस्मिन्नेवाग्नौ
चरुं पचेयुस्तस्मिन् कुम्भं धूपयेयु,—र्धूमो वा अस्यामूं गच्छति नार्चि,—स्तस्मादेतं धूपयन्ति, न
पचन्ति, यदा हवीꣳष्यासादयेयुरथ दक्षिणायाꣳ श्रोण्यां कुम्भमासाद्योदकेन पूरयेयु,—र्यदि पुरा
सꣳस्थानाद्धीर्येता,—ऽद्य वर्षिष्यती,—ति ब्रूयाद्, यदि सꣳस्थिते, श्वो वर्ष्टे,—ति ब्रूयाद्, यदि
चिरमिव वीर्येत, नाद्धा विद्मे,—ति ब्रूया,—दग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्त्ये,—
ते वै वृष्ट्याः प्रदातार,—स्तानेव भागधेयेनोपासरत्, तेऽस्मै वृष्टिं प्रयच्छन्ति, मारुतं चरुं निर्व-
पेत् पयसि प्रैयङ्गवं ग्रामकामो वा पशुकामो वा, पृश्नीनां गवां दुग्धे पृश्नीनां गवामाज्यꣳ स्यात्,
तत्रापि गोमूत्रस्याश्चोतयेयुः, पृश्निर्वै यददुहत् स प्रियङ्गुरभवदि,—यꣳ वै पृश्निर्गवा, तस्या वा
एतत् पयो यत् प्रियङ्गवः, स्वेनैवैनां पयसाच्छैति, प्रियवती याज्यानुवाक्ये भवतः, प्रियमेनꣳ
सजातानां करोति, द्विपदा च चतुष्पदा च भवतो, द्विपदश्चैवास्मै चतुष्पदश्च पशूनवरुन्द्धे,
यथा वत्सं ऊधरभ्यायच्छति वत्सꣳ वा गौरेवमेनꣳ सजाता अभ्यायच्छन्ति, मारुतं त्रयोदशकपालं
निर्वपेद्यस्य यमौ पुत्रौ गावौ वा जायेयातां, निर्ऋता वै पुरुषो यमो जात आशास्तेऽपशूनां
गौ,—र्यत् त्रयोदश, प्रजापतिर्वै त्रयोदशः, प्रजापतिमेवाप्नोति, यद् द्वादशꣳ सꣳवत्सरात् तेन,
यद्गायत्र्यनुवाक्या सꣳवत्सरात् तेन, यज्जगती याज्या पशुभ्यस्तेन, यन्मारुतीष्टिः पशुभ्यस्तेन,
मारुतꣳ सप्तकपालं निर्वपेद्यत्र विड्राजानं जिज्यासे,—दगस्त्यस्य कयाशुभीयꣳ सामिधेनीश्च स्युर्या-
ज्यानुवाक्याश्चा,—ऽगस्त्यो वै मरुद्भ्य उक्ष्णः प्रौक्षत्, तानिन्द्रायालभत, ते वज्रमादायाभ्यु-

[८] तै. २,२,११।

तꣳ,—स्तान् वा एतेनाशमयत्, तञ् शमयत्येवैतेन, सप्तकपालो भवति, सप्त हि मरुतो,
विण्मरुतः, स्वेनैवैनान् भागधेयेन शमयति ॥८॥ ८

ऐन्द्रमेकादशकपालं निर्वपे,—न्मारुतꣳ सप्तकपालꣳ राज३न्यं भूतिकामꣳ याजये,—दैन्द्रो वै
राजन्यो देवतया, मारुती वि,—डिन्द्रियेणैवास्मै विशमुपयुनक्त्य,—नुकामस्मै विशमविवादिनीं
करोत्यै,—न्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ यः कामयेत, विशे च क्षत्राय च समदं
कुर्यामि,—त्यैन्द्रस्यैन्द्रीमनूच्य मारुत्या यजे,—न्मारुतस्य मारुतीमनूच्यैन्द्र्या यजेत्, स्व एवैभ्यो
भागधेये समदं करोति, यदि कामयेता,—ऽतुमुह्यꣳ स्यादिति, पूर्वा३र्धेऽन्यां जनताया गां
निदुष्याज्जघना३र्धेऽन्यामपि, तौ संगछेते, तावदतुमुह्यं भवति, यदि कामयेत, कल्पेते-
यि,—तौ एव हविषी निरुप्य यथायथꣳ यजेत्, कल्पतेऽहै,—न्द्रमेकादशकपालं निर्वपेन्मारुतꣳ
सप्तकपालमभिचर,—न्नुपरिष्टादैन्द्रस्यावद्येदधस्तान्मारुतस्यो,—भयत एवैनानादीपयति ज्येष्ठतश्च
कनिष्ठतश्चै,—न्द्रमेकादशकपालं निर्वपे,—न्मारुतीमामिक्षाꣳ राज३न्यं ग्रामकामꣳ याजये,—न्मध्य
आमिक्षायाः पुरोडाशं निधायोभयस्यावद्येत्, क्षत्रꣳ वा इन्द्रो, विण्मरुतो, विशꣳ वा एत-
न्मध्यतः प्रविशति, पर्यूहमवद्यति, विशैवैनं पर्यूहति, मारुतमेकविꣳशतिकपालं निर्वपेद-
भिचरन्, देवविशा वै मरुतो, न वै विशा प्रत्तं घ्नन्ति, देवविश एवैनं निर्याच्य स्तृणुते,
तं बर्हिषदं कृत्वा समया स्फ्येन विहन्यात् ॥ इदमहममुष्यामुष्यायणस्यैन्द्रवज्रेण शिरश्छिनद्मि ॥
इतीन्द्रवज्रेणैवास्य शिरश्छिनत्त्य,—थ यत्स्फ्यो, वज्रो वै स्फ्यो, वज्रेणैवैनꣳ स्तृणुते ॥
९–११

एना व्याघ्रं परिषस्वजानाः सिꣳहं मृजन्ति महते धनाय ।
महिषं नः सुभ्वं तस्थिवाꣳसं मर्मृज्यन्ते द्वीपिनम३प्स्वन्तः ॥ १२
इति वज्रो वा आपो, यदेतदप्सुमद्यजुर्भवति वज्रेणैवैनꣳ स्तृणुते ॥९॥ १३

अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्य प्रज्ञातेष्टिरतिपद्येत, बहिष्पथꣳ वा एष एति यस्य प्रज्ञा-
तेष्टिरतिपद्यते, ऽग्निर्वै देवानां पथिकृत्, तमेव भागधेयेनोपासरत्, स एनं पन्थामपिनयत्य,—
नड्वान् दक्षिणा, स हि पन्थामपिवहत्य,—ग्नये व्रतपतयेऽष्टाकपालं निर्वपेद्य आहिताग्निः सन् प्रव-
सति व्रत्येद्, बहु वा एष व्रतमतिपादयति य आहिताग्निः सन् प्रवसति, व्रत्ये ह्यहनि स्त्रियꣳ वोपैति
माꣳसꣳ वाश्नात्य,—ग्निर्वै देवानाꣳ व्रतपति,—स्तमेव भागधेयेनोपासरत्, स एनꣳ व्रतमालम्भय-

---

[ ९ ] तै. २,२,११ । [ एना व्याघ्रं......प्स्वन्तः । अथर्व. ४,८,७ ]
[ १० ] तै. २,२,१ । काठ. १०,५–७ ।

त्य,—ग्नये व्रतभृतेऽष्टाकपालं निर्वपेद्य आहिताग्निः सन्नश्रु कुर्या,—दानीतो वा एष देवानां य आहिताग्नि,—स्तस्मादेतेनाश्रु न कर्तवै, न हि देवा अश्रु कुर्वन्त्य,—ग्निर्वै देवानां व्रतभृ,—द्ग्निमेतस्य व्रतमुग्रं,—स्तस्मादेवाधिव्रतमालभते, ऽग्नये यविष्ठायाष्टाकपालं निर्वपेदभिचर्यमाणो, याभिरेवैनमितुरः प्रयुक्तिभिरभिप्रयुङ्क्ते ता अस्माद्यविष्ठो योयावा,—ऽग्नये वाजसृतेऽष्टाकपालं निर्वपेत् संग्रामे, वाजं वा एष सिसीर्षति यः संग्रामं जिगीषत्य,—ग्निर्वै देवानां वाजसृत्, तमेव भागधेयेनोपासरत्, सोऽस्मै वाजं धावत्य,—ग्नयेऽनीकवतेऽष्टाकपालं निर्वपेत् संग्रामे, य३ग्ग्वा अग्नेरनीकमेति न तत् प्रतिधृषे, ऽग्निरेवास्मा अनीकानि जयति, विष्णुमप्याज्यस्य यजे,—देतो वै विष्णुरिमांल्लोकानुदजयद्, विष्णोरेवोज्जितिमन्विमांल्लोकानुज्जयति, एभ्यो लोकेभ्यो भ्रातृव्यं नुदते, ऽग्नये रुद्रवतेऽष्टाकपालं निर्वपेद्यः कामयेत, रुद्रायास्य पशूनपिदध्यामित्य,—ग्निर्वै रुद्रो, रुद्रायैवास्य पशूनपिदधाति, यदि कामयेत, शाम्येदित्य,—ग्नये सुरभिमतेऽष्टाकपालं निर्वपे,—देषा वा अग्नेर्भेषजा तनूर्यत् सुरभि,—र्भेषजमेवास्मा अकः, सुरभिमेनमकः, शमयत्येवा,—ऽग्नयेऽन्नवतेऽन्नादायान्नपतयेऽष्टाकपालं निर्वपेद्यः कामयेता,—ऽन्नवानन्नादोऽन्नपतिः स्यामित्य,—ग्निर्वै देवानामन्नवानन्नादोऽन्नपति,—स्तमेव भागधेयेनोपासरत्, स एनमन्नवन्तमन्नादमन्नपतिं करोति ॥१०॥ १४

अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीया,—दिन्द्रं वै रक्षांस्यसचन्त, ३सोऽग्निं प्राविशत्, तानि वा एनमभिसंममृशन्, स एता विप्रुषोऽजनयत या इमाः स्कूयमानस्य विप्रवन्ते, तानि वा अग्निनैवापाहता,—ऽग्निर्वै देवानां रक्षोहा, तेनैव रक्षांस्यपहते, नक्तं याजये,—न्नक्तं वै रक्षांसि प्रेरते, यर्ह्येव प्रेरते तर्ह्येनान्यपहते, वामदेवस्य पञ्चदश सामिधेनीश्च स्युर्याज्यानुवाक्याश्च, वामदेवश्च वै कुसितायी चाजीमयातामात्मनोः, सा कुसितायी वामदेवरथस्य कूबरमछिनत्, सापूरं न्याप्लवत, युगं वा छेत्स्यामीषां वेति, ३सोऽग्निमुख्यमवैक्षत, स एतं मन्त्रमपश्यत्, तामर्चिरुदौषत्, सार्चिषा दह्यमाना ह्रदं प्राविशत्, स वात्र कौसितो ह्रदो, रक्षांसि वै स तेनापाहत, तद्रक्षांस्येवैतेनापहत, आग्नेयमष्टाकपालं निर्वपेद्यो राष्ट्रे स्पर्धेत यो वा कामयेता,—ऽन्नादः स्यादिति, देवाश्च वा असुराश्चास्पर्धन्त, तान् गायत्री सर्वमन्नं परिगृह्यान्तरातिष्ठत्, तेऽविदु,—र्यतरान् वा इयमुपावत्स्यति त इदं भविष्यन्तीति, तस्यां वा उभय ऐछन्त, तां नाम्नोपैप्सन्॥ दाभि॥ इत्यसुरा आह्वयन्॥ विश्वकर्मन्॥ इति देवाः,

[ ११ ] तै. २,२,२। काठ. १०,५,७।

ता नान्युत्तरा॑श्श्रनोपा॑व॒र्तत, तां देवा एतेन यजुषाऽवृञ्जत ॥ ओजो॑ऽसि, सहो॑ऽसि, बल॑मसि, भ्राजो॑ऽसि, देवानां धाम नामासि, विश्व॑मसि विश्वायुः, सर्व॑मसि सर्वायुरभिभूः ॥ इति संवत्सरो वै गायत्री, संवत्सरो वै तदतिष्ठत्, संवत्सरं वा एषां तदन्नाद्यमवृञ्जत्, तत् संवत्सरमेवैतदन्नाद्यं यजमानो भ्रातृव्यस्य वृङ्क्ते, सैषा गायत्रीष्टिर,—थो आहू, राष्ट्रस्य संवर्ग इति ॥ ११ ॥ १५-२१

ऐन्द्राबार्हस्पत्यं हविर्निर्वपेद्यो राष्ट्रीयो नेव प्रस्तिङ्नुया,—ददितिर्वै प्रजाकामौदनमपचत्, सोच्छिष्टमाश्नात्, तं वा इन्द्रमन्तरेवं गर्भं सन्तमयस्मयेन दाम्नाऽपौम्भत्, सोऽपोब्धोऽजायत, तं वा एतेन बृहस्पतिरयाजयदैन्द्राबार्हस्पत्येन, तस्य तद्दाम स्वयमेवं व्यपद्यत, स इमां दिशो वज्रेणाभिपर्यावर्तत, यो राष्ट्रीयो नेव प्रस्तिङ्नुयात् तमेतेन याजयेदैन्द्राबार्हस्पत्येन, परितो हि वा एष पाप्मना,—ऽथैष न प्रस्तिङ्नोति, बृहस्पतये निरुप्युता, इन्द्राय क्रियते, सर्वत एवैनं मुञ्चति, वज्रेणेमा दिशोऽभिपर्यावर्तते ॥ १२ ॥ २२[७१७]

॥ इति मध्यमकाण्डे प्रथमः प्रपाठकः ॥१॥

अथ द्वितीयः प्रपाठकः।

आदित्या भागं वः करिष्याम्यमुममामुष्यायणमवगमयत ॥ इति ब्रूयाद्धविर्निर्वप्स्यन्, तस्मै एतमादित्यं घृते चरुं निर्वपे,—दादित्या वा इमाः प्रजा,—स्ता एवोपासरत्, ता एनमवगमयन्ति, सप्ताश्वत्था मयूखा अन्तर्वेदि शयीरं,—स्तान् तसंस्थिते रथवाहनस्य मध्यमेपायाम-तिहन्यात् ॥ इदमहमादित्यान् बध्नाम्यामुष्यावगमः ॥ इत्यादित्यान् वा एतद्बध्नाति, त एनं मोक्षमाणा अवगमयन्ति, विशो वीर्यमपाक्रामत्, तदश्वत्थं प्राविशत्, स तेन वीर्येण भर्भ-र्भुवत्, तद्विश एवैतेन वीर्यमवरुन्द्धे, यदि सप्तसु नावगच्छेदिध्मे तानपि कृत्वैतदेव हविर्नि-र्वपे,—दादित्या वा इमाः प्रजा,—स्ता एवोपासरत्, ता एनमवगमयन्ति, यद्येवं सप्तसु, त्रैवै सप्त सप्तादित्या,—स्तानेवोपासरत्, ता एनमवगमयन्ति, यद्येकतयीषु द्वयीषु वावगच्छेद-परोधुका एनं स्यु,—रथ यत्सर्वास्ववगच्छति तथा हानपरोध्योऽवगच्छति, स यदावगच्छेदथादि-

[ १२ ] तै. २,४,१३। काठ. ११,४। मा. श्रौ. ५,१,७।
[ १ ] तै. २,३,१। काठ. ११,६।

त्येभ्यो धारयद्भ्यो घृते चरुं निर्वपे,—दादित्या वा अपरोद्धार, आदित्या अवगमयितार,—स्त
एनं दाध्रति ॥ १-४

अदितेऽनुमन्यस्व सत्याशीरिह मनः ॥ ५

इति निरुद्धस्य राज्ञः पदमाददीत, तद्यः पुरस्ताद् ग्राम्यवादी स्यात् तस्य सभाया अभिवातं
परीत्य विध्वंसयेयुः ॥ ६

प्रेत मरुतः स्वतवस एना विश्पत्यामुं राजानमभि ॥ ७

इति तस्य गृहाद् व्रीहीनाहरेयु,—स्तांस्त्रेधा विचिनुयाद्, ये कृष्णास्तान् कृष्णाजिने उपनह्य
निदध्याद्, ये शुक्लास्तमादित्यं घृते चरुं निर्वपे,—दादित्या वा इमाः प्रजा,—स्ता एवोपासरत्, ता
एनमवगमयन्त्य,—थ येभ्योऽधि विचिनुयात् तानुदङ् परेत्य वल्मीकवपामुद्धृज्य जुहुयात्॥ ८

यदद्य ते घोर आसन् जुहोम्येषां बन्धानां प्रमोचनाय ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः ॥ ९

इति निर्ऋतिगृहीतो वा एष यो निरुद्धो, निर्ऋत्या एवैनं तेन मुञ्चत्ये,—तद्वै विशमवाग,—
न्नथ वा अस्य राज्यमनवगतं, तं येऽमी कृष्णा व्रीहयस्तं वारुणं घृते चरुं निर्वपेद्, वरुणो वै
देवानां राजा, स राज्यस्यावगमयिता, तमेव भागधेयेनोपासरत्, स एनं राज्यमवगमय-
त्ये,—तद्वै नानाविश्य,—मुभयीमेवैतेन विशमवगछति दैवीं च मानुषीं च ॥१॥ १०

सौर्यं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, शतमानो रुक्मो रजतोऽधस्तात्
स्याच्, शतमानो रुक्मो हरित उपरिष्टा,—द्दिहं वा असा आदित्य आसीत्, तमाभ्यां परिगृह्यो-
परिष्टादासा प्रजानां न्यदधु,—रुपरिष्टाद्वा असा आदित्य इमाः प्रजा अधिषद्यात्ती,—यं वै रजता-
सौ हरिण्या,—भ्यामेवैनं परिगृह्योपरिष्टादासां प्रजानां निदधात्यु,—परिष्टादिमाः प्रजा अधिष-
द्यात्ति, पञ्च कृष्णलान्यपि प्रयाजेषु जुहुया,—देतैर्वा असा आदित्य इमान्, पञ्च ऋतूननु
तेजस्वी,—मा एवैनं पञ्च दिशोऽनु तेजस्विनं करोति, प्राजापत्यं घृते चरुं निर्वपेच्, शत-
कृष्णलमायुष्कामो, देवा असुरान् हत्वा मृत्योरबिभयु,—स्ते देवाः प्रजापतिमेवोपाधावं,—
स्तान् वा एतया प्रजापतिरयाजयत्, ततो देवा अमृतत्वमगछ,—न्नमृतं वै हिरण्य,—ममृत-
मायु,—रमृतेनैवैष्वमृतमायुराप्त्वादधाद्, य आयुष्कामः स्यात् तमेतया याजये,—देतद्वै मनुष्य-
स्यामृतत्वं यत् सर्वमायुरे,—त्यमृतं वै हिरण्य,—ममृतमायु,—रमृतेनैवास्मिन्नमृतमायुराप्त्वा

[२] तै. २,३,२ । काठ. ११,४ ।

धाति, तेन स सर्वमायुरेति, न पुरायुषः प्रमीयते, शतकृष्णलो भवति, शतायुर्वै पुरुषः
शतवीर्या, आयुरेव वीर्यमाप्नोति, चत्वारि चत्वारि कृष्णलान्यवद्यति समृद्ध्यै, सर्वं ब्रह्मणे
परिहर्तवा आह, सर्वं ब्रह्मणि यज्ञं प्रतिष्ठापयति, सर्वमस्मिन् ब्रह्मा वीर्यं दधात्य,—थो ब्रह्म
वै ब्रह्मा, ब्रह्मणैवास्मिन् ब्रह्मायुर्दधाति ॥ २ ॥ ११

बार्हस्पत्यं चरुं निर्वपेत्, पुरोधाकाम,—स्तस्य बार्हस्पत्ये ज्योतिष्मती याज्यानुवाक्ये स्यातां,
ब्रह्म वै बृहस्पति,—र्बार्हस्पत्यो ब्राह्मणो देवतया, स्वामेव देवतां पुरोधाया उपासरत्, स्वैनं
देवता पुरोधां गमयति, यद्वै ललाय वीव भाति तज्ज्योति,—स्तस्माज्ज्योतिष्मती, यदि नैव
पुरोधां गच्छेदथैन्द्राबार्हस्पत्यं हविर्निर्वपेद्, ब्रह्म चैव क्षत्रं च सयुजा अक,—स्ताजगेनं पुरोदधते,
बार्हस्पत्यं चरुं निर्वपेत् पयसि ग्राम्कामो वा पशुकामो वा, तस्य बार्हस्पत्ये गणवती याज्यानु-
वाक्ये स्यातां, यो बहुपुष्टस्तस्य गृहात् क्षीरमाहरेयुः, स्यात् स्वासां गवां दुग्धं, स्या-
दुदुकं, पुष्टिरेवैषा संश्रियते, ब्रह्म वै बृहस्पति,—र्बृहस्पतिश्छन्दांसि, छन्दोभिर्बृहस्पतिर्गणी,
स्वां वा एतद्देवतां, भूयिष्ठेनार्पयति, सजातैरेनं गणिनं करोति, ब्राह्मणस्पत्यं चरुं निर्वपेत्
संग्रामे, तस्य ब्राह्मणस्पत्ये वीरवती वयस्वती याज्यानुवाक्ये स्यातां, छदिर्दर्शे याजये,—दु-
ब्रहिः प्रस्तरः स्याद्, बाणवन्तः परिधयो, वयांसि परं ग्राममाविशन्ति, तथा विज्ञेयं,
जेष्यामा इति, ब्रह्म वै ब्रह्मणस्पति,—र्ब्रह्मैवोपासरद्, ब्राह्मणस्पत्यं चरुं निर्वपेद्यत्र कामयेत,
ब्रह्मचलं स्यादिति, तस्य ब्राह्मणस्पत्ये मरुत्वती याज्यानुवाक्ये स्यातां, ब्रह्म वै ब्रह्मणस्प-
ति,—र्विण्मरुतो, ब्रह्मणि वा एतद्विशमधि विनाशयति द्रढिम्नेऽशिथिरत्वाय ॥३॥ १२

बार्हस्पत्यं चरुं निर्वपेद्रामुतं पशुकामः, प्रजापतिः पशूनसृजत, तेऽस्मात् सृष्टाः पराञ्च
आयं,—स्तान् बृहस्पतिश्चान्वैतां, तं यत्रावसंस्ततः शक्रो गर्मुदजायत, तं वा अब्रवी,—
दनेन मा याजयेति, तेन वा एनमयाजयत्, तं पशव उपावर्तन्त, यः पशुकामः स्या-
त्, तमेतेन याजये,—दुप हैनं पशवा आवर्तन्ते, यदा हि स तमेतेनायाजयदथ तं पशव
उपावर्तन्त, सौमापौष्णं चरुं निर्वपेद्रामुतं पशुकामः, प्रजापतिः पशूनसृजत, तेऽस्मात्
सृष्टाः पराञ्च आयं,—स्तेषां पूषणमधिपामकरोत्, तं यत्रावसंस्ततः शक्रो गर्मुदजायत, तं
वा आहर,—दनेन मे प्रतिष्ठेति, स सोमोऽब्रवी,—न्मम वा अकृष्टपच्यमिति, तं सौमापौष्णं
निरवपत्, तं पशव उपावर्तन्त, यः पशुकामः स्यात्, तमेतेन याजये,—दुप हैनं पशवा आव-

[ ३ ] तै. २,३,३; २,१,४।
[ ४ ] तै. २,१,४। काठ. १०,११।

तन्ते, यदा हि स तमेतेनायाजयदथ तं पशव उपावर्तन्त, सोमो वै रेतोधाः, पूषा पशूनां प्रजनयिता, सोम एवास्मै रेतो दधाति, पूषा पशून्, प्रजनयति, प्राजापत्यं चरुं निर्वपेद्वार्मुतं पशुकामः, पृश्नीनां गवां दुग्धे पृश्नीनां गवामाज्यꣳ स्यात्, तत्रापि गोमूत्रस्याश्चोतयेयुः, पृश्निर्वै यदंदुहत्स गर्मुदभव,—दियꣳ वै पृश्निर्गव्या, तस्या वा एतच्च, शिरो यद्रुमुंत,—स्तस्मादेतदाण्डमिव पीयूष इव, तं प्राजापत्यं चरुं निर्वपेत् पशुकामः, प्राजापत्या वै पशवः, प्रजापतिः पशूनां प्रजनयिता, तमेव भागधेयेनोपासरत्, सोऽस्मै पशून् प्रजनयति, वास्त्वमयꣳ रौद्रं चरुं निर्वपेद्यत्र रुद्रः प्रजाः शमायेत, वास्तोर्वै वास्त्वं जातꣳ, वास्त्वमयं खलु वै रुद्रस्य, स्वेनैवैनं भागधेयेन शमयति, तया निषादस्थपतिꣳ याजयेत्, सा हि तस्येष्टिः, कूटं दक्षिणा कर्णो वा गर्दभः ॥४॥ १३

परमेष्ठिने द्वादशकपालं निर्वपेद्यः कामयेत, परमेष्ठी स्यामिति, परमेष्ठी वा एष देवानाꣳ यः परमेष्ठी, परमेष्ठी राजन्यो मनुष्याणां, तमेव भागधेयेनोपासरत्, स एनं परमेष्ठिनं करोति, तस्मै धनुश्च तिस्रश्च प्रयच्छेत् ॥ अग्निष्टे तेजः प्रयच्छत्विन्द्र इन्द्रियं पित्र्यां बन्धुताम् ॥ इत्यग्निरेवास्मै तेजः प्रयच्छती,—न्द्र इन्द्रियं पित्र्यां बन्धुताꣳ, वैश्वदेवं द्वादशकपालं निर्वपेद्भ्रातृव्यवाꣳ,—स्तं बर्हिषदं कृत्वा समया स्फ्येन व्यूहेत् ॥ इदमहं मां चामुं च व्यूहामि ॥ इति यं द्विष्यात्तꣳ, यदधोऽवमृद्येत यच्च स्फ्यं आश्लिष्येत् तद्विष्णव उरुक्रमायानुद्येद्, विष्णुरेवैना अन्तरा विक्रमते, तं पुनः समूहेत् ॥ इदमहं मां चामुं च समूहामि ॥ इति योऽस्य प्रियः स्यात्तꣳ, वैश्वदेवीर्वा इमाः प्रजा,—स्ताभिरेवैतरꣳ व्यूहति, ताभिरात्मानꣳ समूहती,—न्द्राण्यै चरुं निर्वपेत् सेनायामुत्तिष्ठन्त्याꣳ, सेना वा इन्द्राणी, ब्रह्मणैवैनां पुरस्तान्मुखतो जित्यै सꣳश्यति, बल्बजा अपीध्मे स्युः, शक्रो वा एतेऽध्युत्थिता, न्यायेनैवैनामभिनयति, यत्तस्याꣳ सेनायाꣳ विन्देत् सा दक्षिणा, वाचस्पतये चरुं निर्वपेच्छ्रीकामो, यो वै वाचोऽध्यक्षः स वाचस्पति,—स्तच्छ्रीकरणमेवैतत् ॥ ५ ॥ १४-२०

अग्नये वसुमते सतीनानामष्टाकपालं निर्वपेत्, सोमाय रुद्रवते श्यामाकं चरुं,—मिन्द्राय मरुत्वते नैवारमेकादशकपालꣳ, वरुणायादित्यवते यवमयं चरुं, देवा अꣳन्योऽन्यस्य श्री,—ष्टे

[५] काठ. १०,१०।

[६] तै. ब्रा. २,४,४। काठ. १०,१२। वा. ३३,८६; १२,५८। काण्व. १३,५९।

तिष्ठमानाश्चतुर्धा व्युदक्राम,—दग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्तान् वा एतया बृहस्पतिरयाजयत् संज्ञान्या,—त इन्द्रमेवाभिसमावर्तन्ते,—न्द्रमाभिसमजानत, तद्य एतया यजते तमेवाभिसमावर्तन्ते, तमभिसंजानते, तदाहु,—रैन्द्र एकादशकपालः कार्य्य इति,—न्द्रꣳ हि तेऽभिसमावर्तन्ते,—न्द्रमभिसमजानत ॥ २१

संज्ञानं नो दिवा पशोः संज्ञानं नक्तमव्रतः ।
संज्ञानं नः स्वेभ्यः संज्ञानमरणेभ्यः संज्ञानमश्विना युवमिहास्मभ्यं नियच्छतम् ॥ २२
समिन्द्र राया समिषा रभेमहि संꣳ वाजैः पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वत्या रभेमहि ॥ २३
इन्द्रवायू सुसंदृशा सुहवेह हवामहे । यथा नः सर्व इज्जनः संगमे सुमना असत् ॥ २४
संꣳ वो मनाꣳसि संꣳ व्रता समाकूतीरनꣳसत ।
अमी ये विव्रताः स्थ तान्वः संनमयामसि ॥ २५
समाना वा आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ २६
समानो मन्त्रः समितिः समानी समानꣳ व्रतꣳ सह चित्तमेषाम् ।
समानं क्रतुमभिमन्त्रयध्वꣳ समानेन वो हविषा जुहोमि ॥ २७
संगच्छध्वꣳ संजानीध्वꣳ संꣳ वो मनाꣳसि जानताम् ।
देवा भागꣳ यथा पूर्वे संजानाना उपासते ॥ ६ ॥ २८

आग्नेयमष्टाकपालं निर्वपेत् सावित्रं चरुꣳ वायव्याꣳ यवागूं प्रतिधुग्वा भौममेककपालꣳ यस्य हिरण्यं नश्येद्यो वा हिरण्यꣳ विन्दे,—दग्निर्वा अग्रे हिरण्यमविन्दत्, स सवित्रामन्त्रयत, न खलु वै किं चन वायुनानभिगतमस्त्य,—स्याꣳ वै स तदविन्दद्, विद्या एवाग्नेयः, प्रसवाय सावित्रो, ऽभिनीत्यै वायव्या,—ऽथ यद्भौमो, ऽस्याꣳ हि स तदविन्द,—देते वै प्रदातार,—स्तानेव भागधेयेनोपासरत्, तेऽस्मै प्रयच्छन्ति, स यदा विन्देदथैतेभ्य एवं निर्वपेद्, यैरेवाविन्दत्तान्

[ संज्ञानं नः स्वेभ्य०ः......नि यच्छतम् । ऋ. परि. ३६,२; अथर्व. ७,५२,१ । समिन्द्र राया० ......रभेमहि। ऋ. १,५३,५; अथर्व. २०,२१,५। इन्द्रवायू सुसंदृशा.......असत्। ऋ, १०,१४१,४; अथर्व. ३,२०,६। सꣳवो ( वां ) मनाꣳसि......संनमयामसि । अथर्व. ६,९४,१ । समाना ( ...नी ) वा ( व )......सुसहासति । ऋ. १०,१९१,४; अथर्व. ६.६४,३ । समानो मन्त्रः. ......( अभिसंविशध्वम् ) जुहोमि । ऋ. १०,१९१,३; अथर्व. ६,६४,२ । संगच्छध्वꣳ......उपासते । ऋ. १०,१९१,२; अथर्व. ६,६४,१ ]

[ ७ ] तै. २,३,५ । काठ. ११,२ ।

*

भागिनः करोत्यहिꣳसायै, प्रजापतिर्वै सोमाय राज्ञे दुहितॄरददान्नक्षत्राणि, स रोहिण्यामेवाव-
सन्नेतरासु, ता अनुपेयमानाः पुनरगछꣳ,—स्ताꣳ राजयक्ष्मेणाग्राहयत्, स निरस्रवत्,
तस्माद्राजयक्ष्मगृहीतो निःस्रवति, स वै प्रजापतिमेवोपाधावत्, तं प्रजापतिरब्रवीद्, ऋतं
ब्रूहीति, स ऋतमब्रवीद्, यथा सर्वास्वेव समावद्वसानीति, तस्मादेष सर्वास्वेव समावद्वसति,
तस्मै वै प्रजापतिः प्रायश्चित्तिमैछत्, तस्मा अमावास्यायाꣳ वैश्वदेवं चरुं निरवपत्, तेनास्मै
प्रायश्चित्तिमविन्द३त्, सोऽमुमाप्यायमानमन्वाप्यायत, वसीयानभवद्, यो राजयक्ष्मगृ-
हीतः स्यात् तस्मा अमावास्यायाꣳ वैश्वदेवं चरुं निर्वपे,—देतेन वै स तस्मै प्रायश्चित्तिमविन्दत्,
तेनैवास्मै प्रायश्चित्तिꣳ विन्दत्य,—मुमेवाप्यायमानमन्वाप्यायते, वसीयान् भवति ॥७॥ २९

प्रजापतिर्वै देवेभ्यो भागधेयानि व्यकल्पयत्, स इन्द्रोऽब्रवीद्, यदतिरिच्यते तन्ममेति,
तद्वा इन्द्रियमेवात्यरिच्यत, तदिमाँल्लोकाननूर्ध्वमनूदश्रयत, तन्नैकेनाप्नो,—न्न द्वाभ्यां, तत्
तृतीयेनाप्त्वावारुन्द्ध, यत् त्रयः पुरोडाशा भवन्त्येभ्यो वा एतं लोकेभ्य इन्द्रियꣳ वीर्यमाप्त्वा-
वरुन्द्धा, उत्तर उत्तरः पुरोडाशो ज्यायान् भवत्यु,—त्तर उत्तरो हि लोको ज्याया,—निन्द्राय
राज्ञे प्रथमं, इन्द्राय स्वराज्ञे मध्यमं, इन्द्रायाधिराजायोत्तमं, एतानि वै सर्वाणीन्द्रोऽभव-
द्राज्यꣳ स्वाराज्यमाधिराज्य,—मेतानि सर्वाणि भवति य एतैर्यजते, सर्वमेतद्भवति य एवꣳ
वेद, प्रथमामनूच्य मध्यमया यजे,—न्मध्यमामनूच्योत्तमया यजे,—दुत्तमामनूच्य प्रथमया य-
जे,—देवमस्य सर्वा अनुवा३क्या भवन्ति सर्वा याज्या एषां लोकानां प्रतिप्रज्ञात्या अथो अनुसंत-
त्या, इन्द्राय घर्मवते सूर्यवता एकादशकपालं निर्वपेत्तेजस्काम,—स्तेजो वै घर्म,—स्तेजः सूर्य,—
स्तेज एवावरुन्द्धा, इन्द्रायेन्द्रियवता एकादशकपालं निर्वपेत् पशुकाम, इन्द्रियꣳ वै पशवा,
इन्द्र इन्द्रियस्य प्रदाता, तमेव भागधेयेनोपासरत्, सोऽस्मा इन्द्रियं पशून् प्रयछति ॥८॥
३०

इन्द्रायार्कवतेऽश्वमेधवता एकादशकपालं निर्वपे,—न्निरुद्धꣳ याजये,—दन्तꣳ वा एष गतो यो
निरुद्धो, ऽन्तोऽर्को, ऽन्तोऽश्वमेधो, ऽन्तेनैवास्मा अन्ते कल्पयति, वशा दक्षिणा,
वशं मा नयादिती,—न्द्रायार्कवतेऽश्वमेधवता एकादशकपालं निर्वपेद्यः कामयेत, जने म ऋध्येते-
त्य,—न्तो वा एषा ऋद्धीनाꣳ यज्ञानां, ऽन्तो, ऽर्को, ऽन्तोऽश्वमेधो, ऽन्तेनैवास्मा अन्ते कल्प-
यति, वशा दक्षिणा, वशं मा नयादिती,—न्द्रायार्कवतेऽश्वमेधवता एकादशकपालं निर्वपेद्-

---

[८] तै. २,३,६। काठ. १०,१०,८।
[९] तै. २,२,७–८। काठ, १०,८।

श्री,—यदा वै श्रियोऽन्तं गच्छत्यथ पापीयान् भवत्य,—न्तोऽर्कों, ऽन्तोऽश्वमेधो, ऽन्तमेवालब्ध
पापीयान् भवती,—न्द्रायार्कवतेऽश्वमेधवता एकादशकपालं निर्वपेद्यः कामयेत, महायज्ञो मो-
नमे,—दित्येते वा इन्द्रस्य यज्ञिये तन्वौ यदर्कश्चाश्वमेधश्च, ते एवालब्ध, ताभ्यां महाय-
मालभता, इन्द्राय घर्मवते सूर्यवता एकादशकपालं निर्वपे,—दिन्द्राय मन्युमते मनस्वता एका-
शकपाल,—मिन्द्रायेन्द्रियवता एकादशकपाल,—मिन्द्रायार्कवतेऽश्वमेधवता एकादशकपालं भूति-
काम्ं याजये,—दिदं वा इन्द्रस्य घर्मश्च सूर्यश्चे,—दमस्य मन्युश्च मनश्चे,—दमस्येन्द्रश्चेन्द्रियं चे,—
दमस्यार्कश्चाश्वमेधश्चै,—तानि वै सर्वाणीन्द्रोऽभव,—देतानि सर्वाणि भवति य एतैर्यजते, सर्वमे-
तद्भवति य एवं वेद ॥९॥ ३१

इन्द्रायांहोमुचा एकादशकपालं निर्वपे,—दामयाविनं याजये,—देषा वा इन्द्रस्य भेषजा
तनूर्यदंहोमु,—क्तमेव भागधेयेनोपासरत्, स एनमंहसो मुञ्चती,—न्द्राय त्रात्रे एकादशकपालं
निर्वपेद्यो ज्यान्या मारणादपरोधाद्वा बिभीया,—दिन्द्रो वै त्राते,—न्द्रोऽपरोद्धा, तमेव भागधेये-
नोपासरत्, स एनं त्रायता, इन्द्रायान्वृजवा एकादशकपालं निर्वपेज्ज्येष्ठबन्धु,—रिन्द्रियं वै
ज्येष्ठबन्धु,—रिन्द्रियेणैवैनानन्वृजून् कुरुता, इन्द्राय प्रवभ्रायैकादशकपालं निर्वपेत् संग्रामे,
प्रवभ्रो वा इन्द्रो वृत्राय वज्रं प्राहरत्, प्रवभ्र एवैभ्यो वज्रं प्रहरती,—न्द्राय वै मृधायैकादशक-
पालं निर्वपेत् संग्रामे, मृधो वा एष विहन्ति यः संग्रामं जयति, मृध एव विहता, इन्द्रा-
याभिमातिघ्ने एकादशकपालं निर्वपेत् संग्रामे, ऽभिमातीर्वा एष हन्ति यः संग्रामं जयत्य,—
भिमातीरेव हता, इन्द्रायाभिमातिषाहा एकादशकपालं निर्वपेद्यः कामयेत, विषहेया,—ऽभयं
मे स्यादिती,—न्द्रो वै वृत्राय वज्रमुदयच्छत्, तं दानवा नान्वमन्यन्त, तमेतेन भागधेयेना-
न्वमन्यन्त, ततो वैसोऽभिमातीरहन्, वृत्रमहन्, वृत्रं खलु वा एष हन्ति यः संग्रामं जयति,
तद्वार्त्रघ्नमेवैतत् ॥१०॥ ३२

ऐन्द्रमेककपालं निर्वपे,—न्निरुद्धं याजये,—दा प्रेहि परमस्याः परावता, इति याज्यानुवा-
क्ये स्यातां, परावतं वा एष गतो यो निरुद्धः, परावत एवैनमध्याप्त्वावगमयत्यै,—न्द्रं
त्रयोदशकपालं निर्वपे,—न्निरुद्धं याजये,—दतिरिक्तं वै त्रयोदश,—मतिरिक्तो निरुद्धो, ऽति-
रिक्तादेवैनमतिरिक्तमाप्त्वावगमयती,—न्द्राय वज्रिणा एकादशकपालं निर्वपे,—दिन्द्राय वृत्रघ्ने
एकादशकपाल,—मिन्द्राय वृत्रतुरा एकादशकपालं यस्य भ्रातृव्यः सोमेन यजेत, वज्रं वा
एष भ्रातृव्यायोच्छ्रयति यः सोमेन यजते, यद्वज्रिणे, वज्रेणैवास्य वज्रं स्तृणुते, यद्वृत्रघ्ने,

[ १० ] तै. २,२,७-८। काठ. १०,९।

भ्रातृव्यो वै वृत्रो, हन्त्येवैनꣳ, यद्वृत्रतूरे, भ्रातृव्यो वै वृत्र,—स्तरत्येवैन,—मिन्द्राय क्षेत्रं-
जयायैकादशकपालं निर्वपेद्यः क्षेत्रे पशुषु वा विवदेते,—न्द्रो वै देवानां क्षेत्रंजय,—स्तमेव भागधे-
येनोपासरत्, सोऽस्मै क्षेत्रं पशून् जयती,—न्द्रायाधिराजायैकादशकपालं निर्वपेद्यत्र राजानः
सदृशा इव स्यु,—रिन्द्रो वै देवानामधिराज,—स्तमेव भागधेयेनोपासरत्, स एनमाधिराज्यं
गमयति ॥११॥ ३३

इन्द्राय मन्युमते मनस्वत एकादशकपालं निर्वपेत् संग्रामे, मन्युना वै वीर्यं क्रियत, इन्द्रि-
येण जयति, वीर्यं चैवैष्विन्द्रियं च जित्यै दधाति, मन्यवे चरुं निर्वपेत् संग्रामे, मन्युना
वै वीर्यं क्रियते, वीर्यमेवैषु जित्यै दधाति, यं जीवग्राहं गृह्णीयुस्तꣳ विकृन्तेयु,—र्मन्योः स्वि-
देव सत्यमक,—रिन्द्राय मनस्वत एकादशकपालं निर्वपेद्यः कामयेत, पुण्यः स्यामनाधृष्य इति,
मनो वै श्रीस्त्विषिः, श्रियमेवास्मिꣳस्त्विषिं दधाति, सꣳवत्सरं नु पुरा मनसो न कीर्तयेत्,
सꣳवत्सरेण वा अनाप्तमाप्यते, सꣳवत्सरेणैवास्मा आप्त्वा तेजः श्रियं त्विषिं दधाति ॥१२॥
३४

यस्य सान्नाय्यं चन्द्रमा अभ्युदियाद्ये पुरोडाꣳश्याः स्युस्ताꣳस्त्रेधा कुर्याद्, ये मध्यमास्तम-
ग्नये दाꣳत्रेऽष्टाकपालं निर्वपेद्, ये स्थविष्ठास्तमिन्द्राय प्रदात्रे दधꣳश्चरुꣳ, ये क्षोदिष्ठास्तꣳ
विष्णवे शिपिविष्टाय शृते चरु,—मग्निर्वै मध्यमस्य दाते,—न्द्रो ज्येष्ठस्य प्रदाता,—ऽथ यत्
क्षोदिष्ठं तच् शिपिविष्टं, तदाप्नोति, पशूनेव, सोमो वा एतस्यातिरिच्यते यस्य सान्नाय्यं
चन्द्रमा अभ्युदेति, स वै पशूनेवाभ्यतिरिच्यते, यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा
वत्सानपाकुर्याद्, ये पुरोडाꣳश्याः स्युस्ताꣳस्त्रेधा कुर्याद्, ये क्षोदिष्ठास्तमग्नये सनिमतेऽष्टाक-
पालं निर्वपेद्, ये मध्यमास्तꣳ विष्णवे शिपिविष्टाय शृते चरुꣳ, ये स्थविष्ठास्तमिन्द्राय प्रदा-
त्रे दधꣳश्चरु,—मग्निरेवास्मै तद्विन्दति यदीह, विष्णुस्तद्यदन्तरिक्षा, इन्द्रस्तद्यद्दिवि, संत्वानो
गा इच्छन्ति, यदेते तण्डुला विभाज्यन्ते, संत्वानो वा एत एष्टारोऽभिरोद्धार एवा,—ऽऽग्नेयमष्-
टाकपालं निर्वपेद्रतश्री,—स्तस्य गौर्धेनुर्दक्षिणा, स प्राङ् प्रयाय वैष्णवं त्रिकपालं, तस्य वडबा
धेनुर्दक्षिणा, स प्राङ् प्रयाय गिरिं गत्वाद्री वा प्राजापत्यं घृते चरुं, तस्य पुरुषी धेनुर्दक्षिणा,
यदाग्नेय इमां तेनाक्रमते, यद्वैष्णꣳवोऽन्तरिक्षं तेन, यत् प्राजापꣳत्योऽमुं तेनु लोकꣳ, यत्
प्राङ् प्रयात्यभि स्विदेवाक्रमीद्, यद्गिरिं गछत्यपो वान्तꣳ स्विदेवागन्, यत् तिस्रो धेनवो

[ ११ ] तै. २,२,८,१। काठ, १०,८।
[ १३ ] तै. २,३,२,६,७। काठ. ११,१।

दक्षिणा, त्रयो वा इमे लोका, इमानस्मै लोकान् धेनुरक, —रिमानस्मै लोकान् प्रदापयति, उत्तान्ह वा अस्मा इमाँल्लोकान् दुहे य एवं वेद, सौमेन्द्रं चरुं निर्वपेच् श्यामाकं सोमवामि ना, इन्द्रो वै त्वष्टुः सोममपिबदनुपहूयमान, —स्तस्योर्ध्वः सोमपीथोऽपतत्, ते श्यामाका अभवन्, त्सोमपीथेन वा एष व्यृध्यते यः सोमं वमिति, यत् सौम्यः, सोमपीथेनैवैनं समर्धयती, —न्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमिति, यदैन्द्रः, इन्द्रियेणैवैनं वीर्येण समर्धयति, शिथिर इव हि वा एतस्य सोमपीथो, ऽथैष सोमं वमिति, यच् श्यामाकस्तण्डुलैः श्रीणाति सोमपीथस्य धृत्यै ॥१३॥ ३५[७५२]

॥ इति मध्यमकाण्डे द्वितीयः प्रपाठकः॥२॥

## अथ तृतीयः प्रपाठकः ।

आग्नेयमष्टाकपालं निर्वपेन्मैत्रावरुणीं पयस्यामामयाविनं याजयेद्, ऋद्ध्या एवाग्नेयो, ऽथो अस्थन्वन्तमेवैनं कृत्वा प्रतिष्ठापयती, —श्वरा वै पयस्या ऋते पशोरशान्ता निर्मृजः, पशुरस्यालभ्यः शान्त्या अनिर्मार्गाये, —ते वै पशवो यद् व्रीहयश्च यवाश्च, यद् व्रीहिमयः पुरोडाशो भवति तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय, मैत्रावरुणीं ब्राह्मणस्य स्या, —न्मैत्रावरुणो हि ब्राह्मणो देवतयै, —न्द्रवारुणीं राजन्यस्य स्या, —दैन्द्रवारुणो हि राजन्यो देवतया, —ऽग्निवारुणीं वैश्यस्य स्या, —दग्निर्वै सर्वा देवता, अत्र वैश्यस्यापि देवता, —ऽऽमयाविनं याजयेत्, स्वामेव देवतां प्रायश्चित्त्या उपासरद्, वरुणगृहीतो वा एष य आमयावी, वरुणादेवैनं तेन मुञ्चति, पयो वै पुरुषः, पय एतस्यामयति, पयसैवास्य पयो निष्क्रीणाति, यद्व्यूहति, विकृत्य हि शल्यं मध्यतो निर्हरन्ति, तद्यक्ष्मं वात्रास्यैतन्मध्यतो निर्हरन्त्य, —थ यत् पुनः समुह्याग्नये समवद्यति यथा शल्यं निर्हृत्योष्णीषेण वेष्टयन्त्येवं तद्भूतिकामं याजयेत्, स्वामेव देवतां प्रायश्चित्त्या उपासरद्, वरुणगृहीतो वा एष यो भूतिकामो, वरुणादेवैनं तेन मुञ्चति, पयो वै पुरुषः, पय एष इच्छति यो भूतिमिच्छति, पयसैवास्मै पयोऽवरुन्द्धे, यद्व्यूहति यज्ञस्य गोपीथाया, —ऽथ यत् पुनः समूहति भूत्यैवैनं समूहति, ग्रामकामं याजयेत्, स्वामेव देवतां प्रायश्चित्त्या उपासरद्, वरुणगृहीतो वा एष यो ग्रामकामो, वरुणादेवैनं तेन मुञ्चति, पयो वै पुरुषः, पय एष इच्छति यो ग्राममिच्छति, पयसैवास्मै पयोऽवरुन्द्धे, यद्व्यूहति यज्ञस्य

[ १ ] तै. २,३,१३ । काठ, ११,१; ११,११ ।

गोपीथाया,—ऽथ यत् पुनः समूहति ग्रामेणैवैन॒ꣳ समूहत्ये,—कपालान् जुहोत्य,—त्रात्र वै वरुणस्य पाशा,—स्तत एनं मुञ्चति, यन्नान्ना जुहुयाद्, विकृर्षः स यज्ञस्या,—ऽग्नौ सर्वे होतव्याः समृद्ध्यै ॥ या वां मित्रावरुणा ओजस्या तनूस्तया वाꣳ विधेम, तयेममुं मुञ्चतमꣳहसो, या वां मित्रावरुणौ सहस्या तनूस्तया वाꣳ विधेम, तयेममुं मुञ्चतमꣳहसो, या वां मित्रावरुणौ यातव्या तनूस्तया वाꣳ विधेम, तयेममुं मुञ्चतमꣳहसो, या वां मित्रावरुणौ रक्षस्या तनूस्तया वाꣳ विधेम, तयेममुं मुञ्चतमꣳहसो, या वां मित्रावरुणा ओजस्या सहस्या यातव्या रक्षस्या तनूस्तया वामविधाम, तयेममुममौक्तमꣳहसो, यस्ते राजन् वरुण देवेषु पाशस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते राजन् वरुणाप्सु पाशस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते राजन् वरुण द्विपात्सु चतुष्पात्सु पशुषु पाशस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते राजन् वरुणौषधीषु वनस्पतिष्वप्सु पृथिव्यां दिक्षु पाशस्तं त एतेनावयजे, तस्मै ते स्वाहा ॥ एते वै वरुणस्य पाशा,—स्तत एनं मुञ्चति ॥ १ ॥ १-३

वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान्, देवाश्च वा असुराश्चास्पर्धन्त, ते देवाः संग्रहणेनायजन्त, ते यत्किंचासुराणाꣳ स्वमासीत् तत् समगृह्ण,—न्मनाꣳसि वावैषां तत् समगृह्णꣳ,—स्तेऽमनसः पराभवन्, भ्रातृव्यवान् यजेत, मनोग्रहणꣳ वा एत,—न्मनाꣳसि वा एतद्भ्रातृव्याणाꣳ संगृह्णाति, तेऽमनसः पराभवन्ति, ग्रामकामो यजेत, मनोग्रहणꣳ वा एत,—न्मनाꣳसि वा एतत् सजातानाꣳ संगृह्णाति, तेऽस्मान्मनोगृहीता नापयन्ति, सर्वेषाꣳ सजातानां गृहादाज्यमाहरेयु,—र्यावतामेव कियतां च गृहादाज्यमाहरन्ति तेषाꣳ सर्वेषां मनाꣳसि संगृह्णाति, तेऽस्मान्मनोगृहीता नापयन्त्या,—मनेन जुहोत्या,—मनस एवैनान् करोति ॥ आमनस्य देव ये सजाताः समनसस्तानहं कामये हृदा, ते मां कामयन्ताꣳ हृदा, तान्मा आमनसस्कृधि स्वाहा,—ऽऽमनस्य देव ये पुत्राः समनसस्तानहं कामये हृदा, ते मां कामयन्ताꣳ हृदा, तान्मा आमनसस्कृधि स्वाहा,—ऽऽमनस्य देव याः स्त्रियः समनसस्ता अहं कामये हृदा, ता मां कामयन्ताꣳ हृदा, तान्मा आमनसस्कृधि स्वाहा,—ऽऽमनस्य देव ये पशवः समनसस्तानहं कामये हृदा, ते मां कामयन्ताꣳ हृदा, तान्मा आमनसस्कृधि स्वाहा ॥ एते वै सजाताः सजाता इव पुत्रा इव स्त्रिय इव पशव इव, तैरात्मानमभिसꣳयुङ्क्ते, तैर्भवति, पृषती गौर्धेनुर्दक्षिणा, सा हि वैश्वदेव्य,—थ

[ १ ] तै. १,३,१ । काठ. ११,२ ।

यद्वैश्वदेव्यथ यद्वैश्वदेवीष्टि,—र्वैश्वदेवीर्वा इमाः प्रजा,—स्ता एवावारुन्द्ध, ता आद्या अकृत, बहिरात्मं वै प्रयाजानुयाजा, आत्मा देवता, यत् प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुया-द्बहिरात्मं सुजातान् दधीता,—ऽथ यन्मध्यतो जुहोति, मध्यत एव सुजातानात्मन् धत्ते, यदि कामयेत, ताजगेयुस्ताजक् परेयुरिति, दारुमयेण जुहुया,—च्चराचरा हि वनस्पतयो, यदि कामयेत, ध्रुवाः स्युः कृच्छ्रादेयुरिति, मृन्मयेन जुहुयात् ॥ ध्रुवा ३हीयं, ध्रुवोऽसि, ध्रुवस्त्वं देवेष्वेधि, ध्रु३वोऽहं सुजातेषु भूयासं प्रियः सुजातानामुग्रश्चेत्ता वसुवि,—दुग्रोऽस्यु,—ग्रस्त्वं देवेष्वेध्यु,—३ग्रोऽहं सुजातेषु भूयासं प्रियः सुजातानामुग्रश्चेत्ता वसुवि,—दभिभूरस्य,—भिभूस्त्वं देवेष्वेध्य,—भिभूरहं सुजातेषु भूयासं प्रियः सुजातानामुग्रश्चेत्ता वसुवित्, परिभूरसि, परिभूस्त्वं देवेष्वेधि, परिभूरहं सुजातेषु भूयासं प्रियः सुजातानामुग्रश्चेत्ता वसुवित्, सूरिरसि, सूरिस्त्वं देवेष्वेधि, सूरिरहं सुजातेषु भूयासं प्रियः सुजातानामुग्रश्चेत्ता वसुवित् ॥ एते वै सुजा-तास्तानस्मिन् दधाति, तानस्मादनपक्रामिणः करोति ॥ २ ॥　　४-८

अथैषोऽश्वः प्रतिगृह्यते, स वा उभयतोदन् प्रतिगृहीतो निर्बभस्त्यस्येन्द्रियं च पशूंश्च, वरुणो वा अश्वो वरुणदेव३त्यो, यो वा अश्वं प्रतिगृह्णाति वरुणं स प्रसीदति, तदश्वहविषा यष्टव्युं निर्वरुणत्वाय, चतुष्कपाला भवन्ति, चतुष्पाद्वा अश्वः, कपालैरेवैनमाप्नोति, या-वन्तोऽश्वास्तावन्तः पुरोडाशा भवन्ति, सर्वत एवैनं मुञ्चत्ये,—कोऽधिभवति, यन्नोपस्मरति तस्मा एव स, यः पुनः प्रतिग्रहीष्यन् त्स्यान्न स यजेत, यद्धि पुनः प्रतिगृह्णीयात् पुनर्वरुणं प्रसीदे,—दथ यः पुनः प्रतिग्रहीष्यन् त्स्यात् तस्य वारुणा नेमाः स्युः सौर्यवारुणा नेमा, यद्वा-रुणो, वरुणादेवैनं तेन मुञ्चत्य,—थ यत्सौर्यैः, स्वामेव देवतामुपप्रतिगृह्णात्यात्मनोऽहिंसाया, एकविंशतिः सामिधेनीर्भवन्त्य,—सा आदित्य एकविंशः, प्रजापतिरसा आदित्यः, प्राजा-पत्योऽश्वो, यावानेवाश्वस्तमाप्नोति, सर्वे वा अन्ये पशवो योनिमन्तः पुरुषयोनयो, ऽयोनि-रश्वोऽप्सुजा, यदेषोऽपोनप्त्रीयश्चरुर्भवति योनिमन्तमेवैनमकः, स्व एवैनं योनौ प्रतिष्ठापयति ॥ यस्ते राजन् वरुण गायत्रच्छन्दाः पाशो ब्रह्मन् प्रतिष्ठितस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते राजन् वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते राजन् वरुण जगच्छन्दाः पाशो विशि प्रतिष्ठितस्तं त एतेनावयजे, तस्मै ते स्वाहा, यस्ते रा-जन् वरुणानुष्टुप्छन्दाः पाशो दिक्षु प्रतिष्ठितस्तं त एतेनावयजे, तस्मै ते स्वाहा ॥ छन्दांसि वै

---

[ ३ ] तै. २,३,१२ । काठ. १२,६ ।

वरुणस्य पाशा,—स्तैरेनं गृह्णाति, यैरेनं गृह्णाति तैरेनं मुञ्चत्य,—पोनप्त्रीयाभ्यां द्वाभ्यां जुहोति,
य एवाप्स्व१न्तो वरुणस्तत एनं मुञ्चति ॥ ३ ॥ ९-११

अग्नेरायुरसि, तेनास्मा अमुष्मा आयुर्देही,—न्द्रस्य प्राणोऽसि, प्राणं देह्यमुष्मै यस्य ते प्राणः,
स्वाहा, पितॄणां प्राणोऽसि, प्राणं दत्तामुष्मै येषां१ वः प्राणः, स्वाहा, विश्वेषां देवानां
प्राणोऽसि, प्राणं दत्तामुष्मै येषां१ वः प्राणः, स्वाहा, बृहस्पतेः प्राणोऽसि, प्राणं देह्यमु-
ष्मै यस्य ते प्राणः, स्वाहा, प्रजापतेः प्राणोऽसि, प्राणं देह्यमुष्मै यस्य ते प्राणः स्वाहा ॥
१२

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत् तत् सर्पिः । यदम्रियत तद् घृतम् ॥ १३
घृतस्य पन्थाममृतस्य नाभिमिन्द्रेण दत्तं प्रयतं मरुद्भिः ।
तत्त्वा विष्णुरन्वपश्यत् तत्त्वेडा गव्यैरयत् ॥ १४

पावमानस्य त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोस्त्वा वीर्येणोत्सृजे, बृहता त्वा रथंतरेण
त्रैष्टुभ्या वर्तन्या शुक्रस्य त्वा वीर्येणोद्धरे, ऽग्नेष्ट्वा मात्रया जागत्या वर्तन्या देवस्त्वा सविता-
न्नयतु जीवात्वै जीवनस्यायै ॥ १५

इदं१ वर्चो अग्निना दत्तमागान्महि राधः सह ओजो बलं१ यत् ।
दीर्घायुत्वाय शतशारदाय प्रतिगृभ्णामि महत इन्द्रियाय ॥ १६
इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सोम राजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ १७

अग्निरायु,—स्तस्य मनुष्या आयुष्कृत,—स्तेनायुषायुष्मानेधि, ब्रह्मायु,—स्तस्य ब्राह्मणा आ-
युष्कृत,—स्तेनायुषायुष्मानेधि, यज्ञ आयु,—स्तस्य दक्षिणा आयुष्कृत,—स्तेनायुषायुष्माने-
ध्य,—मृतमायु,—स्तस्य देवा आयुष्कृत,—स्तेनायुषायुष्मानेध्य,—श्विनोः प्राणोऽसि, तौ ते
प्राणं दत्तां, तेन जीव, मित्रावरुणयोः प्राणोऽसि, तौ ते प्राणं दत्तां, तेन जीव, बृह-

[ ४ ] तै. २,३,१० । काठ. ११,७ । वा. ३४,५२ । काण्व. ३३,४० [ इदं१ वर्चो०... सहओजोवयो बलम् ।
इन्द्रियाय त्वा०... शतशारदाय । अथर्व० १९,३७,१-२ । इममग्न० । अथर्व० २,२८,५ । जरदष्टिर्य-
थासत् । ऋ० परि० २७,८; अथर्व० ८,५,२१ । दीर्घायुत्वाय शतशारदाय । अथर्व० १,३५,१; ८,५,२१,
१२,२,६ ]

पतेः प्राणोऽसि, स ते प्राणं ददातु, तेन जीव, प्रजापतेः परमेष्ठिनः प्राणोऽसि, स ते
णं ददातु, तेन जीव ॥४॥ १८

आग्नावैष्णवमेकादशकपालं निर्वपेत्, सारस्वतं चरुं बार्हस्पत्यं चरुं पूर्वेद्युरामयाविन९ याजये,—
ग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताभिश्चैवास्मिन् यज्ञेन चायुर्दधाति, वाक्सरस्वती,
ह्म बृहस्पति,—र्वाचा चैवास्मिन् ब्रह्मणा चायुर्दधात्य,—थो प्राणा वै देवताः, प्राणान् वा एतत्
र्वेद्युर्गृहीत्वोपवसति, स श्वो भूत आग्नेयमष्टाकपालं निर्वपेत्, सौम्यं पयसि चरुमादित्यं घृते
चरु९ वारुणं चरु९ युवमयमियन्तमग्नये वैश्वानराय द्वादशकपालमामयाविन९ याजयेद्, यो वै प्र-
मीयतेऽग्निं तस्य शरीरं गच्छति सोम९ रसो, यदाग्नेयः, शरीरमेवास्य तेन निष्क्रीणाति,
त् सौम्यो, रसं तेन, यावानेव तं निष्क्रीये,—य९ वा अदिति,—रस्यामधि प्रजाः प्रजाय-
ते, ऽस्यामेवैनमधिप्रजनयती,—या९श्चरुर्भवत्ये,—तावान् वा आत्मा, यावानेवास्यात्मा
९ वरुणान्मुक्त्वा, स९वत्सरो वा अग्निर्वैश्वानरः, स९वत्सर एवैनं प्रतिष्ठापयति, स९व-
त्सरायुषमेनं करोत्य,—ग्नेरायुरसि, तेनास्मा अमुष्मा आयुर्देहीत्य,—ग्निर्वै मनुष्याणामायुषः प्र-
दाता, सोऽस्मा आयुः प्रयच्छति, पञ्चभिर्जुहोति, पाङ्क्तः पुरुषो, यावानेव पुरुषस्त९
समीरयति, यावानेव पुरुषस्त९ समीरयित्वा,—ऽय९ वाव यः पवत एष प्राणं, आभ्यो वा
एष दिग्भ्योऽधिपवत, एतदेव३त्या वा इमा दिशो, यथादेवत९ वावैनमेतदाभ्यो दिग्भ्योऽधि
समीरयित्वा प्राणानस्मिन् दधाति ॥ १९

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत् तत् सर्पिः । यदध्रियत तद् घृतम् ॥ २०

इति घृतस्य वा एतन्महिमानमुदाचष्टे, ऽथो महयत्येवैनत्, पावमानस्य त्वा स्तोमेन गाय-
त्रस्य वर्तन्योपा९शोस्त्वा वी३र्येणोत्सृजा, इति यथा वा इद९ वध्यमुत्सृजत्युद्धरत्युन्नयत्येवं
त,—देतावद्वा अस्ति स्तोमा ग्रहाच्छन्दा९सि, यावद्देवास्ति तेनास्मा आयुर्दधाति, यज्ञेनास्मा
आयुर्दधाति, सर्व ऋत्विजः पर्याहुः, सर्वे वा एत एतस्मै चिकित्सन्ति, सर्व एवास्मा आ-
युर्दधाति, ब्रह्मणो हस्तमालभ्य पर्याहु,—ब्रह्म वै ब्रह्मा, ब्रह्मणैवास्मिन् ब्रह्मायुर्दधाति, हि-
रण्यादधि घृतं निष्पाययन्त्य,—मृत९ वै हिरण्य,—मायुर्घृत,—ममृतादेवैनमध्यायुर्निष्पाययन्ति
निरिव धयत्या,—युरेवात्मन् धत्ते, तदस्मा आबध्नात्या,—युषैन९ समर्धयत्या,—ग्रेय्याबध्नात्य,—

[५] तै. २,३,११। काठ. ११,८।

*

ग्निर्वै सर्वा देवता, सर्वाभिरेवास्मिन् देवताभिरायुर्दधात्य,—ग्निरायु,—स्तस्य मनुष्या आयुष्कृत,—स्तेनायुष्पायुष्मानेधीति, यो वै देवानायुष्मतश्चायुष्कृतश्च वेद सर्वमायुरेति, न पुरायुषः प्रमीयत, एते वै देवा आयुष्मन्तश्चायुष्कृतश्च यदिमे प्राणा,—स्तेऽस्मिन्नायुर्दधात्य,—श्विनोः प्राणोऽसि, तौ ते प्राणं दत्तां, तेन जीवे,—तीमे वा एते प्राणा,—स्तानस्मिन् दधाति, तानस्मादनपक्रमिणः करोति, दश देया, दश ह्यात्मन् प्राणाः, प्राणानस्मिन् दधात्य,—श्वो देयो, वासो देयꣳ, हिरण्यं देयं, गौर्देयो, वरो देयो, बहु देयम् ॥५॥ २१

आग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चकपालं दधि मधु घृतं धाना उदकं, तत्सꣳसृष्टं भवत्य,—र्यम्णे चरुर्भवत्यृ,—द्ध्या एवाग्नेयं, ऐन्द्रः पञ्चकपालः, पाङ्क्तो यज्ञः, पङ्क्ती याज्यानुवाक्ये, पाङ्क्ताः पशवः, पाङ्क्तः पुरुषो, यावानेव पुरुषस्तमाप्नोति, स सर्वो भूत्वा पशूनाप्नोति, पशव इव ह्येतत् सꣳसृष्ट,—मथो यावन्त एव पशवस्तानस्मै सꣳसृजति, तदाहु,—रैन्द्र एकादशकपालः कार्या, इत्यैन्द्रा हि पशवो, ऽथो आहुः, प्राजापत्यं कार्यमिति, प्राजापत्या हि पशवः, प्रजापतिः पशूनां प्रजनयिता, तमेव भागधेयेनोपासरत्, सोऽस्मै पशून् प्रजनयत्य,—थैषोऽर्यम्णे चरु,—र्यो ददाति सोऽर्यमा, दानमर्यमा, दानकामा अस्मै प्रजा भवन्त्य,—ग्नये भ्राजस्वतेऽष्टाकपालं निर्वपेत् सौर्यं चरु,—मग्नये भ्राजस्वतेऽष्टाकपालं चक्षुष्कामꣳ याजये,—दग्नेर्वै मनुष्या नक्तं चक्षुषा पश्यन्ति सूर्यस्य दिवा,—तौ वै चक्षुषः प्रदातारौ, ता एव भागधेयेनोपासरत्, ता अस्मै चक्षुः प्रयच्छतः, समानꣳ वै चक्षुर्दधातु, यत् समानी देवता चरुमभितो भवति नानानमेवास्मै चक्षुषी प्रतिदधाति, यावदन्यतरेणाक्ष्णा पश्यति तावदुभाभ्यां पश्येद्यच्चरुरन्तरा न स्या,—दथ यच्चरुरन्तरा भवति, तस्मादिदमन्तरा चक्षुषोर्विधृत्यै, शुक्ला व्रीहयो भवन्ति, श्वेता गा आज्याय दुहन्त्ये,—वमिव ह्यसा आदित्यः समृद्ध्यै, पयसि भवति, पयो वै घृतं, पयश्चक्षुः, पयसैवास्मै पयश्चक्षुर्दधाति, सौरीभिरादधाति, चक्षुरस्मिन् दधाति ॥६॥ २२

देवा असुराणाꣳ वेशत्वमुपाय,—न्निन्द्रस्तु नाप्युपैत्, तेषाꣳ वा इन्द्रियाणि वीर्याण्यपाक्राम,—न्नग्ने रथंतर,—मिन्द्रस्य बृहद्, विश्वेषां देवानाꣳ वैरूपꣳ, सवितुर्वैराजं, त्वष्टू रेवती,

[६] तै. २,३,८। काठ. ११,४–५।
[७] तै. २,३,७। काठ. ११,५।

रुता२ शक्करी, तानि वा इन्द्रोऽन्वपाक्रामत्, तैरात्मानमभिसमयुङ्क्त, तैरभवद्, यो भूतिका-
ः स्यात् तमेतया याजये,—देवैरेवैनमिन्द्रियैर्वीर्यैरात्मानमभिसं२युङ्क्ते, तैर्भवति, द्वादशकपालो
वति वैश्वदेवत्वायो,—त्तानानि कपालान्युपदधाति, तत्स्विच्चरुमुकरानिर्दाहाया,—ऽभिशस्य-
ान२ याजयेद्, यस्य वै देवा अन्नमदन्त्यदन्ति तस्य मनुष्या अन्न२, सर्वा वा एता देवताः,
र्वा वावास्यैतद्देवता अन्नमजीघस,—दुदन्ति हास्य मनुष्या अन्नम् ॥ इन्द्राय राथंतरायानुब्रूहि॥
इति रथंतरस्या ऋचमनूच्य बृहत ऋचा यजेत् ॥ इन्द्राय बार्हतायानुब्रूहि ॥ इति बृहत ऋचमनूच्य
थंतरस्य ऋचा यजेत् ॥ इन्द्राय वैरूपायानुब्रूहि ॥ इति वैरूपस्या ऋचमनूच्य वैराजस्य ऋचा य-
जेत् ॥ इन्द्राय वैराजायानुब्रूहि ॥ इति वैराजस्या ऋचमनूच्य वैरूपस्य ऋचा यजेत् ॥ इन्द्राय रैव-
तायानुब्रूहि ॥ इति रेवतीमनूच्य शक्कर्या यजेत् ॥ इन्द्राय शाक्करायानुब्रूहि ॥ इति शक्करीमनूच्य
रेवत्या यजे,—देवैरेवैनमिन्द्रियैरेताभिर्देवताभिर्व्यतिषजति, पर्यूहमवघत्ये,—तैरेवैनमिन्द्रियैरेता-
भिर्देवताभिः पर्यूहति, पशवो वै बृहत्य,—ग्नी रुद्रो, यद् बृहत्या वषट्कुर्याद्रुद्रायास्य पशू-
नपिदध्या,—दथो बृहती२ ह्ययातयाम्नीं पशवोऽनुप्रजायन्ते, ऽनुवाक्यायाश्चत्वार्यक्षराणि याज्या-
मभ्यत्यूहत्य,—नुष्टुभं च संपादयति पङ्क्तिं च, वाग्वा अनुष्टुप्, प्रजापतिः पङ्क्तिं,—र्वाचि
वा एतत् प्रजापतिमप्यस्रात् प्रजननाय, तन्मिथुनं, तस्मादेवं मिथुनाद्यजमानः प्रजया च पशु-
भिश्च प्रजायते ॥७॥ २३–३५

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेण शुक्रां२ शुक्रेण ।
देवीं देवेनामृताममृतेन सृजामि सं२ सोमेन ॥ ३६
सोमोऽस्यश्विभ्यां पच्यस्व, सरस्वत्यै पच्यस्वे,—न्द्राय सुत्राम्णे पच्यस्व ॥ ३७
पुनातु ते परिस्रुत२ सोम२ सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ३८
वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ॥ ३९

[८] तै. १,८,२१; ३,२,८,३। तै. ब्रा. १,४,३; २,६,१,३। काठ. १२,९। वा. १९,१,४,३,६; १०,३१–३२; २३,३८; ७,४,८–१२,१६,२०,२५,३०-४०; ८,१,७–९,११,३३–३५,३८–४१,४४—४७; ९,२–४; १०,३२; १९,६,८; २०,३३; २३,२,४; २६,३—१०;। १९,३५,७,४७। काण्व. २१,१,४,३,५; ११,४४–४५; २५,४०; ७, ४,७,८,१०, ११,१५,२१,२४,२७,३०–४०; ८,६–८,१२,१४–१६,१९—२९; १०,२—५;११,४५; २१,५,७; २२,१८; २५,२,४; २८,४—११; २१,३५; २१,६,४९] [पुनातु ( ति ) ते०…तना । ऋ० ९,१,६। वायोः पूतः…सखा । अथर्व० ६,५१,१। इन्द्रस्य युज्यः सखा । ऋ० १,२२,१९; सा. १६७१]

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वꣳ वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषा नम उक्तिं न जग्मुः ॥ ४०

उपयामगृहीतोऽस्य, — च्छिद्रां त्वाच्छिद्रेणा, — ऽश्विभ्यां जुष्टं गृह्णाम्ये, — ष ते योनि, — रश्विभ्यां
त्वो, — पयामगृहीतोऽस्य, — च्छिद्रां त्वाच्छिद्रेण, सरस्वत्यै जुष्टं गृह्णाम्ये, — ष ते योनिः, सरस्व-
त्यै त्वो, — पयामगृहीतोऽस्य, — च्छिद्रां त्वाच्छिद्रेणे, — न्द्राय सुत्राम्णे जुष्टं गृह्णाम्ये, — ष ते योनि, —
रिन्द्राय त्वा सुत्राम्णे ॥ ४१

यदत्र शिष्टꣳ रसिनः सुतस्य यमस्येन्द्रो अपिबच् शचीभिः ।
अहं तमस्य मनसा घृतेन सोमꣳ राजानमिह भक्षयामि ॥ ४२
नाना हि वां देवहितꣳ सदस्कृतं मा सꣳसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसिष्टꣳ स्वꣳ योनिमाविशन्तौ ॥ ४३
द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
याभ्यामिदꣳ विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥ ४४
ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः ।
या तेषामवया दुरिष्टिः स्विष्टिं नस्ताꣳ विश्वकर्मा कृणोतु ॥ ४५
अयज्ञियान्यज्ञियान्मन्यमानः प्राणस्य विद्वान्त्समरे न धीरः ।
एनो महच्चकृवान् बद्ध एष तꣳ विश्वकर्मन् प्रमुञ्चा स्वस्तये ॥ ४६
यजमानमृष्या एनसाहुर्विहाय प्रजामनुतप्यमानाः ।
मधव्यौ स्तोका अप तौ रराध सं नस्ताभ्याꣳ सृजतु विश्वकर्मा ॥८॥ ४७

कुवलसक्तुभिराश्विनꣳश्रीणाति, बदरसक्तुभिरैन्द्रं, कर्कन्धुसक्तुभिः सारस्वतꣳ, वाग्वै सरस्वती, वाचैवास्मिन्त्स्वादुमानं दधात्य, — थ यैनमसा अश्लीलꣳ वागभिवदत्य, — त्यपविष्ट व्याधिष्टेति, सैनं पुनः कल्याणꣳ वदति, सिꣳहा अध्वर्युर्ध्यायति, व्याघ्रौ प्रतिप्रस्थाता, वृकौ यजमान, एषा सुरा भवति, स यैरेव तदिन्द्रियैर्वीर्यैर्व्यृध्यते तान्यस्मिन्नाप्त्वा धत्तो,

---

[कुविदङ्ग यवमन्तो०...जग्मुः। ऋ. १०,१३१,२; अथर्व० २०,१२५,२ ।
ये भक्षयन्तो०। अथर्व० २,३५,१ । अयज्ञियान्य० ( अदान्यान्त्सो० )—स्वस्तये। अथर्व० २,३५,३।
यजमानमृ० ( यज्ञपतिमृ० — ) विश्वकर्मा। अथर्व० २,३५,२ ]

[ ९ ] काठ. १२,१०,११।

ाह्मणस्य मूर्धन्त्साद्या मेध्यत्वाया,—ऽन्नꣳ वै सुरा, मेध्यꣳ वा अन्नं, तेन मेध्ये,—का पुरोरु-
—का याज्ये,—कुथास्मिन् वीर्यं दधाति, ब्राह्मणः पार्ययित३व्य,—स्तेन हविः क्रियत, आत्म-
पैया,—ऽऽत्मन्नेव वीर्यं धत्ते, ऽग्नौ सर्वा होत३व्याः समृद्ध्यै, मध्यतो वा एष पाप्मना गृहीतो
त समया व्येति, मध्यत एवैनं पाप्मनो मुञ्चति, यदाहवनीये जुहुयान्न पाप्मना व्यावर्तेत,
क्रियेत भेषजं,—मथ यद्दक्षिणे जुहोति वि पाप्मना वर्तते, क्रियते भेषजं,—मथ यद्विक्षारयत्ये,—
स्रुव ३होषं विक्षरति शतक्षरो भवति, शतायुर्वै पुरुषः शतवीर्या, आयुरेव वीर्यमाप्नोति,
द्वा एतस्य व्याधिं यत्प्रामायि पितॄन् वा एतस्य तद्गगन्, यत् पितृमतीभिरनुमन्त्रयन्ते पितृभ्य
वैनं तेन समीरयन्ति, यत् तिस्र,—स्तृतीये हि लोके पितरो, ऽथ यच्चत्वारो, दिग्भ्य
वैनं तेन समीरयन्ति ॥९॥ ४८[८००]

॥ इति मध्यमकाण्डे तृतीयः प्रपाठकः॥३॥

अथ चतुर्थः प्रपाठकः।

विश्वरूपो वै त्वाष्ट्र आसीत् त्रिशीर्षासुराणाꣳ स्वस्रीयः, स सोममेकेन शीर्ष्णापिबत् सुराम-
ना,—ऽन्नमेकेनावयत् स इन्द्रोऽमन्यता,—ऽयꣳ वावेदं भविष्यती,—ति तेन समलभत, तेन
गशरमपतत्, स तक्षाणं तिष्ठन्तमब्रवी,—दाधावे,—मान्यस्य शीर्षाणि छिन्धी,—ति तस्य
क्षोपस्कंद्य परशुना शीर्षाण्यछिनत्, तस्मात्तक्ष्णे शिरो धृतं, तस्मादुस्यान्नमन्नाद्यं, तस्य
त् सोमपꣳ शिरा आसीत् स कपिञ्जलोऽभवद्, यत् सुरापꣳ स कुलविङ्को, येनान्नमावु-
त्स तित्तिरिः, स वै त्वष्टा पुत्रे हते सोममाहरद्दत इन्द्रं, तमधः शतशलेऽसुनो,—दथो आहुः
हस्रशला, इति तस्मिन् वा इन्द्र उपहवमैछत, तन्नोपाह्वयत, तं प्रासंहादायु नाड्या निर-
पिबत्, स सोमपीथेन व्याध्र्यत, तस्मात् सोमो नानुपहूतेन पेयः, सोमपीथेनु ह व्यर्धुको
भवति, यदितोऽमुच्यत तौ सिꣳहा अभवताꣳ, यदितस्तौ व्याघ्रौ, यदितस्तौ वृकौ,
त् प्रथमं निरष्टीवत्तत्कुवलमभवद्, यद् द्वितीयं तद्बदरꣳ, यत्तृतीयं तत् कर्कन्धु,—र्यदधस्तात्
ता सुरा, तꣳ वा एतयाश्विना अयाजयताꣳ सौत्रामण्या, स यैरेव तदिन्द्रियैर्वी३र्यैर्व्यार्ध्युत
ान्यस्मिन्नाप्त्वाधत्ताꣳ, सोमेनातिपुपुवानꣳ याजये,—दिन्द्रियेण वा एष वीर्येण व्यृध्यते यꣳ
सोमोऽतिपवते, यावदेवेन्द्रियꣳ वी३र्यं तदस्मिन्नाप्त्वा दधाति, राजसूयेनाभिषिषिचानꣳ

[ १ ] तै. १,५,१। काठ. १२,१०।

याजये,—दिन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यते, यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति, भूतिकामं याजये,—दिन्द्रियेण वा एष वीर्येण व्यृध्यते योऽलं भूत्यै सन्न भवति, यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति, ज्योगामयाविनं याजये,—दिन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य ज्योगामयति, यावदेवेन्द्रियं वी३र्यं तदस्मिन्नाप्त्वा दधाति, नानार्तेन यष्ट३व्य,—मित्याहु,—रार्तयज्ञं इव३ह्येष, तदाहु,—र्यष्टव्यमेव, सर्वो हि पुरुषा आर्तः, सर्वो बुभूषति, यदाश्वि३न्य,—श्विनौ ह्यभिषज्यतां, यत् सारस्वती, वाग्वै सरस्वती, वाचा ह्यभिषज्यतां, यदैन्द्री,—न्द्रे हि तौ तानीन्द्रियाणि वीर्याण्याप्त्वाधत्ताम्॥ १॥ १

सीसेन क्लीबात् कार्यी,—ऽनृतं वै सीस,—मनृतं क्लीबो, ऽनृतं सुरा,—ऽनृतेनैवानृतादनृतं क्रीणाति, तदाहुः, का३र्या वडबा दक्षिणेति, सृत्वरी वडबा३ह्येषा, सृत्वरी वडबा,—ऽश्विनं प्रथममालभन्ते, ऽथ सारस्वती,—मथैन्द्र,—मेवमेव वपाभिश्चरती,—न्द्र एवैषु तदधिभवत्यै,—न्द्रः पुनः प्रचरतां प्रथमो भवती,—न्द्रं वा एतत् पुनरालभन्ते सेन्द्रियत्वायै,—न्द्री वपानामुत्तमा भवत्यै,—न्द्रः पुरोडाशानां प्रथमो, वी३र्यं वा इन्द्रो, वीर्य एवैनमभिसंधत्तः, प्रसवाय सावित्रो, निर्वरुणत्वाय वारुणो, मध्यतो३ह्येष वरुणगृहीतः, पश्चाद्वा एषा सृष्टा प्रतीचीनशीर्ष्णी, यदुपरिष्टात् पुरोडाशो भवत्यपिहित्या अच्छिद्रत्वाय, सह समवत्तं भवति, सहेडामुपह्वयन्ते संहित्या, अथो इडाया अविदोहाय, यद्वै सौत्रामण्या व्यृद्धं तदस्याः समृद्धं, यदन्यदेवत्याः पुरोडाशा भवन्त्यन्यदेवत्याः पशवस्तदस्या व्यृद्धं सत् समृद्ध,—मधं वै प्रजापतेरात्मनो धैर्यमासी,—दुर्धं माल्व्यं, यद्धैर्यं तत् पुरस्तादकुरुत, यन्माल्व्यं तत् पश्चात् पर्यौहत, यद्धैर्यं, सोमो वै स, ततो ब्राह्मणमसृजत, तस्माद्ब्राह्मणः सर्व एव ब्रह्माभि धीरो, यन्माल्व्यं, सुरा वै सा, ततो राजन्यमसृजत, तस्माज्ज्यायांश्च कनीयांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलालपत आसते, माल्व्यं हि तत्, पाप्मा वै माल्व्यं, तस्माद्ब्राह्मणः सुरां न पिबेत्, पाप्मनात्मानं नेत्संसृजा इति, तदुतैतद्राष्ट्रीयाय ब्राह्मणं ब्रूयात्, तद्य एवं विद्वान्त्सुरां पिबति न हैनं हिनस्त्ये,—षा वै प्रजापतेर्वीर्यवती तनू,—र्वीर्यं प्रजापति,—र्वीर्यमस्मिन् दधाति ॥ २ ॥ २

ततो यः सोमोऽत्यरिच्यत तमग्ना उपप्रावर्तयत् । स्वाहेन्द्रशत्रुर्वर्धस्व ॥ ३

[ २ ] काठ. १२,११-१२।
[ ३ ] तै. २,४,१२। काठ. १२,३। वा. २,१०। काण्व. २'१८।

इतीन्द्रस्याहैन१ शत्रुमचिकीर्ष,—दिन्द्रमस्य शत्रुमकरोत्, तथा वाक् स्वयमेव २०येत्, स
१ सोमं प्रावर्तयद्यास्मि१श्चाग्ना उपप्रावर्तयत् ता अग्नीषोमा देवते प्राणापानो अभिसमभवता१,
यावदूर्ध्वबाहुः पराविध्यत् तावति व्युरमत, यदि वा प्रवणं तावदासीद्, यदि वाग्नेरधि
ावदासीत्, स वा इषुमात्रमेवाह्ना तिर्यङ्ङवर्धते,—षुमात्रमन्वङ्ङि,—त्यथो आहु,—रहोरात्रे
वेषुमात्रं तिर्यङ्ङवर्धते,—षुमात्रमन्वङ्ङि,—त्यथो आहुरर्धमासं,—मथो मास,—मथो स१वत्स-
मिति, स वा इमाः सर्वाः स्रोत्याः पर्यशयत्, तस्माद्वा इन्द्रोऽबिभेत्, तस्मादु त्वष्टाबिभेत्,
स्येन्द्रः प्रत्तिमैछत्, तमस्मै प्रायछत्, तस्मै त्वष्टा वज्रमसिञ्चत्, तपो वै स वज्र आसीत्,
मुद्यमं नाशक्नो,—दथ वै तर्हि विष्णुरन्या देवतासीत्, सोऽब्रवीद्, विष्णा एही,—दमाहरि-
यावो येनायमिदमिति, स त्रेधात्मानं१ विन्युधत्ता,—ऽभिपर्यावर्तादविभे,—दुस्यां तृतीय,—म-
तरिक्षे तृतीयं, दिवि तृतीय१, स यदुस्यां तृतीयमासीत्, तेन वज्रमुदयछद्, विष्णवनुष्ठितः
वज्रमुद्यतं दृष्ट्वाबिभेत्, सोऽब्रवी,—दस्ति वा इदं त्यस्मिन्नन्तर्वी२र्यं, तत् ते प्रदास्यामि,
ा मा वधीरिति, तद्वा अस्मै प्रायछत्, तत् प्रत्यगृह्णात् ॥ अधा मा ॥ इति, तद्विष्णवेऽ-
तिप्रायछत्, तद्विष्णुः प्रत्यगृह्णात् ॥ ४—६

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माक१ सन्त्वाशिषः ॥७

इति सोऽब्रे,—दस्ति वावास्मिन्नन्तर्वी२र्यमिति, स यदुन्तरिक्षे तृतीयमासीत्, तेन वज्रमुदय-
छद्, विष्णवनुष्ठितः स वज्रमुद्यतं दृष्ट्वाबिभेत्, सोऽब्रवी,—दस्ति वा इदं त्यस्मिन्नन्तर्वी२र्यं,
तत् ते प्रदास्यामि, मा मा वधीरिति, तद्वा अस्मै प्रायछत्, तत् प्रत्यगृह्णात्॥ द्विर्माधाः॥ इति
तद्विष्णवेऽतिप्रायछत्, तद्विष्णुः प्रत्यगृह्णात् ॥ ८—१०

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम्। अस्माक१ सन्त्वाशिषः॥११

इति सोऽब्रे,—दस्ति वावास्मिन्नन्तर्वी२र्यमिति, स यद्दिवि तृतीयमासीत् तेन वज्रमुदयछद्,
विष्णवनुष्ठितः स वज्रमुद्यतं दृष्ट्वाबिभेत्, सोऽब्रवी—दस्ति वा इदं त्यस्मिन्नन्तर्वी२र्यं, तत् ते
प्रदास्यामि, मा मा वधीः ॥ संधां नु संदधावहै यथा त्वामेव प्रविशानीति, सोऽब्रवीद्, यन्मां
प्रविशेः किं मे ततः स्यादिति, सोऽब्रवीत्, त्वामेवेन्धीय, तव भोगाय त्वां प्रविशेयमिति,
तद्वा अस्मै प्रायछत्, तत् प्रत्यगृह्णात् ॥ त्रिर्माधाः ॥ इति तद्वाव त्रैधातव्या, सहस्र१ वा
अस्मै तत् प्रायुछदृचः सामानि यजू१षि, यद्वा इदं किं च तत् त्रैधात२व्या, तदाप्नोति पशू-
नेव ॥३॥ १२—१५

उदरं वै वृत्रः, पाप्मा क्षुद्भ्रातृव्यः पुरुषस्य, यत् तमुपैति पाप्मानं वा एतत्,
स्तृणुते भ्रातृव्यं क्षुधमेव, तस्मिन् वा अत्र देवताऽ, सेयमस्या अध्यूर्ध्वा वागवदत् ॥ १६

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ १७

इति सत्यमाहेत्य,—ब्रवीद्, द्वे एव तृतीये आहर्तुरेकं प्रतिग्रहीतुरिति, तौ वै तत्रैवातिष्ठेतां, तस्मादैन्द्रावैष्णवं, त्रिरात्रस्य वा उपेप्सायै त्रैधातव्याह्रियते, यावद्वै त्रिरात्रेणोपाप्नोति तावत् त्रैधातव्ययावरुन्द्धे, तस्मादाहुः, सहस्रदक्षिणेत्यु,—ष्णिहाककुभा अन्वाह, गायत्री वा उष्णिहा,—ऽथ यान्येतानि चत्वार्यक्षराण्यृच्यधि, चतुष्पादो वा एते पशवो, यथा वा इदं पुरोडाशे पुरोडाशोऽध्येवं वा एतद्यदृच्यध्यक्षराणि, प्राणो वै गायत्री, प्राणेन पशवो यता, यदुष्णिहाककुभा अन्वाह पशूनां यत्यै ॥ १८

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥ १९

इति परिदधाति वीरताया, अथो रूपताया एव, यज्जगत्या परिदध्यादन्तं गच्छे,—दथ यत् त्रिष्टुभा परिदधाति नान्तं गच्छत्यो,—जो वै वीर्यं त्रिष्टु,—बोजस्येव वीर्ये प्रतितिष्ठति॥४॥
२०

सर्वाभ्यो देवताभ्यो यज्ञ आहृत्या, इत्याहुः, सर्वो वा एष यज्ञः, सर्वाभ्यो हि देवताभ्यो यज्ञ आह्रियते, सर्वाणि छन्दांस्यन्वाह, सर्वाणि हि छन्दांसि यज्ञे प्रयुज्यन्ते, ऽभिचरन्नाहरेत्, सर्वो वा एष यज्ञः, सर्वेणैवैनं यज्ञेनाभिचरत्य,—दक्षिणस्तु स्या,—स्तस्त्विन्मेनिमक,—र्मेनिर्ह्रदक्षिणो, ऽथ यो, यक्ष्य, इत्युक्त्वा न यजेत तमेतेन याजयेत्, सर्वो वा एष यज्ञः, सर्वेणैवास्मै यज्ञेन प्रायश्चित्तिं विन्दत्यु,—त्तर उत्तरः पुरोडाशो ज्यायान् भवत्यु,—त्तर उत्तरो हि लोको ज्यायान्, यथा वा इयमेवमसा, अथ वा अन्तरिक्षं, नास्या रूपं नामुष्या,—स्तस्माद्यवमयो मध्यतो, ऽथो एवमिवह्यन्तरिक्षस्य रूपं, द्वादशकपालो भवति, यद्वै त्रिस्त्रिस्तत् त्रैधातव्यायाः समृद्धं, सर्वेषामतिघातमवद्यत्यछम्बट्काराय, यावता हि न प्राप्नु-

[ ४ ] तै. २,४,१२,६,७; २,४,११; ३,२,११ । काठ. १२,३-४। [ उभा जिग्यथुर्न०...येथाम् । ऋ० ६,६९,८; अथर्व० ७,४४,१। अग्ने त्री ते वाजिना०...अप्रयुच्छन् । ऋ० ३,२०,२ ।

[ ५ ] तै. २,४,११। काठ. १२,३-४।

यांत्तावता छम्बट्कुर्या,—दुेतद्वै तद्यदाहु,—श्छम्बण्णसा इति, वास इव वै यज्ञ ऊयते, यत्ता-
प्याणि विषीव्यन्ति यजुषां तद्रूपं, यद्धेनवो दीयन्त उक्थामदानां तद्, यद्धिरण्यं दीयते चन्द्रं
गीयता, इति वै सामाहुः, साम्नां तद्रूपं,—मेतेन वै सृञ्जया अयजन्त, ते श्रियोऽन्तमगछं,—
स्तस्मान्नातिबहु यष्टव्यु,—मीश्वरो हि पराऽतिपत्तो,—यो वा एतेन यजते वि स छिनत्ति, पुत्रो
याजयितव्योऽनुसंतत्यै ॥५॥ २१

आग्नेयमष्टाकपालं निर्वपे,—दैन्द्रमेकादशकपालं बार्हस्पत्यं चरुं भूतिकामं याजये,—दिन्द्रो वै
शिथिर इवामन्यत, ३सोऽग्निं च बृहस्पतिं चाब्रवीद्, याजयुतं मेति, तं वा एतयाग्निश्च बृह-
स्पतिश्चायाजयतां, तस्मिंस्तेजोऽग्निरदधा,—दिन्द्रियमिन्द्रो, ब्रह्म बृहस्पति,—स्तता इन्द्रो-
ऽभवद्, यो भूतिकामः स्यात् तमेतया याजयेत्, तेज एवास्मिन्नग्निर्दधाती,—न्द्रियमिन्द्रो,
ब्रह्म बृहस्पति,—र्भवत्येव, यदास्मिंस्त्रीणि वी३र्याण्यधत्तां तस्मात् त्रिधातु,—रैन्द्रं इतरा,
अभिसंश्लेषयन्ति सेन्द्रियत्वाय ॥६॥ २२

पुरोवात जिन्व रावट् स्वाहा, वातुवान् वर्षन् भीमु रावट् स्वाहा, स्तनयन् वर्षन्नुग्र रावट्
स्वाहा,—ऽतिरात्रं ववर्ष्वान् पूर्तु रावट् स्वाहा, बहु ह वा अयमवर्षीदिति, श्रुतु रावट् स्वाहा,
तपुति वर्षन् विराड् रावट् स्वाहा, ऽवस्फूर्जन् विद्युद्वर्षंस्त्वेषु रावट् स्वाहा, नशन्युवस्फूर्जन्
वर्षन् भूतु रावट् स्वाहा ॥ २३

मान्दा वशा ज्योतिष्मतीरमस्वरीः शुन्धो अज्रा उन्दुतीः सुफेनाः ।
मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह नोऽवत ॥ २४

वृष्णो अश्वस्य संदानमसि, वृष्टयै त्वोपनह्यामि ॥ २५

देवा वसव्या अग्ने सोम सूर्यापो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत ॥ २६

देवाः शर्मण्या मित्रवरुणार्यमन्नपो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत ॥ २७

देवाः सपीतयोऽपां नपान्नराशंसापो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत ॥ २८

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत् पृथिवीं व्युन्दन्ति ॥ २९

---

[ ७ ] तै. २,४,७-८। काठ. ११,९। वा. १८,५५। काण्व. २०,२५। [ दिवा चित्तमः०...व्युन्दन्ति। ऋ० १,३८,९।

*

आ यन्नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
प्र पर्जन्यः सृजतां रोदसी अनु धन्वना यन्तु वृष्टयः ॥ ३०
उदीरयता मरुतः समुद्रतो दिवो वृष्टिं वर्षयता पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवः शुभं कमनु रथा अवृत्सत ॥ ३१

सृजा वृष्टिं दिवं, आद्भिः समुद्रं पृण, ये देवा दिविभागाः स्थ ये अन्तरिक्षभागा ये पृथिवीभागास्त इदं क्षेत्रमाविशत, त इदं क्षेत्रमनुविविशत ॥७॥ ३२

वृष्टिर्वै देवेभ्योऽन्नाद्यमपाक्रामत्, तत इदं सर्वमशुष्यत्, ते देवाः प्रजापतिमेवोपाधावं,—स्तान् वा एतया प्रजापतिरयाजयत् कारीर्या, तेभ्यो वृष्टिमन्नाद्यमवरुन्द्धे, यत्र पर्जन्यो न वर्षेत्तदेतया ज्येष्ठं वा पुरोहितं वा याजयेद्, वृष्टिर्वा एतेभ्योऽन्नाद्यमपक्रामति यत्र पर्जन्यो न वर्षति, यत् कारीर्या याजयन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्या, अष्टौ वातहोमा अष्टौ दिशा, इति दिग्भ्य एवैतैर्वृष्टिमावर्तयन्ति, मान्दा वशा ज्योतिष्मतीरमस्वरी,—रित्येतानि वा अपां नामधेयानि, यथा वा इदं नामग्राहं,—मसा असा, इति ह्वयत्ये,—वं वा एतदपां नामधेयैश्च्यावयति, वृष्णो अश्वस्य संदानमसीति, वृषा ह्यश्वो, वृषा पर्जन्यः, संमृद्ध्यै वृष्ट्यै त्वोपनह्यामीति, वृष्ट्यै ह्युपनह्यति, देवा वसव्या अग्ने सोम सूर्ये,—ति देवताभिरेवान्वहं वृष्टिमच्छैति, यदि न वर्षेत्तत्रैव वसेयु,—रहोरात्राभ्यामेव वृष्टिं च्यावयन्ति, करीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै, मधूयुतानि भवन्त्य,—पां वा एष ओषधीनां रसो, ऽपामेवैना ओषधीनां रसेनाच्छैति, रसेनैनाश्च्यावयत्य,—ग्ने धामच्छदेऽष्टाकपालं निर्वपे,—न्मारुतं सप्तकपालं सौर्यमेककपालं वृष्टिकामं याजये,—दग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ति, तां सूर्यो रश्मिभिर्वर्षत्ये,—ते वै वृष्ट्याः प्रदातार,—स्तानेव भागधेयेनोपासरत्, तेऽस्मै वृष्टिं प्रयच्छन्ति, सृजा वृष्टिं दिव आद्भिः समुद्रं पृणे,—तीमाश्चैवामूश्च समस्रा,—डाभिरमूरच्छैति, ये देवा दिविभागाः स्थ ये अन्तरिक्षभागा ये पृथिवीभागास्त इदं क्षेत्रमाविशत, त इदं क्षेत्रमनुविविशते,—तीमानेव लोकान् वृष्ट्यै संमृशति ॥८॥ ३३[८३३]

॥ इति मध्यमकाण्डे चतुर्थः प्रपाठकः ॥४॥

---

आ यं नरः०...वृष्टयः । ऋ० ५,५३,६। उदीरयता (था) मरुतः०...त्सत । ऋ० ५,५५,५]

[८] तै. २,४,९-१० । काठ. ११,१० ।

अथ पञ्चमः प्रपाठकः।

## काम्याः पशवः।

सौम्यं बभ्रुं लोमशं पिङ्गलमालभेत पशुकामः, सौमीर्वा ओषधया, ओषधयः पशवो,
त, सौम्यः, प्रत्यक्षमेवास्मै पशुमालभते, लोमशो भवत्ये,—तद्वै पुष्ट्या रूपं, पुष्टिमे-
वरुन्द्धे, बभ्रुः पिङ्गलो भवति सोमस्य रूपꣳ संमृद्ध्यै, यस्त्रैतानामुत्तमो जायेत तꣳ सौमा-
ष्णमालभेत पशुकामः, सोमो वै रेतोधाः, पूषा पशूनां प्रजनयिता, सोम एवास्मै रेतो
धाति, पूषा पशून्, प्रजनयति, स्तनꣳ, वा एतेषां द्वा अभिजायेते, ऊर्जं तृतीया,
र्ज्वै पशव, ऊर्जैवास्मा ऊर्जं पशूनाप्त्वावरुन्द्धे, त्रिर्वा एषा सꣳवत्सरस्यान्यान् पशून्
रिर्विजायत, एतद्वै पुष्ट्या रूपं, पुष्टिमेवावरुन्द्धे, भागिनीर्वा अन्याः प्रजा, अभागा
न्या, यदौदुम्बरो यूपो भवत्युभयीरेवैना भागिनीः करोति, मासि मासि वा एषोऽवान्तरम-
र्येभ्यो वनस्पतिभ्यः पच्यत, एतद्वै पुष्ट्या रूपं, पुष्टिमेवावरुन्द्धे, प्राजापत्यं तूपरमालभेत
शुकामः, प्राजापत्या वै पशवः, प्रजापतिः पशूनां प्रजनयिता, तमेव भागधेयेनोपासरत्,
ोऽस्मै पशून्, प्रजनयति, योनिर्वै प्रजापति,—योनेरेव प्रजायते, सर्वेषाꣳ वा एष पशूनाꣳ
रूपाणि प्रति, पुरुषस्येव श्मश्रूण्य,—श्वस्येव शिरो, गर्दभस्येव कर्णा, शुन इव लोमानि,
गोरिव पूर्वा पादा, अवेरिवापरा, अजः खलु वै सर्वाण्येव पशूनाꣳ रूपाण्याप्त्वावरुन्द्धे, सर्वाण्येनं
पशूनाꣳ रूपाण्युपतिष्ठन्ते, हिरण्यगर्भवत्याघारो, याः प्रजापतेः सामिधेनीस्ताः सामिधेनी,—
र्याः प्रजापतेराप्रियस्ता आप्रियो, हिरण्यं देयꣳ सशुक्रत्वाय, ताप्यं देयꣳ सयोनित्वाया,—
ऽधीवासो देयो, यज्ञस्य तेन रूपाण्याप्त्वावरुन्द्ध, एतेन वा उपकेरू रराध, ऋध्नोति य एते-
न यजते, द्वादशधा ह त्वै स प्राशित्रं परिजहार, तत्र द्वादश द्वादश वरान् ददौ, यद् द्वादश
दीयन्ते तस्यैषा प्रतिमा, श्वेतꣳ वायवा आलभेत, भूतिकामꣳ याजयेद्, वायुर्वै देवाना-
मोजिष्ठः क्षेपिष्ठः, स एनं भूत्यै निनयति, तदाहु,—रधृता देवतेश्वरा निर्मृज ईश्वरैनमार्तिं
निनेतोरिति, तदति सैवैनं भूत्यै निनयति, श्वेतꣳ वायवे नियुत्वता आलभेत, ग्रामकामꣳ
याजयेद्, वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते, यद्वायवे, वायुरेवास्मै न-
स्योताꣳ विशं निनयति, नियुत्वती याज्यानुवाक्ये भवतो, ग्राममस्मिन् दाधार, श्वेतो
भवति, ब्रह्मणो रूपꣳ संमृद्ध्यै, श्वेतꣳ वायवे नियुत्वता आलभेता,—ऽमयाविनꣳ याजयेत्,

[ १ ] तै. २,१,१। काठ. १२,१३; १३,१।

प्राणो वै वायुः, प्राणो हि वा एतस्यापक्रान्तो, ऽथैतस्यामयति, यद्वायवे, वायुरेवास्मै प्राणं निनयति, नियुत्वती याज्यानुवाक्ये भवतः, प्राणमस्मिन् दाधार, श्वेतो भवति, ब्रह्मणो रूपꣳ समृद्ध्यै, श्वेतꣳ वायवे नियुत्वत आलभेत, पशुकामꣳ याजयेत्, प्राणो वै वायुः, प्राणꣳ वा एतत् पशवः प्रतिधावन्ति यद्वर्षेषु वातं प्रतिजिघ्रति, यद्वायवे, वायुरेवा-स्मै पशून् निनयति, नियुत्वती याज्यानुवाक्ये भवतः, पशूनस्मिन् दाधार, श्वेतो भवति,
ब्रह्मणो रूपꣳ समृद्ध्यै ॥१॥ १

स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्, तस्य देवास्तमोऽपाघ्नन्, यत् प्रथमं तमोऽ-पाघ्नन्त्साविः कृष्णाभवद्, यद् द्वितीयꣳ सा लोहिनी, यत् तृतीयꣳ सा बलक्षी, यद-ध्यस्तादपाकृन्तत्साविर्वशाभवत्, तेऽब्रुवन्, देवपशुमिमं कामायालभामहा, इत्यथ वा इयं तर्ह्यृक्षासीदलोमिका, तेऽब्रुवꣳ—स्तस्मै कामायालभामहै यथास्यामोषधयश्च वनस्पतयश्च जा-यन्ता इति, ताꣳ वै तस्मै कामायालभन्त, ततोऽस्यामोषधयश्च वनस्पतयश्चाजायन्त, यः प्रजाकामो वा पशुकामो वा स्यात् स एतामविꣳ वशामालभेत, प्र प्रजया च पशुभिश्च जायते, ऽथो आहु—र्यः प्रथमस्तमस्यपहते सूर्यस्य रश्मिर्यूपस्य चषाले वातुनो-त्साविर्वशाभवदिति, तदुभयेनैव देवपशुरालभ्यते, यद्यस्यास्तज्जन्म यदि वेतरं तत् कामाय कामायैवाविर्वशालभ्यते, आग्नेयमजमालभेत, वारुणं पेत्वं भूतिकामꣳ याजये—दाग्नेयानि वै पुरुषस्यास्थानि, वारुणं माꣳसं,—माग्नेयेनैवास्याग्नेयं निष्क्रीणाति, वारुणेन वारुणं, भवत्येव, सारस्वतीं मेषीमालभेत यो वाचो गृहीतः, वाग्वै सरस्वती, वाचैवास्य वाचं भिषज्यत्य,—पन्नदती भवति सर्वत्वाया,—नाधिस्कन्ना समृद्ध्यै, श्वेता मल्हा आलभेत ब्रह्म-वर्चसकाम आग्नेयीं बार्हस्पत्याꣳ सौरीꣳ, वसन्ता आग्नेयीं, प्रावृषि बार्हस्पत्याꣳ, शिशिरे सौरीꣳ, यदाग्नेयी, तेजस्तयावरुन्द्धे, यद्बार्हस्पत्या, ब्रह्मवर्चसं तया, यत् सौरी, रुचं तया, त्रिवृद्वावास्मा एतत् समृद्धं ब्रह्मवर्चसं दधाति, सꣳवत्सरं पर्यालभ्यन्ते, सꣳव-त्सरेण वा अनाप्तमाप्यते, सꣳवत्सरेणैवास्मा आप्त्वा तेजो ब्रह्मवर्चसं दधाति, श्वेता भवति, ब्रह्मणो रूपꣳ समृद्ध्यै, वायव्यामजामालभेत, सारस्वतीं मेषीमदित्या अजामभिशस्यमानꣳ याजयेद्, वायुर्वा एतस्याश्लीलं गन्धं जनता अनुविहरति यमभिशꣳसन्त्ये,—षꣳहीदꣳ सर्वमु-पगच्छति, यद्वायवे, वायुरेवास्य तं गन्धꣳ सुरभिमकः, सोऽस्य सुरभिर्गन्धो जनता अनुवि-तिष्ठते, वाचा वा एतमभिशꣳसन्ति यमभिशꣳसन्ति, वाक्सरस्वती, यत् सारस्वती,

[२] तै. २,१,२। काठ. १२,१३; १३,१।

चैवैषा॑ वाच॑ शमयत्य,—प्रतिष्ठितो वा एष यमभिशं॑सन्ती,—यं॑ वा अदिति,—रियं प्रतिष्ठा,
दादित्या,—ऽस्यामेव प्रतितिष्ठती,—न्द्रियेण वा एष वीर्येण व्यृध्यते यमभिशं॑सन्ती,—न्द्रियं॑
३र्यं गर्भो, यद्गर्भिणीर्भवन्तीन्द्रियेणैवैन॑ वीर्येण समर्धयन्ति ॥२॥ २

देवाश्च वा असुराश्चास्पर्धन्त, ते वै समावदेव यज्ञं कुर्वाणा आयन्, यदेव देवा अकुर्वत
दसुरा अकुर्वत, ते न व्यावृतमगच्छ॑,—स्ते देवा एतं॑ वामनं पशुमपश्य॑,—स्तं॑ वैष्णवमा-
भन्त, ततो वै विष्णुरिमाँल्लोकानुदजयन्, ततो देवा असुरानेभ्यो लोकेभ्यः प्राणुदन्त, ततो
वा अभवन्, परासुरा, यः सपत्नवान् भ्रातृव्यवान् वा स्यात् स एतं॑ वामनं॑ वैष्णवमा-
भेता,—ऽतो वै विष्णुरिमाँल्लोकानुदजयद्, विष्णोरेवोज्जितिमन्विमाँल्लोकानुज्जयति, प्रैभ्यो लो-
भ्यो भ्रातृव्यं नुदते, विषम इवालभेत, विषमानिव ३हीमाँल्लोकान् देवा उदजय,—न्निमानेव
लोकानुज्जयती,—न्द्रो वै वृत्रमहन्, त्सं प्राङ्पद्यत, स पद्यमाना इन्द्र॑ सप्तभिर्भोगैः पर्यगृह्णात्,
स्माद्विष्वञ्चः पशवो व्युदाय,—न्मूर्धतो वैदेहीरुदाय॑,—स्तस्मात् तासां पुरो जन्म पुर ओक,—
तासां जघनतं ऋषभो वैदे३हो ऽनूदैत्, तमचाय,—दयं॑ वाव मास्माद॑हसो मुञ्चेदिति, त-
न्द्रमालभेता,—ऽऽग्नेयं तु पूर्वमजमालभत, स वा अग्निनैव वृत्रस्य भोगानपिदह्याथैन्द्रेणेन्द्रियं॑
वीर्यमात्मन्नधत्त, यः पाप्मना तमसा गृहीतो मन्येत स एतमैन्द्रमृषभमालभेता,—ऽऽग्नेयं तु पूर्व-
जमालभेता,—ऽग्निनैव पाप्मनो भोगानपिदह्याथैन्द्रेणेन्द्रियं॑ वीर्यमात्मन् धत्ता, इन्द्रो वै वलम-
वृणोत्, ततः सहस्रमुदैत्, तस्य सहस्रस्याग्रतः कुभ्र उदैत्, तस्मादेतं॑, साहस्री लक्ष्मी,—रि-
याहुर्यश्च वेद यश्च ना,—ऽथो आहु,—रिमं॑ वा एष लोकं पश्यन्नभ्युदैत्, स समैषत, स एष
मीषितः कुभ्र, इति तमैन्द्रमालभेत पशुकाम, ऐन्द्रा वै पशवा, इन्द्रः पशूनां प्रजनयिता,
मेव भागधेयेनोपासरत्, सोऽस्मै पशून्प्रजनयति, स यदा सहस्रं पशून्गच्छेदथैतं॑ वामनं॑ वै-
णवमालभेतै,—तस्मिन्वै तत्सहस्रं प्रत्यतिष्ठत्, स तिर्यङ् व्यैषत्, तस्मादेष तिर्यङ्ङिव वीषित,
तेन वै स तत् सहस्रं पर्यगृह्णात्, तत् सहस्रस्य वा एष परिगृहीत्या अविक्षोभाय, देवाश्च
पितरश्चास्मिँल्लोक आस॑,—स्तद्यत् किंच देवाना॑ स्वमासीत् तद्यमोऽयुवत, ते देवाः प्रजा-
तिमेवोपाधावन्, त्सं प्रजापतिरेतौ मिथुनौ पशू अपश्यदृषभं च वशां च, ता आलभत, वै-
णववारुणीं तु पूर्वा॑ वशामालभत, तान् वै वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदता,—

[ ३ ] तै. २,१,३–५ । काठ. १३,३–४ ।

ऽथैन्द्रं देवेष्वालभत, तेनैष्विन्द्रियाणि वीर्याण्याप्त्वादधाद्यः सपत्नवान् भ्रातृव्यवान् वा स्यात् स
एतौ मिथुनौ पशू आलभेत ऋषभं च वशां च, वैष्णववारुणीं तु पूर्वाꣳ वशामालभेत, वरुणे-
नैवैनान् ग्राहयित्वा विष्णुना यज्ञेन प्रणुदते, ऽथैन्द्रेणेन्द्रियꣳ वीर्यमात्मन् धत्ते ॥३॥ ३

सावित्रं पुनरुत्सृष्टमालभेत यः पुरा पुण्यः सन् पश्चात् पापत्वं गच्छेत्, सविता वै श्रियः प्रस-
विता, तमेव भागधेयेनोपासरत्, स एनꣳ श्रियै प्रसुवति, पापो वा एष पुरा सन् पश्चात्
श्रियमश्नुते यः पुरानड्वान्त्सन् पश्चोक्षत्वं गच्छति, यथैष श्रियमश्नुत एवमेवैनꣳ श्रियं गमयत्यो,—
षधीभ्यो वेहतमालभेत प्रजाकामा, ओषधीनाꣳ वा एषा श्रियै,—ता वा एताꣳ सूतोः परिबा-
धन्ता, ओषधयः खलु वा एतस्य प्रजामपगूहन्ति योऽलं प्रजायै सन् प्रजां न विन्दते, ता
(एवं भागधेयेनोपासरत्, ता अस्मै प्रजां पुनर्ददत्या,—पो वा ओषधया, आपो ह३त्वेवा-
सत् खनन्ति, ता अस्मै प्रजां खनन्ति, द्यावापृथिवीये धेनू संमातरा आलभेतान्नकामो,
य३द्धयसौ वर्षति तदस्यां प्रतितिष्ठति, द्यावापृथिवी वा अन्नस्येशाते, ते) एवं भागधेयेनो-
पासरत्, ते अस्मा अन्नाद्यं प्रयछतः, स वत्सꣳ वायवा आलभेत, वायुर्वा अनयोर्वत्सो,
वायुरिमे प्रदापयति, प्रत्ते ह वा इमे दुहे य एवꣳ वेदै,—न्द्रीꣳ सूतवशामालभेत, राज३न्यं
भूतिकामꣳ याजये,—देतस्या वा अधीन्द्रोऽजायत, स जायमान एतꣳ योनिं निरवर्तयत्,
सा सूतवशाभव,—दथो आहु,—रेतदेव सकृदिन्द्रियꣳ वी३र्यं तेजो जनयित्वा नापुरꣳ सूता आ-
शꣳसत, सा सूतवशाभव,—दितीन्द्रियेण वा एष वीर्येण व्यृध्यते योऽलं भूत्यै सन्न भवत्यै,—
न्द्रीं भवती,—न्द्रियमस्मिन् दधात्य,—थ यस्तꣳ विन्देयꣳ सूत्वा सूतवशा भवति तमैन्द्रमालभेत
तेजस्काम,—स्तदेवेन्द्रियꣳ वी३र्यं तेज आप्नोति, सारस्वतीं धेनुष्टरीमालभेत यः क्षेत्रे पशुषु वा
विवदेत, वाग्वै सरस्वती, वाचैवैषाꣳ वाचꣳ वृङ्क्तेꣳ, धेनुर्वा एषा सती न दुहे, तयेमेवै-
षाꣳ वाचं करोति, द्यावापृथिवीयां धेनुं पर्यारिणीमालभेत यो राजन्योऽभ्यर्धो विशश्चरेद्, द्या-
वापृथिवीभ्याꣳ हि वा एष निर्भक्तो, ऽथैषोऽभ्यर्धो विशश्चरति, द्यावापृथिवी एवैनꣳ विशि
प्रतिष्ठापयतः, पर्यारिणी भवति, पर्यारीव३ह्येतद्राष्ट्रꣳ, यदभ्यर्धो विशश्चरति द्यावापृथिवी
एवैनꣳ विशि प्रतिष्ठाप्य, स श्वो भूते वत्सꣳ वायवा आलभेत, वायुर्वा अनयोर्वत्सो, वा-
युरिमौ क्षयौ विशं च प्रदापयति, प्रत्तौ ह वा इमौ क्षयौ विशं च दुहे य एवꣳ वेद ॥४॥ ४

---

[४] तै. २,१,५। काठ. १३,४-७।

( एष कोष्ठान्तर्गतो भागः केषुचित् लिखितेषु पुस्तकेषु नोपलभ्यते ।)

आग्नेयमजमालभेत, सौम्यं बभ्रुमृषभं पिङ्गलं भूतिकामꣳ याजयेद्,—द्व्या एवाग्नेय,
न्द्रियेण वा एष वीर्येण व्यृध्यते योऽलं भूत्यै सन्न भवति, यत् सौम्यः, स्वयैवास्मै देव-
येन्द्रियꣳ वीर्यमाप्त्वावरुन्द्धे, भवत्येव, बभ्रुः पिङ्गलो भवति, सोमस्य रूपꣳ समृद्ध्यै,
ोमृगꣳ वायवा आलभेता,—ऽभिशस्यमानꣳ याजये,—द्पूतो वा एष यमभिशꣳसन्ति, वायुर्वै
देवानां पवित्रꣳ, वायुनैवैनं पवित्रेण पुनाति, नैव वा एष ग्रामे नारण्ये यमभिशꣳसन्ति,
नैव खलु वा एष ग्राम्यः पशुर्नैवारण्य,—स्तस्मादस्यैष देवतया पशूनाꣳ समृद्ध ऐन्द्राग्नमनुसृष्टमा-
लभेत यस्य पिता पितामहः सोमं न पिबे,—दिन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य पिता पि-
तामहः सोमं न पिबति, यदैन्द्र, इन्द्रियेणैवैनꣳ वीर्येण समर्धयति, देवताभिर्वा एष व्यृ-
ध्यते यस्य पिता पितामहः सोमं न पिबति, यदाग्ने३यो, ऽग्निर्वै सर्वा देवता, देवताभिरे-
वैनꣳ समर्धयत्य,—नुसृष्टो भवत्य,—नुसृष्ट इव ३ह्येतस्य सोमपीथो यस्य पिता पितामहः सोमं
न पिबति, तस्मादस्यैष देवतया पशूनाꣳ समृद्धस्त्वाष्ट्रमवलिप्तमालभेत पशुकाम,—स्त्वाष्ट्रा वै
पशव,—स्त्वष्टा पशूनां प्रजनयिता, तमेव भागधेयेनोपासरत्, सोऽस्मै पशून् प्रजनय-
ति, सौमापौष्णं नपुꣳसकमालभेत, पण्डकꣳ याजयेद्, यत्र तू भूमेर्जायेत तत् प्रजिज्ञासेता,—
ऽत्र वा एतस्य जायमानस्येन्द्रियꣳ वी३र्यमपाक्रामत्, तदेवास्मा इन्द्रियꣳ वीर्यमाप्त्वा दधाति,
सोमश्च वा एतस्य पूषा च जायमानस्येन्द्रियꣳ वीर्यमयुवेता,—मिथꣳ वै पूषा,—पधयः सोमो,
यत् सौमापौष्णः, स्वयैवास्मै देवतयेन्द्रियꣳ वीर्यमाप्त्वावरुन्द्धे, भवत्येव, यान्यनवदानी-
यानि तैर्नैर्ऋतैः पूर्वैः प्रचरान्ति, निर्ऋतिगृहीता वा एषा स्त्री या पुꣳरूपा, निर्ऋतिगृहीत एष
पुमान्यः स्त्रीरूपो, निर्ऋत्या एवैनं तेन मुञ्चति, न वै नैर्ऋत्याहुतिरग्निमानशे, यदङ्गारेषु
जुहोति तत् स्विदग्नौ जुहोति तदु न, यत्र वा अद इन्द्रो वृषणश्वस्य मेनासीत् तदेनं निर्ऋतिः
पाप्माग्रह्णात्, स यं पाप्मानमपाहत स नपुꣳसकोऽभवद्, यः पाप्मना तमसा गृहीतो मन्येत
स एतमैन्द्रं नपुꣳसकमालभेत, येनैवेन्द्रः पाप्मानमपाहत तेन पाप्मानमपहते, ऽथैन्द्रेणेन्द्रियꣳ
वीर्यमात्मन् धत्ते, प्रजापतिः पशूनसृजत, स वा एतमेवाग्रे नपुꣳसकमसृजत, तं पशवोऽन्व-
सृज्यन्ता,—ऽथो आहु,—रेतमेवाग्रे सृष्टं त्वष्ट्रे च पत्नीभ्यश्च नपुꣳसकमालभत, तेन प्रजा असृज-
न्तेति, यः प्रजाकामो वा पशुकामो वा स्यात् स एतं त्वष्ट्रे च पत्नीभ्यश्च नपुꣳसकमालभेत,

[५] तै. २,१,५। काठ. १३,५।
मै० १८

मिथुनꣳ वै त्वष्टा च पत्नीश्च, त्वष्टारꣳ वा एतन्मिथुनेऽप्यस्राट् प्रजननाय, तन्मिथुनं, तस्मादेवं मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायते ॥५॥ ५

प्रजापतिः प्रजा असृजत, ता एनꣳसृष्टा अत्यमन्यन्त, ता अतिमन्यमाना वरुणेनाग्राहयत, ता वरुणगृहीताः कृष्णः पेत्वोऽभ्यस्कन्दत्, तस्यानुहाय पादमगृह्णात्, तस्य शफः प्रावृह्यत, स एकाशितिपादभवत्, तमचाय,—दुयꣳ वावासां प्रजानामवरुणगृहीतो, ऽनेनेमाः प्रजा वरुणान् मुञ्चानी,—ति तꣳ वारुणमालभत, तत इमाः प्रजा वरुणात् प्रामुच्यन्त, तद्वरुणप्रमोचनीय एवैष, यो ज्योगामयावी स्यात् तमेतेन याजयेद्, वरुणेन हि वा एष पाप्मना गृहीतो, ऽथै-तस्य ज्योगामयति, यद्वारुणो, वरुणादेवैनं तेन मुञ्चत्ये,—काशितिपाद्भवत्ये,—वमिव हि तस्य रूपमासीत् समृद्ध्यै, द्वीपे याजये,—देता वै प्रत्यक्षꣳ वारुणीर्यदापः, स्वे वा एतद्योनौ प्रत्यक्षꣳ वरुणमवयजति, समन्तमापः परिवहन्ति रक्षसामनन्ववायाय, वारुणं कृष्णं पेत्वमा-लभेताभिचरन्, यद्वारुणो, वरुणेनैवैनं ग्राहयित्वा स्तृणुते, कृष्णो भवति, तमो वै कृष्णं, मृत्युस्तमो, मृत्युनैवैनं ग्राहयत्ये,—तद्वै पाप्मनो रूपꣳ यत् कृष्णं, कृष्णं इव हि पाप्मा, पाप्मनैवैनमभिप्लुवति, तं नियुञ्ज्यात् ॥ ६

पशुं बध्नामि वरुणाय राज्ञा इन्द्राय भागमृषभं केवलो हि ।

गात्राणि देवा अभिसंꣳविशन्तु यमो गृह्णातु निर्ऋतिः सपत्नान् ॥ ७

इत्येताभ्य एवैनं देवताभ्यो निर्याच्य, मृत्युर्वै यमो, मृत्युनैवैनं ग्राहयत्य,—ग्नये वैश्वानराय कृष्णं पेत्वमालभेत समान्तमभिप्रोक्ष्यन्, त्सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सराय सम-प्यते, सꣳवत्सरमेवाप्त्वावरुणं काममभिद्रुह्यत्या,—श्विनं कृष्णललाममालभेता,—ऽऽनुजावरꣳ्या-जये,—दश्विनौ वै देवानामानुजावरा, अश्विना एतस्य देवते य आनुजावर,—स्ता एव भागधेये-नोपासरत, ता एनमग्रं परिणयतः, कृष्णो भवति, पाप्मानमेवापहते, ललामो भवति, मुखतो ऽस्मिꣳस्तेजो दधात्या,—श्विनं कृष्णललाममालभेता,—ऽऽमयाविनꣳ याजये,—दश्विनौ वै देवानां भिषजा, अश्विना एतस्य देवते य आमयावी, ता एव भागधेयेनोपासरत्, ता एनं भिषज्यतः, कृष्णो भवति, पाप्मानमेवापहते, ललामो भवति, मुखतोऽस्मिꣳस्तेजो दधाति ॥६॥ ८

छन्दाꣳसि वै यज्ञाय नातिष्ठन्त, स वषट्कारोऽभिहृत्य गायत्र्याः शिरोऽछिनत्, तस्माच्

---

[ ६ ] तै. २,१,२ । काठ. १३,२,७ ।
[ ७ ] तै. २,१,७-८ । काठ. १३,८ ।

ीर्षाच्छिन्नाद्यो रसोऽक्षरत् ता वशा अभवꣳ,—स्तद्वशाना ꣳ वशात्वं,—मथो आहु,—र्वशꣳ वै ता
क्षुरꣳ,—स्ता वशा अभवꣳ,—स्तद्वशानाꣳ वशात्वं,—मित्यथो आहु,—र्वसा वै सासीत्, तद्वसा
ा एता इति, ततो यः प्रथमो रसः प्राक्षुरत् तं बृहस्पतिरुपागृह्णात्, सा रोहिणी बार्हस्पत्या,
ततो३यो ऽत्यक्षुरत् तं मित्रावरुणौ, सा द्विरूपा मैत्रावरुणी, ततो३यो ऽत्यक्षुरत् तꣳ विश्वे देवाः,
ा बहुरूपा वैश्वदेवी, ततो३यो ऽत्यक्षुरत् तमग्निश्च मरुतश्च, सा पृश्निराग्निमारुत्य,—थो आहुः,
कृष्णशबलीत्य,—थ या विप्रुषा आसꣳस्तानीमान्यन्यानि रूपाणि, ततो यः प्रथमो द्रप्सः पुरा-
तत् तं बृहस्पतिरभिहायाभ्यगृह्णात्, स उक्षाभवत्, तदुक्ष्ण उक्षत्वं,—मथो आहु,—र्यद्देवता
अनुव्यौक्षत स उक्षाभवत्, तदुक्ष्ण उक्षत्वमिति, तं ब्राह्मणस्पत्यमालभेत, ब्राह्मणं भूतिकामꣳ
ाजयेद्, ब्रह्म वै ब्रह्मणस्पति,—र्ब्राह्मणस्पत्यो ब्राह्मणो देवतया स्वयैवास्मै देवतयेन्द्रियꣳ वीर्य-
ाप्त्वावरुन्द्धे, भवत्येव, रोहिणीं बार्हस्पत्यामालभेत ब्रह्मवर्चसकामो, ब्रह्म वै बृहस्पति,—
र्बार्हस्पत्यो ब्राह्मणो देवतया, स्वयैवास्मै देवतयाप्त्वा तेजो ब्रह्मवर्चसं दधाति, रोहिणी भवति,
ब्रह्मणो रूपꣳ समृद्ध्यै, मैत्रावरुणीं द्विरूपामालभेत पशुकामो, ऽहोरात्रे वै मित्रावरुणा, अहोरात्रे
अनु पशवः प्रजायन्ते, ता एव भागधेयेनोपासरत्, ता अस्मै पशून् प्रजनयत,—श्छन्दसाꣳ वा एष
रस,—श्छन्दसामेवास्मै रसेन पशून् धत्तो, द्विरूपा भवति समृद्ध्यै, वैश्वदेवीं बहुरूपामालभेत
यस्मै कामाय कामयेत, सर्वा वा एता देवता, सर्वा वा एतद्देवताः कामाय भागधेयेनोपासरत्,
ता अस्मै कामꣳ समर्धयन्ति यत् कामो भवति, छन्दसाꣳ वा एष रस,—श्छन्दसामेवास्मै रसेन
दधति, बहुरूपा भवति समृद्ध्या, आग्निमारुतीं पृश्निमालभेत वृष्टिकामो, ऽग्निर्वा इतो वृष्टिमीट्टे,
मरुतोऽमुतश्च्यावयन्त्ये,—तौ वै वृष्ट्याः प्रदातार,—स्तानेव भागधेयेनोपासरत्, तेऽस्मै वृष्टिं प्रय-
छन्ति, छन्दसाꣳ वा एष रसो, रसो वृष्टि,—श्छन्दसामेवास्मै रसेन रसꣳ वृष्टिं निनयन्ति,
पृश्निर्भवति, पृश्निमातरो हि मरुतो, भौमीं कृष्णशबलीमालभेतान्नकाम, इयꣳ वा अन्नस्य
प्रदात्रिका, तामेव भागधेयेनोपासरत्, सास्मा अन्नाद्यं प्रयछति, न चर्माप्याहरेयु,—रन्नꣳ
वै चर्मा,—ऽनन्नं कृष्णं,—मनन्नेनैवानन्नमपहत्यान्नाद्यमात्मन् धत्ते, यद्वै तच् शीर्षाश्छिन्नात्तेज
इन्द्रियꣳ वीर्यं परापतत् सा बभ्रुर्वशाभवत्, तदेषा वशा,—न्नमेवैतरा,—स्तां ब्राह्मणस्पत्यामाल-
भेताभिचरन्, ब्रह्म वै ब्रह्मणस्पति,—र्ब्राह्मणस्पत्यो ब्राह्मणो देवतया, यावदेवं ब्रह्म तेनैनꣳ
सर्वेणाभिचरति, तेजसैनं प्रछिनत्ति, स्तृणुत एवं, बभ्रुर्भवति, ब्रह्मणो रूपꣳ समृद्ध्यै,
सौरीꣳ श्वेतामालभेत ब्रह्मवर्चसकामो, ऽसौ वा आदित्यो ब्रह्मवर्चसस्य प्रदाता, तमेव भागधे-
येनोपासरत्, सोऽस्मै ब्रह्मवर्चसं प्रयछति, श्वेता भवति, ब्रह्मणो रूपꣳ समृद्ध्यै, मैत्रा-

*

वरुणीं कृष्णकर्णीमालभेत वृष्टिकामो, ऽहोरात्रे वै मित्रावरुणा, अहोरात्रे अनुवर्षत्ये, तद्वा अह्नो
रूपꣳ यच् शुक्लꣳ, यत् कृष्णं तद्रात्रे, द्विरूपा भवति समृद्ध्यै ॥७॥ ९

इन्द्राय मन्युमते मनस्वते ललाममालभेत संग्रामे, मन्युना वै वीर्यं क्रियत, इन्द्रियेण ज-
यति, वीर्यं चैवैष्विन्द्रियं च जित्यै दधाति, ललामो भवति, पुरस्ता३द्धयं मन्युं, रथो
ब्रह्मणैवैनान् पुरस्तान्मुखतो जित्यै संꣳश्यतीं, न्द्रायाभिमातिघ्न ऋषभमालभेत भ्रातृव्यवा, न
भिमातिर्वै पाप्मा भ्रातृव्य, इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहते, स इन्द्राय वृत्रतुरा
आलभेता, ऽभिमातिर्वै पाप्मा भ्रातृव्य, इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहत्य वृत्रतूरेवा-
भूत्, स्वाराज्यमेव गछति, वृत्रतूः, रिति३ह्येतमाहुर्यः स्वाराज्यं गछत्यै, न्द्रामारुतं पृश्नि-
सक्थमालभेत, राज३न्यं ग्रामकामꣳ याजये, दैन्द्रो वै राजन्यो देवतया, मारुती विं, डि
न्द्रियेणैवास्मै विशमुपयुनक्ति, पृश्निसक्थो भवति, पश्चादेवास्मै विशमुपदधात्यं, नुकामस्मै
विशमविवादिनीं करोतीं, न्द्राय वज्रिण ऋषभमालभेत, राज३न्यं भूतिकामꣳ याजयेद्, यदा
वै राजन्यो वज्री भुवत्यथ भूतिं गछति, यद्वज्रिणे, वज्रमेवास्मा आधात्, तेन विजितिं भूतिं
गछति, स एनं भूत्यै श्रेम्णे इन्द्धे, यद्वज्रिणा, इति तदस्याभिचरणीयꣳ, यं द्विष्यात् तं
तर्हि मनसा ध्यायेद्, वज्रमेवास्मै ग्रहरति, स्तृणुत एव, सौम्यं बभ्रुमृषभं पिङ्गलमालभेत
योऽलꣳ राज्याय सन् राज्यं न प्राप्नुयात्, सोमो वै राजैतस्य देवता, सोमो हि राजा, स्वा-
मेव देवताꣳ राज्यायोपासरत्, स्वैनं देवता राज्यं गमयति, बभ्रुः पिङ्गलो भवति, सोमस्य
रूपꣳ समृद्ध्यै ॥८॥ १०

यः प्रथम एकाष्टकायां जायेत यस्तमालप्स्यमानः स्यात् स आग्नेयमष्टाकपालं निर्वपे, दग्निर्वै
पशूनाꣳ योनिः, स्वादेवैनान् योनेर्निष्क्रीणात्यो मेध्याद्भवितो, ऽग्नये वैश्वानराय द्वादशकपालं
मासि मासि निर्वपेत्, संꣳवत्सरो वा अग्निर्वैश्वानरः, संꣳवत्सरादेवैनं निष्क्रीणाति, स यदा
मेधं गछेदथेन्द्रायाभिमातिघ्न आलभेता, ऽभिमातिर्वै पाप्मा भ्रातृव्य, इन्द्रियेणैवाभिमातिं पाप्मा-
नं भ्रातृव्यमपहते, ऽश्वोऽव्युप्तवहो दक्षिणै, ष वै व्यावृत्तः पाप्मना, पाप्मनैवैनꣳ व्याव-
र्तयत्य, थ योऽपरस्यामेकाष्टकायां जायेत तमेवमेवोत्सृज्याथेन्द्राय वृत्रतुरा आलभेता, ऽभिमा-
तिर्वै पाप्मा भ्रातृव्य, इन्द्रियेणैवाभिमातिं पाप्मानं भ्रातृव्यमपहत्य वृत्रतूरेवाभूत्, स्वाराज्य-

[८] तै. २,१,३; २,५,३ । काठ. १३,४;३ ।
[९] तै. २,१,३,५; २,५,३ । काठ. १३,३;४ ।

वं गच्छति, नृत्रतू,—रिति२ह्येतमाहुर्यः स्वाराज्यं गच्छति, शतमव्युप्तवहा दक्षिणै,—तै वै
यावृत्ताः पाप्मना, पाप्मनैवैनं९ व्यावर्तयन्ति, शतं भवन्ति, शतायुर्वै पुरुषः शतवीर्या,
ायुरेव वीर्यमाप्नोति, देवाश्च वा असुराश्चास्पर्धन्त, तेऽब्रुवन्, ब्रह्माणि नोऽस्मिन् विज-
था,—मित्युरुणस्तूपरश्चैत्रेयो देवानामासीच् श्येतोऽयःशृङ्गः शैनेयोऽसुराणां, तेऽसुरा उ-
क्रोदिनोऽचर,—न्नराडोऽस्माकं तूप२रोऽमीषामिति, तौ वै समलभेतां, तस्य देवाः क्षुरपवि
शिरोऽकुर्व९,—स्तस्यान्तरा शृङ्गे शिरो व्यवधाय विष्वञ्च९ व्युरुजद्, यासुरी वागवदत्सेमां
ाविशद्, योदजयत्, सा वनस्पतीं९,—स्तस्माद्ब्राह्मणो मृन्मयेन न पिबे,—दसुर्या वाचा-
मानं नेत्सं९सृजा, इति तद्य एवं९ विद्वानमृत्पात्रपो भवत्युञ्जितमेव वाचं उपैति, तं ब्राह्म-
स्पत्यमालभेताभिचरन्, ब्रह्म वै ब्रह्मणस्पति,—र्ब्राह्मणस्पत्यो ब्राह्मणो देवतया, यावदेव ब्रह्म
तेनैनं९ सर्वेणाभिचरति, तेजसैनं प्रच्छिनत्ति, स्तृणुत एवा,—ऽरुणस्तूपरो भवत्ये,—वमिव हि
तस्य रूपमासीत्, समृद्धये, देवा असुरान् हत्वेभ्यो लोकेभ्यः प्राणुदन्त, ते रात्रीं प्राविशं९,—
स्तानश्विना अनुप्राविशतां, तौ तमः पर्यगृह्णात्, ता एतमाश्विनमञ्जिमालभेतां, तेन तमो
ऽपाघ्नाता,—मसा एना आदित्यः पुरस्ताज्ज्योतिषा प्रत्यागच्छत्, स आभ्यां तमोऽध्यपाहन्,
यः पाप्मना तमसा गृहीतो मन्येत स एतमाश्विनमञ्जिमालभेत, येनैवाश्विनौ तमोऽपाघ्नातां
तेन पाप्मानमपहते, ऽसा एनमादित्यः पुरस्ताज्ज्योतिषा प्रत्यागच्छति, सोऽस्मात्तमोऽध्य-
पहन्ति ॥ ९ ॥ ११

असौ वा आदित्यस्तेजोभिव्यध्यत, तत इदं९ सर्वं तमोऽभवत्, स प्रजापतिरेतान् दश
ऋषभानपश्य,—दथो आहु,—रिन्द्रोऽपश्यदिति, तानैन्द्रानालभत, तैरस्मिन्निन्द्रियाणि वीर्या-
ण्याप्त्वादधाद्, यल्ललामा आलभ्यन्त मुखतोऽस्मिं९स्तैस्तेजोऽदधाद्, यच् शितिककुद उपरिष्टाच्चै,—
यच् श्वेतानूकाशाः पश्चात्तै,—स्ततो वा असा आदित्यः सर्वतस्तेजस्व्यभवद्, यस्तेजस्कामः स्यात्
स एतानैन्द्रानृषभानालभेत, यल्ललामा आलभ्यन्ते मुखतोऽस्मिं९स्तैस्तेजो दधाति, यच् शिति-
ककुद उपरिष्टात्तै,—यच् श्वेतानूकाशाः पश्चात्तैः, सर्वत एवैनं तेजस्विनं करोत्य,—मुष्यैनमादि-
त्यस्य मात्रां गमयति, प्राजापत्यं दशमं द्वादशं मासा आलभेत, द्वादश मासाः सं९वत्सरः,
सं९वत्सरमेवाप्त्वावरुन्द्धे, नवालभ्यन्ते, नव वै प्राणाः, प्राणाः खलु वै पुरुषे वीर्यं, प्राणा-
नस्मिन् वीर्यं दधाति, दशालभ्यन्ते, दशाक्षरा विराड्, विराडेतान्येवेन्द्रियाणि वीर्याण्यात्म-
न्धित्वे,—यं९ विरा,—डस्यामेव प्रतितिष्ठति ॥ १२

[ १० ] तै. २,१,४; ३,३,९ । काठ. १३,७;९ । वा. १३,५;९,१८; २१,११ । काण्व. १४,५; १०,२४; २३,१२ ।

नमो महिम्ने चक्षुषे मरुतां पितस्तदहं गृणे ते ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ १३
देवानामेष उपनाह आसीदपां पतिर्वृषभ ओषधीनाम् ।
सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवद् यत् तदासीत् ॥ १४
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ १५
पिता वत्सानां पतिरघ्न्यानामुतायं पिता महतां गर्गराणाम् ।
वत्सो जरायु प्रतिधुक् पीयूष आमिक्षामस्तु घृतमस्य योनिः ॥ १६
त्वां गावोऽवृणत राज्याय त्वां वर्धन्ति मरुतः स्वर्काः ।
वर्ष्मन् क्षत्रस्य ककुभिः शिश्रियाणस्ततो न उग्रो विभजा वसूनि ॥१०॥ १७

वायव्यमजमालभेतै,—न्द्रं वृष्णिं वृषभं वा वारुणं पेत्वं भूतिकामं याजयेद्, यद्वायवे, वायुरेवैनं भूत्यै निनयती,—न्द्रियेण वा एष वीर्येण व्यृध्यते योऽलं भूत्यै सन्न भवति, यदैन्द्र, इन्द्रियेणैवैनं वीर्येण समर्धयति, वरुणगृहीतो वा एष योऽलं भूत्यै सन्न भवति, यद्वारुणो, वरुणादेवैनं तेन मुञ्चत्ये,—तानेवाभिचरन्नालभेत, यद्वायवे, वायुरेवास्मै वज्रं संश्यत्यै,—न्द्रो वै वज्र, इन्द्रियेण खलु वै वज्रः प्रह्रियते, यदैन्द्रो, वज्रमेवास्मै प्रहरति, यद्वारुणो, वरुणेनैवैनं ग्राहयित्वा स्तृणुते, सौर्यं बलक्षं पेत्वमालभेत ब्रह्मवर्चसकामो, ऽसौ वा आदित्यो ब्रह्मवर्चसस्य प्रदाता, तमेव भागधेयेनोपासरत्, सोऽस्मै ब्रह्मवर्चसं प्रयछति, यद्बलक्षः समृद्धस्तेन, यदलूनः समृद्धस्तेन, यत् पीवा समृद्धस्तेन, त्रिवृद्धावास्मा एतत् समृद्धं ब्रह्मवर्चसं दधात्यादित्यं बहुरूपमालभेत यस्याश्विने शस्यमाने सूर्यो नोदियात्, पराचीर्वा एतस्मै व्युछन्ति यस्याश्विने शस्यमाने सूर्यो नोदेति, यदादित्यो, ऽमुमेवास्मा उन्नयति, बहुरूपो भवति, बहूनि वै रश्मीनां रूपाणि, रश्मीनामेवास्मै रूपाण्याप्त्वोन्नयत्य,—ग्निर्वै सृष्टो न व्यरोचत, स एतमग्नये तेजस्विनेऽजं कृष्णग्रीवमालभत, तेन तेजस्व्यभवत्, सोऽकामयत,

---

[ हुतो ( तृप्ता ) याहि ( त ) पथिभिर्देवयानैः । ऋ० ७,३८,८; अथर्व. ९,४,३ । देवानामेष (-नां भाग) ...आसीत् (च्छरीरम् ) । अथर्व. ९,४,५ । द्रप्सश्चस्कन्द०...होत्राः । ऋ० १०,१७,११; अथर्व. १८,४,२८ । पिता वत्सानां०...योनिः ( रेतः )। अथर्व. ९,४,४ । त्वां गावोऽवृणत०...वसूनि । अथर्व. ३,४,२।

[ ११ ] तै. २,१,४ ।

सर्वत्र विभवेयमिति, ३सोऽग्नये विभूतिमतेऽजं कृष्णग्रीवमालभत, तेनु सर्वत्र व्यभवत्, सोऽकामयत, सर्वत्रापिभागः स्यामिति, ३सोऽग्नये भागिनेऽजं कृष्णग्रीवमालभत, तेनु सर्वत्रापिभागोऽभवत्, सोऽकामयत, दानकामा मे प्रजाः स्युरिति, ३सोऽग्नये दा३त्रेऽजं कृष्णग्रीवमालभत, तेनास्मै दानकामाः प्रजा अभवन्, यः कामयेत, तेजस्वी स्या२, सर्वत्र विभवेय२, सर्वत्रापिभागः स्यां, दानकामा मे प्रजाः स्युरिति, स एतानजान् कृष्णग्रीवानालभेत, तेजस्वी भवति, सर्वत्र विभवति, सर्वत्रापिभागो भवति, दानकामा अस्मै प्रजा भवन्ति, प्राजापत्यं बहुरूपमालभेत पशुकामः, प्राजापत्या वै पशवः प्रजापतिः पशूनां प्रजनयिता, तमेव भागधेयेनोपासरत्, सोऽस्मै पशून् प्रजनयति, बहुरूपो भवति, बहूनि वै पशूना२ रूपाणि, पशूनामेवास्मै रूपाण्याप्त्वावरुन्द्धे, याम२ शुकहरिमालभेत शुण्ठ२ वा यः कामयेत, यमलोकं ऋध्नुयामित्ये,—तेन वै य३मोऽमुष्मिंल्लोकं आर्ध्नोद्, य३मोऽमुष्य लोकस्याधिपत्यमानशे, तमेव भागधेयेनोपासरत्, स एनममुष्य लोकस्याधिपत्यं गमयत्ये,—क्षुधा वा एतेन यमलोकं ऋध्नोति, परे वयसि यष्टव्यं, ताजग्घि प्रमीयते, शुण्ठो वा भवति शुकहरिर्वै,—प३ह्येतस्य देवतया पशूना२ समृद्धः ॥११॥ १८ [ ८५१ ]

॥ इति मध्यमकाण्डे पशुबन्ध नाम पञ्चमः प्रपाठकः ॥५॥

---

अथ षष्ठः प्रपाठकः।

## राजसूयः।

अनुमत्या अष्टाकपालं निर्वपन्ति ये प्रत्यञ्चः शम्यामतिशीयन्ते, तन्नैर्ऋतमेककपाल,—मुभौ सह शृतौ कुर्वन्ति, नैर्ऋतेन पूर्वेण प्रचरान्ति, दक्षिणा परेत्य स्वकृता इरिण एकोल्मुकं निधाय विस्र२सिकायाः काण्डाभ्यां जुहोति ॥ जुषाणा निर्ऋतिर्वेतु स्वाहा ॥ वासः कृष्णं भिन्नान्तं दक्षिणा, पुनरेत्यानुमत्या अष्टाकपालेन प्रचरन्ति, धेनुर्दक्षिणा,—ऽथ य उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्गृज्य जुहुयात् ॥ इदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजे ॥ तत् पुनरपिदधाति ॥ इदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामि ॥ श्वो भूत आदित्येभ्यो भुवद्भ्यो घृते चरुं,—वैरो दक्षिणा, श्वो भूत आग्नावैष्णव एकादशकपालो, ऽनड्वान् वामनो दक्षिणा,

---

[ १ ] तै. १,८,१। काठ. १५,१। वा. २९,६०; ३,१०; (९,३५)। काण्व. ३१,४९; ३,११-१२। शत. ब्रा. ५,२,३,२। मा. श्रौ. ९,१,१।

श्वो भूतेऽग्नीषोमीया एकादशकपालो, हिरण्यं दक्षिणा, श्वो भूत ऐन्द्राग्न एकादशकपालो, ऽनड्वानृषभो दक्षिणा, श्वो भूत आग्ने३योऽष्टाकपालो, माहेन्द्रं दधि, वासः क्षौमं दक्षिणा॥१॥ १-७

ऐन्द्राग्नमेकादशकपालं निर्वपेदाग्नेन्द्रं वा, वैश्वदेवश्चरुः, सौम्यः श्यामाकश्चरु,—र्द्यावापृथिवीया एककपालो, वत्सः प्रथमजो दक्षिणा, सीरं द्वादशायोगं दक्षिणोष्टारो वानड्वान्॥२॥ ८

आग्ने३योऽष्टाकपालो, वारुणो यवमयश्चरू, रौद्रो गावीधुकश्चरु,—रैन्द्रं दधि, धेनुरनड्वाही दक्षिणा,—ऽपां न्ययनादपामार्गानाहरन्ति, तान् त्सक्तून् कृत्वा दक्षिणा परेत्य स्वकृता इरिण एकोल्मुकं निधाय पर्णमयेन स्रुवेण जुहोति ॥ देवस्य त्वा सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्यौजसा, रक्षोहासि, स्वाहा, हतं रक्षो, ऽवधिष्म रक्षः ॥ वरो दक्षिणा॥ ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहा, ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहा, ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहा, ये देवा उत्तरात्सद्यो मित्रावरुणनेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहा, ये देवा उपरिषदोऽवस्वद्वन्तः सोमनेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहे,—दमहं रक्षोऽभिसमूहाम्य,—ग्ने संदह रक्षः, संदग्धं रक्षो, ऽग्नये पुरःसदे स्वाहा, यमाय दक्षिणात्सदे स्वाहा, मरुद्भ्यः पश्चात्सद्भ्यः स्वाहा, मित्रावरुणाभ्यामुत्तरात्सद्भ्यां स्वाहा, सोमायोपरिषदेऽवस्वद्वते रक्षोघ्ने स्वाहा, रथः पञ्चवाही दक्षिणा ॥३॥ ९-१२

अनुमत्यै चरू, राकायै चरुः, सिनीवाल्यै चरुः, कुह्वै चरु,—र्धात्रे द्वादशकपालः, पष्ठौही दक्षिणा,—ऽग्नावैष्णव एकादशकपाल, ऐन्द्रावैष्णवश्चरु,—र्वैष्णवस्त्रिकपालो, वामनो दक्षिणा, सौमापौष्ण एकादशकपाल, ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः, श्यामो दक्षिणा,—ऽग्नये वैश्वानराय द्वादशकपालो, वारुणो यवमयश्चरु,—र्हिरण्यं चाश्वश्च दक्षिणा ॥४॥ १३

बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे, शितिपृष्ठो दक्षिणै,—न्द्र एकादशकपालो राज्ञो गृहे, ऋषभो

---

[ २ ] तै. १,८,१; २,६,१ । काठ. १५,१ ।
[ ३ ] तै. १,८,७ । काठ. १५,२ । वा. ९,३५,३६,३८ । काण्व. ११,१-४ । शत. ब्रा. ५,२,४,५ । मा. श्रौ. ९,१,१ ।
[ देवस्य त्वा सवितु:० । अथर्व. १९,५१,२]
[ ४ ] तै. १,८,८ । काठ. १५,३ । शत. ब्रा. ५,२,५ । मा. श्रौ. ९,१,१ ।
[ ५ ] तै. १,८,९ । काठ. १५,४ । शत. ब्रा. ५,३,१ । मा. श्रौ. ९,१,१ ।

क्षिणा,—ऽऽदित्यश्चरुर्महिष्या गृहे, धेनुर्दक्षिणा, नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्यां गृहे,
थैनी वण्डापुस्फुरा दक्षिणा,—ऽऽग्नेयोऽष्टाकपालः सेनान्यो गृहे, हिरण्यं दक्षिणा,—ऽश्विनो
द्विकपालः संग्रहीतुर्गृहे, सुवत्यौ दक्षिणा, सावित्रोऽष्टाकपालः क्षत्तुर्गृहे, श्येतो दक्षिणा,
ारुणो यवमयो दशकपालः सूतस्य गृहे, बभ्रुर्महानिरष्टो दक्षिणा, मारुतः सप्तकपालो वैश्य-
य ग्रामण्यो गृहे, पृश्निः पष्ठौही दक्षिणा, पौष्णश्चरुर्भागदुघस्य गृहे, श्यामो दक्षिणा,
ौष्णवस्त्रिकपालस्तक्षरथकारयोर्गृहे, सर्वायसानि दक्षिणा, रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे
ोविकर्तस्य चा,—ऽसिर्वालापितस्थो दक्षिणा शबलो वा त्रिवत्सोऽभिधानी वा केसरपाशा ॥ ५ ॥
१४

इन्द्रायांहोमुचा एकादशकपालं निर्वपेदि,—न्द्राय सुत्राम्णा एकादशकपाल,—मृषभो दक्षि-
ा, स्वयं रुग्णाया अश्वत्थशाखायाः पात्रं भवत्य,—थु श्वेतां श्वेतवत्सां दुहन्ति, तत् स्वयं
र्छति, स्वयं मथ्यते, स्वयं विलीनमाज्यं भवत्य,—थ मैत्राबार्हस्पत्यं हविर्निर्वपन्ति, ये
ोदिष्ठास्तण्डुलास्तं बार्हस्पत्यं चरुं शृतं कुर्वन्ति, तत्र तत् पात्रमपिधायाज्यमासिच्य ये स्थवि-
ास्तण्डुलास्तानावपन्त्यु,—भौ सह शृतौ कुर्वन्ति, मैत्रेण पूर्वेण प्रचरन्त्य,—श्वो मैत्रस्य दक्षि-
ा, शितिपृष्ठो बार्हस्पत्यस्या,—ऽग्नये गृहपतय आपतन्तानामष्टाकपालं निर्वपेत्, सोमाय व-
स्पतये श्यामाकं चरुं, सवित्रे प्रसवित्रे सुतीनानामष्टाकपालं, बृहस्पतये वाचस्पतये नैवारं
रुं,—मिन्द्राय ज्येष्ठाय हायनानामेकादशकपालं, मित्राय सत्यस्य पतये नाम्बानां चरुं,
रुणाय धर्मस्य पतये यवमयं चरुं, रुद्राय पशुपतये गावीधुकं चरुम् ॥ सविता त्वा प्रसवा-
ां सुवता,—मग्निर्गार्हपत्यानां, सोमो वनस्पतीनां बृहस्पतिर्वाचा,—मिन्द्रो ज्यैष्ठ्यानां,
मित्रः सत्यानां, वरुणो धर्मणां, रुद्रः पशूनां, ते देवा असपत्नमिमं सुवध्वममुमामु-
्यायणममुष्याः पुत्रममुष्यां विशि महते क्षत्राय महते जानराज्याय, शुक्रज्योतिश्च चित्रज्यो-
तिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्च ऋतपाश्चात्यंहा ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेण-
श्चान्तिमित्रश्च दूरेऽमित्रश्च गणं ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः ॥६ ॥
१५–१६

देवीरापो अपां नपाद्राष्ट्रदाः स्थ, राष्ट्रं दत्त, स्वाहा, देवीरापो अपां नपाद्राष्ट्रदाः स्थ,
ाष्ट्रममुष्मै दत्त, वृषोर्मिरसि, वृषसेनोऽस्यु,—पां पतिरस्य,—प्रहावरीः स्थ, परिवाहिणीः

[ ६ ] तै. १,८,९-१० । काठ. १५,४-५ । वा. ९,३९-४०;१०,१८;१७,८०,८२,८३। काण्व. ११,९-१०,२६;१८,८०,
८२,८३ । शत. ब्रा. ५,३,२,४;५,३,३,२ । मा. श्रौ. ९,१,१-२ ।

[ ७ ] तै. १,८,११ । काठ. १५,६ । वा. १०,२-४ । काण्व. ११,६-७ । शत. ब्रा. ५,३,४,४ । मा. श्रौ. ९,१,२ ।

स्थौ, ओजस्विनीः स्थ, मान्दाः स्थ, व्रजक्षितः स्थ, सूर्यवर्चसः स्थ, सूर्यत्वचसः स्थ, मरुतामोजः स्थ, वशाः स्थ, शक्करीः स्थ, विश्वभृतः स्थ जनभृतोऽपामोषधीनाꣳ रसः, शविष्ठाः स्थ, राष्ट्रदाः स्थ, राष्ट्रममुष्मै दत्त ॥ ७ ॥ १७

देवीरापो मधुमतीः सꣳसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वानाः ।

अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीः ॥ १८

अपो देवीर्मधुमतीरगृभ्णामूर्जस्वती राजसूयाश्चितानाः ।

याभिर्मित्रावरुणा अभ्यषिञ्चꣳस्ताभिरिन्द्रमनयन्नत्यरातीः ।

अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रम् ॥ १९

शुक्रा वः शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामि ॥ २०

देवो वः सविता पुनात्वच्छिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥ २१

स्वाहा राजसूयाः ॥ २२

सधमादो द्युम्न्या ऊर्जा एका अनाधृष्टा अपस्यो वसानाः ।

पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः ॥ २३

रुद्र यत्ते गिरिपरं नाम तस्मिन् हुतमसि, यमेष्टमसि, स्वाहा, सोमा इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्तु ॥८॥ २४

क्षत्रस्य योनिरसि, क्षत्रस्योल्बमसि, क्षत्रस्य नाभिरस्या, विक्तो अग्निर्गृहपति, राविक्ता इन्द्रो वृद्धश्रवा, आविक्तौ मित्रावरुणौ धृतव्रता, आविक्ते द्यावापृथिवी ऋतावृधा, आवित्तः पूषा विश्ववेदा, आवित्ता देव्यदिति, राविक्तोऽयमसा आमुष्यायणोऽमुष्याः पुत्रोऽमुष्याꣳ विशि महते क्षत्राय महते जानराज्याय, एष ते जनते राजा, सोमोऽस्माकं ब्राह्मणानाꣳ राजे, न्द्रस्य वज्रोऽसि वार्त्रघ्न, स्त्वयायꣳ वृत्रꣳ वध्याच्, शत्रुबाधनाः स्थ, पात प्राञ्चं, पात प्रत्यञ्चं, पात तिर्यञ्चं, पातान्वञ्चं, पातोर्ध्वं, दिग्भ्य एवैनं पात, मित्रोऽसि, वरुणोऽसि ॥ २५

हिरण्यवर्णमुषसो व्युष्टा अयःस्थूणमुदितौ सूर्यस्य ।

---

[ ८ ] तै. १,८,१२। काठ. १५,६। वा. १,१२,३१;४,४;१०,४,१,६,७,२०;१,१। काण्व. १,१६,४८;४,५;११,८,५,१३, १४,३०;१,१,। शत. ब्रा. ५,३,४,३,२७,२८;५,३,५,१६। मा. श्रौ. ९,१,२-३।

[ ९ ] तै. १,८,१२। काठ. १५,७। वा. १०,८,९,२६;२०,१;९,४०;१०,१६,१८। काण्व. ११,१५-१७,३६;११,९३; ११,१०,२६,२४। शत. ब्रा. ५,३,५,२०।

आरोहथो वरुण मित्र गर्तं ततश्चक्षाथे अदितिं दितिं च ॥९॥ २६

समिधमातिष्ठ, गायत्री त्वा छन्दसामवतु, त्रिवृत्स्तोमो, रथन्तरꣳ साम,—ऽग्निर्देवता,
ब्रह्म द्रविण,—मुग्रामातिष्ठ, त्रिष्टुप्त्वा छन्दसामवतु, पञ्चदशः स्तोमो, बृहत् सामे,—न्द्रो
देवता, क्षत्रं द्रविणं, प्राचीमातिष्ठ, जगती त्वा छन्दसामवतु, सप्तदशः स्तोमो, वै-
रूपꣳ साम, विश्वे देवा देवता, विड् द्रविण,—मुदीचीमातिष्ठा,—ऽनुष्टुप्त्वा छन्दसामवत्वे,—
कविꣳशः स्तोमो, वैराजꣳ साम, मित्रावरुणौ देवता, पुष्टं द्रविण,—मूर्ध्वामातिष्ठ, प
ङ्क्तिस्त्वा छन्दसामवतु, त्रिणवत्रयस्त्रिꣳशौ स्तोमौ, शाक्वररैवते सामनी, बृहस्पतिर्देव-
ता, फलं द्रविणꣳ, सोमस्य त्विषिरसि, त्विषिमत्त्वेव मे त्विषिर्भूयात् ॥ २७

प्रत्युस्तं नमुचेः शिरोऽवेष्टा दन्दशूकाः । मृत्योः पाहि दिद्विवः पाहि ॥१०॥ २८

अग्नये स्वाहा, सोमाय स्वाहा, सवित्रे स्वाहा, सरस्वत्यै स्वाहा, पूष्णे स्वाहा, बृ-
हस्पतये स्वाहे,—न्द्राय स्वाहा, घोषाय स्वाहा, श्लोकाय स्वाहा,—ऽꣳशाय स्वाहा, भगाय
स्वाहा, क्षेत्रस्य पतये स्वाहा, सोमस्य त्वा द्युम्नेनाग्नेस्तेजसैन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां
क्रतुनाभिषिञ्चामी,—न्द्रस्य योनिरसि, जनयाति वृन् पाहि ॥ २९

समावृवृत्रन्नधरागुदक्ता अहिं बुध्न्यमन्वीयमानाः ।
ताः पर्वतस्य वृषभस्य पृष्ठान्नावो वियन्ति सुसिचो न वाणीः ॥ ३०

इन्द्रस्य वज्रोऽसि वाजसनि,—स्त्वयायꣳ वाजꣳ से—,न्मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा
युनज्मि, विष्णोः क्रमोऽसि, सपत्नहा मरुतां प्रसवे जया,—ऽऽसं मनः, समिन्द्रियेणे,—षं
वज्रो वाजसातम,—स्तेन नौ पुत्रो वाजꣳ सेत् ॥११॥ ३१

इयुदस्या,—युरस्या,—युर्मे धेहि, युङ्ङसि, वर्चोऽसि, वर्चो मे धेह्यू,—र्गस्यू,—र्जं मयि

---

[ १० ] तै. १,८,१३-१४ । काठ. १५,७ । वा. १०,५,१०-१५ । काण्व. ११,१८-२३ । शत. ब्रा. ५,४,१,३-७ । मा. श्रौ. ९,१,३ ।

[ ११ ] तै. १,८,१३-१५ । काठ. १५,७-८ । वा. १०,५,१९,२१,२३;९,५;२२,६,२०,२७;३९,१ । काण्व. ११,१२-१३, २८,३१,३३;२४,६,३७;३९,१ । शत. ब्रा. ५,३,५,८-९;५,४,२,५ । मा. श्रौ. ९,१,३ । [ अग्नये स्वाहा । अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । इन्द्राय स्वाहा । अथर्व. १९,४,३,६ । समावृत्र० ( ता अधरादुदीचीरावबृ० ) न वाणीः ( पुराणीः ) । अथर्व. १२,२,४१ । विष्णोः क्रमोऽसि सपत्नहा । अथर्व. १०,५,२५-३५ ]

[ १२ ] तै. १,८,१५-१६;१०,२;१४,२ । काठ. १५,८ । वा. १०,५,२५-२७,२३,२६-२८,२४,२०;२३,६५;२२,६,२०, २७;३९,१;१२,१४ । काण्व. ११,१२-१३,३३,३५-४०,३४;१३,१५;११,२९;२५,६७;२४,६,३७;३९.१ । [ इय-दस्यायुर्मे धेहि ( दाः ) । अथर्व. २,१७,४ ]

*

धेहि, मित्रोऽसि, वरुणोऽसि, सदसि, समहं विश्वैर्देवैः,—र्नमो मात्रे पृथिव्यै, मा मां
माता पृथिवी हिंसीत् ॥ ३२

प्रति त्यन्नाम राज्यमधायि स्वां तन्वं वरुणोऽसुषोत् ।
शुचेर्मित्रस्य व्रत्या अभूमामन्महि महद्दतस्य नाम ॥ ३३
सर्वे व्राता वरुणस्याभूम नि मित्रयुररतीनतारीत् ।
अशूशुभन्त यज्ञिया ऋतेन नि त्रितो जरिमाणं न आनट् ॥ ३४

स्योनासि सुषदा, स्योनामासीद, सुषदामासीद ॥ ३५

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ३६

अग्नये स्वाहा, सोमाय स्वाहे,—न्द्रस्यौजसे स्वाहा, मरुतां बलाय स्वाहा ॥ ३७

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ३८

ब्रह्मा३ंस्त्वं ब्रह्मासि, सवितासि सत्यसवो, ब्रह्मा३ंस्त्वं ब्रह्मासि, मित्रोऽसि सुशेवो,
ब्रह्मा३ंस्त्वं ब्रह्मासी,—न्द्रोऽसि सत्यौजा, ब्रह्मा३ंस्त्वं ब्रह्मासि, वरुणोऽसि विश्वौजाः ॥ ३९

एष वज्र,—स्तेन मे रध्य, दिशो अभ्युभूदयम् ॥ ४०

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यस्मै के जुहुमस्तन्नो अस्तु ॥ ४१

असा अमुष्य पुत्रो, ऽमुष्यासौ पुत्रः ॥ ४२

वयं स्याम पतयो रयीणाम् ॥१२॥ ४३

अपां नप्त्रे स्वाहो,—र्जो नप्त्रे स्वाहा,—ऽग्नये गृहपतये स्वाहा ॥ सावित्रोऽष्टाकपालः, श्येतो
दक्षिणा, सारस्वतश्चरु,—र्धेनुर्दक्षिणा, पौष्णश्चरुः, श्यामो दक्षिणा, बार्हस्पत्यश्चरुः,
शितिपृष्ठो दक्षिणै,—न्द्र एकादशकपाल, ऋषभो दक्षिणा, वारुणो यवमयो दशकपालो,
बभ्रुर्महानिरष्टो दक्षिणा, त्वाष्ट्रोऽष्टाकपालो, ऽंसेपाच्च शुण्ठोऽधिरूढाकर्णो वा दक्षिणा,—
ऽग्नेयोऽष्टाकपालो, हिरण्यमष्टापृडं दक्षिणा, सौम्यश्चरु,—र्बभ्रुर्दक्षिणा, वैष्णवस्त्रिकपालो,

---

[ निषसाद धृतव्रतो०...सुक्रतुः। ऋ. १,२५,१० । अग्नये स्वाहा । अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । इन्द्राय स्वाहा । अथर्व. १९,४३,६ । हंसः शुचिषद्वसु०... ऋतम् । ऋ. ४,४०,५। प्रजापते न त्वदेता०.. ...रयीणाम् । ऋ. १०,१२१, १० । अथर्व. ७,७९,४;८०,३ ]

[ १३ ] तै. १,८,१६–१७,१९,२० । काठ. १५,८-९ । वा. १०,२३;२९,६० । काण्व. ११,३३;३१,४९ । शत. ब्रा. ५, ४,५,६ । मा. श्रौ. ९,१,५ ]

ामनौ दक्षिणा,—ऽऽग्ने३य्योऽष्टाकपालो, हिरण्यं दक्षिणा, बार्हस्पत्यश्चरुः, शितिपृष्ठो दक्षि-
ी,—न्द्र एकादशकपाल, ऋषभो दक्षिणा, वैश्वदेवश्चरुः, पिशङ्गो दक्षिणा, मैत्रावरु३ण्या-
मिक्षा, वशा दक्षिणा,—ऽऽग्ने३य्योऽष्टाकपालः, सौम्यश्चरुः, सावित्रो द्वादशकपालो, बार्ह-
स्पत्यश्चरु,—रग्नये वैश्वानराय द्वादशकपाल,—स्त्वा३ष्ट्रोऽष्टाकपालो, दक्षिणो रथवाहनवाहो दक्षि-
णा, सारस्वतश्चरुः, पौष्णश्चरु,—र्मैत्रश्चरु,—र्वारुणश्चरु,—रदित्यै चरुः, क्षेत्रस्य पतये चरुः,
सव्यो रथवाहनवाहो दक्षिणा, मारुती पृश्निः, पष्ठौही गर्भिण्यादित्या,—जा मल्हा गर्भिणी
सवित्रे प्रसवित्रे, सुतीनानामष्टाकपालोऽश्विभ्यां, पूष्ण एकादशकपालः, सरस्वत्यै सत्यवाचे
चरुर्दण्ड उपानहौ शुष्कदृतिः सा दक्षिणा ॥१३॥    ४४-४५ [८९६]

॥ इति मध्यमकाण्डे राजसूयो नाम षष्ठः प्रपाठकः ॥६॥

---

अथ सप्तमः प्रपाठकः।

## अग्निचितिः।

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १
युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शक्त्ये ॥ २
युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम्।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३
युञ्जते मनः ॥ ४
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरिः।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः।
यः पार्थिवानि विममे स एतशो रजांꣳसि देवः सविता महित्वना ॥ ६
देव सवितः ॥ ७
इमं मे देव सवितर्यज्ञं प्रणय देवाव्यम्। वसुविदꣳ सत्राजितं धनजितꣳ स्वर्विदम्।
ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम्। बृहद्गायत्रवर्तनि ॥ ८

---

[ १ ] मै. ३,१,१-२। वै. ४,१,१। काठ. १५,११;१६,१। वा. ११,१-११;५,१४;३७,२;९,१;३०,१। काण्व. १२,१--११;५,१९;३७,२;१०,१;३४,१। मा. श्रौ. ६,१,१। [ युञ्जते मन०.......परिष्टुतिः। ऋ. ५,८१,१। युजे वां ब्रह्म०...तस्थुः। ऋ. १०,१३,१। अथर्व. १८,३,३९। यस्य प्रयाण०...महित्वना। ऋ. ९,८१,३ ]

देवस्य त्वा सवितुः प्रसवे३ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, नारिरसि, गायत्रेण
छन्दसा पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरा, त्रैष्टुभेन छन्दसा,—ऽभ्रिरसि, नारिरसि,
त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्था आ जागतेन छन्दसा ॥ ९
हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १०
आनुष्टुभेन छन्दसा ॥१॥ ११
प्रतूर्तꣳ वाजिन्नाद्रव वरिष्ठामनु संवतम् ।
दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥ १२
युञ्जाथाꣳ रासभꣳ युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्ता अस्मयुम् ॥ १३
योगे योगे तवस्तरꣳ वाजे वाजे हवामहे । सखाय इन्द्रमूतये ॥ १४
प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि ॥ उ३र्वन्तरिक्षꣳ वीहि ॥ स्वस्तिगव्यू-
तिरभयानि कृण्वन् पूष्णा सयुजा सह ॥ अग्निं पुरीष्यमङ्गिरस्वदाभरा,—ऽग्निं पुरीष्यमङ्गिरस्वदच्छेमो,
ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ अन्वग्निः ॥ १५-१९
आगत्य वाज्यध्वानꣳ सर्वा मृधो विधूनुते । अग्निꣳ सधस्थे महति चक्षुषा निचिकीषति॥ २०
आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनेम तꣳ वयम्॥ २१
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः ।
विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥ २२
उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् ।
वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥ २३
उदक्रमीद् द्रविणोदा वाज्यर्वाकः सु लोकꣳ सुकृतं पृथिव्याः ।
ततः खनेम सुप्रतीकमग्निꣳ ३स्वो रुहाणा अधि नाक उत्तमे ॥ २४

---

[ देवस्य त्वा०... हस्ताभ्याम् । अथर्व. १९,५१,२ । ]

[ २ ] मै. ३,१,३-४ । तै. ४,१,२-३ । काठ. १६,१-३ । वा. ११,११,-२८ । काण्व. १२,११-२८ । मा. श्रौ. ६,१,१।
[ योगे-योगे०...मूतये । ऋ. १,३०,७; अथर्व. १९,२४,७;२०,२६,१, सा. १६३,७४३ । (अन्वग्निः) प्रत्य-
ग्निरुषसा० । ऋ. ४,१३,१, अथर्व. ७,८२,४-५;१८,१,२७-२८ ]

आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तꣳ व्यचिष्ठमन्नꣳ रभसं दृशानम् ॥ २५
आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषस्व ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिधृषे त३न्वा जर्हृषाणः ॥ २६
परि वाजपतिः ॥ २७
परि त्वाग्ने पुरꣳ वयꣳ विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २८

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वꣳ वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ २९

देवस्य त्वा सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थे अग्निं पुरी-
ष्यमङ्गिरस्वत् खनामि, ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतꣳ शिवं प्रजाभ्यो
ऽहिꣳसन्तं पृथिव्याः सधस्थे अग्निं पुरीष्यमङ्गिरस्वत् खनामः ॥ २ ॥ ३०

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो मह आ च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥ ३१
शर्म च स्थो वर्म च स्थो अछिद्रे बहुले उभे ।
व्यचस्वती संꣳवसेथां भर्तमग्निं पुरीष्यम् ॥ ३२
संꣳवसेथाꣳ स्वर्विदा समीची उरसा त्मना । अग्निं भरिष्यन्ती अन्ता रोचमानमजस्रमित् ॥ ३३

पुरीष्योऽसि विश्वभरा, अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥ ३४
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ ३५
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम् ॥ ३६

---

[ आ त्वा जिघर्मि०...दृशानम् । ऋ. २,१०,४ । आ विश्वतः० ..जर्ह (०र्भु) षाणः । ऋ. २,१०,५ । परि वाजपतिः०...दाशुषे । ऋ. ४,१५,३; सा. ३० । परि त्वाग्ने०...भङ्गुरावतम् । ऋ.१०,८७,२२; अथर्व. ७,७१,१;८,३,२२ । देवस्य त्वा० । अथर्व. १९,५१,२ ]

[ ३ ] मै. ३,१,५ । तै. ४,१,३ । काठ. १६,३ । वा. ११,२९–३७;१३,२;१५,२२;३८,१७;३,१५;१५,२६;३३,६;३,१४; १२,५२;१५,५६ । काण्व. १२,२९–३७;१४,२;१६,४३;३८,१७;३,२१;१६,४७;३२,६;३,२०;१३,५३,१६,७८ ।
[ त्वामग्ने पुष्करा०...वाघतः । ऋ. ६,१६,१३; सा. ९ । तमु त्वा दध्यङ्०...पुरन्दरम् । ऋ. ६,१६,१४ ।

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयꣳ रणे रणे ॥ ३७

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ ।

देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ३८

नि होता होतृषदने विदानस्त्वेषो दीदिवं असदत्सुदक्षः ।

अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ॥ ३९

सꣳसीदस्व महं असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मेध्य सृज प्रशस्त दर्शतम् ॥ ४०

जनिष्व हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु ।

दमे दमे सप्त रत्ना दधानोऽग्निर्होता निषसाद यजीयान् ॥ ४१

अयमिह ॥ ४२

इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया ।

भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव ॥ ४३

अयं ते ॥ ३ ॥ ४४

अपो देवीरुपसृजा मधुमतीरयक्ष्माय प्रजाभ्यः ।

तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ ४५

सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयꣳ यद्विकस्तम् ।

यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥ ४६

सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः ।

वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो ॥ ४७

उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा ।

दृशा च भासा बृहता सुशिक्मनाग्ने याहि सुशस्तिभिः ॥ ४८

ऊर्ध्वं ऊ षु ण ऊतये तिष्ठा देवो न सविता ।

---

[ तमु त्वा पाथ्यो०...रणे । ऋ. ६,१६,१५ । सीद होतः स्व०...वयो धाः । ऋ. ३,२९,८ । नि होता होतृ०...अग्निः । ऋ. २,९,१ । सꣳसीदस्व०...दर्शतम् । ऋ. १,३६,९ । अयमिह०...विशोविशे । ऋ.४,७,१ । इमꣳ स्तोम०......तव । ऋ. १,९४,१; अथर्व. २०,१३,३; सा. ६६;१०६४ । अयं ते०...... रयिम् । ऋ. ३,२९,१०; अथर्व. ३,२०,१ ]

[ ४ ] मै. ३,१,५-६ । तै. ४,१,४ । काठ. १६,४ । वा. ११,३८—४७ । काण्व. १२,३८-४७ । मा. श्रौ. ६,१,१ ।

[ उदु तिष्ठ०...सुशस्तिभिः । ऋ. ८,२३,५ । ऊर्ध्व ऊ षु ण०...महे । ऋ. १,३६,१३ । सा. ५७ ]

ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ४९
संजातो गर्भो असि रोदस्योरग्ने चारुर्विभृता ओषधीषु ।
चित्रः शिशुष्परि तमा॑ᳪस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ५०
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीष्यवाहनः ॥ ५१
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी हिᳪसीर्मान्तरिक्षं मा वनस्पतीन् ॥ ५२
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीꣳष्यं मा पाद्यायुषः पुरा ॥ ५३
वृषाग्निᳪ वृषणं भरन्नपां गर्भᳪ समुद्रियम् । अग्न आयाहि वीतये ॥ ५४
ऋतᳪ सत्यमृतᳪ सत्यं,—मग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥४॥ ५५
ओषधयः प्रतिगृभ्णीताग्निमेतᳪ शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥ ५६
ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः ।
अयᳪ वो गर्भ ऋत्वियः प्रत्नᳪ सधस्थमासदत् ॥ ५७
वि पाजसा पृथुना शोशुचानो बाधस्व रिपून् रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहᳪ सुहवस्य प्रणीतौ ॥ ५८
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ ५९
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ ६०
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ६१
मित्रः सᳪसृज्या पृथिवीं भूमिं च ज्योतिषा सह ।
सुजातं जातवेदसमयक्ष्माय त्वा सᳪसृजामि प्रजाभ्यः ॥ ६२
रुद्राः सᳪसृज्या पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥
६३

---

[ स जातो गर्भो०......दद्राः । ऋ. १०,१,२ । अग्न आयाहि वीतये । ऋ. ६,१६,१०; सा. १;६६० । ]

[ ५ ] मै. ३,१,६ । तै. ४,१,४-५ । काठ. १६,४-५ । वा. ११,४७-५७; ३६,१४-१६। काण्व. १२,४८-५८;३६,१४-१६ । मा. श्रौ. ६,१,२ । [ वि पाजसा०...प्रणीतौ । ऋ. ३,१५,१; । आपो हि ष्ठा०...चक्षसे । ऋ. १०,९,१; अथर्व. १,५,१; सा. १८३७। यो वः शिवतमो०...मातरः। ऋ. १०,९,२; अथर्व. १,५,२; सा. १८३८। तस्मा अरं गमाम०...च नः । ऋ. १०,९,३; अथर्व. १,५,३; सा. १८३९ ]

संसृष्टां वसुभी रुद्रैर्धीरैः कर्म३ण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ॥ ६४

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां ददातु हस्तयोः ॥ ६५

उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया ।

माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ ॥५॥ ६६

मखस्य शिरोऽसि, वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वदुखे, ध्रुवासि, पृथिव्यसि, धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातानस्मै यजमानाय, रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदुखे, ध्रुवास्य,—न्तरिक्षमसि, धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातानस्मै यजमानाया,—ऽऽदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वदुखे, ध्रुवासि, द्यौरसि, धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातानस्मै यजमानाय, विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदुखे, ध्रुवासि, दिशोऽसि, धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातानस्मै यजमानाया,—ऽऽदित्या रास्नास्य,—दितिष्टे बिलं गृभ्णातु ॥ ६७

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥ ६८

वसवस्त्वा धूपयन्त्वङ्गिरस्वं,—द्रुद्रास्त्वा धूपयन्त्वङ्गिरस्वं,—दादित्यास्त्वा धूपयन्त्वङ्गिरस्वं,—दिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्, वरुणस्त्वा धूपयत्वङ्गिरस्वद्, विष्णुस्त्वा धूपयत्वङ्गिरस्वद्, बृहस्पतिष्ट्वा धूपयत्वङ्गिरस्वं,—ददितिष्ट्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट, देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे आङ्गिरस्वद्दधतूखे, धिषणा त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धामुखे, ग्नास्त्वा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वच् श्रपयन्तूखे, वरुत्री त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत् पचतामुखे, जनयस्त्वाछिन्नपत्रा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे ॥ ६९

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ७०

देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या ॥ ७१

---

[ ६ ] मै. ३,१,७,८ । तै. ४,१,५-६ । काठ. १६,५-६ । वा. ११,५७-६५;३७,८ । काण्व. १२,५९-६६;३७,८ । मा. श्रौ. ६,१,२ । [ मित्रस्य चर्षणी०...स्तमम् । ऋ. ३,५९,६ । देवस्त्वा सविता० । ऋ. २,३२,७; अथर्व. ७,४६,२ ]

उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम् । अव्यथमाना पृथिव्यामाशा दिश आपृण ॥ ७२

मित्रैतां त उखां परिददाम्यभित्त्या, एषा मा भेदि ॥ ७३

वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वदुखे, रुद्रास्त्वाछृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदु-
ख, आदित्यास्त्वाछृन्दन्तु जागतेन छन्दसाङ्गिरस्वदुखे, विश्वे त्वा देवा वैश्वानरा आछृन्दन्त्वा-
नुष्टुभेन छन्दसाङ्गिरस्वदुखे ॥६॥ ७४

आकूतमग्निं प्रयुजꣳ स्वाहा, मनो मेधामग्निं प्रयुजꣳ स्वाहा, चित्तꣳ विज्ञातमग्निं प्रयुजꣳ
स्वाहा, वाचो विधृतमग्निं प्रयुजꣳ स्वाहा, प्रजापतये मनवे स्वाहा,ऽग्नये वैश्वानराय स्वाहा॥
७५

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नꣳ वृणीत पुष्यसे । स्वाहा ॥ ७६

मा सु भित्था मा सु रिषो दृꣳहस्व वीरयस्व सु । अम्ब धृष्णु वीरयस्वाग्निश्चेदं करिष्यथः ॥
७७

दृꣳहस्व देवि पृथिवि स्वस्तये आसुरी माया स्वधया कृतासि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥ ७८

द्रवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥ ७९

परस्या अधि संवतोऽवरं अभ्यातर । यत्राहमस्मि तं अव ॥ ८०

परमस्याः परावतो रोहिदश्व इहागहि । पुरीष्यः पुरुप्रियो अग्ने त्वं तरा मृधः ॥ ८१

यदग्ने यानि कानि चा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ८२

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ८३

रात्रीꣳ रात्रीमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ ८४

नाभा पृथिव्याः समिधानो अग्निꣳ रायस्पोषाय बृहते हवामहे ।

---

[ ७ ] मै. ३,१,९ । तै. ४,१,९-१० । काठ. १६,७ । वा. ११,६६-८२;४,८;२२,२१;२८,१;३४,१५ । काण्व. १२,६७-८३; ४,९;२४,२९;३०,१;३३,९। मा. श्रौ. ६,१,३। [ विश्वो देवस्य०...(स्वाहा) । ऋ, ५,५०,१ । द्रवन्नः सर्पिरा० ...अद्भुतः । ऋ. २,७,६ । परस्या अधि०...अव । ऋ. ८,७५,१५ । यदग्ने या ( का ) नि कानि०... यविष्ठ्य । ऋ. ८,१०२,२०; अथर्व. १९,६४,३ । यदत्त्युप०.. यविष्ठ्य । ऋ. ८,१०२,२१; अथर्व. १९,६४,३

*

इरंमदं बृहदुक्थ१ यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ ८५
याः सेना अभीत्वरीराव्याधिनीरुगणा उत ।
ये स्तेना ये च तस्करास्ताँ१स्ते अग्ने अपिदधाम्यास्ये ॥ ८६
ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्ताँ१स्ते दधामि जम्भयोः ॥ ८७
द१ष्ट्राभ्यां मलिम्लूनग्ने जम्भाभ्यां तस्करं उत ।
हनुभ्या१ स्तेनान् भगवस्ताँ१स्त्वं खाद सुखादितम् ॥ ८८
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान् दिप्साच्च सर्वाँ१स्तान् मृस्मृसा कुरु ॥ ८९
उदेषां बाहूनतिरमुद्वर्चो अथो बलम् ।
क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वं अहम् ॥ ९०
सं१शितं मे ब्रह्म सं१शित१ वी३र्यं बलम् ।
सं१शितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ॥ ९१
ब्रह्म क्षत्र१ सयुजा न व्यथेते ब्रह्माह क्षत्रं जिन्वति क्षत्रियस्य ।
क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत् समीची कृणुतो वीर्याणि ॥७॥ ९२
दृशानो रुक्मं उरुया विभाति दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरजरोऽभवत् सहोभिर्यदेनं द्यौरजनयत् सुरेताः ॥ ९३
नक्तोषासा समनसा विरूपे धापयेते शिशुमेक१ समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥ ९४
विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥ ९५
सुपर्णोऽसि गरुत्मा१,—स्त्रिवृत्ते शिरो, गायत्रं चक्षु,—र्बृहद्रथन्तरे पक्षौ, स्तोम आत्मा, छन्दा१स्यङ्गानि, यजू१षि नाम साम ते तनू,—र्वामदेव्य१ यज्ञायज्ञियं पुच्छं, धिष्ण्याः शफाः॥
९६

[ सं१शितं मे०...पुरोहितः । अथर्व. ३,१९,१ ]

[ ८ ] मै. ३,२,१। तै. ४,१,१०;४,२,१। काठ. १६,८। वा. १२,१-७,११-१७,२५;१७,७०;१२,११.३३;१०,२४। काण्व. १३,१-८,१२-१८,२६,२२,३४;१८,७०;११,३४ । मा. श्रौ. ६,१,३। [दृशानो रुक्म०...रेताः। ऋ. १०,४५, ८ । नक्तोषासा०...णोदाः। ऋ. १,९६,५ । विश्वा रूपाणि०...विराजति। ऋ. ५,८१,२;अथर्व. ७,७३,६ ]

पर्णोऽसिगरुत्मान्, दिवं गच्छ, स्वः पत ॥ विष्णोः क्रमोऽसि सपत्नहा, गायत्रं छन्दा
आरोह, पृथिवीमनुविक्रमस्व, विष्णोः क्रमोऽस्यभिमातिहा, त्रैष्टुभं छन्दा आरोह,—ऽन्तरिक्ष-
नुविक्रमस्व, विष्णोः क्रमोऽस्यरातीयतो हन्ता, जागतं छन्दा आरोह, दिवमनुविक्रमस्व,
ष्णोः क्रमोऽसि शत्रूयतो हन्ता,—ऽनुष्टुभं छन्दा आरोह, दिशोऽनुविक्रमस्व ॥ ९७-९८

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ९९
अग्नेऽभ्यावर्तिन्,—न्नग्ने अङ्गिरः, पुनरूर्जा, सह रय्या ॥ १००
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् । विशस्त्वा सर्वा वान्छन्त्वस्मे राष्ट्राणि धारय ॥ १०१

उदुत्तमꣳ वरुण पाशमस्मत् ॥ १०२
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ १०३
हꣳसः शुचिषत् ॥ १०४
सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनामर्चिषा मा तपसाभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ १०५
अन्तरग्ने रुचा त्वमुखायाꣳ सदने स्वे । तस्यै त्वꣳ हरसा तपं जातवेदः शिवो भव ॥ १०६
शिवो भूत्वा मह्यमग्ने अथा सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः ॥८॥ १०७
दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जनते स्वाधीः ॥ १०८
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सꣳ यत आबभूथ ॥ १०९

---

[ विष्णोः क्रमोऽसि सपत्नहा । अथर्व. १०,५,२५-३५ । अक्रन्ददग्निः०......भात्यन्तः। ऋ. १०,४५,४ । आ त्वाहार्षमन्त०...ध्रशत् । ऋ. १०,१७३,१; अथर्व. ६,८७,१ । उदुत्तमं वरुण०... स्याम। ऋ. १,२४,१५; अथर्व. ७,८३,३;१८,४,६९; सा. ५८९ । अग्ने (ग्रे) बृहन्नुषसा०...न्यप्राः। ऋ. १०, १,१ । हꣳसः शुचिषत्० । ऋ. ४,४०,५ ;तै. सं. १.८,१५,२;४,२,१,५; तै. आ.१०,१०,२ ]

[ ९] मै. ३,२,२, । तै. ४,२,२ । काठ. १६,९ । वा. १२,१८-२९ । काण्व. १३,१९-३० । मा. श्रौ. ६,१,३ । [ दिवस्परि०...स्वाधीः । ऋ. १०,४५,१ । विद्मा ते अग्ने० । ऋ, १०,४५,२; अथर्व. १,१३,३;१३,३,२१ ।

समुद्रे त्वा नृमणा अ॒प्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांꣳसमृतस्य योनौ महिषा अगृभ्णन् ॥ ११०
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥ १११
उशिक् पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि ।
इयर्ति धूममरुषो भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ११२
अक्रन्ददग्निः ॥
विश्वस्य जज्ञे भुवनस्य राजा रोदसी अपृणाज्जायमानः ।
वीडुं चिदद्रिमभिनत् परायन् जना यदग्निमयजन्त पञ्च ॥ ११३
नक्तोषासा ॥
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरंꣳ वस्यो अच्छाभि द्युम्नं देवहितꣳ यविष्ठ्य ॥ ११४
आ तं भज सौश्रवसेष्वग्न उक्थ उक्था आभज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ ११५
त्वामग्ने यजमाना अनु द्यून् दूतं कृण्वाना अयजन्त हव्यैः ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः ॥ ११६
अस्ताव्यग्निर्नृणांꣳ सुशेवो वैश्वानर ऋषिभिः सोमगोपाः ।
अद्वेष्ये द्यावापृथिवी हुवे देवा धत्त रयिमस्मे सुवीरम् ॥९॥ ११७

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः॥ ११८

प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन् मा हिꣳसीस्तन्वा प्रजाः ॥ ११९

---

[ समुद्रे त्वा नृमणा०। ऋ. १०,४५,३। श्रीणामुदारो०। ऋ. १०,४५,५। उशिक्पावको०। ऋ. १०,४५,७। अक्रन्ददग्निः०। ऋ. १०,४५,४ । विश्वस्य जज्ञे (केतु) भुवनस्य०। ऋ. १०,४५,६ । नक्तोषासा०। ऋ. १, ९६,५ यस्ते अद्य० । ऋ. १०,४५,९। आ तं भज० । ऋ. १०,४५,१० । त्वामग्ने यजमाना० । ऋ. १०, ४५,११ । अस्ताव्यग्निर्नृणा ꣳ(०नंरा ꣳ)०। ऋ. १०,४५,१२ ]

[ १० ] मै. ३,२,२ । तै. ४,२,३ । काठ. १६,१० । कपि. २५, १ । वा. १२,३०-४३,९-१०,६,११;३,१।

अक्रन्ददग्निः ॥ १२०
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन् हव्या जुहोतन ॥ १२१
प्र प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥ १२२
आपो देवीः प्रतिगृभ्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभा उ लोके।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनत् ॥ १२३
अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे। गर्भः सञ्जायसे पुनः ॥ १२४
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥ १२५
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। संसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥ १२६
पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थे अन्तरस्याꣳ शिवतमः ॥ १२७
पुनरूर्जा, सह रय्या ॥ १२८
बोधा मे अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः।
पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वꣳ वन्दे अग्ने ॥ १२९
स बोधि सूरिर्मघवा वसुदावा वसुपतिः।
युयोध्यस्मद् द्वेषाꣳसि यानि कानि च चकृम ॥१०॥ १३०
अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः।
अदादिदꣳ यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥ १३१
अग्नेर्भस्मास्य,—ग्नेः पुरीषमसि, संज्ञानमसि कामधरणं, मयि ते कामधरणं भूयात्॥ १३२
अयꣳ सो अग्निर्यस्मिन् त्सोममिन्द्रः सुतं दधे जठरे वावशानः।
सहस्रियꣳ वाजमत्यं न सप्तिꣳ ससवान् त्सꣳस्तूयसे जातवेदः ॥ १३३
अग्ने दिवो अर्णमच्छाजिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये।

---

काण्व. १३,३१-४४,१०-११,७,२२;३,१। मा. श्रौ. ६,१,४। [ अक्रन्ददग्निः० । ऋ. १०.४५,४। समिधाग्निं दुवस्यत०। ऋ. ८,४४,१। प्र प्रायमग्निर्भर०। ऋ. ७,८,४। अप्स्वग्ने सधिष्टव०। ऋ. ८,४३,९। गर्भो अस्योषधीनां०। अथर्व. ५,२५,७;६,९५,३। बोधा मे अस्य०। ऋ. १,१४७,२। स बोधि सूरिर्मघवा०। ऋ. २,६,४]
[ ११ ] मै. ३,२,३। तै. ४,२,४-५। काठ. १६,११। कपि. २५,२। वा. १२,४५-५३,५७-६१;३,१४; १५,५६;५,३। काण्व. १३,४६-५४,५८-६२;३,२०;१६,७८;५,३। मा. श्रौ. ६,१,५। अपेत वीत वि०। ऋ. १०,१४,९; अथर्व. १८,१,५५। अयꣳ सो०। ऋ. ३,२२,१। अग्ने दिवो०। ऋ. ३,२२,२ ]

याः परस्ताद्रोचना सूर्यस्य याश्चावस्तादुपतिष्ठन्ता आपः ॥ १३४
अग्ने यत्ते दिवि वर्चः पृथिव्याꣳ यत् पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षः ॥ १३५
पुरीष्यासो अग्नयः प्रवणेन सजोषसः । जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः ॥ १३६
इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ १३७
अयं ते ॥ चिदसि, तया देवतयाङ्गिरस्वद् ध्रुवा सीद, परिचिदसि, तया देवतयाङ्गिर-
स्वद् ध्रुवा सीद, चितः स्थ, परिचितः स्थो, ऽर्ध्वश्रितः श्रयध्वम् ॥ १३८-१३९
संमितꣳ संकल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि सꣳवसानौ ॥ १४०
सꣳ वां मनाꣳसि सꣳ व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भुव त्वं न इषमूर्जꣳ यजमानाय धेहि ॥ १४१
त्वमग्ने पुरीष्यो रयिमान् पुष्टिमꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वꣳ योनिमिहासदः ॥
१४२
भवतं नः ॥ १४३
मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योना अभारुखा ।
ताꣳ विश्वैर्देवैर्ऋतुभिः सꣳविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥११॥ १४४
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ १४५
नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयꣳ विचृता बन्धमेतम् ।
यमेन त्वꣳ यम्या सꣳविदानोत्तमे नाके अधि रोहयैनम् ॥ १४६
यद्दस्य ते ॥ १४७
यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् ।
तं ते विष्याम्यायुषो नु मध्यादथा जीवः पितुमद्धि प्रमुक्तः ॥ १४८

---

[अग्ने यत्ते दिवि०। ऋ. ३,२२,२। पुरिष्यासो अग्नयः। ऋ. ३,२२,४। इडामग्ने पुरुदꣳसꣳ०। ऋ. ३,५,११; ६,११;२२,५; सा. ७६। अयं ते०। ऋ. ३,२९,१०; अथर्व. ३,२०,१। सꣳवां मनाꣳसि०। अथर्व. ६,९४,१]

[ १२ ] मै. ३,२,४। तै. ४,२,५। काठ. १६,१२। कपि. २५,३। वा. १२,६२-७१,७३। काण्व. १३,६३-७२,७४। मा. श्रौ ६,१५। [नमः सु ते निर्ऋते०। अथर्व. ६,६३,२-३;६,८४,३-४। यं ते(यत्ते)देवी०। अथर्व.६,६३,१]

यदुस्य पारें रजसो महश्चित्रं ज्योतिरजायत । तन्नः पर्षदति द्विषोऽग्ने वैश्वानर ॥ १४९
स्वाहा, भूत्यै नमः ॥ १५०
निवेशनः संगमनो वसूनां विश्वा रूपाण्यभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥ १५१
येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेन यन्तु यजमानाः स्वस्ति ॥ १५२
पूषा युनक्तु सविता युनक्तु बृहस्पतिर्वो युनक्तु । अग्नेस्तेजसा सूर्यस्य वर्चसा ॥ १५३
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ॥ १५४
युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीया इत्सृण्यः पक्कमायत् ॥ १५५
लाङ्गलं पवीरवꣳ सुशेवꣳ सोमपित्सरु ।
उदिद्वपतु गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥ १५६
शुनꣳ सुफाला वितुदन्तु भूमिꣳ शुनं कीनाशो अभ्येतु वाहैः ।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मै ॥ १५७
शुनं नरो लाङ्गलेनानडुद्भिर्भगः फालैः सीरपतिर्मरुद्भिः ।
पर्जन्यो बीजमीरयानो धिनोतु शुनासीरा कृणुतं धान्यं नः ॥ १५८
शुनासीरा प्रकृषतं कृणुतं धान्यं बहु । भूमिरियमृत्वियवती तां फाला उपजिघ्नतु ॥ १५९
घृतेन सीता मधुना समज्यताꣳ विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जो भागं मधुमत् पिन्वमानास्मान्त्सीते पयसाभ्यावृत्स्व ॥ १६०
उद्योजनमन्तर्याममीषां खगꣳल्यꣳ शत्रम् । अष्ट्रां ताडं प्रतीनाहा उभे मण्डूक्यौ युजे ॥ १६१
उदस्थाद्गोजिदश्वजिद्धिरण्यजित् सूनृतया परीवृतः ।

---

[ निवेशनः सङ्गमनो०... पथीनाम् । ऋ. १०,१३९,३; अथर्व. १०,८ ४२; तै. सं. ४,२,५,४ । सीरा युञ्जन्ति०...सुम्नया ( यौ )। ऋ. १०,१०१,४; अथर्व. ३.१७,१; तै. सं. ४,२,५.५ । युनक्त सीरा वि०... पक्कमेयात् । ऋ. १०,१०१,३; अथर्व. ३,१७.२; तै. सं. ४,२,५,५; नि. ५,२८ । लाङ्गलं पवी० । अथर्व. ३,१७,३ । शुनꣳ सु० ...कर्तनास्मै । ऋ. ४,५७,८; अथर्व. ३.१७,५; तै. सं. ४,२,५,६ । शुनं नरो(शुनं वाहाः शुनं नरो )०। ऋ. ४,५७.४; अथर्व. ३.१७,६; तै. आ. ६,६,२ । शुना सीरा०। ऋ. ४,५७,५; अथर्व. ३,१७,७; तै. आ. ६,६,२; नि. ९,४१ । घृतेन सीता० । अथर्व. ३,१७,९ ]

एकचक्रेण सविता रथेनोर्जो भागं पृथिव्या यात्यापृणन् ॥ १६२

इमामिन्द्र हस्तच्युतिं संच्युतिं जघनच्युतिम् । संस्रुतिमिन्द्र संश्रितिमूर्जं संपीतिमुत्कृधे ॥ १६३

उष्टारयोः पील्वयोरथो आबन्धनीययोः । सर्वेषां विद्म वो नाम वाहाः कीलालपेशसः ॥

विमुच्यध्वमघ्न्या देवयाना अतारिष्ट तमसस्पारमस्य । ज्योतिरापाम ॥१२॥ १६४-१६५

या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा । मन्वे नु बभ्रूणामहं शतं धामानि सप्त च ॥ १६६

शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा शतक्रतो यूयमिमं मे अगदं कृत ॥ १६७

पुष्पवतीः प्रसूवरीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ १६८

ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । रपांसि विघ्नतीरित रपश्चातयमानाः ॥ १६९

अश्वत्थे वो निवेशनं पर्णे वो वसतिः कृता । गोभाजा इत्किलासथ यत्सनवाथ पूरुषम् ॥ १७०

यदोषधयः संगछन्ते राजानः समिता इव । विप्रः स उच्यते कवी रक्षोहामीवचातनः ॥ १७१

निष्कृतिर्नाम वो माताथा त्वमसि संकृतिः । सराः पतत्रिणीः स्थन यदामयति निष्कृत ॥ १७२

अश्वावतीं सोमवतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ १७३

यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ १७४

उच् शुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥ १७५

अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः । ओषधयः प्राचुच्यवुर्यत् किं च तन्वो रपः ॥ १७६

---

[ १३ ] तै. ४,२,६ । काठ. १६,१३ । कपि. २५,४ । वा. १२,७५-८९,९१;३५,४ । काण्व. १३,७६-९०,९२;३५,३८। मा. श्रौ. ६,१,६ । [ या ओषधयः ( ओषधीः )०...सप्त च । ऋ. १०,९७,१; तै. सं. ४,२,६,१; नि. ९,२८। शतं वो अम्ब०...कृत । ऋ. १०,९७,२; तै. सं. ४,२,६,१। (ओषधीः प्रतिमोदध्वं) पुष्पवतीः प्रसूवरीः० । ऋ. १०,९७,३; अथर्व. ८,७,२७; तै. सं ४,२,६,१ । ओषधीरिति० । ऋ. १०,९७,४; तै. सं. ४,२,६,१; नि. ६,३ । सनेयमश्वं०......पूरुष । अथर्व. ४,९,७ । अश्वत्थे वो०......पूरुषम् । ऋ. १०,९७,५, तै. सं. ४,२,६,२ । यदोषधयः (यत्रौषधीः)०...तनः। ऋ. १०,९७,६; तै. सं. ४,२,६,२। निष्कृतिर्नाम०... निष्कृत ( निष्कृथ )। ऋ. १०,९७,९; तै. सं. ४,५,६,२। अश्वावतीं सोमा०......तये । ऋ. १०,९७,७; अथर्व. ८,७,२७; तै. सं. ४,२,६,४ । यदिमा वाज०...यथा । ऋ. १०,९७,११; तै. सं. ४,२,६,२; नि. ३,१५। उच्छुष्मा ओष०...पूरुष । ऋ. १०,९७,८; तै. सं. ४,२,६,३ । अति विश्वा०......रपः। ऋ. १०,९७,१०; तै. सं. ४,२,६,३।

यास्त आविविशुरात्मानꣳ या आतस्थुः परुः परुः ।
तास्ते यक्ष्मꣳ विबाधन्तामुग्रो मध्यमशीरिव ॥ १७७
साकꣳ यक्ष्म प्रपत चाषेण किकिदीव्या । साकꣳ वातस्य ध्राज्या साकं नश्य निहाकया ॥ १७८
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः सꣳविदाना ओषधयः प्रावत वाचं मे ॥ १७९
याः फलिनीर्या अफला अकोशा याश्च कोशिनीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः॥ १८०
अवपतन्तीरवदन्दिव ओषधयस्परि । यं जीवमश्नवामहे न स रिष्याति पूरुषः ॥ १८१
दिवं ब्रूमो नक्षत्राणि भूमिꣳ यक्षाणि पर्वतान् ।
समुद्रान्नद्यो वेशन्तास्ते नो मुञ्चन्त्वꣳहसः ॥ १८२
ब्रूमो राजानꣳ वरुणं धातारमुत पूषणम् । त्वष्टारमग्रीयं ब्रूमस्ते नो मुञ्चन्त्वꣳहसः ॥१३॥ १८३
मा नो हिꣳसीज्जनिता यः पृथिव्या यो दिवꣳ सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १८४
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो अरोहत् ॥ १८५
अग्ने यच्छुक्रꣳ यच्चन्द्रꣳ यत् पूतꣳ यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १८६
इषमूर्जमहमित आदि घृतस्य धारां महिषस्य योनिम् ।
आ नो गोषु विशत्वौषधीषु जहामि सेदिमनिराममीवाम् ॥ १८७
कामं कामदुघे धुक्ष्व प्रजाभ्या ओषधीभ्यः । इन्द्रायाग्नये पूष्णे मित्राय वरुणाय च ॥ १८८

---

[ यास्त० ( यस्यौषधीः ) .....रिव । ऋ. १०,९७,१२। साकꣳ यक्ष्म० ...कया । ऋ. १०,९७,१३; तै. सं. ४,२,६,४ । अन्या वो० ... वाचं मे ( वचः )। ऋ. १०,९७,१४; तै. सं. ४,२,६,३ । याः फलिनीर्या०...हसः । ऋ. १०,९७,१५; अथर्व. ६,९६,१;७,११२,१;८,७,२७;१४,२,४५; तै. सं. ४,२,६, ४ । अवपतन्ती०... पूरुषः। ऋ. १०,९७,१७; अथर्व. ६,१०९,२; तै. सं. ४,२,६,५ । दिवं ब्रूमो०... हसः। अथर्व. ११,६,१० । ब्रूमो राजानꣳ०...हसः । अथर्व. ११,६,२-३ । ते नो मुञ्चन्त्वꣳहसः । ऋ. १०, ९७,१५; अथर्व. ११,६,१-८,१०-२१ ]

[ १४ ] मै. ३,२,५। तै. ४,२,७। काठ. १६,१४। कपि. २५,५ । वा. १२,१०२-११३,७२;१३,४;२३,१,३;२५,१०-१३; २७,२५-२६;३२,६-७। काण्व. १३,२०१-११२,७३;१४४;२५,१,३;२७,१४-१७;२९,३३-३६। मा. श्रौ.६,१,६। [मा नो(मा)हिꣳ सीज्जनिता०...। ऋ. १०,१२१,९ तै. सं.४.२७,१। कस्मै देवाय०...। अथर्व. ४,२,१-८।]

*

अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो ।
बृहद्भानो शवसा वाजमु३क्थ्यं दधासि दाशुषे कवे ॥ १८९
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावस्योभे पृणासि रोदसी ॥ १९०
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिꣳ रयिम् ॥ १९१
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ १९२
ऋतावानं महिषꣳ विश्वंदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैवं मानुषा युजा ॥ १९३
इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसो महः ।
रातिꣳ वामस्य सुभगां महीमिषं दधासि सानसिं क्रतुम् ॥ १९४
आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ १९५
सं ते पयाꣳसि समु यन्तु वाजाः सꣳ वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ॥ १४ ॥ १९६
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ १९७

---

[ अग्ने तव श्रवो०...कवे। ऋ. १०,१४०,१; सा. १८१६; तै. सं. ४,२,७,२। पावकवर्चाः०...रोदसी(उभे)। ऋ.१०,१४०,२; सा. १८१७; तै. सं. ४,२,७,२। इरज्यन्नग्ने०...रयिम् (क्रतुम्)। ऋ. १०,१४०,४;सा. १८१९; तै. सं. ४,२,७,२ । ऊर्जो नपाज्जात०... वामजाताः । ऋ. १०,१४०,३; सा १८१८; तै. सं. ४,२,७,२ । ऋतावानं महिषꣳ...युगा । ऋ. १०,१४०,६; सा. १८२१; तै. सं. ४,२,७,३ । इष्कर्तारमध्व० ... क्रतुम् (रयिम्)। ऋ. १०,१४०,५; सा. १८२०; तै. सं. ४,२,७,३। आप्यायस्व समेतु०...सङ्गथे। ऋ. १,९१,१६; ९,३१,४; तै. सं. ३,२,५,३;४,२,७,४; ताण्ड्य ब्रा. १,५,८। सं ते पयाꣳसि०...धिष्व। ऋ. १,९१,१८, सा. ६०३; तै. सं. ४,२,७,४]

[ १५ ] मै. ३,२,६ । तै. ४,२,८-९;१.२,१४ । काठ. १६,१५-१६। वा. १३,३-१६,१८-२१;२३,१;२५,१०;३१,३; १५,२१,२३;५,१३,२७;१२,५३;१३,२५;१३,१९,२४,२५;१४,६,१२,१४-१६,२७;१५,५७--५८,६४;१७,४५; ६,३;३६,१५ । काण्व. १४,३-१६,१८-२१;२५,१;२७,१४;२९,३३;१६.४२,४४;५,१८,३६,६,३;१३,५४;१४, २५-२६;१५,५,१५,१६,३१;१६,७९,८४;२९,५०;३५,१७; मा. श्रौ. ६,१,७। [ ब्रह्म जज्ञानं०...विवः। अथर्व. ४,१,१; ५,६,१ ]

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १९८
अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि।
तस्य त्वष्टा विदधद्रूपमेति तत् पुरुषस्य देवमाजानमग्रे ॥ १९९
द्रप्सश्चस्कन्द ॥ २००
नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ २०१
य इषवो यातुधानानां॰ ये वनस्पतीनाम्। येऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २०२
ये अमी रोचने दिवो ये वा सूर्यस्य रश्मिषु।
ये अप्सु षदांश्सि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥ २०३
कृणुष्व पाजः प्रसितिं न पृथ्वीं॰ याहि राजेवामवाँ इभेन।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ २०४
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः।
तपोभिरग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥ २०५
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ २०६
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रां ओषतात्तिग्महेते।
यो नो अरातिं॰ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ २०७
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविः कृणुष्व दैव्यान्यग्ने।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ २०८

---

[हिरण्यगर्भः समवर्त०...। ऋ. १०,१२१,१; अथर्व.४,२,७; तै. सं. ४,१,८,३;२,८,२; ताण्ड्य. ९,९,१२;नि. १०,२३। कस्मै देवाय०।... ऋ. १०,१२१,१-९; अथर्व. ४,२,१-८। द्रप्सश्चस्कन्द पृथिवी०। ऋ. १०,१७, ११; अथर्व. १८,४,२८; तै. सं.३,१,८,३;४,२,८,२;९ ५; तै. आ. ६,६,१। नमो अस्तु सर्पेभ्यो०...। ऋ. परि. १५,११। य (या) इषवो यातु०...नमः। ऋ. परि. १५,१०। ये अमी (येऽदो) रोचने०... नमः। ऋ. परि. १५,९। ये वामी०। वा. य. १३,९। कृणुष्व पाजः०...पिष्ठैः। ऋ. ४,४,१; तै. सं. १,२,१४,१; नि. ६,१२। तव भ्रमास०... गुल्काः। ऋ. ४,४,२; तै. सं. १,२,१४,१। प्रति स्पशो०...धर्षीत। ऋ. ४,४,३; तै. सं. १,२,१४,१। उदग्ने तिष्ठ०...शुष्कम्। ऋ. ४,४,४; तै. सं. १,२,१४,२। ऊर्ध्वो भव०... शत्रून्। ऋ. ४,४,५; अथर्व.१३,१,३; तै. सं.१,२,१४,२।

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ २०९
अग्नेष्ट्वा तेजसा सादयामि, तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २१०
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ २११

इन्द्रस्य त्वौजसा सादयामि, तया देवतयाङ्गिरस्वद् ध्रुवा सीद, ध्रुवासि धरुणास्तृता विश्वकर्मणा सुधृता, मा त्वा समुद्र उद्वधीन्मा सुपर्णो,—ऽव्यथमाना पृथिवीं दृꣳह, तेजोऽसि, तेजो मे यच्छ, पृथिवीꣳ यच्छ, पृथिवीं दृꣳह, पृथिवीं मा हिꣳसीः, पृथिव्या मा पाहि, ज्योतिरसि, ज्योतिर्मे यच्छा,—ऽन्तरिक्षꣳ यच्छा,—ऽन्तरिक्षं दृꣳहा,—ऽन्तरिक्षं मा हिꣳसी,—रन्तरिक्षान्मा पाहि, स्वरसि, स्वर्मे यच्छ, दिवꣳ यच्छ, दिवं दृꣳह, दिवं मा हिꣳसी,—र्दिवो मा पाहि ॥ २१२

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीर्ये ते अग्ना इन्दवो या उ नाभयः ।
ताभिष्ट्वमुभयीभिः सꣳविदानः प्रजानꣳस्त३न्वेह निषीद ॥ २१३
काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥ २१४
या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यै ते देवीष्टके विधेम हविषा वयम्॥१५॥२१५
यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥ २१६
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धेहि बृहस्पते ॥ २१७

विराड् ज्योतिरधारयत्, स्वराड् ज्योतिरधारयत्, सम्राड् ज्योतिरधारयद्, भूरसि भुवनस्य रेता इष्टका स्वर्गो लोको, मनसा त्वान्वारोहाम्य,—ग्निर्ज्योतिर्ज्योतिरग्नि,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद, सूरसि, सूवनस्य रेता इष्टका स्वर्गो लोको, वाचा त्वान्वारोहामि, सूर्यो ज्योतिर्ज्योतिः सूर्य,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद, बृहस्पतिष्ट्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीꣳ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय, विश्वं ज्योतिर्यच्छा,—ऽग्नि-

---

[अयमग्निः सहस्रिणः०... रयीणाम्। ऋ. ८,७५,४ तै. सं. २,६ ११,१;४,४,४,१। भुवो यज्ञस्य०...हव्यवाहम् । ऋ. १०.८,६; तै. सं. ४,४,४,१; तै. ब्रा. ३,५,७,१ । विधेम हविषा वयम् । अथर्व. १.३१,१ ]

[ १६ ] मै. ३,२,७। तै. ४,२,९। काठ. १६,१६;३९,३। वा. १३,२२-३२,५.१५;( १५,६२ );१२,२;१७,७०;१०,१६-१७;२०,२;१८,४६-४७;८,३२ । काण्व. १४,२२-३४;५,२०;(१६,८३);१३,२;१८,७०;११.३६-३७;११,९३। २०,१६-१७;३१। मा. श्रौ. ६,१,७

ष्टेऽधिपति,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद, विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्यो-
तिष्मतीं विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय, विश्वं ज्योतिर्यच्छ,
वायुष्टेऽधिपति,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद, परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योति-
ष्मतीं विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय, विश्वं ज्योतिर्यच्छ, सूर्य-
स्तेऽधिपति,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २१८

अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः ।
सहस्रवीर्यासि सा मा जिन्व ॥ २१९
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः॥ २२०
मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥ २२१
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ २२२

अपां त्वा गह्मन्त्सादयामि समुद्रस्योद्मन्नवतश्छायायां, नमः समुद्राय, नमः समुद्रस्य च-
क्षसे, ऽनु त्वा दिव्या वृष्टिः सचतां, मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरो, ऽच्छिन्नपत्राः
प्रजा अनुवीक्षस्व ॥ २२३

त्रीन्त्समुद्रान्त्समसृपत् स्वर्गोऽपां पतिर्वृषभ इष्टकानाम् ।
तत्र गच्छ यत्र पूर्वे परेताः पुरीषꣳ वसानः सुकृतस्य लोकम् ॥ २२४
मही द्यौः पृथिवी च न इमꣳ यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ २२५

इदꣳ विष्णुः ॥ २२६

अध स्मा ते वनस्पते वातो विवात्यग्रमित् । उतो न्विन्द्राय पातवे सुनु सोममुलूखल॥२२७

नक्तोषासा ॥ २२८

स्यूता देवेभिरमृतेनागादुखा स्वसारमधि वेदिमस्थात् ।
सत्यं पूर्वैर्ऋषिभिः सꣳविदानो अग्निः प्रविद्वाँ इह तत् कृणोतु ॥ २२९
पृथिवि पृथिव्याꣳ सीद मातुर्मातरि माता ।

[ मधु वाता०...षधीः । ऋ. १,९०,६; तै. सं. ४,२,९,३; तै. आ. १०, १०,२; श. ब्रा. १४,९.३,११ । मधु नक्तमुतोषसो०......पिता । ऋ. १,९०,७; तै. सं ४,२,९,३; तै. आ. १०, १०,२; श. ब्रा. १४ ९,३,१२। मधुमान्नो वनस्पती०...नः । १,९०,८; तै. सं. ४,२,९.३; तै. आ. १०,१०,२, श. ब्रा. १४,९,३,१३ । मही द्यौः०...भरीमसि । ऋ. १.२२,१३, तै. सं. ३,३,१०,२; ५,११,३;४,२,९,३ । इदꣳ विष्णुः० ।... ऋ. १,२२,१७; सा. २२२;१६६९; अथर्व. ७,२६,४; तै. सं. १,२.१३,१; नि. १२,१९ । अध स्मा ( स्म ) ते । ऋ. ६,२५,७;७,३,२; सा. १२२० । नक्तोषासा० । ऋ. १,९६,५; तै. सं. ४,१,१०,४;६,५,२; ७,१२,३ ]

स्योनासि सुषदा स्योनामासीद सुषदामासीद ॥ २३०

निषसाद धृतव्रतो वरुणः प३स्त्यास्वा । साम्राज्याय सुक्रतुः ॥ २३१

क्रतुं देवानां महिमानमीमहे अग्निँ सधस्थे सदनेष्वद्भुतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन्निदधे पुरीष्यम् ॥ २३२

न्युधुमीत्रायां कवयो वयोधसो अग्निँ सधस्थे सदनेष्वच्युतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन्निहितं पुरीष्यम् ॥ २३३

समिध्यमानँ समिधा समिन्धते अग्निँ सधस्थे सदनेषु सुक्रतुम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन् पवमानमाभृतम् ॥ १६ ॥ २३४

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरँ वहन्त्याशवः ॥ २३५

युक्ष्वा हि देवहूतमं अश्वं अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ २३६

समित् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥ २३७

ऋचे त्वा, रुचे त्वा, भासे त्वा, ज्योतिषे त्वा,—ऽभूदिदँ विश्वस्य भुवनस्य वाजिन-
मग्नेर्वैश्वानरस्य च,—ऽग्निस्तेजसा तेजस्वान्, रुक्मो वर्चसा वर्चस्वान्, त्सहस्रदा असि,
सहस्राय त्वा ॥ २३८

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमाँ विश्वरूपम् ।
परिवृङ्ग्धि हरसा माभिशोचीः शतायुषं कृणुहि चीयमानः ॥ २३९

वातस्य जूतिँ वरुणस्य नाभिमश्वं जज्ञानँ सलिलस्य मध्ये ।
शिशुं नदीनाँ हरिमद्रिबुध्नमग्ने मा हिँसीः परमे व्योमन् ॥ २४०

अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तिं नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गां मा हिँसीरदितिँ विराजम् ॥ २४१

---

[ निषसाद धृतव्रतो० । ऋ. १,२५.१०; तै. सं. १,८.१६,१; तै. ब्रा. १,७,१०.२;२,६,५,१ ]

[ १७ ] तै. ४,२.९--१०। काठ. १६,१६-१७। कपि. २५,८। वा. १३,३६-४५,४७-५१;३३,४;१७,९४। काण्व. १४ ३८-४७,४९-५३;३२,४;१९.७। मा. श्रौ. ६,१,७। [ अग्ने युक्ष्वा हि०...शवः। ऋ. ६,१६,४३; सा. २५;१३८३; तै. सं. ४,२.९,५। युक्ष्वा हि देवहूतमं ( माँ )...सदः। ऋ. ८,७५.१; तै. सं. २,६,११,१। समित्स्रवन्ति (सम्यक्स्र०)...अग्नेः। ऋ. ४,५८,६; तै. सं. ४,२,९,६। अजो२ह्य (१ ह्य)ग्न०...मेध्यासः। अथर्व. ४,१४,१; ९,५,१३ ]

त्वष्टुर्वरुत्रीꣳ वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात् ।
महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥ २४२

यो अग्निरग्नेस्तपसोऽधि जातः शोकात् पृथिव्या उत वा दिवस्परि ।
यं इमाः प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥ २४३

इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्षो मेधाय चीयमानो, मयुमारण्यमनु ते दिशामि, तेन चिन्वानस्तन्वं निषीद, मयुं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छत्वि,—मं मा हिꣳसीरेकशफं पशुं कनिक्रदꣳ वाजिनꣳ वाजिनेषु, गौरमारण्यमनु ते दिशामि, तेन चिन्वानस्तन्वं निषीद, गौरं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छत्वि,—मꣳ साहस्रꣳ शतधारमुत्सꣳ व्यच्यमानꣳ सलिलस्य मध्ये घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन् ॥ गवयमारण्यमनु ते दिशामि, तेन चिन्वानस्तन्वं निषीद, गवयं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छत्वि,—मꣳ मूर्णायुꣳ वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदां त्वष्टुर्देवानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन् ॥ मेषमारण्यमनु ते दिशामि, तेन चिन्वानस्तन्वं निषीद, मेषं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छत्व,—जो ह्यग्नेरजनिष्ट शोकात्, सो अपश्यज्जनितारमग्रे, तेन देवा देवतामग्रमायꣳ,—स्तेन रोहमायन्नुप मेध्यासः, शरभमारण्यमनु ते दिशामि, तेन चिन्वानस्तन्वं निषीद, शरभं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छतु ॥१७॥ २४४-२४६

अपां त्वेमन्त्सादयाम्य,—पां त्वोद्मन्त्सादयाम्य,—पां त्वायने सादयाम्य,—पां त्वा ज्योतिषि सादयाम्य,—पां त्वा भस्मनि सादयामि, समुद्रे त्वा सदने सादयाम्य,—र्णवे त्वा सदने सादयामि, सलिले त्वा सदने सादयाम्य,—पां त्वा क्षये सादयाम्य,—पां त्वा सधिषु सादयाम्य,—पां त्वा सदने सादयाम्य,—पां त्वा सधस्थे सादयाम्य,—पां त्वा योनौ सादयाम्य,—पां त्वा पुरीषे सादयाम्य,—पां त्वा पाथसि सादयामि, गायत्रेण त्वा छन्दसा सादयामि, त्रैष्टुभेन त्वा छन्दसा सादयामि, जागतेन त्वा छन्दसा सादयाम्या,—नुष्टुभेन त्वा छन्दसा सादयामि, पाङ्क्तेन त्वा छन्दसा सादयामि ॥१८॥ २४७

अयं पुरो भू,—स्तस्य प्राणो भौवायनो, वसन्तः प्राणायनो, गायत्री वासन्ती, गायत्र्या गायत्रं, गायत्रादुपाꣳशु,—रुपाꣳशोस्त्रिवृत्, त्रिवृतो रथन्तरꣳ, वसिष्ठ ऋषिः, प्रजा-

---

[ १८ ] मै. ३,२,८ । तै. ४,३,१ । काठ. १६,१८ । कपि. २५,९ । वा. १३,५३ । काण्व. १४,५५ । मा. श्रौ. ६,१,८ ।

प्रतिगृहीतया त्वया प्राणं गृह्णामि, प्रजाभ्योऽयं दक्षिणा विश्वकर्मा, तस्य मनो वैश्वकर्मणं, ग्रीष्मो मानसं,—स्त्रिष्टुब् ग्रैष्मी, त्रिष्टुभः स्वारꣳ स्वारादन्तर्यामो, ऽन्तर्यामात् पञ्चदशः, पञ्चदशाद् बृहद्, भरद्वाजा ऋषिः, प्रजापतिगृहीतया त्वया मनो गृह्णामि, प्रजाभ्योऽयं पश्चा विश्वव्यचा,—स्तस्य चक्षुर्वैश्वव्यचसꣳ, वर्षाणि चाक्षुषाणि, जगती वार्षी, जगत्या ऋक्सु-म,—मृक्समाच् शुक्रः, शुक्रात् सप्तदशः, सप्तदशाद्वैरूपं, जमदग्निर्ऋषिः, प्रजापतिगृही-तया त्वया चक्षुर्गृह्णामि, प्रजाभ्य इदमुत्तरा३त्स्व,—स्तस्य श्रोत्रꣳ सौवꣳ, शरच् श्रौत्र्य,—नुष्टुप् शारद्यु,—नुष्टुभ ऐडं,—मैडान्मन्थी, मन्थिन एकविꣳशं, एकविꣳशाद्वैराजꣳ, विश्वा-मित्रा ऋषिः, प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि, प्रजाभ्य इयमुपरि मतिं,—स्तस्या वाङ् मात्या, हेमन्तो वाच्यः, पङ्क्तिर्हैमन्ती, पङ्क्त्या निधनव,—न्निधनवत आग्रायणं, आग्रायणात् त्रिणवत्रयस्त्रिꣳशौ, त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते, विश्वकर्मा ऋषिः, प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥१९॥ २४८

प्राची दिग्, वसन्त ऋतु,—रग्निर्देवता, ब्रह्म द्रविणं, गायत्री छन्दो, रथन्तरꣳ साम, त्रिवृत् स्तोमः, स उ पञ्चदशवर्तनिः, सानुगा ऋषि,—स्त्र्यविर्वयः, कृतमयानां, पुरो-वातो वातः, पितरः पितामहाः परेऽवरे ते नोऽवन्तु, ते नः पान्त्वस्मिन् ब्रह्मण्यस्यां पुरोधा-यामस्मिन् कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ दक्षिणा दिग्, ग्रीष्म ऋतु,—रिन्द्रो देवता, क्षत्रं द्रविणं, त्रिष्टुप्छन्दो, बृहत्साम, पञ्चदशः स्तोमः, स उ सप्तदशवर्तनिः, सना-तना ऋषि,—र्दित्यवाड् वय,—स्त्रेतायानां, दक्षिणाद्वातो वातः, पितरः पितामहाः परेऽवरे ते नोऽवन्तु, ते नः पान्त्वस्मिन् ब्रह्मण्यस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यस्यां देवहूतौ॥ प्रतीची दिग्, वर्षा ऋतु,—र्विश्वे देवा देवता, विड् द्रविणं, जगती छन्दो, वैरूपꣳ साम, सप्तदशः स्तोमः, स उ एकविꣳशवर्तनि,—रहभूना ऋषि,—स्त्रिवत्सो वयो, द्वापरोऽ-यानां, पश्चाद्वातो वातः, पितरः पितामहाः परेऽवरे ते नोऽवन्तु, ते नः पान्त्वस्मिन् ब्रह्म-ण्यस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ उदीची दिक्, शरदृतु,—र्मित्रा-वरुणौ देवता, पुष्टं द्रविण,—मनुष्टुप्छन्दो, वैराजꣳ सामैकविꣳशः स्तोमः, स उ त्रिणव-वर्तनिः, पुराणा ऋषि,—स्तुर्यवाड् वयो, ऽभिभवोऽयाना,—मुत्तराद्वातो वातः, पितरः

---

[ १९ ] तै. ४,३,२ । काठ. १६,१९ । कपि. २५,९ । वा. १३,५४-५८ । काण्व. १४,५६-६५ ।

[ २० ] तै. ४,३,३। वा. १५,१०-१९;४,११;१६,६४-६६ । काण्व. १६,१६-१७,१९-२०,२२-२३,२५-२६,२८-२९; ४,१६;१७,६४ । आस्मिन्ब्रह्म०... देवहूतौ ( देवहूत्यां स्वाहा ) । अथर्व. ५,२४,१-१७ ]

पितामहाः परेऽवरे ते नोऽवन्तु, ते नः पान्त्वस्मिन् ब्रह्मण्यस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशि-
ष्यस्यां देवहूतौ ॥ ऊर्ध्वा दिं,—ग्घेमन्तशिशिरा ऋतू, बृहस्पतिर्देवता, फलं द्रविणं, पङ्क्ति-
श्छन्दः, शाक्वररैवते सामनी, त्रिणवः स्तोमः, स उ त्रयस्त्रिꣳशवर्तनिः, सुपर्णा ऋषिः,
पष्ठवाड् वयः, आस्कन्दोऽयाना,—मुपरिष्टाद्वातो वातः, पितरः पितामहाः परेऽवरे ते नोऽव-
न्तु, ते नः पान्त्वस्मिन् ब्रह्मण्यस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यस्यां देवहूतौ ॥ २० ॥
२४९-२५३ [ ११४९ ]

॥ इति मध्यमकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

---

अथाष्टमः प्रपाठकः ।

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योना असीषदन् ॥ १
ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ २
ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवꣳ योनिमासीद साध्या ।
उख्यस्य केतुं प्रथमं जुषाणा अश्विनाध्वर्यू सादयतामिह त्वा ॥ ३
कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विदं ब्रह्म पिपृहि सौभगाय ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥ ४
स्वैर्दक्षैर्दक्षपितेह सीद देवानाꣳ सुम्ने बृहते रणाय ।
पितेवैधि सूनव आ सुशेवा स्वावेशया तन्वा संꣳविशस्व ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥ ५
पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥ ६
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीꣳ विष्टम्भनीं दिशाम् ।
भुवनस्याधिपत्नीमूर्मिर्द्रप्सो अपामसि । अश्विनाध्वर्यू सादयतामिह त्वा ॥ ७

---

[ १ ] मै. ३.२,८-९ । तै. ४,३,४ । काठ. १७,१ । कपि. २५,१० । वा. १२,५४-५५;१४,१-५,७;१५,५९-६० । काण्व. १३,५५-५६;१६,८०-८१;१५,१-६ । मा. श्रौ. ६,२,१ । [ ता अस्य सूददो०...दिवः। ऋ. ८,६९,३; १,८४,११; अथर्व. २०,१०९,२; सा. १००६; तै. सं. ४,१,४,४; तै. ब्रा. ३,११,६,१ । ]

*

सजूर्ऋतुभिः, सजूर्विधाभिः, सजूर्देवैः, सजूर्देवैर्वयुनाधै,—रग्नये त्वा वैश्वानराया,—
ऽश्विनाध्वर्यू सादयतामिह त्वा, सजूर्ऋतुभिः, सजूर्विधाभिः, सजूर्वसुभिः, सजूर्ऋतुभिः,
सजूर्विधाभिः, सजू रुद्रैः, सजूर्ऋतुभिः, सजूर्विधाभिः, सजूरादित्यैः, सजूर्ऋतुभिः,
सजूर्विधाभिः, सजूर्विश्वैर्देवैर्वैश्वानरैः, सजूर्देवैर्वयुनाधै,—रग्नये त्वा वैश्वानराया,—ऽश्विनाध्वर्यू
सादयतामिह त्वा ।।१।। ८

प्राणं मे पाह्य,—पानं मे पाहि, व्यानं मे पाहि, चक्षुर्म उरुया विभाहि, श्रोत्रं मे श्लो-
कया,—ऽपः पिन्वौ,—षधीर्जिन्व, द्विपादव, चतुष्पात् पाहि, दिवो वा वृष्टिमेरय, क्षत्रꣳ,
वयो, मयन्तं छन्दो, विष्टम्भो वयो, ऽधिपतिश्छन्दो, मूर्धा वयः, प्रजापतिश्छन्दो,
विश्वकर्मा वयः, परमेष्ठी छन्द,—स्त्र्यविर्वय,—स्त्रिष्टुप्छन्दो, दित्यवाड् वयो, विराट् छन्दः,
पञ्चाविर्वयो गायत्री छन्द,—स्त्रिवत्सो वय, उष्णिहा छन्द,—स्तुर्यवाड् वयो, ऽनुष्टुप्छन्दः,
पष्ठवाड् वयो, बृहती छन्द, उक्षा वयः, ककुप्छन्द, ऋषभो वयः, सतोबृहती छन्दो,
ऽनड्वान्वयः, पङ्क्तिश्छन्दो, धेनुर्वयो, जगती छन्दो, बस्तो वयो, युवलं छन्दो,
वृष्णिर्वयो, विशालं छन्दः, पुरुषो वय,—स्तन्द्रं छन्दः, सिꣳहो वय,—श्छदिश्छन्दो,
व्याघ्रो वयो, ऽनाधृष्यं छन्दः ।।२।। ९

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतꣳ युवम् ।
पृष्ठेन द्यावापृथिवी आपृणान्तरिक्षं च विबाधस्व ।। १०

राज्ञ्यसि प्राची दिग्, विराडसि दक्षिणा दिक्, सम्राडसि प्रतीची दिक्, स्वराडस्युदीची दि,—गधिपत्न्यस्यूर्ध्वा दि,—गायुर्मे पाहि, प्राणं मे पाह्य,—पानं मे पाहि, व्यानं मे पाहि, चक्षुर्मे पाहि, श्रोत्रं मे पाहि, मनो मे पिन्व, वाचं मे जिन्वा,—ऽऽत्मानं मे पाहि, ज्योतिर्मे यच्छ, मा छन्दः, प्रमा छन्दः, प्रतिमा छन्दो, ऽस्रीवीश्छन्दः, पङ्क्तिश्छन्द, उष्णिहा छन्दो, गायत्री छन्द,—स्त्रिष्टुप्छन्दो, जगती छन्दो, ऽनुष्टुप्छन्दो, विराट् छन्दो, बृहती छन्दः, पृथिवी छन्दो, ऽन्तरिक्षं छन्दो, द्यौश्छन्दो, नक्षत्राणि छन्दः, समा छन्दः, कृषिश्छन्दो, वाक्छन्दो, मनश्छन्दो, गौश्छन्दो, ऽश्वश्छन्दो, ऽजा छन्दो, हिरण्यं छन्दो, ऽग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता,

---

[ २ ] तै. ४,३,४—५ । काठ. १७,१-२ । कपि. २५,१०;२६,१ । वा. १४,८—१० । काण्व. १५,७-१३ ।
[ ३ ] मै. ३,२,९ । तै. ४,३,६-७ । काठ. १७,३ । कपि. २६,२ । वा. १४,११,१३,१७—२२ । काण्व. १५,१४,१६, १७—२४ । मा. श्रौ. ६,२,१ ।

वसवो देवता, रुद्रा देवता,—ऽदित्या देवता, मरुतो देवते,—न्द्रो देवता, वरुणो देवता, बृहस्पतिर्देवता, विश्वे देवा देवता, मूर्धासि राड्, ध्रुवासि धरुणा, धर्त्र्यसि धरण्या,—ऽऽयुषे त्वा, वर्चसे त्वा, कृष्यै त्वा, क्षेमाय त्वा, यन्त्री राड्, यन्त्र्यसि यमनी, धर्त्र्यसि धरित्री,—षे त्वो,—र्जे त्वा, रय्यै त्वा, पोषाय त्वा ॥ ३ ॥ ११

आशुस्त्रिवृ,—द्भ्रान्तः पञ्चदशो, व्योमा सप्तदशः, प्रतूर्तिरष्टादश,—स्तपो नवदशो,ऽभीवर्तः सविंशो, धरुण एकविंशो, वर्चो द्वाविंशः, संभरणस्त्रयोविंशो, योनिश्चतुर्विंशो, गर्भाः पञ्चविंशं, ओजस्त्रिणवो, विराट् त्रिंशः, क्रतुरेकत्रिंशो, त्रिधृतिर्द्वात्रिंशः, प्रतिष्ठा त्रयस्त्रिंशो, ब्रध्नस्य विष्टपं चतुस्त्रिंशो, नाकः षट्त्रिंशो, वीवर्तोऽष्टाचत्वारिंशो, धर्त्रं चतुष्टोमः ॥ ४ ॥ १२

अग्नेर्भागोऽसि, दीक्षाया आधिपत्यं, ब्रह्म स्पृतं, त्रिवृत्स्तोमा, इन्द्रस्य भागोऽसि, विष्णोराधिपत्यं, क्षत्रं स्पृतं, पञ्चदशः स्तोमो, नृचक्षसां भागोऽसि, धातुराधिपत्यं, जनित्रं स्पृतं, सप्तदशः स्तोमो, मित्रस्य भागोऽसि, वरुणस्याधिपत्यं, दिवो वृष्टिर्वातः स्पृत, एकविंशः स्तोमो, ऽदित्या भागोऽसि, पूष्ण आधिपत्य,—मोजः स्पृतं, त्रिणवः स्तोमो, वसूनां भागोऽसि, रुद्राणामाधिपत्यं, चतुष्पात् स्पृतं, चतुर्विंशः स्तोम, आदित्यानां भागोऽसि, मरुतामाधिपत्यं, गर्भाः स्पृताः, पञ्चविंशः स्तोमः, सवितुर्भागोऽसि, बृहस्पतेराधिपत्यं, समीचीर्दिशः स्पृता,—श्चतुष्टोमः स्तोमो, यवानां भा३गोऽस्य,—यवानामाधिपत्यं, प्रजाः स्पृता,—श्चतुश्चत्वारिंशः स्तोम, ऋभूणां भागोऽसि, विश्वेषां देवानामाधिपत्यं, भूतं निशान्तं स्पृतं, त्रयस्त्रिंशः स्तोमः ॥ ५ ॥ १३

एकयास्तुवत, प्रजा अधीयन्त, प्रजानां पतिरधिपतिरासीत्, तिसृभिरस्तुवत, ब्रह्मासृज्यत, ब्रह्मणस्पतिरधिपतिरासीत्, पञ्चभिरस्तुवत, भूतान्यसृज्यन्त, भूतानां पतिरधिपतिरासीत्, सप्तभिरस्तुवत, सप्तऋषयोऽसृज्यन्त, धाताधिपतिरासी,—न्नवभिरस्तुवत, पितरोऽसृज्यन्ता,—ऽदितिरधिपतिरासी,—देकादशभिरस्तुवता,—ऽऽर्तवा असृज्यन्त, ऋतवोऽधिपतय आसं,—स्त्रयोदशभिरस्तुवत, मासा असृज्यन्त, संवत्सरोऽधिपतिरासीत्, पञ्चदशभिरस्तुवत,

---

[ ४ ] तै. ४,३,८, । काठ. १७,४ । कपि. २६,३ । वा. १४,२३ । काण्व. १५,२५—२६ । मा. श्रौ. ६,२,१ । [ ब्रध्नस्य विष्टपं । अथर्व. ११,३,५० ]

[ ५ ] मै. ३,२,१० । तै. ४,३,९ । काठ. १७,४ । कपि. २६,३ । वा. १४,२४—२६ । काण्व. १५,२७-३१ । मा. श्रौ. ६,२,१ ।

[ ६ ] मै. ३,२,१०। तै. ४,३,१०। काठ. १७,५। कपि. २६,४। वा. १४,२८-३१ । काण्व. १५,३२-३५। मा. श्रौ. ६,२,१

क्षत्रमसृज्यते,—न्द्रोऽधिपतिरासीत्, सप्तदशभिरस्तुवत, ग्राम्याः पशवोऽसृज्यन्त, बृहस्पतिर-
धिपतिरासी,—न्नवदशभिरस्तुवत, शूद्रार्यौ असृज्येता,—महोरात्रे अधिपत्नी आस्ता,—मेकविंश-
शत्यास्तुवतै,—कशफमसृज्यत, वरुणोऽधिपतिरासीत्, त्रयोविंशत्यास्तुवत, क्षुद्राः पशवो
ऽसृज्यन्त, पूषाधिपतिरासीत्, पञ्चविंशत्यास्तुवता,—ऽऽरण्याः पशवोऽसृज्यन्त, वायु-
रधिपतिरासीत्, सप्तविंशत्यास्तुवत, वनस्पतयोऽसृज्यन्त, सोमोऽधिपतिरासी,—न्नव-
विंशत्यास्तुवत, द्यावापृथिवी व्यैतां, वसवो रुद्रा अनुव्यायं,—स्त उ एवाधिपतय आ-
स,—न्नेकत्रिंशतास्तुवत, प्रजा असृज्यन्त, यवाश्चायवाश्चाधिपतय आसं,—स्त्रयस्त्रिंशता-
स्तुवत, भूतान्यशाम्यन्, प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥६॥ १४

अग्ने जातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेडन् शर्मंस्ते स्याम त्रिवरूथा उद्भौ ॥ १५
सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदा नः सपत्नान् ॥ १६

चतुश्चत्वारिंशी स्तोमो, वर्चो द्रविणं, षोडशी स्तोमा, ओजो द्रविणम् ॥ १७

अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥ १८

तया देवतयाङ्गिरस्वद् ध्रुवा सीदै,—वश्छन्दो, वरिवश्छन्द, आछच्छन्दो, मनश्छन्दः,
शंभूश्छन्दः, परिभूश्छन्दः, सिन्धुश्छन्दो, व्यचश्छन्दः, समुद्रं छन्दः, सलिलं छन्दः,
ककुप्छन्द,—स्त्रिककुप्छन्दः, काव्यं छन्दो, ऽङ्कुपं छन्दो, ऽक्षरपङ्क्तिश्छन्दः, पदप-
ङ्क्तिश्छन्दो, विष्टारपङ्क्तिश्छन्दः, क्षुरो भृजश्छन्दः, पक्षश्छन्दः, प्रछच्छन्दः, सं-
यच्छन्दो, वियच्छन्दो, बृहच्छन्दो, रथन्तरं छन्दो, निकायं छन्दो, वीवधं छन्दो,
गिरश्छन्दो, भृजश्छन्दः, संस्तुप्छन्दो, ऽनुष्टुप्छन्दा, एवश्छन्दो, वरिवश्छन्दो,
वयश्छन्दो, वयस्कृच्छन्दो, विशालं छन्दो, विष्पर्धाश्छन्द,—श्छदिश्छन्दो, दूरोहणं
छन्द,—स्तन्द्रं छन्दो, ऽङ्कावङ्कं छन्दः ॥७॥ १९
रश्मिना क्षयाय क्षयं जिन्व, प्रेत्या धर्मणे धर्मं जिन्वा,—ऽन्वित्या दिवे दिवं जिन्व, संधि-

---

[७] मै. ३,२,१०। तै. ४,३,१२। काठ. १७,६। कपि. २६,५। वा. १५,१–५। काण्व. १६,१—८। मा. श्रौ. ६,१,१।
[अग्ने जातान्प्रणुदा०। अथर्व. ७,३४,१। सहसा जातान्प्रणु०। अथर्व. ७,३५,१]

[८] मै. ३,३,१। तै. ४,४,१। काठ. १७,७। कपि. २६,६। वा. १५,६,७,९। काण्व. १६,९—११,१४—१५। मा. श्रौ. ६,२,२।

ान्तरिक्षायान्तरिक्षं जिन्व, प्रतिधिना पृथिव्यै पृथिवीं जिन्व, विष्टम्भेन वृष्ट्यै वृष्टिं जिन्व,
प्रवायाह्नेऽहर्जिन्वा,—ऽनुवाय रात्र्यै रात्रीं जिन्वो,—शिजा वसुभ्यो वसून् जिन्व, प्रकेतेन रुद्रेभ्यो
रुद्रान् जिन्व, सुदितिनादित्येभ्य आदित्यान् जिन्व, तन्तुना प्रजाभ्यः प्रजा जिन्वौ,—जसा पि-
तृभ्यः पितॄन् जिन्व, पृतनाषाहा पशुभ्यः पशून् जिन्व, रेवतौषधीभ्या ओषधीर्जिन्वा,—ऽभि-
जिता युक्तग्राव्णेन्द्रायेन्द्रं जिन्वा,—ऽधिपतिना प्राणाय प्राणं जिन्व, धरुणेनापानायापानं जिन्व,
सꣳसर्पेण चक्षुषे चक्षुर्जिन्व, वयोधसाधीतायाधीतं जिन्व, त्रिवृता त्रिवृते त्रिवृज्जिन्व, प्रवृता
प्रवृते प्रवृज्जिन्व, सवृता सवृते सवृज्जिन्वा,—ऽनुवृतानुवृतेऽनुवृज्जिन्व, विरोहेण विरोहाय विरोहं
जिन्व, प्ररोहेण प्ररोहाय प्ररोहं जिन्व, सꣳरोहेण सꣳरोहाय सꣳरोहं जिन्वा,—ऽनूरोहेणानू-
रोहायानूरोहं जिन्व, वसुकेन वसुकाय वसुकं जिन्व, वेषश्रिया वेषश्रियै वेषश्रीं जिन्व, व-
स्यष्ट्या वस्यष्ट्यै वस्यष्टिं जिन्वा,—ऽऽक्रान्त्याक्रान्त्या उत्क्रान्ति जिन्वो,—त्क्रान्त्योत्क्रान्त्या
आक्रान्ति जिन्व ॥८॥ २०

राज्ञ्यसि, प्राची दिग्, वसवस्ते देवा अधिपतयो, ऽग्निर्हेतीनां प्रतिधर्ता, त्रिवृत्त्वा स्तोमः
पृथिव्याꣳ श्रयत्वा,—ज्यमुक्थमव्यथायै स्तभ्नोतु, रथन्तरꣳ साम प्रतिष्ठित्या अन्तरिक्षा, ऋ-
षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु, विधर्ता चायमधिपतिश्च, ते त्वा सर्वे
सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु, विराडसि, दक्षिणा दिग्,
रुद्रास्ते देवा अधिपतया, इन्द्रो हेतीनां प्रतिधर्ता, पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु,
प्रउगमुक्थमव्यथायै स्तभ्नोतु, बृहत्साम प्रतिष्ठित्या अन्तरिक्षा, ऋषयस्त्वा प्रथमजा देवेषु दिवो
मात्रया वरिणा प्रथन्तु, विधर्ता चायमधिपतिश्च, ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे
लोके यजमानं च सादयन्तु, सम्राडसि प्रतीची दि,—गादित्यास्ते देवा अधिपतयः, सोमो
हेतीनां प्रतिधर्ता, सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु, मरुत्वतीयमुक्थमव्यथायै स्तभ्नोतु,
वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्षा, ऋषयस्त्वा प्रथमजा देवेषु दिवो. मात्रया वरिणा प्रथन्तु,
विधर्ता चायमधिपतिश्च, ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादय-
न्तु, स्वराडस्युदीची दिङ्, मरुतस्ते देवा अधिपतयो, वरुणो हेतीनां प्रतिधर्ता,—कविꣳशस्त्वा
स्तोमः पृथिव्याꣳ श्रयतु, निष्केवल्यमुक्थमव्यथायै स्तभ्नोतु, वैराजꣳ साम प्रतिष्ठित्या अ-
न्तरिक्षा, ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु, विधर्ता चायमधिपतिश्च,
ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्व,—धिपत्न्यस्यूर्ध्वा

[ ९ ] मै. ३,३,१। तै. ४,४,२। काठ. १७,८। कपि. २६,७। वा. १५,१०—१४। काण्व. १६,१६—३०। मा. श्रौ. ६,२,२।

दिग्, विश्वे ते देवा अधिपतयो, बृहस्पतिर्हेतीनां प्रतिधर्ता, त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयताꣳ, वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नुताꣳ, शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षा, ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु, विधर्ता चायमधिपतिश्च, ते त्वा सर्वे सꣳविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥९॥ २१

अयं पुरो हरिकेशः सूर्यरश्मि,—स्तस्य रथकृत्स्नश्च रथौजाश्च सेनानीग्रामण्यौ, पुञ्जिकस्थला च कृतस्थला चाप्सरसौ, यातुधाना हेती, रक्षाꣳसि प्रहेति,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, ऽयं दक्षिणा विश्वकर्मा, तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ, मेनका च सहजन्या चाप्सरसौ, दङ्क्ष्णवः पशवो हेतिः, पौरुषेयो वधः प्रहेति,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, ऽयं पश्चा विदद्वसु,—स्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्या, आम्लोचन्ती च प्रम्लोचन्ती चाप्सरसौ, व्याघ्रा हेतिः, सर्पाः प्रहेति,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, ऽयमुत्तरात्सꣳयद्वसु,—स्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ, विश्वाची च घृताची चाप्सरसा आपो हेति,—र्वातः प्रहेति,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, ऽयमुपर्यर्वाग्वसु,—स्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्या, उर्वशी च पूर्वचित्तिश्चाप्सरसा, अवस्फूर्जद्धेति,—र्विद्युत्प्रहेति,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १० ॥ २२

प्राच्या त्वा दिशा सादयाम्य,—ग्निना देवेन देवतया गायत्रेण छन्दसाग्नेः शिर उपदधामि, गायत्रस्य छन्दसोऽग्नेः शीर्ष्णाग्नेः शिर उपदधामि, दक्षिणया त्वा दिशा सादयामी,—न्द्रेण देवेन देवतया त्रैष्टुभेन छन्दसाग्नेः पक्षमुपदधामि, त्रैष्टुभस्य छन्दसोऽग्नेः पक्षेणाग्नेः पक्षमुपदधामि, प्रतीच्या त्वा दिशा सादयामि, विश्वेभिर्देवेभिर्देवतया जागतेन छन्दसाग्नेः पुच्छमुपदधामि, जागतस्य छन्दसोऽग्नेः पुच्छेनाग्नेः पुच्छमुपदधाम्यु,—दीच्या त्वा दिशा सादयामि, मित्रावरुणाभ्यां देवाभ्यां देवतयानुष्टुभेन छन्दसाग्नेः पक्षमुपदधाम्या,—नुष्टुभस्य छन्दसोऽग्नेः पक्षेणाग्नेः पक्षमुपदधाम्यू,—र्ध्वया त्वा दिशा सादयामि, बृहस्पतिना देवेन देवतया पाङ्क्तेन छन्दसाग्नेः पृष्ठमुपदधामि, पाङ्क्तस्य छन्दसोऽग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि ॥११॥ २३

[ १० ] मै. ३,३,१ । तै. ४,४,३ । काठ. १७,९ । कपि. २६,८ । वा. १५,१५—१९;१६,६४—६६ । काण्व. १६, ३१—४०;१७,६४। मा. श्रौ. ६,२,२। [ते नो मृडन्तु (०डतु)...दध्मः। अथर्व. ३,२६,१—६;२७,१—६]

[ ११ ] मै. ३,३,२ । मा. श्रौ. ६,२,२ ।

मधुश्च माधवश्च वासन्तिका ऋतू, अग्नेरन्तःश्लेषोऽसि ॥ २४
कल्पेतां द्यावापृथिवी कल्पन्तामापा ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय संव्रताः ॥ २५
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी ।
वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥ २६
शुक्रश्च शुचिश्च ग्रैष्मा ऋतू, नभश्च नभस्यश्च वार्षिका ऋतू, इषश्चोर्जश्च शारदा ऋतू,
हश्च सहस्यश्च हैमन्तिका ऋतू, तपश्च तपस्यश्च शैशिरा ऋतू, अग्नेरन्तःश्लेषोऽसि ॥ २७
कल्पेतां द्यावापृथिवी कल्पन्तामापा ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय संव्रताः ॥ २८
ये अग्नयः समनसोऽन्तरा द्यावापृथिवी ।
शैशिरा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥१२॥ २९

पुरोवातसंनिरस्य,—अभ्रसंनिरसि, विद्युत्संनिरसि, स्तनयित्नुसंनिरसि, वृष्टिसंनिरस्य,—
योन्यस्य,—ग्नेरग्नेयान्यसि, वायोर्यान्यासि, वायोर्वायोयान्यासि, देवानां यान्यसि, देवानां
वयान्युसि, विश्वेषां देवानां यान्युसि, विश्वेषां देवानां देवयान्यसि, सं यान्यस्य,—न्त-
क्षसंदस्यन्तरिक्षे सीदा,—ऽम्बा चु बुला च नितत्नी च स्तनयन्ती चाभ्रयन्ती च मेघयन्ती च
पुणीका, सलिलाय त्वा, संदीकाय त्वा, संतीकाय त्वा, केताय त्वा, सुकेताय त्वा,
केताय त्वा, विवस्वते त्वा, दिवे त्वा ज्योतिष, आदित्येभ्यस्त्वा ॥ १३ ॥ ३०

उदपुरा नामास्यन्नेन विष्टा, तां त्वा ग्रैम्यात्मना पुरुषैर्गोभिरश्वैरायुषा वर्चसा प्रजया
नेन सन्या मेधया रय्या पोषेण, मनुष्यास्ते गोप्तारो, ऽग्निरधिपति,—स्तया देवतयाङ्गिरस्वद्
वा सीदा,—ऽपराजिता नामासि, ब्रह्मणा विष्टा, तां त्वा ग्रैम्यात्मना पुरुषैर्गोभिरश्वैरायुषा
र्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण, मरुतस्ते गोप्तारो, वायुरधिपति,—स्तया दे-
तयाङ्गिरस्वद् ध्रुवा सीदा,—ऽधिद्यौर्नामास्य,—मृतेन विष्टा, तां त्वा ग्रैम्यात्मना पुरुषैर्गोभिर-

[ १२ ] मै. ३,३,३ । तै. ४,४,११ । काठ. १७,१० । कपि. २६,९ । वा. १३,२५;१४,६,१५—१६,२७;१५,५७। काण्व. १४,२६;१५,५,१६,३१;१६,७९ ।
[ १३ ] तै. ४,४.६ । मा. श्रौ. ६,२,२ ।
[ १४ ] मै. ३,३,४ । तै. ४,४,५,३,११;४,४,३,३ । काठ. १७,१० । कपि. २६,९ । वा. १५,६२–६५;१२,७;२०,२२; १३,१७–१९,२४;१४,१२,१४,१५,५८,६४;१७,२–३। काण्व. १६,८३–८५;१३,८;२२,७;१४,१७–१९,२४–२५; १५,१५–१६;१८,२-४ । मा. श्रौ. ६,६,१ ।

श्वैरायुषा वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण, विश्वे ते देवा गोप्तारः, सूर्योऽधि-
पति,—स्तया देवतयाङ्गिरस्वद् ध्रुवा सीद, प्रजापतिष्ट्वा सादयतु पृथिव्याः पृष्ठे, भूरसि,
भूमिरसि, प्रथोऽसि, पृथि३व्यस्य,—दितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री, पृथि-
वीं॒ यछ, पृथिवीं दृꣳह, पृथिवीं मा हिꣳसीः, पृथिव्या मा पाहि विश्वस्मै प्राणायापानाय
व्यानायोदानाय प्रतिष्ठायै चरित्राया,—ऽग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन,
विश्वकर्मा सादयत्वन्तरिक्षस्य पृ३ष्ठे, ऽन्तरिक्षꣳ यछा,—ऽन्तरिक्षं दृꣳहा,—ऽन्तरिक्षं मा हिꣳ-
सी,—रन्तरिक्षान्मा पाहि विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय,
वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन, परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यच-
स्वतीं प्रथस्वतीं भास्वतीꣳ रश्मीवतीमा या दिवं भास्या पृथिवीमो३र्वन्तरिक्षं, दिवꣳ
यछ, दिवं दृꣳह, दिवं मा हिꣳसी,—र्दिवो मा पाहि विश्वस्मै प्राणायापानाय व्यानायो-
दानाय प्रतिष्ठायै चरित्राय, सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन ॥ ३१

प्रोथदश्वो न यवसेऽविष्यन् यदा महः संवरणाद्व्यस्थात् ।
आदस्य वातो अनुवाति शोचिरध स्मा ते व्रजनं कृष्णमस्तु ॥ ३२

आयोष्ट्वा सदने सादयामि समुद्रस्योद्मन्नवतश्छायायां, नमः समुद्राय, नमः समुद्रस्य च-
क्षसे, सहस्रस्य मासि, सहस्रस्य प्रमासि, सहस्रस्य प्रतिमासि, सहस्रस्य संमासि,
सहस्रस्योन्मासि, साहस्रोऽसि, सहस्राय त्वे,—मा मे अग्न इष्टका धेनवः सन्त्वे,—का च शतं
च, शतं च सहस्रं च, सहस्रं चायुतं चा,—ऽयुतं च प्रयुतं च, प्रयुतं चायुतं चा,—ऽर्बुदं च
न्यर्बुदं च, समुद्रश्च मध्यं चा,—ऽन्तश्च परार्धश्चे,—मा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्र-
मयुतमक्षीयमाणा, ऋतुष्ठाः स्थ ऋतावृधो घृतश्चुतो मधुश्चुता ऊर्जस्वतीः पयस्वतीः स्वधायिनीः
कुलायिनी,—स्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिंल्लोके ॥ १४ ॥
३३ [ ११८१ ]

॥ इति मध्यमकाण्डेऽष्टमः प्रपाठकः ॥८॥

[ वर्चसा प्रजया ( च ) धनेन । ऋ. १.२३,२३; अथर्व. १४,१,४८;१९.३१.७ । प्रोथदश्वो न०...मस्तु ।
ऋ. ७,३,२; सा. १२२०; सहस्रं च नियुतं चार्बुदं च । ऋ. परि. ३३,७ ( द्वि. पा. ) ।

अथ नवमः प्रपाठकः ।

आ त्वा वहन्तु हरयः सुचेतसः श्वेतैरश्वैरिह केतुमद्भिः ।

वातजवैर्बलवद्भिर्मनोजवैरस्मिन् यज्ञे मम हव्याय शर्व ॥ १

देवानां च ऋषीणां चासुराणां च पूर्वजम् । महादेवꣳ सहस्राक्षꣳ शिवमावाहयाम्यहम् ॥ २

तत् पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३

तद्गाङ्गौच्याय विद्महे गिरिसुताय धीमहि । तन्नो गौरी प्रचोदयात् ॥ ४

तत् कुमाराय विद्महे कार्त्तिकेयाय धीमहि । तन्नः स्कन्दः प्रचोदयात् ॥ ५

तत् कुराटाय विद्महे हस्तिमुखाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ ६

तच्चतुर्मुखाय विद्महे पद्मासनाय धीमहि । तन्नो ब्रह्मा प्रचोदयात ॥ ७

तत् केशवाय विद्महे नारायणाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ ८

तद्भास्कराय विद्महे प्रभाकराय धीमहि । तन्नो भानुः प्रचोदयात् ॥ ९

तत् सोमराजाय विद्महे महाराजाय धीमहि । तन्नश्चन्द्रः प्रचोदयात् ॥ १०

तज्ज्वलनाय विद्महे वैश्वानराय धीमहि । तन्नो वह्निः प्रचोदयात् ॥ ११

तच्चयंजपाय विद्महे महाजपाय धीमहि । तन्नो ध्यानः प्रचोदयात् ॥ १२

तत् परमात्माय विद्महे वैनतेयाय धीमहि । तन्नः सृष्टिः प्रचोदयात् ॥१॥ १३

नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥ १४

या ते रुद्र शिवा तनूरघोरापापकाशिनी ।

तया नस्तनुवा शंतमया गिरिशन्ताभि चाकशीहि ॥ १५

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।

शिवां गिरिश तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ १६

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।

यथा नः सर्वा इज्जगदयक्ष्मꣳ सुमना असत् ॥ १७

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।

अहीꣳश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ १८

---

[ १ ] काठ. १७,११ । तै. आ. १०,१,५ । मा. श्रौ. ११,५ । [ आ त्वा वहन्तु हरयो । ऋ. १,१६,१ । ]

[ २ ] तै. ४,५,१ । काठ. १७,११ । कपि. २७,१ । वा. १६,१-१४ । काण्व. १७,१-१४ । मा. श्रौ. ६.२,४ । [ यथा नः०...... असत् । ऋ. १०,१४१,४; अथर्व. ३,२०,६ । अहीꣳश्च सर्वा० ( अदृष्टान्त्स० )। ऋ. १,१९१, ८; अथर्व. ४,९,९ ]

*

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।

ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे ॥ १९

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः ॥ २०

उतैनꣳ विश्वा भूतानि स दृष्टो मृडयातु नः ॥ २१

नमो नीलकपर्दाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वान इदं तेभ्योऽकरं नमः॥ २२

नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ २३

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ २४

अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । प्रशीर्य शल्यानां मुखꣳ शिवो नः सुमना भव॥ २५

विज्यं धनुः कपर्दिनो विशल्यो बाणवं उत । अनेशन्नस्य या इषव आभुरस्य निषङ्गथिः॥२६

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मिन्निधेहि तम्॥ २७

या ते हेतिर्मीढुष्टम शिवं बभूव ते धनुः । तयास्मान् विश्वतस्त्वमयक्ष्मया परिभुज॥२॥ २८

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो, नमो बभ्लुशाय व्याधिनेऽन्नस्य पतये नमो, नमो रुद्रायाततायिने क्षेत्रस्य पतये नमो, नमो भवस्य हेत्यै जगतस्पतये नमो, नमः सूतायाहन्त्वाय वनानां पतये नमो, नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिजाय, कक्षाणां पतये नमो, नमो भुवन्तये वारिवस्कृतायौ,—षधीनां पतये नमो, नमः सहमानाय निव्याधिन, आव्याधिनीनां पतये नमो, नम आक्रन्दयत उच्चैर्घोषाय सत्वानां पतये नमो, नमः कृत्स्नवीताय धावते पत्तीनां पतये नमो, नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो, नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो, नमो निचेरवे परिचराया,—ऽरण्यानां पतये नमो, नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो, नमः सृगायिभ्यो जिघाꣳसद्भ्यो मुष्णतां पतये नमो, नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो, नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नमः ॥ ३ ॥ २९

नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो, नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो, नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो, नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो, नमोऽस्यद्भ्यो

[ ३ ] तै. ४,५,२-३ । काठ. १७,१२ । कपि. २७,२ । वा. १६,१७-२२ । काण्व. १७,१७-२२ ।
[ ४ ] तै. ४,५,३-४ । काठ. १७,१३ । कपि. २७,३ । वा. १६,२२-२६ । काण्व. १७,२२-२६ । मा. श्रौ. ६,१,४ ।

विध्यद्भ्यश्च वो नमो, नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो, नमः शयानेभ्य आसीनेभ्यश्च वो नमो, नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो, नमः सभाभ्यः सभापतिभ्यश्च वो नमो, नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो, नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो, नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो, नमो गणेभ्यो गणपतिभ्यश्च वो नमो, नमो व्रातेभ्यो व्रात-पतिभ्यश्च वो नमो, नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो, नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो, नमः सेनाभ्यः सेनानीभ्यश्च वो नमो, नमो रथिभ्यो वरूथिभ्यश्च वो नमो, नमः क्षतृभ्यः संग्रहीतृभ्यश्च वो नमो, नमो बृहद्भ्योऽर्भकेभ्यश्च वो नमो, नमो युवभ्य
आशीनेभ्यश्च वो नमो नमः ॥ ४ ॥ ३०

नमो ब्राह्मणेभ्यो राजन्येभ्यश्च वो नमो, नमः सूतेभ्यो विश्येभ्यश्च वो नमो, नमस्तक्ष-भ्यो रथकारेभ्यश्च वो नमो, नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो, नमो निषादेभ्यः पुञ्जि-ष्टेभ्यश्च वो नमो, नमः श्वनीभ्यो मृगयुभ्यश्च वो नमो, नमः श्वभ्यः श्वपतिभ्यश्च वो नमो, नमो भवाय च शर्वाय च, नमो रुद्राय च पशुपतये च, नमो व्युप्तकेशाय च कपर्दिने च, नमो नीलग्रीवाय च शितिकण्ठाय च, नमः सहस्राक्षाय च शतधन्वने च, नमो गिरिशाय च शिपिविष्टाय च, नमो मीढुष्टराय चेषुमते च, नमो ह्रस्वाय च वामनाय च, नमो बृहते च वर्षीयसे च, नमो वृद्धाय च सुवृध्वने च, नमोऽग्रीयाय च प्रथमाय च, नम आशवे चाजिराय च, नमः शीभाय च शीघ्राय च, नम ऊर्म्याय चावस्वन्याय च, नमो द्वीप्या-
य च स्रोतस्याय च ॥ ५ ॥ ३१

नम आशुषेणाय चाशुरथाय च, नमो बिल्मिने च कवचिने च, नमो वर्मिणे च वरूथिने च, नमः शूराय चावभिन्दते च, नमः श्रुताय च श्रुतसेनाय च, नमो ज्यायसे च कनी-यसे च, नमः पूर्वजाय चापरजाय च, नमो मध्यमाय चापगल्भाय च, नमो जघन्याय च बुध्न्याय च, नमः सोभ्याय च प्रतिसराय च, नमो याम्याय च क्षेम्याय च, नमो ऽवसान्याय च श्लोक्याय च, नम उर्वर्याय च खल्याय च, नमो वन्याय च कक्ष्याय च, नमः श्रवाय च प्रतिश्रवाय च, नमः पथ्याय च स्रुत्याय च, नमो नाद्याय च वैशन्ताय च, नमो नीप्याय च भिद्याय च, नमोऽवट्याय च कूप्याय च, नमः सूद्याय च
सरस्याय च ॥ ६ ॥ ३२

---

[ ५ ] तै. ४,५,४-५ । काठ. १७,१३-१४ । कपि. २७,३-४ । वा. १६,२७-३१ । काण्व. १७,२७-३१ ।
[ ६ ] तै. ४,५,६--७ । काठ. १७,१४—१५ । कपि. २७,४—५ । वा. १६,३२—३५ । काण्व. १७,३२—३५ ।

नमो दुन्दुभ्ये चाहननीयाय च, नमो धृष्णवे च प्रमृशाय च, नमो निषङ्गिणे चेषुधिमते च, नमस्तिग्मेषवे चायुधिने च, नमः स्वायुधाय च सुधन्वने च, नमो मेघ्याय च विद्युत्याय च, नमो वर्ष्याय चावर्ष्याय च, नमो वीध्रियाय चातप्याय च, नमो वात्याय च रेष्मण्याय च, नमो वास्तव्याय च वास्तुपाय च, नमः सोमाय च रुद्राय च, नमस्ताम्राय चारुणाय च, नमः शङ्गवे च पशुपतये च, नम उग्राय च भीमाय च, नमोऽग्रेवधाय च दूरेवधाय च, नमो हन्त्रे च हनीयसे च, नमो वृक्षेभ्यो हरिकेशेभ्यो, नमस्ताराय, नमः शंभवे च मयोभवे च, नमः शंकराय च मयस्कराय च, नमः शिवाय च शिवतराय च ॥ ७ ॥ ३३

नमः शिखण्डिने च पुलस्तिने च, नमः किंशिलाय च क्षेणाय च, नम इरिण्याय च प्रपथ्याय च, नमो गृह्याय च गोष्ठ्याय च, नमो गेह्याय च तल्प्याय च, नमः कूल्याय च तीर्थ्याय च, नमः पार्याय चावार्याय च, नमः प्रतरणाय चोत्तरणाय च, नमः प्रवाह्याय च सिकत्याय च, नमः फेन्याय च शष्प्याय च, नमो नीवेष्याय च हृद्याय च, नमः काट्याय च गह्वरेष्ठाय च, नमः शुष्याय च हरित्याय च, नमः पांसव्याय च रजस्याय च, नमो लोप्याय चोलपाय च, नम ऊर्म्याय च सूर्म्याय च, नमः पर्णाय च पर्णशदाय च, नमोऽपगुरमाणाय चाभिघ्नते च, नम आखिदते च प्रखिदते च, नम आखिदाय च प्रखिदाय च ॥ ८ ॥ ३४

नमो गिरिकेभ्यो देवानां हृदयेभ्यो, नमो विचिन्वत्केभ्यो, नम आक्षिणकेभ्यो, नम आनृहतेभ्यः ॥ ३५

द्रापे अन्धसस्पते दरिद्र नीललोहित ।
एषां पशूनामासां प्रजानां मा भेर्मा रुङ् मो च नः किं चनाममत् ॥ ३६

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा नः शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ३७

या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजा ।
शिवा रुतस्य भेषजा तया नो मृड जीवसे ॥ ३८

---

[ ७ ] तै. ४,५,७—८। काठ. १७,१५। कपि. २७,४—५। वा. १६,३५—४१। काण्व १७,३५—४१।

[ ८ ] तै. ४,५,८—९। काठ. १७.१५। कपि. २७,५। वा. १६,४२—४६। काण्व. १७,४२—४६।

[ ९ ] तै. ४,५,९—१०। काठ. १७,१६। कपि. २७,६। वा. १६,४६—६६। काण्व. १७,४६—६४। मा. श्रौ. ६,२,४। [ मा भै ( भे ) र्मा०......मत्। अथर्व. ६,५७,३। इमा रुद्राय०......तुरम्। ऋ. १,११४,१। ]

परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ३९
मीढुष्टम शिवतम शिवो न एधि सुमना भव ।
अवतत्य धनुष्ट्वमक्रुद्धः सुमना भव । पिनाकं बिभ्रदागहि कृत्तिꣳ वसाना उचर ॥ ४०
त्र्यम्बक विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्रꣳ हेतयोऽन्याꣳस्ते अस्मन्निवपन्तु ताः ॥ ४१
सहस्राणि सहस्रशो हेतयस्तव बाह्वोः । तासामीशानो मघवन् पराचीना मुखा कृधि ॥ ४२
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४३
ये अस्मिन् महत्यर्णवे अन्तरिक्षे भवा अधि। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥ ४४
ये नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४५
ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४६
ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४७
ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४८
ये पथां पथिरक्षय ऐलमृदा वो युधः । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४९
ये तीर्थानि प्रचरन्ति सृगवन्तो निषङ्गिणः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५०
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥ ५१
य एतावन्तो वा भूयाꣳसो वा दिशो रुद्रा वितस्थिरे ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५२

नमो अस्तु रुद्रेभ्यो ये दिवि येषाꣳ वर्षमिषव,—स्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा,—स्तेभ्यो नमो अस्तु ते नो मृडन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, नमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे येषाꣳ वाता इषव,—स्तेभ्यो दश प्राचीर्दश

[ परि नो रुद्रस्य० । ऋ. २,३३,१४; अथर्व. ४,२१,७ । ते नोऽवन्तु० ..दध्मः। अथर्व. ३,२७,१-६ । ]

दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु, ते यं द्विष्मो
यश्च नो द्वेष्टि तमेषां जम्भे दध्मो, नमो अस्तु रुद्रेभ्यो ये पृथिव्याꣳ येषामन्नमिषव,—स्तेभ्यो
दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा,—स्तेभ्यो नमो अस्तु, ते नो मृडन्तु,
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ९ ॥ ५३

अघोरेभ्यो अथ घोरेभ्यो अघोरघोरतरेभ्यश्च ।
सर्वतः शर्वशर्वेभ्यो नमस्ते रुद्र रूपेभ्यो नमः ॥ ५४
यः पथः समनुयाति स्वर्गं लोकं गामिव सुप्रणीतौ । तेन त्वं भगवान् याहि पथा ॥ ५५
इमे हिरण्यवर्णाः स्वꣳ योनिमाविशन्तौ ॥ ५६

गच्छ त्वं भगवान् पुनरागमनाय पुनर्दर्शनाय सहदेव्याय सहवृषाय सहगणाय सहपार्षदाय
यथाहुताय नमोनमाय नमःशिवाय नमस्ते अस्तु, मा मा हिꣳसीः ॥ आवाहितमावाहित,
नमस्कृत नमस्कृत, विसर्जितꣳ विसर्जित, पथं गच्छ पथं गच्छ, दिवं गच्छ दिवं गच्छ,
स्वर्गच्छ स्वर्गच्छ, ज्योतिर्गच्छ ज्योतिर्गच्छ नमस्ते अस्तु, मा मा हिꣳसीः ॥१०॥ ५७-५८
[ ११४० ]

॥ इति मध्यमकाण्डे नवमः प्रपाठकः ॥ ९ ॥

---

अथ दशमः प्रपाठकः ।

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृताम् ।
तां न इषमूर्जं धत्त मरुतः सꣳरराणा, अश्मꣳस्ते क्षुं,—न्मयि त ऊं,—ग्यं द्विष्मस्तं ते
शुगृच्छतु ॥ १
समुद्रस्य त्वावकयाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥ २
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥ ३
उप ज्मन्नुप वेतसेऽवतर नदीष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरागहि ।
सेमं नो यज्ञं पावकवर्णꣳ शिवं कृधि ॥ ४
अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ ५

---

[ १० ] तै. आ. १०,१९ ।

[ १ ] मै. ३,३,५-६ । तै. ४,६,१ । काठ. १७,१७ । कपि. २८,१ । वा. १७,१,४-१५;११.८३;३६,२० । काण्व. १८,१,५—१५;१२,८४;३६,२० । मा. श्रौ. ६,२,४ । [ हिमस्य त्वा०......परिव्ययामसि । ऋ. परि. ३०,१; अथर्व. ६,१०६,३ । अपामिदं न्ययनꣳ०...भव । ऋ. १०,१४२,७; अथर्व. ६,१०२,२; तै. सं. ४,६,१,३ ।]

अग्ने पावक रोचिषा, स नः पावक दीदिवः ॥ ६
पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच उषसो न केतुना ।
आ यो घृणे न ततृषाणो अजरस्तूर्वन्न यामन्नेतशस्य नू रणे ॥ ७
नमस्ते हरसे शोचिषे चाथो ते अर्चिषे नमः ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ ८
द्रुषदे वण्, नृषदे व,—ड्प्सुषदे वड्, बर्हिषदे वड्, वनर्षदे वट्, स्वर्विदे वट् ॥ ९
अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ १०
ये देवा देवानाꣳ यज्ञिया यज्ञियानाꣳ सꣳवत्सरीयमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥ ११
ये देवा देवेभ्यो अधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो न ऋते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु ॥ १२
प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः ।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ १ ॥ १३
अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निर्नो वनते रयिम् ॥ १४
य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश ॥ १५
किꣳ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥ १६
किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ १७

---

[ अग्ने पावक रोचिषा । ऋ. ५,२६,१; सा. १५२१; तै सं. १,३,१४,८;५,५,३;४,६,१,२ । स नः पावक दीदिवः । ऋ. १,१२,१०; तै. सं. १,३,१४,८;५,५,३;४,६,१,३ । पावकया यश्चित०... नू रणे (अजरः)। ऋ. ६,१५,५; तै. सं. ४,६,१,२ ]

[ २ ] मै. ३,३,७ । तै. सं. ४,६,१—२ । काठ. १८,१—२ । कपि. २८,२ । वा. ८,४५;१७,१६—२३। काण्व. ८,२६-२८;१८.१६-२४ । मा. श्रौ. ६,२,५ । [ अग्निस्तिग्मेन०...रयिम्। ऋ. ६,१६,२८; अथर्व. ८,३,२३; सा. २२; तै. सं. ४,६,१,५, । य इमा विश्वा०...विवेश । ऋ. १०,८१,१; तै. सं. ४,६,२,१। किꣳ स्विद्वनं०। ऋ.१०,८१,४; तै. सं. ४,६,२,५; तै. ब्रा. २,८,९,६ । किꣳ स्विदासी०...चक्षाः। ऋ. १०,८१,२; तै. सं. ४,६,२,४ ]

यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यामधमत्सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ १८
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषा स्वधावः स्वयं यजस्व तन्वं जुषाणः ॥ १९
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
तस्मै विशः समनमन्त दैवीरयमुग्रो विहव्यो यथासत् ॥ २०
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ २१
वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम ।
स नो नेदिष्ठा हवना जुजोष विश्वशंभूरवसे साधुकर्मा ॥ २ ॥ २२
चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदन्ता अददृहन्त पूर्वा आदिद् द्यावापृथिवी अप्रथेताम् ॥ २३
विश्वकर्मा विमना यो विहाया धर्ता विधर्ता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॥ २४
त आयजन्त द्रविणा समस्मिन्नृषयः पूर्वे जरितारो न भूना ।
असूर्ता सूर्ते रजसि निषत्ता ये भूतानि समकृण्वन्निमानि ॥ २५
यो नः पिता जनिता यो विधर्ता यो नः सतो अभ्या सज्जजान ।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ॥ २६
परो दिवः पर एना पृथिव्याः परो देवेभ्यो असुरं यदस्ति ।
कं स्विद्गर्भं प्रथमं दध्रा आपो यत्र देवाः समगच्छन्त सर्वे ॥ २७

---

[यो विश्वचक्षुरुत (०तश्चक्षु०) एकः । ऋ. १०,८१,३; अथर्व. १३,२,२६; तै. सं. ४,६,२,४; तै. आ. १०, १,३ । या ते धामानि०...जुषाणः (वृधानः) । ऋ. १०,८१,५; तै. सं. ४,६,२,५ । विश्वकर्मन् हविषा वावृधानः०। ऋ. १०,८१,६; सा. १५८९; तै. सं. ४,६,२,६; नि. १०,२७। वाचस्पतिं०...साधुकर्मा। ऋ. १०,८१,७; तै. सं. ४,६,२,५ ]

[ ३ ] तै. ४.६,२ । काठ. १८,२-१ । कपि. २८,२ । वा. १७,२५-३२ । काण्व. १८,२५—३२ । [ चक्षुषः पिता०...ताम् । ऋ. १०,८२,१; तै. सं ४,६,२,४ । विश्वकर्मा विमने (०मना)...एकमाहुः । ऋ. १०,८२,२; तै. सं. ४,६,२,१; नि. १०,२६ । त आयजन्त०...निमानि । ऋ. १०,८२,४; तै, सं. ४,६,२,२; नि. ६,१५ । यो नः पिता०...यन्त्यन्या । ऋ. १०,८२,३; अथर्व. २,१,३; तै. सं. ४,६,२,१; तै. आ. १०,१,४ । परो दिवः (दिवा)०...सर्वे (पूर्वे) । ऋ. १०,८२;५; तै. सं. ४,६,२,२ ]

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ।
अजस्य नाभा अध्येकमर्पितꣳ यस्मिन् विश्वा भुवनाधि तस्थुः ॥ २८
विश्वकर्मा चेदजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भꣳ व्यदधुः पुरुत्रा ॥ २९
न तꣳ विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ ३ ॥ ३०
उदेनमुत्तरं नयाग्ने घृतेनाहुत । समेनꣳ वर्चसा सृज प्रजया च बहुं कृधि ॥ ३१
इन्द्रेमं प्रतरं नय सजातानामसद्वशी । रायस्पोषेण सꣳसृज देवेभ्यो भागदा असत् ॥ ३२
यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम् । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥ ३३
आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥ ३४
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वꣳ युधो नर इषुहस्तेन वृष्णा ॥ ३५
स इषुहस्तैः स निषङ्गिभिर्वशी सꣳसृष्टासु युत्स्विन्द्रो गणेषु ।
सꣳसृष्टजित्सोमपा बाहुश३र्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ ३६
बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ३७
अभि गोत्राणि सहसा गाहमान आदायो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयो३ध्योऽस्माकꣳ सेना अवतु प्र युत्सु ॥ ३८

---

[ तमिद्गर्भं०...तस्थुः । ऋ. १०,८२,६; तै. सं. ४,६,२,३ । न तꣳ०... श्चरन्ति । ऋ. १०,८२,७; तै. सं. ४,६,२,२; नि. १४,१० ]

[ ४ ] मै. ३,३,८ । तै. ४,६.३-४ । काठ. १८,३,५ । कपि. २८,३,५ । वा. १७,५०-५२,३३-४१,४३ । काण्व. १८, ५०-५२,३३-४१,४३ । मा. श्रौ. ६,२,५ । [ उदेनमुत्तरं ( रां )... कृधि । अथर्व. ६,५,१ । इन्द्रेमं० .. असत् । अथर्व. ६,५,२ । यस्य कुर्मो०... । ऋ. १०,१७३,३; अथर्व. ६,५,३;८७,३ । तस्मै देवा ( सोमो )० ... ब्रह्मणस्पतिः । ऋ. १०,१७३,३; अथर्व. ६,८७,३;५,३; तै. ब्रा. २,४,२,९ । आशुः शिशानो०... । ऋ. १०,१०३,१; सा. १८४९; अथर्व. १९,१३,२; तै. सं. ४,६,४,१; नि. १,१५ । संक्रन्दनेना०... वृष्णा । ऋ. १०,१०३,२; सा. १८५०; अथर्व. १९,१३,३; तै. सं. ४,६,४,१ । स इषुहस्तै०... रस्ता । ऋ. १०,१०३,३; सा. १८५१; अथर्व. १९,१३,४; तै. सं. ४,६,४,१ । बृहस्पते परि०...रथानाम् । ऋ. १०,१०३,४; सा. १८५२; अथर्व. १९,१३,८; तै. सं. ४,६,४,१ । अभि गोत्राणि०...युत्सु । ऋ. १०, १०३,७; सा. १८५५; अथर्व. १९,१३,७; तै. सं. ४,६,४,२ ]

*

बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजिज्जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ३९
गोत्रभिदं गोविदꣳ वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमꣳ सजाता अनुवीरयध्वमिन्द्रꣳ सखायो अनु सꣳरभध्वम् ॥ ४०
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥ ४१
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ४२
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकꣳ या इषवस्ता जयन्तु ।
अस्माकꣳ वीरा उत्तरे भवन्त्वस्मानु देवा अवता भरेष्वा ॥ ४ ॥ ४३

उदु त्वा ॥ ४४

पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥ ४५
समिद्धे अग्ना अधि मामहानं उक्थपत्रा ईड्यो गृभीतः ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमशमन्त देवाः ॥ ४६
दैव्याय धात्रे देष्ट्रे देवश्रीः श्रीमनाः शतपात् । परिगृह्य यज्ञमायन् ॥ ४७
हरिकेशः सूर्यरश्मिः पुरस्तात् सविता ज्योतिरुदयं अजस्रम् ।
तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥ ४८
देवा देवेभ्योऽध्वर्यन्तो अस्थुर्वीतꣳ शमित्रा शमितꣳ यजध्यै ॥ ४९
तुरीयो यज्ञो यत्र हव्यमेति ततो वाका आशिषो नो जुषन्ताम् ॥ ५०

---

[ बलविज्ञायः०... गोवित् ( गोविदन् ) । ऋ. १०,१०३,५; सा. १८५३; अथर्व. ८,५,२; १९,१३,५; तै. सं. ४,६,४,१ । गोत्रभिदं०...रभध्वम् । ऋ. १०,१०३,६; सा. १८५४; अथर्व. ६,९७,३; १९,१३,६; तै. सं. ४,६,४,२ । इन्द्र एषां ( आसां ) नेता०...मध्ये । ऋ. १०,१०३,८; सा. १८५६; अथर्व. १९,१३,९; तै. सं. ४,६,४,३ । इन्द्रस्य वृष्णो०...मुदस्थात् । ऋ. १०,१०३,९; सा. १८५७; अथर्व. १९,१३,१०; तै. सं. ४,६,४,३ । अस्माकमिन्द्रः०...भरेष्वा ( हवेषु ) ]

[ ५ ] मै. ३,३,८ । तै. ४,६,३ । काठ. १८,३ । कपि. २८,३,५ । वा. १७,५३-६३; २,१५; ११,३१,५६; १३,५८; १४, १०; १५,६१; २२,३१ । काण्व. १८,५३-६३; २,३०; १२,३२,५७; १६,८२; मा. श्रौ. ६,२,५ । [ हरिकेशः सूर्यरश्मिः ( सूर्यरश्मिर्हरि० )... गोपाः । ऋ. १०,१३९,१; तै. सं. ४,६,३,३ ]

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।
र॒थीत॑मꣳ र॒थीना॒ꣳ वाजा॑ना॒ꣳ सत्प॑तिं॒ पति॑म् ॥ ५१
विमा॑न ए॒ष दि॒वो मध्य॑ आस्त आपप्रि॒वान् रोद॑सी अ॒न्तरि॑क्षम् ।
स वि॒श्वाची॑र॒भिच॑ष्टे घृ॒ताची॑रन्त॒रा पूर्व॒मप॑रं च के॒तुम् ॥ ५२
उ॒क्षा स॑मु॒द्रे अ॑रु॒णः सु॑प॒र्णः पूर्व॑स्य॒ योनिं॑ पि॒तुरा वि॑वेश ।
मध्ये॑ दि॒वो निहि॑तः॒ पृश्नि॒रश्मा॒ वि च॑क्रमे॒ रज॑सस्पा॒त्यन्तौ॑ ॥ ५३
सु॒म्न॒हूर्य॒ज्ञ आ च॑ वक्षद्य॒क्षद॒ग्निर्दे॒वो दे॒वाꣳ आ च॑ वक्षत् ।
दे॒व॒हूर्य॒ज्ञ आ च॑ वक्षद्य॒क्षद॒ग्निर्दे॒वो दे॒वाꣳ आ च॑ वक्षत् ॥ ५४

वाज॑स्य मा प्रस॒वेनेति॒ द्वे ॥ ५ ॥ ५५

क्रम॑ध्वम॒ग्निना॒ नाक॒मुख्य॒ꣳ हस्ते॑षु॒ बिभ्र॑तः ।
दि॒वः पृ॒ष्ठꣳ स्व॒र्ग॒त्वा मि॒श्रा दे॒वेभि॑राध्वम् ॥ ५६
प्राची॒मनु॑ ॥ ५७
अग्ने॒ प्रेहि॑ प्रथ॒मो दे॑वाय॒तां चक्षु॑र्दे॒वाना॑मु॒त मर्त्या॑नाम् ।
इय॑क्षमाणा॒ भृगु॑भिः स॒ह स्व॑र्यन्तु॒ यज॑मानाः स्व॒स्ति ॥ ५८
पृ॒थि॒व्या अ॒हमु॒द॒न्तरि॑क्ष॒मारु॑हम॒न्तरि॑क्षा॒द्दिव॒मारु॑हम् ।
दि॒वो नाक॑स्य पृ॒ष्ठा३त्स्व॒र्ज्योति॑रगाम॒हम् ॥ ५९
स्व॒र्यन्तो॒ नापे॑क्षन्त॒ आ द्याꣳ रो॑हन्ति॒ रोद॑सी ।
य॒ज्ञꣳ ये वि॒श्वतो॑धार॒ꣳ सुवि॑द्वाꣳसो वितेनि॒रे ॥ ६०
नक्तो॒षासा॒,—ऽग्ने॑ सहस्राक्ष ॥ ६१
सु॒प॒र्णो॑ऽसि ग॒रुत्मा॑न् पृ॒ष्ठे पृ॑थि॒व्याः सी॑द ।
भा॒सान्तरि॑क्ष॒मापृ॑ण॒ ज्योति॑षा॒ दिव॒मुत्त॑भान॒ तेज॑सा॒ दिश॒ उद्दृ॑ꣳह ॥ ६२

---

[इन्द्रं विश्वा०... पतिम् । ऋ. १,११,१; सा. ३४३;८२७; तै. सं. ४,६,३.४; तै. ब्रा. २,७,१५,५ । विमान (नृचक्षा ) एष०...केतुम् । ऋ. १०,१३९,२; तै. सं. ४,६,३,३ । उक्षा समुद्रे ( समुद्रो )०...त्यन्तौ । ऋ. ५,४७,३; तै. सं. ४,६,३.३]

[ ६ ] मै. ३,३,९ । तै. ४.६,५ । काठ. १८,४ । कपि. २८,४ । वा. १७,६५-७९;१२,२ । काण्व. १८,६५-७८;१३,२ । मा. श्रौ. ६,२,५ । [ क्रमध्वमग्निना०...राध्वम् । अथर्व. ४,१४,२ । अग्ने प्रेहि०...स्वस्ति । अथर्व. ४,१४,५। पृथिव्या अहमुदन्त०... महम् । अथर्व. ४,१४,३ । स्वर्यन्तो नापेक्षन्ता० – वितेनिरे । अथर्व. ४,१४,४। अथर्व. ४,१४,५ । नक्तोषासा समनसा०। ऋ. १,९६,५; तै. सं. ४,१,१०,४;६,५,२;७,१२,३ ]

आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साध्या ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ६३
तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसा महीं गाम् ॥ ६४
विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजा तं प्र त्वे समिद्धे जुहुरे हवींषि ॥ ६५
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । तां शश्वन्त उपयन्ति वाजाः॥६६
अग्ने तमद्य, सप्त ते अग्ने ॥ ६७
चित्तिं जुहोमि मनसा यथा देवा इहागमन् । वीतिहोत्रा ऋतावृधः ॥ ६८
समुद्रस्य वो वयुनस्य पत्मन् जुहोमि विश्वकर्मणे । विश्वाहादाभ्यं हविः ॥६॥ ६९
[१३०९]

॥ इति मध्यमकाण्डे दशमः प्रपाठकः ॥ १० ॥

अथैकादशः प्रपाठकः ।

शुक्रज्योतिश्च चित्रज्योतिश्च, सत्यज्योतिश्च ज्योतिष्मांश्च, सत्यश्च ऋतपाश्चात्यंहा,
ऋताजिच्च सत्यजिच्च, सेनजिच्च सुषेणश्चा—ऽन्तिमित्रश्च दूरेऽमित्रश्च, गण ऋतश्च सत्यश्च,
ध्रुवश्च धरुणश्च, धर्ता च विधर्ता च विधारय, ईदृङ् चैतादृङ् च, सदृङ् च प्रतिसदृङ् च,
मितश्च संमितश्च सभरा, ईदृक्षास एतादृक्षास ऊ षु णः, सदृक्षासः प्रतिसदृक्षासा एतन,
मितासश्च संमितासो न ऊतये सभरसो मरुतो यज्ञे अस्मि—न्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो,
यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो
भवन्तु ॥ १ ॥ १
वाजश्च मे प्रसवश्च मे, प्रयतिश्च मे प्रसूतिश्च मे, धीतिश्च मे क्रतुश्च मे, स्वरश्च मे

---

[तां सवितुर्वरेण्य०... गाम् । अथर्व. ७,१५,१ । विधेम ते परमे०...हवींषि । ऋ. २,९,३; तै. सं. ४,६,५,४ । प्रेद्धो अग्ने०...वाजाः । ऋ. ७.१,३; सा. १३७५; तै. सं. ४,६,५,४ । अग्ने तमद्य (०श्वं) ०...ओहैः । ऋ. ४,१०,१; सा. ४३४,१७७७; तै. सं. ४,४,४,७ ]

[१] तै. ४,६,५ । काठ. १८,६ । कपि. २८,६ । वा. १७,८०-८४,८६ । काण्व. १८,८०-८४.८६ । मा. श्रौ. ६,२,५ ।

[२] मै. ३,४,१ । तै. ४,७,१-२ । काठ. १८,७ । कपि. २८,७ । वा. १८,१-४ । काण्व. १९,१३-१६ । मा. श्रौ. ६,२,५ ।

श्लोकश्च मे, श्रावश्च मे श्रुतिश्च मे, ज्योतिश्च मे स्वश्च मे, प्राणश्च मेऽपानश्च मे, व्यानश्च मेऽसुश्च मे, चित्तं च म आधीतं च मे, वाक् च मे मनश्च मे, चक्षुश्च मे श्रोत्रं च मे, दक्षश्च मे बलं च म, ओजश्च मे सहश्च म, आयुश्च मे जरा च म, आत्मा च मे तनूश्च मे, शर्म च मे वर्म च मे, ऽङ्गानि च मेऽस्थानि च मे, परूꣳषि च मे शरीराणि च मे, ज्यैष्ठ्यं च म आधिपत्यं च मे, मन्युश्च मे भामश्च मे, ऽमश्च मेऽम्भश्च मे, जेमा च मे महिमा च मे, वरिमा च मे प्रथिमा च मे, वर्ष्मा च मे द्राघ्मा च मे, वृद्धं च मे वृद्धिश्च मे ॥ २ ॥ २

सत्यं च मे श्रद्धा च मे, जगच्च मे धनं च मे, वशश्च मे त्विषिश्च मे, क्रीडा च मे मोदश्च मे, सूक्तं च मे सुकृतं च मे, जातं च मे जनिष्यमाणं च मे, विद्यं च मे वेद्यं च मे, भूतं च मे भव्यं च म, ऋद्धं च म ऋद्धिश्च मे, सुगं च मे सुपथं च मे, क्लृप्तं च मे क्लृप्तिश्च मे, मतिश्च मे सुमतिश्च मे, शं च मे मयश्च मे, प्रियं च मेऽनुकामश्च मे, कामश्च मे सौमनसश्च मे, भगश्च मे द्रविणं च मे, भद्रं च मे श्रेयश्च मे, वसीयश्च मे यशश्च म, ऋतं च मेऽमृतं च मे, ऽयक्ष्मं च मेऽनामयच्च मे, जीवातुश्च मे दीर्घायुत्वं च मे, ऽनमित्रं च मेऽभयं च मे, सुखं च मे शयनं च मे, सूषाश्च मे सुदिनं च मे ॥ ३ ॥ ३

यन्ता च मे धर्ता च मे, क्षेमश्च मे धृतिश्च मे, विश्वं च मे महश्च मे, सꣳविच्च मे ज्ञात्रं च मे, सूश्च मे प्रसूश्च मे, सीरं च मे लयश्च मा, ऊर्क् च मे सूनृता च मे, पयश्च मे रसश्च मे, घृतं च मे मधु च मे, सग्धिश्च मे सपीतिश्च मे, कृषिश्च मे वृष्टिश्च मे, जैत्रं च म औद्भिद्यं च मे, रयिश्च मे रायश्च मे, पुष्टं च मे पुष्टिश्च मे, विभु च मे प्रभु च मे, पूर्णं च मे पूर्णतरं च मे, कुयवं च मेऽक्षितिश्च मे, ऽन्नं च मेऽक्षुच्च मे, व्रीहयश्च मे यवाश्च मे, माषाश्च मे तिलाश्च मे, ऽणवश्च मे प्रियङ्गवश्च मे, श्यामाकाश्च मे नीवाराश्च मे, गोधूमाश्च मे मसूराश्च मे, क्षुद्राश्च मे खल्वाश्च मे ॥ ४ ॥ ४

पर्वताश्च मे गिरयश्च मे, सिकताश्च मे वनस्पतयश्च मे, ऽश्मा च मे मृत्तिका च मे, हिरण्यं च मेऽयश्च मे, सीसं च मे त्रपु च मे, श्यामं च मे लोहितायसं च मे, ऽग्निश्च मा

[ ३ ] तै. ४,७,२-३। काठ. १८,८-९। कपि. २८,८-९। वा. १८,५-६,८,११। काण्व. १९,१७-१८,२०,२२।
[ ४ ] तै. ४,७,३-४। काठ. १८,९। कपि. २८,८-९। वा. १८,७,९,१०,१२। काण्व. १९,१९,२१,२३-२४।
[ ५ ] तै. ४,७,५-८। काठ. १८,१०-११। कपि. २८,१०-११। वा. १८,१३-२१। काण्व. १९,२५-३३।

आपश्च मा, ओषधयश्च मे वीरुधश्च मे, कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे, ग्राम्याश्च मे पशव
आरण्याश्च यज्ञेन कल्पन्ताꣳ, वित्तं च मे वित्तिश्च मे, भूतं च मे भूतिश्च मे, ऽर्थश्च मा एम
च म, इत्या च मे गतिश्च मे, कर्म च मे शक्तिश्च मे, वसु च मे वसतिश्च मे, ऽग्निश्च
मा इन्द्रश्च मे, सोमश्च मा इन्द्रश्च मे, सविता च मा इन्द्रश्च मे, सरस्वती च मा इन्द्रश्च
मे, पूषा च मा इन्द्रश्च मे, ऽदितिश्च मा इन्द्रश्च मे, धाता च मा इन्द्रश्च मे, त्वष्टा च मा
इन्द्रश्च मे, मित्रश्च मा इन्द्रश्च मे, वरुणश्च मा इन्द्रश्च मे, विष्णुश्च मा इन्द्रश्च मे, बृहस्पतिश्च
मा इन्द्रश्च मे, वसवश्च मा इन्द्रश्च मे, रुद्राश्च मा इन्द्रश्च म, आदित्याश्च मा इन्द्रश्च मे,
मरुतश्च मा इन्द्रश्च मे, पृथिवी च मा इन्द्रश्च मे, ऽन्तरिक्षं च मा इन्द्रश्च मे, द्यौश्च मा
इन्द्रश्च मे, नक्षत्राणि च मा इन्द्रश्च मे, समा च मा इन्द्रश्च मे, कृषिश्च मा इन्द्रश्च मे,
वृष्टिश्च मा इन्द्रश्च मे, दिशश्च मा इन्द्रश्च मे, विश्वे च मे देवा इन्द्रश्च मे, ऽꣳशुश्च मे रश्मि-
श्च मे, ऽधिपतिश्च मेऽदाभ्यश्च म, उपाꣳशुश्च मेऽन्तर्यामश्च म, ऐन्द्रवायवश्च मे मैत्रावरुण-
श्च म, आश्विनश्च मे प्रतिप्रस्थानश्च मे, शुक्रश्च मे मन्थी च म, आग्रायणश्च मे वैश्वदेवश्च
म, ऐन्द्राग्नश्च मे क्षुल्लकवैश्वदेवश्च मे, ध्रुवश्च मे वैश्वानरश्च मे, मरुत्वतीयाश्च मे निष्केव-
ल्यश्च मे, सावित्रश्च मे सारस्वतश्च मे, पात्नीवतश्च मे हारियोजनश्च मे, स्रुचश्च मे
चमसाश्च मे, वायव्यानि च मे द्रोणकलशश्च मे, ऽधिषवणे च मे ग्रावाणश्च मे, पूतभृच्च मे
ऽपूतभृच्च मे, बर्हिश्च मे वेदिश्च मे, ऽवभृथश्च मे स्वगाकारश्च मे ॥ ५ ॥ ५
अग्निश्च घर्मश्चा,—ऽर्कश्च सूर्यश्च, प्राणश्चाश्वमेधश्चा,—ऽदितिश्च पृथिवी च, दितिश्च द्यौश्च,
शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्ता,—मृतुश्च व्रतं च, सꣳवत्सरश्च तपश्चा,—ऽहोरात्रे
ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पेता,—मेका च तिस्रश्चा त्रयस्त्रिꣳशत,—श्चतस्रश्चाष्टौ चाष्टा-
चत्वारिꣳशत,—स्त्र्यविश्च त्र्यवी च, दित्यवाट् च दित्यौही च, पञ्चाविश्च पञ्चावी च, त्रिव-
त्सश्च त्रिवत्सा च, तुर्यवाट् च तुर्यौही च, पष्ठवाट् च पष्ठौही चो,—क्षा च वशा च,
ऋषभश्च वेहच्च, धेनुश्चानड्वाꣳश्च, स्तोमश्च यजुश्चा, ऋक् च साम च, दीक्षा च
तपश्च, बृहच्च रथन्तरं चौ,—षधयो वनस्पतयो दिशश्च मे यज्ञेन कल्पन्ता,—मन्नाय त्वा,
वाजाय त्वा, वाजजित्यायै त्वे,—वै त्वो,—जैं त्वा, रय्यै त्वा, पोषाय त्वा ॥६॥ ६
[ १३१५ ]

॥ इति मध्यमकाण्डे एकादशः प्रपाठकः ॥ ११ ॥

---

[ ६ ] तै. ३,४,२ । तै. ४,७,९--११ । काठ. १८,११—१२ । कपि. २८,११;२९,१ । वा. १८,२२—२९;१,१; १४, २२ । काण्व. १९,३४–३९,४१,४३;१५,२४;१,१। मा. श्रौ. ६,२,५ । [बृहच्च रथन्तरं ( च )। अथर्व. ८,१०,६]

अथ द्वादशः प्रपाठकः ।

विश्वे नो अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजो अस्मे ॥ १
वाजो मे सप्त प्रदिशश्चतस्रो वा परावतः । वाजो मा विश्वैर्देवैर्धनसाता इहावतु ॥ २
वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति ।
वाजस्य हि प्रसवे नन्नमीति विश्व आशा वाजपतिर्भवेयम् ॥ ३
वाजो मे अद्य प्रसुवाति दानं वाजो देवान् हविषा वर्धयाति ।
वाजो हि मा सर्ववीरं चकार सर्वा आशा वाजपतिर्जयेयम् ॥ ४
सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः ।
सोऽहं वाजं सनेयमग्ने ॥ ५
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १ ॥ ६

ऋताषाडृतधामाग्निर्गन्धर्वः,—स्तस्यौषधयोऽप्सरसो मुदा नाम, स न इदं ब्रह्म क्षत्रं पातु,
ता न इदं ब्रह्म क्षत्रं पान्तु, तस्मै स्वाहा वट्, ताभ्यः स्वाहा वट्, संहितो विश्वसामा
सूर्यो गन्धर्वः,—स्तस्य मरीचयोऽप्सरस आयुवो नाम, सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः,—स्त-
स्य नक्षत्राण्यप्सरसो बेकुरयो नाम,—इषिरो विश्वव्यचा वातो गन्धर्वः,—स्तस्यापोऽप्सरसा ऊर्जो
नाम, भुज्युः सुपर्णो यज्ञो गन्धर्वः,—स्तस्य दक्षिणा अप्सरसा एष्टयो नाम, बृहस्पतिर्विश्वकर्मे-
न्द्रो गन्धर्वः,—स्तस्य मरुतोऽप्सरसा ओजो नाम, प्रजापतिः परमेष्ठी मनो गन्धर्वः,—स्तस्य
ऋक्सामान्यप्सरसः स्तवा नामा,—ऽमृडयो दूरेहेतिर्मृत्युर्गन्धर्वः,—स्तस्य प्रजा अप्सरसो भीरवो
नाम, स नो भुवनस्य पते यस्य त उपरि गृहा विराट्पतेऽस्मै ब्रह्मणेऽस्मै क्षत्राय महि शर्म
यछ, यस्य ते विश्वा आशा अप्सरसः प्लीया नाम स न इदं ब्रह्म क्षत्रं पातु, ता न इदं ब्रह्म
क्षत्रं पान्तु, तस्मै स्वाहा वट्, ताभ्यः स्वाहा वट् ॥ २ ॥ ७

समुद्रोऽसि नभस्वानार्द्रदानुः, शंभूर्मयोभूरभि मा वाहि स्वाहा,—ऽवस्युरसि दुवस्वान्, शंभू-
र्मयोभूरभि मा वाहि स्वाहा, मारुतोऽसि मरुतां गणः, शंभूर्मयोभूरभि मा वाहि स्वाहा,

---

[ १ ] मै. ३,४,३ । तै. ४,७,१२ । काठ. १८,१३ । कपि. २९,२ । वा. १८,३१–३६;३३,५२ । काण्व. २०,२–७;३२,५२ । मा. श्रौ. ६,२,५ । [ विश्वे ( नो ) अद्य मरुतो०...अस्मे । ऋ. १०,३५,१३; तै. सं. ४,७,१२,१ ]

[ २ ] तै. ३,४,७ । काठ. १८,१४ । कपि. २९,३ । वा. १८,३८–४४ । काण्व. २०,८–१४ । मा. श्रौ. ६,२,५ ।

सजूरब्दा आयवभिः, सजूरुषा आरुणीभिः, सजोषा अश्विना दꣳसोभिः, सजूः सूर
एतशेन, सजूर्वैश्वानर ईडया घृतेन स्वाहा ॥ ८

अग्निꣳ युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसं बृहन्तम् ।
तेन वयं पतेम ब्रध्नस्य विष्टपꣳ स्वो रुहाणा अधि नाक उत्तमे ॥ ९
इमौ ते पक्षा अजरौ पतत्रिणौ याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने ।
ताभ्याꣳ वयं पतेम सुकृतामु लोकꣳ यत्रा ऋषयो जग्मुः प्रथमा ये पुराणाः ॥ १०
इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः ।
महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिꣳसीः ॥ ११
दिवो मूर्धासि नाभिः पृथिव्या ऊर्गपामोषधीनाम् ।
विश्वायुः शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठसि श्रितः ॥ १२
समुद्रे ते हृदयमन्तरायुरपो दत्तोदधिं भिन्त ।
दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत ॥ १३
वि ते मुञ्चामि रशनाꣳ वि रश्मीन् वि योक्त्राणि परिचर्तनानि ।
धत्तादस्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भागदां देवतासु ॥ १४
इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिः ।
इष्टो अग्निराहुतः पिपर्तु न इष्टꣳ हविः स्वगेदं देवेभ्यो नमः ॥ ३ ॥ १५
येना ऋषयस्तपसा सत्रमासतेन्धाना अग्निꣳ स्वराभरन्तः ।
यमाहुर्मनवः स्तीर्णबर्हिषं तस्मिन्नहं निदधे नाके अग्निम् ॥ १६
तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ १७
आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुताꣳ ये पृतन्यवः ॥ १८
अयमग्निर्वीरतमो वयोधाः सहस्रियो ज्योततामप्रयुच्छन् ।

---

[ ३ ] मै. २,४,४-५ । तै. ४,७,१२-१३ । काठ. १८,१४;१५,१८ । कपि. २९,३-४ । वा. १८,४५;१२,७४;१८,५१-५७ । काण्व. २०,१५;१३,७५;२०,२१-२७ । मा. श्रौ. ६,२,५-६ । [ वि ते मुञ्चामि०...देवतासु । अथर्व. ७,७८,१—२ ]

विभ्राजमानः सलिलस्य मध्या उप प्रयाहि दिव्यानि धामन् ॥ १९
अग्ने च्यवस्व समनुप्रयाह्याविष्पथो देवयानान् कृणुष्व ।
इदमिदꣳ सुकृतमारभस्व यत्रा ऋषयो जग्मुः प्रथमा ये पुराणाः ॥ २०
संप्रच्यवध्वमुप संप्रयाताविष्पथो देवयानान् कृणुध्वम् ।
एभिः सुकृतैरनुगछेम देवा यत्र नः पूर्वे पितरः परेताः ॥ २१
उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च ।
पुनः कृण्वन्तः पितरो युवानोऽन्वाताꣳसुस्त्वय तन्तुमेतम् ॥ २२
येन वहसि सहस्रꣳ येनाग्ने सर्ववेदसम् । तेनेमꣳ यज्ञं नो वह स्वर्देवेषु गन्तवे ॥ २३
अयं ते ॥ ४ ॥ २४
समास्त्वाग्न ऋतवो वर्धयन्तु सꣳवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः ॥ २५
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २६
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने सꣳवरणे भवा नः ।
सपत्नहाग्ने अभिमातिजिद्भव स्वे गये जागृह्यप्रयुछन् ॥ २७
इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन् पूर्वचित्तो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥ २८
क्षत्रेणाग्ने स्वेन सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमेष्ठेयाय राज्ञामग्ने विहव्यो दीदिहीह ॥ २९
अति निहो अति स्रिधो अत्यचित्तिमति निर्ऋतिमद्य ।
विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यꣳ सहवीरꣳ रयिं दाः ॥ ३०

---

[ ४ ] तै. ४,७,१३ । काठ. १८,१८ । कपि. २९,६ । वा. १५,४९–५६;१८,६१–६२;३,१४;१२,५२ । काण्व. १६,७१–७८;२०,३१–३२;३,२०;१३,५३ । मा. श्रौ. ६,२,६ । [ येन वहासि०...गन्तवे । अथर्व. ९,५,१७ । अयं ते० । ऋ. ३,२९,१०; अथर्व. ३,२०,१; तै. सं. १,५,५,२;४,२,४,३;७,१३,५; तै. ब्रा. १,२,१,१६;२,५,८,८ ]
[ ५ ] मै. ३,४,६ । तै. ४,१,७ । काठ. १८,१६ । कपि. २९,४ । वा. २७,१—१०;२०,२१;३५,१४;३८,२४ । काण्व. २९,१—१०;२२,६;३५,४७;३८,२४ । [ समास्त्वाग्न०... । अथर्व. २,६,१ । सं चेध्यस्वाग्ने०...मान्ये । अथर्व. २,६,२ । त्वामग्ने वृणते०...प्रयुच्छन् । अथर्व. २,६,३ । इहैवाग्ने अधि०......अनिष्टृतः । अथर्व. ७,८२,३ । क्षत्रेणाग्ने स्वायुः०...दीदिहीह । अथर्व. २,६,४ । अति निहो०...दाः । अथर्व. २,६,५ ]

*

अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
व्यमीवाः प्रमुञ्चन्मानुषाणाᳬ शिवेभिरद्य परिपाहि नो वृधे ॥ ३१
बृहस्पते सवितर्बोधयैनᳬ सᳬशितं चित्संतरᳬ सᳬशिशाधि ।
वर्धयैनं महते सौभगाय विश्वे चैनमनुमदन्तु देवाः ॥ ३२
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यूहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ३३
उद्वयं तमसस्परि ज्योतिः पश्यन्ता उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ५ ॥ ३४
ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीᳬष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥ ३५
तनूनपादसुरो विश्ववेदा देवो देवेभ्यो देवयानान् पथो अनक्तु मध्वा घृतेन ।
मध्वा यज्ञं नक्षति प्रीणानः ॥ ३६
नराशᳬसो अग्निः सुकृद्देवः सविता विश्ववारः । अच्छायमेति शवसा घृतेन ॥ ३७
ईडानो वह्निर्नमसाग्निᳬ स्रुचो अध्वरेषु प्रयत्सु । स यक्षदस्य महिमानमग्नेः ॥ ३८
स ईं मन्द्रा सुप्रयसा स्तरीमन् । बर्हिषो मित्रमहाः । वसुश्रेष्ठो वसुधातमश्च ॥ ३९
द्वारो देवीरन्वस्य विश्वा व्रता ददन्ते अग्ने । उरुव्यचसो धाम्ना पत्यमानाः ॥ ४०
ते अस्य योषणे दिव्ये न योना उषासानक्ता । इमᳬ यज्ञमवतामध्वरं नः ॥ ४१
दैव्या होतारा ऊर्ध्वमिममध्वरं नोऽग्नेर्जिह्वामभिगृणीतम् । कृणुतं नः स्विष्टम् ॥ ४२

---

[ अनाधृष्यो जातवेदा०...वृधे । अथर्व. ७,८४,१ । शिवेभिरद्य०...वृधे । ऋ. ६,७१.३ । बृहस्पते सवित०...देवाः। अथर्व. ७,१६,१ । अमुत्रभूया०...शचीभिः । अथर्व. ७,५३,१ । उद्वयन्तमसस्परि०...। ऋ. १,५०,१०; अथर्व. ७,५३,७; तै. सं. ४,१,७,४; तै. ब्रा. २,४,४,९;६,६,४; तै. आ. ६,३,२ ]

[ ६ ] मै. ३,४,६ । तै. ४,१,८ । काठ. १८,१७ । कपि. २९,५ । वा. २७, ११-२२ । काण्व. २९,११-२२ । [ ऊर्ध्वा अस्य०...सूनोः । अथर्व. ५,२७,२ । तनूनपादसुरो०...घृतेन । अथर्व. ५,२७,१-२ । मध्वा यज्ञं०...। अथर्व. ५,२७,३ । नराशᳬसो अग्निः०—घृतेन । अथर्व. ५,२७,३-४ । ईडानो वह्निर्न०—मग्नेः। अथर्व. ५,२७,४-५ । स ईं ( तरी ) मन्द्रा०—वसुधातम( र )श्च । अथर्व. ५,२७,६ । द्वारो देवी०—पत्यमानाः ( ने ) । अथर्व. ५,२७,७-८ । आ सुष्वयन्ती यजते उपाके । ऋ. १०,११,६; अथर्व. ५,२७,८;१२,६; तै. ब्रा. ३,६,३,३; नि. ८,११ । ते अस्य०—नः । अथर्व. ५,२७,८ । दैव्या ( देवा ) होतारा०स्विष्टम् । अथर्व. ५,२७,९ ]

तिस्रो देवीर्बर्हिरेदꣳ स्योनमिडा सरस्वती मही । भारती गृणाना ॥ ४३
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टः सुवीर्यम् । रायस्पोषꣳ विष्य नाभिमस्मे ॥ ४४
वनस्पतेऽवसृजा रराणस्त्मना देवेभ्यः । अग्निर्हव्यꣳ शमिता सूदयाति ॥ ४५
अग्ने स्वाहा कृणुहि जातवेदा इन्द्राय देवेभ्यः। विश्वे देवा हविरिदं जुषन्ताम् ॥ ६ ॥ ४६
[ १३६१ ]

॥ इति मध्यमकाण्डे द्वादशः प्रपाठकः ॥ १२ ॥

अथ त्रयोदशः प्रपाठकः ।

समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमु शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परितस्थुरापः ॥ १
हिरण्यवर्णः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परि योनेर्निषद्य हिरण्यदा ददत्यन्नमस्मै ॥ २
हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
अग्निꣳ या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु ॥ ३
यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु ॥ ४
यासां देवा दिवि कृण्वन्ति भक्षꣳ या अन्तरिक्षे बहुधा भवन्ति ।
याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु ॥ ५
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ।
सर्वꣳ अग्नीꣳरप्सुषदो हुवे मयि वर्चो बलमोजो निधत्त ॥ ६
यददः संप्रयतीरहावनदता हते ।

---

[ तिस्रो देवी०—गृणाना । अथर्व. ५,२७,९ । तन्नस्तुरी०—मस्मे । अथर्व. ५,२७,१०। वनस्पतेऽव०... सूदयाति (स्वदयतु)। अथर्व. ५,२७,११ । अग्ने स्वाहा०—जुषन्ताम्। अथर्व. ५,२७,१२ ]

[ १ ] तै. ५,६,१ । काठ. ३९,२ । वा. ११,५०-५२;३६१४-१६;४,१३,१७;५,४३। काण्व. १२,५१-५३;३६,१४-१६; ४,१८,२३;५,५४ । मा. श्रौ. ६,१,६ । [ समन्या यन्त्युप०...तस्थुरापः । ऋ. २,३५,३; सा. ६०७; तै. सं. २,५,१२,१ । हिरण्यवर्णः (०रूपः) स०...मस्मै । ऋ. २,३५,१०; नि. ३,१६ । हिरण्यवर्णाः शुचयः०.. भवन्तु । अथर्व. १,३३,१ । यासाꣳ राजा वरुणो०... । ऋ. ७,४९,३; अथर्व. १,३३,२,४ । तै. सं. ५,६, १,१ । यासां देवा दिवि०...भवन्तु । अथर्व. १,३३,३ । शिवेन मा चक्षुषा०...। १,३३,४ । मधुश्चुतः (घृतश्चुतः) शुचयो०। ऋ. ७,४९,३; अथर्व. १,३३,४ । यददः संप्रयती०...सिन्धवः। अथर्व. ३,१३,१]

तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥ ७
संप्रच्युता वरुणेन यच्छीभꣳ समवल्गत ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनुष्ठन ॥ ८
अपकामꣳ स्यन्दमाना अवीवरत वो हिं कम् ।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्नाम वो हितम् ॥ ९
एको वो देवो अप्यतिष्ठत् स्यन्दमाना यथावशम् ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥ १०
आदित्पश्याम्युत वा शृणोम्या मा घोषो गछति वान्नासाम् ।
तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसागन् ॥ ११
आपो देवीर्घृतमिन्वा ऊ आपो अग्नीषोमौ बिभ्रत्यापा इत्ताः ।
मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपꣳ यदा वः ॥ १२

आपो हि ष्ठेति तिस्रः ॥ दिवि श्रयस्वा,—ऽन्तरिक्षे यतस्व, पृथिव्याः संभुव, ब्राज्ञं
गछ ॥ १ ॥ १३-१४

तपो योनिरसि, विश्वाभिस्त्वा धीभिरछिद्रामुपदधाम्यृ,—तꣳ योनिः, सत्यꣳ योनि,—
ब्रह्म योनिः, क्षत्रꣳ योनिः, पृथिवी योनि,—रन्तरिक्षꣳ योनि,—र्द्यौर्योनि,—र्दिशो
योनिः ॥ २ ॥ १५

प्राणादपानꣳ संतन्व,—पानाद्व्यानꣳ संतनु, व्यानाच्चक्षुः संतनु, चक्षुषः श्रोत्रꣳ संतनु,
श्रोत्रात् पृथिवीꣳ संतनु, पृथिव्या अन्तरिक्षꣳ संतन्व,—न्तरिक्षाद्दिवꣳ संतनु, दिवो दिशः
संतनु, दिग्भ्यः स्वर्गं लोकमनुसंतनु ॥ ३ ॥ १६

---

[ संप्रच्युता ( यत्प्रेषिता )०...अनुष्ठन । अथर्व. ३,१३,२ । अपकामꣳ स्यन्दमाना०...हितम्। अथर्व. ३,१३,३ । एको वो देवो०...मुच्यते । अथर्व. ३,१३,४ । आदित्पश्याम्युत०...साम् । अथर्व. ३,१३,६ (प्र. च. ) । तीव्रो रसो०...सागन् ( गमेत् ) । अथर्व. ३,१३,५ ( द्वि. च. ) । आपो देवी ( भद्रा ) घृत ०...इत्ताः । अथर्व. ३,१३,५ (प्र. च. ) । मन्ये भेजानो०...... यदा वः । अथर्व. ३,१३,६ ( द्वि. च ) । आपो हि ष्ठा०... चक्षसे । ऋ. १०,९,१; सा. १८३७; अथर्व. १,५,१; तै. ४,१,५,१;५,६,१,४;७,४,१९,४; तै. आ. ४,४२,४;१०,१,११; नि. ९,२७। यो व शिव०...मातरः। ऋ. १०,९,२; सा. १८३८; अथर्व. १,५,१; तै. सं ४,१,५,१;७,४,१९,४; तै. आ. ४,४२,४;१०,१,११ । तस्मा अरंगमाम०...यथाचनः । ऋ. १०,९,३; सा. १८३९; अथर्व. १,५,३; तै. सं. ४,१,५,१;५,६,१,४;७,४,१९,४; तै. आ. ४,४२,४;१०,१,१२ ]

[ २ ] मै. ३,२,६ । काठ. ३९,२ ।

[ ३ ] तै. ब्रा. १,५,७ । काठ. ३९,८ ।

ऋचा त्वा छन्दसा सादयामि, वषट्कारेण त्वा छन्दसा सादयामि, हिंकारेण त्वा छन्दसा
सादयामि, प्रस्तावेन त्वा छन्दसा सादयाम्यु,—द्गीथेन त्वा छन्दसा सादयामि, प्रतिहारेण
त्वा छन्दसा सादयामि, स्तुतेन त्वा छन्दसा सादयामि, निधनेन त्वा छन्दसा साद-
यामि ॥ ४ ॥ १७

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ १८

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।

चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १९

अयमिह ॥ २०

दधन्वे वा यदीमनु वोचद् ब्रह्माणि वेरु तत्। परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत्॥ २१

ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि ।

उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आभर ॥ ५ ॥ २२

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ २३

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥ २४

इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । अविन्दच्छर्यणावति ॥ २५

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ २६

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ॥ २७

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥ २८

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥ २९

---

[ ५ ] तै. ब्रा. ३,११,६,३; तै. सं. ३,३,३,३; २,२,१२,७; ४,४,४,६; २,१३,७,८। काठ. १२,१५;३९,१३। वा. ३,१५; १५,२६;३३,६। काण्व. ३,२१;१६,४७;३२,६। [ दूतं वो विश्व०...गिरा। ऋ. ४,८,१; सा. १२। अगन्म महा नमसा०...प्रत्यञ्चम्। ऋ. ७,१२,१; सा. १३०४; तै. ब्रा. ३,११,६,२। अयमिह०...। ऋ. ४,७,१; तै. सं. १,५,५,१। दधन्वे वा०...भुवत्। ऋ. २,५,३; सा. ९४। ओभे ( उभे ) सुश्चन्द्र०...आभर। ऋ. ५,६,९; सा. १०२४ ]

[ ६ ] काठ. ३९,१२। तै. ब्रा. १,५,८,१-३। [ इन्द्रो दधीचो०...नव। ऋ. १,८४,१३; सा. १७९;९१३; अथर्व. २०,४१,१। अत्राहं गोरमन्वत०...गृहे। ऋ. १,८४,१५; सा. १४७,९१५; अथर्व. २०,४१,३; नि. ४,२५। इच्छन्नश्वस्य०...वति। ऋ. १,८४,१४; सा. ९१४, अथर्व. २०,२१,२। इन्द्रमिद्गाथिनो०...नूषत। ऋ. १,७,१; सा. १९८,७९६; अथर्व. २०,३८,४;४७,४;७०,७; तै. सं. १६,१२,२; नि. ७,२। इन्द्रो दीर्घाय०...रयत्। ऋ. १,७,३; सा. ७९९; अथर्व. २०,३८,६;४७,६;७०,९। इन्द्रा ( इन्द्र ) इद्धर्यो०...। ऋ. १,७,२; सा. ५९७,७९७; अथर्व. २०,३८,५;४७,५,७०,८। इन्द्र वाजेषु०...रूतिभिः। ऋ. १,७,४; सा. ५९८;७९८; अथर्व. २०,७०,१० ]

तमिन्द्र॑ꣳ वाजयामसि म॒हे वृ॒त्राय॒ हन्त॑वे । स वृषा॑ वृष॒भो भु॑व॒त् ॥ ३०

इन्द्रः॒ स दाम॑ने कृ॒त ओजि॑ष्ठः॒ स बले॑ हि॒तः । द्यु॒म्नी श्लो॒की स सो॒म्यः ॥ ३१

गि॒रा वज्रो॒ न सम्भृ॑तः॒ सब॑लो॒ अन॑पच्युतः । व॒व॒क्ष उ॒ग्रो अस्तृ॑तः ॥ ६ ॥ ३२

अ॒यम॒ग्निः स॑ह॒स्रिणो॒, ऽग्निर्मूर्धा॒, त्वाम॑ग्ने॒ पुष्क॑रा॒दधि॑ ॥ ३३

अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म् ।

य॒ह्वा इ॑व॒ प्र व॒यामु॒ज्जिहा॑नाः॒ प्र भा॒नवः॑ सिस्र॒ते नाक॒मच्छ॑ ॥ ३४

अवो॑चाम क॒वये॒ मेध्या॑य॒ वचो॑ व॒न्दारु॑ वृष॒भाय॒ वृष्णे॑ ।

गवि॑ष्ठिरो॒ नम॑सा॒ स्तोम॑म॒ग्नौ दि॒वीव॑ रु॒क्मम॑रु॒व्यञ्च॒मश्रेत् ॥ ३५

अबो॑धि॒ होता॑ य॒जथा॑य दे॒वानू॒र्ध्वो अ॒ग्निः सु॒मनाः॑ प्रा॒तर॑स्थात् ।

समि॑द्धस्य॒ रुश॑दद॒र्शि पाजो॑ म॒हान् दे॒वस्तम॑सो॒ निर॑मोचि ॥ ३६

जन॑स्य गो॒पा अ॑जनिष्ट॒ जागृ॑विर॒ग्निः सु॒दक्षः॑ सुवि॒ताय॒ नव्य॑से ।

घृ॒तप्र॑तीको बृह॒ता दि॑वि॒स्पृशा॑ द्यु॒मद्विभा॑ति भर॒तेभ्यः॒ शुचिः॑ ॥ ३७

त्वाम॑ग्ने॒ अङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ् शिश्रिया॒णꣳ वने॑वने ।

स जा॑यसे म॒थ्यमा॑नः॒ सहो॑ म॒हत्त्वामा॑हुः॒ सह॑सस्पु॒त्रम॑ङ्गिरः ॥ ३८

तुभ्ये॒दम॑ग्ने॒ मधु॑मत्तमꣳ॒ वच॒स्तुभ्यं॑ मनी॒षा इ॒यम॑स्तु॒ शꣳ हृ॒दे ।

त्वां गिरः॒ सिन्धु॑मिवा॒वनी॑र्म॒हीरा पृ॑णन्ति॒ शव॑सा व॒र्धय॑न्ति च ॥ ३९

सꣳस॒मिद्यु॑वसे वृषन्न॒ग्ने॒ विश्वा॑न्य॒र्य आ । इ॒डस्प॒दे समि॑ध्यसे॒ स नो॒ वसू॒न्याभ॑र ॥ ४०

---

[ तमिन्द्रꣳ वाजयामसि०...भुवत् । ऋ. ८,९३,७; सा. ११९,१२२२; अथर्व. २०,४७,१;१३७,१२; तै. ब्रा. २,४,१,३ । इन्द्रः स दामने०...सोम्यः । ऋ. ८,९३,८; सा. १२२३; अथर्व. २०,४७,२;१३७,१३ । गिरा वज्रो न०...अस्तृतः । ऋ. ८,९३,९; सा. १२२४; अथर्व. २०,४७,३;१३७,१४ ]

[ ७ ] तै. ४,४,४;१,८,२२,३ । काठ. ३९,१४; ( २,१५;११,१२ ); वा. १५,२०-२२;२४—२५,२७-२८,३०-३१, ४१-४२;३,१२;१३,१४;११,२२;२६,७। काण्व. ३,१८;१४,१४;१२,३२;१६,४१-४३,४६,४८-४९,५१,५३,६३-६४;३६,७। [ अयमग्निः सहस्रिणो०...। ऋ. ८,७५,४; तै. सं. २,६,११,१;४,४,४,१ । अग्निर्मूर्द्धा दिवः०। ऋ. ८,४४,१६; सा. २७,१५३२; तै. सं. १,५,५,१;४,४,१,१; तै. ब्रा. ३,५,७,१ । त्वामग्ने पुष्करादधि० । ऋ. ६,१६,१३; सा. ९, तै. सं. ३,५,११,३;४,१,३,२;४,४,१ । अबोध्यग्निः समिधा०...मछ ( ०च्छ )। ऋ. ५, १,१; सा. ७३,१७४६; अथर्व. १३,२,४६; तै. सं. ४,४,४,१ । अवोचाम कवये०...। ऋ. ५,१,१२; तै. सं. ४, ४,४,२ । अबोधि होता०...मोचि । ऋ. ५,१,२; सा. १७४७; नि. ६,१३ । जनस्य गोपा०... शुचिः । ऋ. ५,११,१; सा. ९०७; तै. सं ४,४,४,२ । त्वामग्ने अङ्गिरसो०... मङ्गिरः । ऋ. ५,११,६; सा. ९०८; तै. सं. ४,४,४,२ । तुभ्येदमग्ने०... । ऋ. ५,११,५ । सꣳसमिद्युवसे० ..भर । ऋ. १०,१९१,१; अथर्व. ६,६३,४; तै. सं २,६,११,४;४,४,४ ]

अग्निं॑ वः पूर्व्यं॑ गिरा॑ देवमीडे वसूनाम् । सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥ ४१

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥ ४२

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं॑ स्तोतृभ्या आभर ॥ ४३

अग्निं तं मन्ये यो वसुरस्तं॑ यं॑ यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिना इषं॑ स्तोतृभ्या आभर ॥ ४४

सो अग्निर्यो वसुर्गृणे सं॑ यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सं॑ सुजातासः सूरया इषं॑ स्तोतृभ्या आभर ॥ ७ ॥ ४५

एना वो अग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिं॑ स्वध्वरं॑ विश्वस्य दूतममृतम् ॥ ४६

त्वमग्ने गृहपतिस्त्वं॑ होता नो अध्वरे । त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥ ४७

देवो वो द्रविणोदाः पूर्णां॑ विवष्ट्यासिचम् । उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ ४८

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ ४९

स इधानो वसुः कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ५०

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ५१

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं॑ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ ५२

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ ५३

---

[ अग्निं॑ वः पूर्व्यं गिरा०...। ऋ. ८,३१,१४; तै. सं. १,८,२२,३ । त्वां चित्रश्रवस्तम०...वोढवे । १,४५,६; तै. सं. ४,४,४,३ । आ ते अग्न०...आभर । ऋ. ५,६,४; सा. ४१९,१०२२; अथर्व. १८,४,८८; तै. सं. ४,४,४,६ । अग्निं तं मन्ये०...आभर । ऋ. ५,६,१; सा. ४२५,१७३७ । सो अग्निर्यो०... आभर । ऋ. ५,६,२; सा. १७३९ । स्तोतृभ्या ( ०भ्य ) आभर । ऋ. ५,६,१,२,९;८,९३,१९; सा. १५८६ ]

[ ८ ] तै. ४,४,४ । काठ. ३९,१५ । वा. १५,३२-३३,३५-३७,४४-४५,४७;१०,२४;१२,१४;४,२५;३,२५;१५,४८; २५,४७ । काण्व. १६,५४-५५,५७-५९,६६-६७,६९;११,३४;१३,१५;४,३४;३,३३;१६,७०;२७,४५ । [ एना वो अग्निं०...मृतम् । ऋ. ७,१६,१; सा. ४५,७४९; तै. सं. ४,४,४,४; नि. ३,२१ । त्वमग्ने गृहपति०... वार्यम् । ऋ. ७,१६,५; सा. ६१ । अग्ने वाजस्य गोमता ( तः )० । ऋ. १,७९,४; सा. ९९,१५६१; तै. सं. ४,४,४,५। स इधानो०...दीदिहि । ऋ. १,७९,५; सा. १५६२; तै. सं. ४,४,४,५। क्षपो राजन्नुत०...प्रति। ऋ. १,७९,६; सा. १५६३; तै. सं. ४,४,४,५ । अग्ने तमद्याश्वं०...ओहैः । ऋ. ४,१०,१; सा. ४३४,१७७७; तै. सं. ४,४,४,७ । अधा ह्यग्ने०...बभूथ । ऋ. ४,१०,२; सा. १७७८; तै. सं. ४,४,४,७ ]

आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्तु शुष्मैः ॥ ५४

अग्निं३ होतारं मन्ये दास्वन्तं३ वसुं३ सूनुं३ सहसो जातवेदसं३ विप्रं न जातवेदसम् ।

य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनु शुक्रशोचिषः ॥ ५५

आजुह्वानस्य सर्पिषः ॥ हं३सः शुचिषं,—दभि त्यं देवं३ सवितारं,—मग्ने त्वं नो अन्तमः ॥

अधा ह्यग्ने, एवा ह्यग्ने ॥ ८ ॥ ५६–५८

आयाहि सुषुमा हि ता इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥ ५९

आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥ ६०

ब्रह्माणस्त्वा वयं३ युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ६१

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।

ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ६२

न त्वावं अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।

अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ६३

त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां३ वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ६४

स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ।

गामश्वं३ रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे ॥ ६५

कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ६६

---

[आभिष्टे अद्य०...शुष्मैः। ऋ. ४,१०,४; तै. सं. ४,४ ४,७। अग्निं३होतारं मन्ये०...सर्पिषः। ऋ. १,१२७ १; सा. ४६५ १८१३; अथर्व २०,६७,३: तै सं. ४.४.४,८; नि. ६,८। हं३सः शुचिषद्०। ऋ. ४,४०,५; तै. सं. १,८ १५,२;४,२,१,५; तै. ब्रा. १०,१०,२। अभि त्यं देवं३० । अथर्व ७.१४,१ । अग्ने त्वं नो अन्तमः०। ऋ. ५ २४,१; सा. ४४८,११०७; तै. सं. १,५.६.२;४,४,४,८ । अधा ह्यग्न० । ऋ. ५,१६,४ ]

[ ९ ] मै. ४,१२,४-५;४,९,२७; तै. २,४,१४,२-३;४.२,११.२;४,४,१२,५। तै. आ ४,४.२,३,। काठ. ३९,११। वा. २७.३५-४२,४४;३६.४–६ । काण्व. २९.४०-४८;३६,४-६ । मा. श्रौ. ६,२,३ । [ आयाहि शुषुमा०...। ऋ. ८,१७,१; सा. १९१ ६६६; अथर्व. २०,३,१:३८,१,४७,७। आ त्वा ब्रह्मयुजा०...शृणु। ऋ. ८,१७,२, सा. ६६७ अथर्व. २०.३,२;३८,२;४७,८। ब्रह्माणस्त्वा वयं३०... महे ऋ. ८.१७,३; सा. ६६८, अथर्व. २०.३,३;३८,३;४७,९। अभि त्वा शूर०...तस्थुषः। ऋ, ७,३२,२२; सा. २३३,६८०; अथर्व. २०,१२१,१; तै. सं. २,४,१४ २ । न त्वावं ( त्वावाँ ) अन्यो०...महे । ऋ. ७,३२ २३; सा. ६८१; अथर्व. २०.१२१,२। त्वामिद्धि हवामहे०... स्वर्वतः । ऋ. ६,४६,१; सा. २३४.८०९; अथर्व. २०,९८,१; तै. सं. २,४,१४,३। स त्वं नश्चित्र०...जिग्युषे। ऋ. ६,४६,२; सा. ८१०; अथर्व. २०,९८,२ । कया नश्चित्र०...वृता। ऋ. ४,३१ १; सा. १६९,६८२; अथर्व. २०,१२४,१; तै. सं. ४,२,११,२; तै. आ. ४,४२,२]

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु ॥ ६७
अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः ॥ ६८
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ ६९
ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ ९ ॥ ७०
ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्र्युत प्रजानाम्।
एका सती बहुधोषो व्युच्छाजीर्णा त्वं जरय सर्वमन्यत् ॥ ७१
को विराजो मिथुनत्वं प्रवेद क ऋतून् क उ कल्पमस्याः। क अस्याः क उ वेद रूपम्।
दोहान् को वेद कतिधा विदुग्धाः कति धामानि कति ये विवासाः ॥ ७२
इयमेव सा या प्रथमा व्यौच्छत् साऽप्स्वन्तश्चरति प्रविष्टा।
वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते ॥ ७३
छन्दस्वती उषसा पेपिशाने समानं योनिमनु संचरेते।
सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसा ॥ ७४
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु रेतसागुः।
प्रजामेका जिन्वत्यूर्जमेका क्षत्रमेका रक्षति देवयूनाम् ॥ ७५
चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराभरन्निदम् ॥ ७६
पञ्चभिर्धाता विदधाविदं यत्तासां स्वसॄरजनयत्पञ्च पञ्च।
तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः ॥ ७७
ऋतस्य धामन् प्रथमा व्युवास्यपामेका महिमानं बिभर्ति।
सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैकां नियच्छते ॥ ७८

---

[कस्त्वा सत्यो मदानां०...वसु। ऋ. ४,३१,२; सा. ६८३; अथर्व. २०,१२४,२; तै. आ. ४,४२ ३। अभी षु णः०... स्यूतिभिः ( स्यूतये )। ऋ. ४.३१,३; सा. ६८४; अथर्व. २०,१२४,३; तै. आ. ४.४२,३। यज्ञा यज्ञा वो०... ऋ. ६,४८.१; सा. ३५,७०३। ऊर्जो नपातꣳ०... ऋ. ६,४८ २; सा. ७०४ ]

[ १० ] तै. ४,३,११। काठ. ३९,१०। [ को विराजो०...विवासाः ( व्युष्टीः )। अथर्व. ८,९,१०। इयमेव सा या०...सचन्ते ( जनित्री )। अथर्व. ८,९,११। छन्दस्वती ( छन्दः पक्षे ) उषसौ ( सा ) रेतसौ ( ०सा )। अथर्व. ८,९ १२। ऋतस्य पन्था०... यूनाम् अथर्व. ८९,१३। चतुष्टोम०( अग्नीषोमा० ) ...भरन्निदम् (०न्तीम्। अथर्व. ८,९,१४ ]

*

इदं॒ श्रेयो मन्यमानो वा आगामहं॒ वो अस्मि सख्याय शेवः ।
समानजन्मा क्रतुरस्त्येकः सर्वः सर्वा विचरतु प्रजानन् ॥ ७९
भूयास्म ते सुमतौ विश्ववेदा आष्टाः प्रतिष्ठामविदो हि गाधम् ।
सत्यं॒ वदन्तीर्महिमानमापान्या वो अन्यामति मा प्रयुक्त ॥ ८०
रुशद्विधाना समना पुरस्तात् प्रजानती यामुमुषा अयासीत् ।
ब्रह्मद्विषस्तमसा देवशत्रूनभिविहन्ती विश्ववारा व्युवाट् ॥ ८१
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम् ॥ ८२
त्रिं॒शत्स्वसारा उपयन्ति निष्कृतं॒ समानं केतुं प्रतिमुञ्चमानाः ।
ऋतूं॒स्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परियन्ति भास्वतीः ॥ ८३
ज्योतिष्मतीः प्रतिमुञ्चते नभो देवी रात्री सूर्यस्य व्रतानि ।
विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे ॥ ८४
प्रथमा ह व्युवास सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा उत्तरामुत्तरां॒ समाम् ॥ १० ॥ ८५
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ ८६
त्वं॒ यविष्ठ दाशुषो नॄं॒ष्पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ८७
अग्ने धामानि तव जातवेदो देव स्वधावोऽमृतस्य नाम ।
याश्च माया मायिनां॒ विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो ॥ ११ ॥ ८८
यवा अयुवा ऊमा एवा अब्दः संगरः सुमेकोऽग्ने कह्या,—ग्ने किं॒शिला,—ऽग्ने दुध्रा,—ऽग्ने
वन्या,—ऽग्ने कक्ष्य, या ता इषुर्युवा नाम तया विधेम, तस्यै ते नम,—स्तस्यास्ता उप पत्सुतो
जीवा भूयास्म, तं यं द्विष्मो यश्च नो द्वेष्टि तमस्या जम्भे दध्मः ॥ १२ ॥ ८९

---

[ इदं॒ ( इत्थं ) श्रेयो०...प्रजानन् । अथर्व. ८,९,२२ । पञ्च व्युष्टीरनु०... मेकम् । अथर्व. ८,९,१५ । प्रथमा ह व्युवास०... समाम् । अथर्व. २,१०,१ ]

[ ११ ] मै. ३,१६,४ । तै. १,५,११,१ । काठ. ४०,३; ७,१६। वा. १८,७३,७७; १३,५२ । काण्व. २०,४२,४६; १४,५४। [ पृष्टो दिवि पृष्टो०...नक्तम्। ऋ. १,९८,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६,४। त्वं॒ यविष्ठ दाशुषो० त्मना । ऋ. ८,८४,३; सा. १२४६। अग्ने धामानि(भूरीणि)तव०... बन्धो । ऋ. ३,२०,३; तै. सं.३,१,११,६]

[ १२ ] तै. ४,४,७,२; ५,५,९ । काठ. ४०,३ । वा. १५,१५-१९; १६,६४-६६ । काण्व. १६,३२,३४,३६,३८,४०; १७, ६४ । मां. श्रौ. ६,२,३ । [ यं द्विष्मो०... दध्मः । अथर्व. ३,२७,१-६ ]

यो अ॒३प्स्व॒न्तर॒ग्निर्यो वृ॒त्रे यः पुरु॑षे॒ यो अश्म॑नि ।
य आ॑वि॒वेशौष॑धी॒र्यो वन॒स्पती॑ꣳस्तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ ९०
यः सोमे॑ अ॒न्तर्यो गोष्व॒न्तर्वया॑ꣳसि॒ य आ॑वि॒वेश॒ यो मृ॒गेषु॑ ।
य आ॑वि॒वेश॑ द्वि॒पदो॒ यश्चतु॑ष्पद॒स्तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ ९१
येनेन्द्र॑स्य॒ रथ॒ꣳ संब॒भूवु॒र्यो वै॑श्वान॒र उ॒त वि॑श्व॒दाव्यः॑ ।
धीरो॒ यः श॒क्रः प॑रि॒भूरदा॑भ्य॒स्तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ ९२
वि॒श्वाद॑म॒ग्निꣳ यमु॒ काम॑मा॒हुर्यं दा॒तारं॑ प्रतिग्र॒हीता॑रमा॒हुः ।
यं जोह॑वीमि॒ पृत॑नासु सास॒हिं तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ ९३
उ॒क्षान्ना॑य व॒शान्ना॑य॒ सोम॑पृष्ठाय वे॒धसे॑ । स्तोमै॑र्विधेमा॒ग्नये॑ ॥ ९४
वै॒श्वा॒न॒रज्ये॑ष्ठेभ्य॒स्तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ १३ ॥ ९५

मा छन्द॒,—स्तत्पृ॑थि॒३व्य॒,—ग्निर्दे॒वता॑, तेन॒ छन्द॑सा॒ तेन॒ ब्रह्म॑णा॒ तया॑ दे॒वत॑याऽङ्गिर॒स्वद् ध्रु॒वा
सी॑द ॥ प्र॒मा छन्द॒,—स्तद॒न्तरि॑क्षꣳ, वा॒युर्दे॒वता॑, प्रति॒मा छन्द॒,—स्तद् द्यौः सूर्यो॑ दे॒वता॑,—
ऽस्त्री॒वीश्छन्द॒,—स्तद्दिशः॑, सोमो॑ दे॒वता॑, गा॒य॒त्री छन्द॒,—स्तद॒जा, बृह॒स्पति॑र्दे॒वता॑, त्रि॒-
ष्टुप्छन्द॒,—स्तद्धिर॑ण्य॒,—मिन्द्रो॑ दे॒वता॑, जग॑ती॒ छन्द॒,—स्तद्गौः, प्र॒जाप॑ति॒र्दे॒वता॑,—ऽनु॒ष्टुप्छन्द॒,
—स्तदायु॒,—र्मि॒त्रो दे॒वतो॑,—ष्णिक्छन्द॒,—स्तच्चक्षुः॑, पू॒षा दे॒वता॑, वि॒राट् छन्द॒,—स्तदश्वो॑,
वरु॑णो दे॒वता॑, बृ॒ह॒ती छन्द॒,—स्तत्कृ॒षिः, प॒र्जन्यो॑ दे॒वता॑, प॒ङ्क्तिश्छन्द॒,—स्तत्पुरु॑षः, पर॒मेष्ठी
दे॒वता॑, तेन॒ छन्द॑सा॒ तेन॒ ब्रह्म॑णा॒ तया॑ दे॒वत॑याऽङ्गिर॒स्वद् ध्रु॒वा सी॑द ॥ १४ ॥ ९६-९७

पृ॒थि॒व्य॒सि॒ जन्म॑ना व॒शा, साऽग्निं गर्भ॑मधत्थाः, सा मया॒ संभ॑व॒,—ऽन्तरि॑क्षमसि॒ जन्म॑ना
व॒शा, सा वा॒युं गर्भ॑मधत्थाः, सा मया॒ संभ॑व, द्यौर॑सि॒ जन्म॑ना व॒शा, साऽऽदि॒त्यं गर्भ॑म-
धत्थाः, सा मया॒ संभ॑व, नक्ष॑त्राण्यसि॒ जन्म॑ना व॒शा, सा च॒न्द्रम॑सं॒ गर्भ॑मधत्थाः, सा
मया॒ संभ॑व, ऋग॑सि॒ जन्म॑ना व॒शा, सा साम॒ गर्भ॑मधत्थाः, सा मया॒ संभ॑व, वि॒द्व॑सि॒

[ १३ ] तै. १,३,१४,७। काठ. ४०,३,५। [ यो अ३प्स्वन्त० ( ये अग्नयो०)...तन्। अथर्व. ३,२१,१। यः सोमे अन्तर्यो०...। अथर्व. ३,२१,२। येनेन्द्रस्य रथꣳ( य इन्द्रेण सरथं )...। अथर्व. ३,२१,३। धीरो यः शक्रः ( यो धीरः० )। अथर्व. ३,२१,४ ( द्वि. च. )। विश्वादमग्निꣳ यमु ( यो देवो विश्वाद्यमु )०। अथर्व ३,२१,४ (प्र. च.)। यं जोहवीमि०...तत्। अथर्व. ३,२१,३ (द्वि. च.)। उक्षान्नाय वशान्नाय०...माग्नये। ऋ. ८,४३,११; अथर्व. ३,२१,६;२०,१,३; तै. सं. १,३,१४,७। वैश्वानरज्येष्ठे०...तत्। अथर्व. ३,२१,६ ]

[ १४ ] मै. २,८,३। तै. ४,३,७,१। काठ. ३९,४। वा. १४,१८-२०;१२,५३;१३,१९,२४;१४,६,१२,१४;१५,५८, ६४। काण्व. १५,१८-२२;१३,५४;१४,१९,२५;१५,५,१५,१६;१६,७९,८४ ]

[ १५ ] काठ. ३९,८। वा. ११,५८। काण्व. १२,५९। मा. श्रौ. ६,२,३ ]

जन्मना वशा, सा राजानं गर्भमधत्थाः, सा मया संभव, वागसि जन्मना वशा, सा
प्राणं गर्भमधत्थाः, सा मया संभवा,—ऽऽपोऽसि जन्मना वशा, सा यज्ञं गर्भमधत्थाः,
सा मया संभव ॥ १५ ॥ ९८

या देव्यसीष्टके कुमार्युपशीवरी सा मोपशेष्व जायेव सदमित्पतिं, या देव्यसीष्टके प्रफ-
र्व्युपशीवरी सा मोपशेष्व जायेव सदमित्पतिं, या देव्यसीष्टके युवतिरुपशीवरी सा मोपशेष्व
जायेव सदमित्पतिं, या देव्यसीष्टक आयुर्दाः प्राणदा अपानदा व्यानदाश्चक्षुर्दाः श्रोत्रदाः
पृथिव्यामन्तरिक्षे दिवः पृष्ठ उपशीवरी सा मोपशेष्व जायेव सदमित्पतिं, या देवीः स्थेष्टकाः
सुशेवा उपशीवरीस्ता मोपशेध्वं जाया इव सदमित्पतिम् ॥ १६ ॥ ९९

संवयसे त्वा,—ऽभिवयसे त्वो,—र्ध्ववयसे त्वा, बृहद्वयसे त्वा, संहीयसे त्वा, संहमा-
नाय त्वा, सासहये त्वा, सहस्वते त्वा,—ऽभीषाहे त्वा,—ऽभिभ्वे त्वा,—ऽभिमातिषाहे त्वा,
—ऽभिमातिघ्ने त्वा ॥ १७ ॥ १००

भूयस्कृदसि, वरिवस्कृदसि, प्राच्यस्यू,—र्ध्वास्य,—न्तरिक्षमस्यो,—जोदां त्वौजसि साद-
यामि, पयोदां त्वा पयसि सादयामि, तेजोदां त्वा तेजसि सादयामि, यशोदां त्वा यशसि
सादयामि, वर्चोदां त्वा वर्चसि सादयामि, पृथिव्यास्त्वा द्रविणे सादयाम्य,—न्तरिक्षस्य
त्वा द्रविणे सादयामि, दिवस्त्वा द्रविणे सादयामि, दिशां त्वा द्रविणे सादयामि, द्रवि-
णोदां त्वा द्रविणे सादयाम्य,—प्सुषदसि, गृध्रसदसि, श्येनसदसि, सुपर्णसदसि,
नाकसदसि ॥ १८ ॥ १०१

ज्योतिष्मतीं त्वा सादयामि, ज्योतिष्कृतं त्वा सादयामि, ज्योतिर्विदं त्वा सादयाम्यू,—
र्ध्वज्योतिषं त्वा सादयामि, बृहज्ज्योतिषं त्वा सादयामि, विश्वज्योतिषं त्वा सादयाम्य,—
जस्रां त्वा सादयामि, भास्वतीं त्वा सादयामि, दीप्यमानां त्वा सादयामि, रोचमानां
त्वा सादयामि, ज्वलन्तीं त्वा सादयामि, मल्मलाभवन्तीं त्वा सादयामि, जाग्रतीं त्वा
सादयामि, बोधयन्तीं त्वा सादयामि ॥ १९ ॥ १ २

कृत्तिका नक्षत्र,—मग्निर्देवता,—ऽग्ने रुचः स्थ, प्रजापतेः सोमस्य धातु,—र्र्चे त्वा, रुचे
त्वा, भासे त्वा, ज्योतिषे त्वा, तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा
सीद, रोहिणी नक्षत्रं, प्रजापतिर्देवतं,—न्वगा नक्षत्रं, मरुतो देवता, बाहुर्नक्षत्रं, रुद्रो

[ १६ ] काठ. ३९,९ । मा. श्रौ. ६,२,३ ।
[ १७ ] मा. श्रौ. ६,२,३ ।
[ १८ ] तै. ४,४,७,६ । काठ. ३९.९ । वा. १३,५३ । काण्व. १४,५५ । मा. श्रौ. ६,२,३ ।
[ १९ ] तै. १,४,३४ । तै. आ. ३,१९ । काठ. ४०,४ । वा. १३,५३ । काण्व. १४,५५ । मा. श्रौ. ६,२,३ ।

देवता, पुनर्वसुनक्षत्र,-मदितिर्देवता, तिष्यो नक्षत्रं, बृहस्पतिर्देवता,-ऽऽश्लेषा नक्षत्र९, सर्पा देवता, मघा नक्षत्रं, पितरो देवता, फल्गुनीनक्षत्रं, भगो देवता, फल्गुनीनक्षत्र,-मर्यमा देवता, हस्तो नक्षत्र९, सविता देवता, चित्रा नक्षत्रं, त्वष्टा देवता, निष्ट्यं नक्षत्र९, वायुर्देवता, विशाखं नक्षत्र,-मिन्द्राग्नी देवता,-ऽनूराधा नक्षत्रं, मित्रो देवता, ज्येष्ठा नक्षत्र९, वरुणो देवता, मूलं नक्षत्रं, निर्ऋतिर्देवता,-ऽऽषाढा नक्षत्र,-मापो देवता,-ऽऽषाढा नक्षत्र९, विश्वे देवा देवता,-ऽभिजिन्नक्षत्रं, ब्रह्मा देवता, श्रोणा नक्षत्र९, विष्णुर्देवता, श्रविष्ठा नक्षत्र९, वसवो देवता, शतभिषं नक्षत्र,-मिन्द्रो देवता, प्रोष्ठपदा नक्षत्र,-महिर्बुध्न्यो देवता, प्रोष्ठपदा नक्षत्र,-मज एकपाद्देवता, रेवती नक्षत्रं, पूषा देवता,-ऽश्वयुजा नक्षत्र,-मश्विनौ देवता, भरणीनक्षत्र९, यमो देवता, ब्राह्मणो नक्षत्र९, सोमो देवता,-ऽग्ने रुचः स्थ, प्रजापतेः सोमस्य धातु,-र्ऋचे त्वा, रुचे त्वा, भासे त्वा, ज्योतिषे त्वा, तेन छन्दसा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २० ॥ १०३

समीची नामासि, प्राची दिक्, तस्यास्तेऽग्निरधिपति,-रसितो रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्म, ओजस्या नामासि, दक्षिणा दिक्, तस्यास्त इन्द्रोऽधिपति,-स्तिरश्चीनराजी रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः, प्राची नामासि, प्रतीची दिक्, तस्यास्ते सोमोऽधिपतिः, स्वजो रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः, सुषदा नामास्यु,-दीची दिक्, तस्यास्ते वरुणोऽधिपतिः, सूदागू रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मो, ऽवस्था नामास्यं,-वाची दिक्, तस्यास्ते विष्णुरधिपतिः, कल्माषग्रीवो रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मो, ऽधिपत्नी नामास्यू,-र्ध्वा दिक्, तस्यास्ते बृहस्पतिरधिपति,-श्श्वित्रो रक्षिता, यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु, तौ नो मृडतां, तें यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः ॥ २१ ॥ १०४

---

[ २० ] तै. ४,४,१०। काठ. ३९ १३। वा. १३,३९;१२,५३;१३,१९.२४;१४,६,१२,१४;१५,५७-५८,६४। काण्व. १४,४१;१३,५४;१४,१९,२५;१५,५,१५-१६;१६,७९,८४। मा. श्रौ. ६,२,३।

[ २१ ] तै. ५,५.१०। [ यं द्विष्म०...जम्भे दध्मः। अथर्व. ३,२७,१-६ ]

स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः ।
प्रत्नꣳ सधस्थमनुपश्यमाना आ तन्तुमग्निर्दिव्यं ततान ॥ १०५
त्वं तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः ।
त्वयाग्ने पृष्ठꣳ वयमारुहेम यत्र देवैः सधमादं मदेम ॥ १०६
अतिसर्गं ददतो मानवायोर्ध्वं पन्थामनुपश्यमानाः ।
अजुषन्त मरुतो यज्ञमेतꣳ वृष्टिद्यावानममृतꣳ स्वर्विदम् ॥ १०७
आवर्तमानो भुवनस्य मध्ये प्रजाः कृण्वन् जनयन् विरूपाः ।
सꣳवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः परस्मात् ॥ १०८
प्रजां ददातु परिवत्सरो नो धाता दधातु सुमनस्यमानः ।
बह्वीः साकं बहुधा विश्वरूपा एकव्रता मामभिसꣳविशन्तु ॥ २२ ॥ १०९
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ११०
यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १११
य ओजोदा बलदा यस्य विश्व उपासते प्रशिषꣳ यस्य देवाः ।
यस्य छायामृतꣳ यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ११२
यस्येमे विश्वे गिरयो महित्वा समुद्रꣳ यस्य रसया सहाहुः ।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम ॥ ११३

---

[२२] काठ. ४०,१२ । तै. ब्रा. २,४,२,५-६ । मा. श्रौ. ६,२,६ । [ धाता दधातु सुमनस्यमानः । अथर्व. ७,१९,१;१३,१,३५ ]

[२३] मै. २,७,१५;३,१२,१६-१७ । तै. ४,१,८,३ । काठ. ४०,१, । वा. १२;१०२;१३,४;२३,१-३;२५,१०-१३; २७,२५-२६;२९,३४;३२,३,६-७ । काण्व. १३,१०१;१४,४;२५,१,३;२७,१४-१७;२९,३३-३५;३१,४६ । मा. श्रौ. ६,२,३ । [ हिरण्यगर्भः समवर्त०......विधेम । ऋ. १०,१२१,१; अथर्व. ४,२,७;११,५,१ तै. सं ४,१,८,३;२,८,२; ताण्ड्य. ब्रा. ९;९,१२, नि. १०,२३ । यः प्राणतो०... विधेम । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं. ४,१,८,४;७,५,१६,१ । य ओजोदा ( आत्मदा )०...विधेम । ऋ. १०,१२१,२; अथर्व. ४, २,१,१३,३,२४; तै. सं. ४,१,८,४;७,५,१७,१ । यस्येमे विश्वे गिरयो ( हिमवन्तो )०... । विधेम । ऋ. १०,१२१,४; अथर्व. ४,२,५; तै. सं. ४,१,८,४ ]

येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः।
यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम॥ ११४
यं इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी रेजमाने।
यस्मिन्नधि विततः सूरा एति कस्मै देवाय हविषा विधेम॥ ११५
आपो ह यन्महतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।
ततो देवानां निरवर्ततासुः कस्मै देवाय हविषा विधेम॥ ११६
आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः।
संवत्सरं ऋतुभिः संविदानो मयि पुष्टिं पुष्टिपतिर्दधातु॥ २३॥ ११७

[ १४७८ ]

॥ इति मध्यमकाण्डे त्रयोदशः प्रपाठकः॥ १३॥

॥ इति मध्यकाण्डं समाप्तम्॥



[ येन द्यौरुग्रा०... विधेम। ऋ. १०,१२१,५; अथर्व. ४,२,४; तै. सं. ४,१,८.५। य इमे द्यावा पृथिवी०। ऋ. १०,११०,९; अथर्व. ५,१२,९; तै. ब्रा. ३,६,३,४; नि. ८,,१४। ( यं क्रन्दसी अवसा ) तस्तभाने०... विधेम। ऋ. १०,१२१,६; अथर्व. ४,२,३; तै. सं. ४,१,८,५। आपो ह यन्मह० ( यत्बृह० )... विधेम। ऋ. १०,१२१,७; अथर्व. ४,२,६; तै. सं. २,२,१२,१;४,१,८,५; तै. आ. १,२३ ८। कस्मै देवाय०...विधेम। ऋ. १०,१२१;१-९; अथर्व. ४,२,१-८। आ नः प्रजां०...। ऋ. १०,८५,४३; अथर्व. १४,२,४० ]

# अथ तृतीयं काण्डम् ।

### अथ प्रथमः प्रपाठकः ।

### अग्निचितिब्राह्मणम् ।

जुहूमग्रे संमार्ष्टि, जुहूर्वै यज्ञमुखं, मुखतो वा एतद्यज्ञमालब्ध, जु३ह्वा वै देवा विराजमह्वयन्त, तज्जुह्वा जुहूत्वं,—मन्त्र९ वै विरा,—डन्नं जुहू,—र३र्कोऽग्नि,—र्यज्जुह्वा जुहोत्यन्नस्य चार्कस्य चावरुद्धया, अष्टौ कृत्वो जुह्वां गृह्णात्य,—ष्टाक्षरा गायत्री, गायत्री यज्ञमुखं९, यज्ञमुखमेवालब्ध, यत्सावित्राणि हूयन्ते प्रसूत्या, अथो यजुषामेवं नानावीर्यत्वाया,—ऽग्निर्वै यज्ञ यत्रागच्छत् त९ सुवितान्न्रपश्यद्यत्सावित्राणि हूयन्तेऽग्नेरेवानुक्शात्या, अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभुरदिति, सविता वा एतदग्रे ज्योतिः पृथिव्याः सममभरत्, तस्मादेवमाह, युक्तिमन्ति च जुहोति मनस्वती च, युक्तेन हिं मनसा यज्ञस्तायते, षड्गृमाणि भवन्ति, षड्वा ऋतव, ऋतुष्वेव प्रतितिष्ठत्यै,—ति वा एष यज्ञमुखाद्३यो‌ऽन्यामाग्नेय्या अग्रे देवतामुपैति, यत्सावित्राणि न स्युरियात्सावित्रात् प्रसवा,—दष्टौ वा एतानि यजू९ष्य,—ष्टाक्षरा गायत्री, गायत्री यज्ञमुखं, तेन यज्ञमुखान्नैति, यदु सावित्राणि तेन सावित्रात् प्रसवान्नैति, छन्दोभिर्जुहोति, छन्दोभिर्वा एतदग्नये बलि९ हारयति, बह्वो हास्य बलिहृतो भवन्त्यृ,—ग्वै यज्ञस्य नेदीयो, यजुर्यजमानस्य, यदि कामयेत, यज्ञ९ यज्ञयशसेनार्पयेय,—मित्यृगुत्तमानि कुर्याद्, यज्ञ९ वा एतद्यज्ञयशसेनार्पयति, यदि कामयेत, यजमान९ यज्ञयशसेनार्पयेयमिति, यजुरुत्तमानि कुर्याद्, यजमान९ वा एतद्यज्ञयशसेनार्पयत्या,—हुतीना९ वा अभिक्रान्त्या यजमान ऋध्नोति, यं कामयेत, ऋध्नुयादिति, तस्य सक्रत्सर्वाण्यनुद्रुत्य जुहुयाद्, ऋध्नोत्य,—थ यं कामयेत, पापीयान्त्स्यादिति, तस्य नाना जुहुयात्, पापीयान् भवत्यृ,—चा स्तोम९ समर्धयेत्,—त्याह, समृद्ध्या एवं, गायत्रेण रथन्तरमिती,—यं९ वै गायत्री,—यं९ रथन्तर,—मसौ बृह,—दनयोर्वा एषा लोकयोर्व्याप्त्या अन्ततः क्रियते, ऽष्टौ वा एतानि यजू९ष्य,—ष्टाक्षरा गायत्र्यु,—क्षरशो वा एतद्गायत्रीं प्रीणात्य,—थ यदाहुतिर्नवमी तेन त्रिवृतो यज्ञमुखान्नै,—त्यथ यदेकामाहुतिमष्टाभिर्यजुर्भिर्जुहोति तस्मादेकस्मै सते बह्वो बलि९ हरन्ति, बह्वो हास्य बलिहृतो भवन्ति,

[ १ ] मै. २,७,१ । तै. ५,१,१ । कपि. २९,७ । श, ब्रा. ६,३,१,१ ।

यजुरुत्तमानि भवन्ति, ब्रह्म वै यजु,—र्ब्रह्मणि वा एतदन्ततो यज्ञस्य यजमानः प्रतितिष्ठति ॥१॥ १
सावित्रैरभ्रिमादत्ते प्रसूत्यै, चतुर्भिरादत्ते, चत्वारि वै छन्दाꣳसि, छन्दोभिरेवादत्ते,
ऽथो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैवादत्त, इयꣳ वै गाय३त्र्य,—न्तरिक्षं त्रिष्टुब्, द्यौर्जगती,
दिशोऽनुष्टुप्, सवितृप्रसूतो वा एतदेभ्यो लोकेभ्यश्छन्दोभिर्दिग्भ्यश्चाग्निꣳ संभरति, यत्र वा
अ३दोऽग्निर्होत्राद्भीषापाक्रामत्स सर्वेषु भूतेष्ववसद्, याꣳ वनस्पतिष्ववसत्ताꣳ वेणा अवसत्, स
यत्र निरदहत् तानि कल्माषाण्यभवन्, येन समचरत्तत्सुषिरꣳ, यत्रावसत् तत् पर्व, यद्वैणव्य-
भ्रिर्भवति स्वेनैवैनꣳ योनिना संभरति, यो वै वनस्पतीनां फलग्रहितमः स एषाꣳ वीर्यवत्तमो,
वेणुर्वै वनस्पतीनां फलग्रहितमः, स एषाꣳ वीर्यवत्तमो, ऽन्नꣳ वै फल,—मन्नम३र्को, ऽ३र्को
ऽग्नि,—रर्केण वा एतदन्नमर्कमग्निꣳ संभरति, व्याममात्री का३र्यै,—तावद्वै पुरुषे वीर्यꣳ, वीर्य-
संमिता क्रियते, ऽथो एतावान् वै पुरुषे महिमा, महिम्नोऽवरुद्ध्या, अरत्निमात्री कार्या
यज्ञपुरुषासंमिता, प्रादेशमात्री का३र्या विष्णुना यज्ञेन संमितो,—भयतःक्ष्णुत्का३र्योभयस्यान्ना
द्यस्यावरुद्ध्या, अन्यतःक्ष्णुत्कार्या, अन्यतःक्ष्णुद्धि फाल,—स्तावन्तमर्कं करोत्य,—न्नꣳ वा
अ३र्को, ऽन्नाद्यस्यावरुद्ध्या, औदुम्बरी कार्यो,—ग्वा उदुम्बर, ऊर्जोऽवरुद्ध्या, अपरिमिता
कार्यापरिमितस्यावरुद्ध्यै, य एव कश्च वृक्षः फलग्राहिस्तस्य का३र्यान्नाद्यस्यावरुद्ध्यै ॥२॥ २
अश्वेन वै देवा अग्रे विजितिꣳ व्यजयन्त, यदश्वेन यन्ति, विजित्या, अग्निर्वै यत्र यत्रा-
गच्छत् तं प्रजापतिरन्वपश्यत्, प्राजापत्योऽश्वो, यदश्वेन यन्त्यग्नेरेवानुख्यात्यै, प्रजापतिर्वा
अग्निꣳ संभरिष्यन्त्स एभ्यो लोकेभ्योऽश्वं निर्माय दिग्भ्यश्चाग्निꣳ समभरद्, यदाह, दिवि ते
जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदिति, यथादेवतꣳ वा एतदेभ्यो लोकेभ्यो
ऽश्वं निर्माय दिग्भ्यश्चाग्निꣳ संभरति, युञ्जाथाꣳ रासभꣳ युव,—मित्याह, युक्त्या एव,
गर्दभेन संभरत्ये,—ष हि पशूनामनुपजीवनीयतमो, ऽग्निर्वा एतस्याग्रे सृष्टस्य योने रेतो निर-
दहत्, तस्मादेष समावदन्यैः पशुभी रेतो धत्ते, ऽथ कनिष्ठो, ऽश्वं पूर्वं नयन्ति गर्दभमपरं
पापवसीयसस्य व्यावृत्त्यै, तस्माच् श्रेयाꣳसं पूर्वꣳ यन्तं पापीयान् पश्चादन्वेति, यदि काम-
येत, पापवसीयसꣳ स्यादिति, गर्दभं पूर्वं नयेयुरपरमश्व,—मेतेन वै विपूजनः सौराकिः
पापवसीयसं चकार, तत् पापवसीयसमेवैतेन करोति, योगे योगे तवस्तर,—मित्यूतिमत्या
वाजवत्या यन्त्य,—न्नꣳ वै वाजो, गातुरूति,—रन्नाय च खलु वै गातवे चाग्निश्चीयते,

[ २ ] मै. २,७,१ । काठ. १९,१ । कपि. २९,८ । श. ब्रा. ६.३,१,३० ।
[ ३ ] मै. २,७,२ । तै. ५.१,२ । काठ. १९,२ । कपि. २९ ८ । श. ब्रा. ६,३,२;३,१-५ । वा. ११,१४-१६ । काण्व. १२, १४-१६ । [ योगे-योगे तवस्त० । ऋ. १,३०,७; सा. १६३,७४३, अथर्व. २०,२६,१ ; तै. सं. ४,१,२,१ ]

*

यदूतिमत्या वाजवत्या यन्त्यन्नस्य च गातोश्चावरुद्ध्यै, भवति वा एष ३यो ऽग्निं चिनुते, सर्वो वै भवत इरस्यति, वज्री वा एष प्राजापत्यो यदश्वो, यदाह, प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति, वज्रेण वा एतदशस्तीररातीयन्तमवक्रामति, रौद्रा वै पशवो, ऽग्नी रुद्रो, यद्रुद्रात् पशूनन्निर्याच्याग्निं चिन्वीत रुद्रोऽस्य पशूनभिमानुकः स्याद्, यदाह, रुद्रस्य गाणपत्यान्मयोभूरेहीति, रुद्राद्वा एतत् पशून्निर्याच्याग्निं चिनुते, ऽघातुकोऽस्य पशुपतिः पशून् भवत्यु,—३र्वन्तरिक्षं वीहीत्याहैषां लोकानां विधृत्यै, रक्षांसि वा एतौ जिघांसन्त्यग्निं संभरिष्यन्तौ, यदाह, स्वस्तिग-व्यूतिरभयानि कृण्वन्निति, स्वस्तिमेवाभ्यामकः, पुरीषं वा अग्नेरायतन,—मङ्गिरस एतमग्रे समभरद्, यदाहा,—ऽग्निं पुरीष्यमङ्गिरस्वदाभरेति, सायतनमेवैनं देवताभिः संभरति, येन पुरुषेण संगछेत तमभिमन्त्रयेता,—ऽग्निं पुरीष्यमङ्गिरस्वदछेमा इति, वाजमेव तेन तस्माद् वृङ्क्ते, प्रजापतये प्रोच्याग्निश्चेत३व्या, इत्याहु,—र्यतः सूर्यस्योदयनं ततो वल्मीकवपामुपघ्नन् ब्रूया,—दग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामा इती,—यं वै प्रजापति,—स्तस्या एष कर्णो यद्वल्मीक,—स्तस्मा एव प्रोच्याग्निं चिनुते, शृण्वन्ति हैनमग्निं चिक्यान,—मसा अग्निमचेष्टेति, तस्मात् पापीयाञ् श्रेयसः कर्ण आह, कर्णः कर्णायाह ॥ ३ ॥ ३

अन्वग्निरुषसामग्रमक्शदित्या,—हा,—ऽनुक्शात्या एवा,—ऽऽगत्य वाज्यध्वानं सर्वा मृधो विधूनुता इति, मृध एव व्यास्थतैछद्, वा एतं प्रजापतिः पूर्वयर्चा,—ऽविदद्धुत्तरयै,—षीदेवैनं पूर्वयर्चा,—ऽविन्दद्धुत्तरया, द्यौस्ते पृष्ठं पृथिवी सधस्थमिति, द्यौ३र्ह्येतस्य पृष्ठं, पृथिवी सधस्थ,—मात्मान्तरिक्षं, समुद्रो योनिरित्या,—त्मा ३ह्येतस्यान्तरिक्षं, समुद्रो योनि,—र्विक्शाय चक्षुषा त्वमभितिष्ठ पृतन्यत इति, पृतन्यन्तमेवाभितिष्ठति, यं द्विष्यात्तं ब्रूयात् ॥ अमुमभितिष्ठ॥ इति तमेवाभितिष्ठत्यु,—त्क्रामेत्या,—हो,—त्क्रान्त्या एव, यत्र वै यज्ञस्यानुरूपं क्रियते तद्यजमान ऋध्नोत्यु,—त्क्रामोदक्रमी,—दित्यनुरूपं वा एतत् क्रियते यज्ञस्यावरुद्ध्यै, कृष्णो वै भूत्वाग्निरश्वं प्राविशत्, स एतदगछद्यत्र मृगशफो,—यदश्वस्य पदे जुहोत्यग्निमत्येव जुहोत्यायतनवत्य,—न्धोऽध्वर्युः स्याद्यदनायतने जुहुया,—देतद्वै तद्यदाहु,—र्मृगशफमरैन्वराडिति, मनस्वतीभ्यां जुहोति, मनसा ह्याहुतीराप्यन्ते, त्रिष्टुब्भ्यां जुहोतीन्द्रियस्यावरुद्ध्या, अन्नवतीभ्यां

[ ४ ] मै. २,७,२। तै. ५,१,२-३। काठ. १९,३-४। कपि. ३०,१। श. ब्रा. ६,३,३,६। वा. ११,१७-२२। काण्व. १२ १७-२२। [ अन्वग्निरुषसा० । अथर्व. ७,८२,४;१८,१,२७-२८ ]

जुहोत्यन्नाद्यस्यावरुद्ध्यै, गायत्र्या परिलिखत्य,—स्या एवैनं तेन परिगृह्णाति, त्रिष्टुभा,—ऽन्त-
रिक्षात्तेना,—ऽनुष्टुभा परिलिखत्य,—नुष्टुब्वै सर्वाणि छन्दाꣳसि परिभू,—स्तस्मादनुष्टुभा परिलि-
खति, सावित्रैरभ्रिमादत्ते प्रसूत्यै, द्वाभ्यां खनति, द्विपाद्यजमानः प्रतिष्ठित्यै, शुग्वा अत्र
प्रजा ऋछति यत्राग्निः खायते चीयते वा, यदाह, शिवं प्रजाभ्योऽहिꣳसन्तमिति, प्रजाभ्य
एवैनꣳ शिवमकः ॥ ४ ॥ ४–६

अपां पृष्ठमसी,—त्याहा,—ऽपाꣳ ह्येतत् पृष्ठं, पृष्ठेनैवैनत् पृष्ठमुक्रयोनिरग्नेरिति, योनिर्वा
एषोऽग्नेर्यत् पुष्करपर्णं, नाभिर्वैधुकः, सयोनिरेव सनाभिः संभ्रियते, दिवो मात्रया वरिणा
प्रथस्वे,—त्यनयोरेवैनं मात्रया वरिणा प्रथयति, शर्म च स्थो वर्म च स्था, इति कृष्णाजिनं
च पुष्करपर्णं च सꣳस्तृणाती,—मे एवास्मा एतद् द्यावापृथिवी सꣳस्तृणाति, व्यचस्वती सꣳव-
सेथामिति, न वा एतन्मनुष्या यन्तुमर्हन्त्या,—भ्यामेवैनं परिगृह्णाति, कृष्णाजिनेन संभरत्ये,—
ष हि पशूनामनुपजीवनीयतमो, ऽथो आरण्यानेव पशूञ्शुचार्पयति, लोमतः संभरत्य,—तो
वै कृष्णाजिनस्य सदेवꣳ, यज्ञेनैव यज्ञꣳ संभरति, पुष्करपर्णेन संभरति, योनिर्वा एषोऽ-
ग्नेर्यत् पुष्करपर्णꣳ, स्वेनैवैनꣳ योनिना संभरति, गायत्रीभिर्ब्राह्मणस्य संभरति, गायत्रो हि
ब्राह्मणः,—स्त्रिष्टुभा राजन्यस्य, त्रैष्टुभो हि राजन्यो, जगतीभिर्वैश्यस्य, जागतो हि वैश्यो
यं कामयेत, ऋध्नुयादिति, तस्य गायत्रीभिश्च त्रिष्टुब्भिश्च संभरेद्, ऋध्नोति, पुरीष्योऽसि
विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्न इति, प्रजापतिर्वा अथर्वा, स एतमग्रेऽमन्थत्, सो
ऽजनयत्, स्व एवैनं मन्थति, स जनयति, तिसृभिः संभरति, त्रयो वा इमे लोका,
एभ्य एवैनं लोकेभ्यः संभरति, यजुस्तुरीयं, दिग्भ्य एवैनं तेन संभरति, पुरोवातꣳ वै
वातꣳ वर्षमनुप्रतितिष्ठति, वर्षमन्वोषधया, ओषधीरनु पशवः, पशूननु मनुष्या, एता वै
प्रतिष्ठा,—स्ता यजमानोऽवरुन्द्धे, ऽपो देवीरुपसृजा मधुमती,—रित्याहौषधीनां प्रतिष्ठित्यै,
तासामास्थानादुज्जिहतामोषधयः सुपिप्पला इति, तस्मादेतासामास्थानादुज्जिहतामोषधयः
सुपिप्पलाः, सं ते वायुर्मातरिश्वा दधात्विति, तस्मादेतस्या यत्कृष्यते यत् खायते तत् संधी-
यते, यद् घृतेन जुहुयाच् शुचैमामर्पये,—दथ यदप उपसृजति शमयत्येवं, यो देवानां चरसि

[ ५ ] मै. २,७,३ । तै. ६,१,४-५ । काठ. १९,४-५ । कपि. ३०,२-३ । श. ब्रा. ६,४,१,६ । वा. ११,२९-३२,३८-
४३ । काण्व. १२,२९-३२,३८-४३ ।

प्राणथेन कस्मै देव वषडस्तु तुभ्यमिति, षड्वा ऋतव, ऋतुषु वा एतद् वृष्टिं प्रतिष्ठापयति, तस्मात्सर्व ऋतवो वृष्टिमन्तः, सुजातो ज्योतिषेति, स्वर्ग्यमेवैनमक,—र्वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसा इति, छन्दाꣳसि वा अग्नेर्वास,—श्छन्दाꣳस्येव वस्ते, छन्दोभिरेवैनं परिददात्यागामुकमेनमस्मिँल्लोके वासो भवत्य,—नग्नोऽमुष्मिँल्लोके भवति य एवꣳ वेद, वरुणमेनिर्वा एष एतं,—र्युदुतिष्ठ स्वध्वरे,—त्यूर्ध्वामेव वरुणमेनिर्मुत्सृजति, द्वाभ्यामुत्सृजति, द्विपाद्यजमानः प्रतिष्ठित्यै, स जातो गर्भो असि रोदस्योरित्य,—नयोर्वा एष गर्भ, आभ्यामेषोऽधिजायत, आभ्यामेवैनमधिजनयत्य,—ग्ने चारुर्विभृता ओषधीष्विति, तस्मात् सर्वास्वोषधीष्वग्निः, प्र मातृभ्यो अधि कनिक्रदद्गा इत्यो,—षधयो वा एतस्य मातर,—स्ताभ्या एवैनमाधिप्रच्यावयतै,—छद्वा एतं प्रजापतिः पूर्वेणार्धर्चेना,—ऽनूत्तरेणातिष्ठतै,—पीदेवैनं पूर्वेणार्धर्चेना,—ऽनूत्तरेणास्थित ॥ ५ ॥ ७

स्थिरो भव वीड्वङ्ग इति गर्दभ आदधाति, वीर्यमस्मिन् दधाति, तस्मात् सर्वेषां पशूनां गर्दभो वीर्यवत्तमो, वीꣳर्यꣳ ह्यस्मिन् दधाती,—श्वरो वा एꣳषोऽन्तरिक्षसंद्भूत्वा प्रजा हिꣳसितो,—र्यदाहु, शिवो भव प्रजाभ्या इति, प्रजाभ्य एवैनꣳ शिवमक,—र्मा पार्थायुषः पुरेत्या,—युरेवास्मिन् दधाति समष्ट्यै, वृषाग्निꣳ वृषणं भरन्निति, वृषाꣳह्येष वृषणं भर,—न्नपां गर्भꣳ समुद्रियमित्य,—पाꣳ ह्येष गर्भः समुद्रियो, ऽग्न आयाहि वीतया इत्य,—ग्निना वै मुखेन देवा इमाँल्लोकानभ्युजय,—न्नग्निना वा एतन्मुखेन यजमान इमाँल्लोकानभिजयत्यृ,—तꣳ सत्यमृतꣳ सत्य,—मृते चैव सत्ये च प्रतितिष्ठती,—यꣳ वा ऋत,—मसौ सत्य,—मनयोरेव प्रतितिष्ठत्य,—हर्वा ऋतꣳ, रात्रिः सत्य,—महोरात्रयोरेव प्रतितिष्ठत्यो,—षधयः प्रतिगृभ्णीताग्निमेतमित्यो,—षधीरेवैनꣳ सम्यञ्चं दधाति, पुष्पवतीः सुपिप्पला इत्यो,—षधीरेव फलं ग्राहयति, तस्मादोषधयः शीर्षन् फलं गृह्णन्ति, वरुणमेनिर्वा एष एतर्ह्युपनद्धो, वि पाजसा पृथुना शोशुचाना इत्य,—नुरूपेणैव वरुणमेनिꣳ विष्युति, द्वाभ्याꣳ विष्यति, द्विपाद्यजमानः प्रतिष्ठित्या, आपो हि ष्ठा मयोभुवा इत्य,—प उपसृजत्या,—पो वा अशान्तस्य शमयित्रिका,—स्तस्मादुप उप-

[ उदु तिष्ठ० । ऋ. ८,२३,५; तै. सं. ४,१,४,१ । स जातो गर्भो० । १०,१,२; तै. सं. ४,१,४,२ ]

[ ६ ] मै. २,७,४-५। तै. ५,१,५-६। काठ. १९.५-६। कपि. ३० ४। श. ब्रा. ६,४,४,३। वा. ११,४४-५०,५३-५४; ३६,१४। काण्व. १२,४४-४७,४९-५१,५४—५५;३६,१४। [ अग्ना (ग्न) आयाहि वीतये । ऋ. ६,१६,१०; सा. १,६६०; तै. सं. २,५,७,३;८,१; तै. ब्रा. ३,५,२,१ । वि पाजसा पृथुना०। ऋ. ३,१५,१; तै. स. ४,१,५ १ । आपो हि ष्ठा० । ऋ. १०,९,१; सा. १८३७; अथर्व. १,५,१; तै. सं. ४,१,५,१;५,६,१,४;७,४,१९,४; तै. आ. ४,४२,४;१०,१,११; नि. ९,२७ ]

सृजति शान्त्यै, तिसृभिरुपसृजति, त्रिवृ३द्ध्यग्नि,—र्वरुणमेनिर्वा एष एतर्हि, मित्रः सꣳसृ-
ज्या पृथिवीमिति, मित्रेणैवं वरुणमेनिꣳ सꣳसृजति, रुद्राः सꣳसृज्या पृथिवीमित्ये,—ता
वा एतामग्रे देवताः प्रजापतये समसृजꣳ,—स्ताभिरेवैनाꣳ सꣳसृजति, पञ्चभिः सꣳसृजति,
पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्ध ॥ ६ ॥ ८
मखस्य शिरोऽसी,—त्याह, यज्ञो वै मख,—स्तस्य वा एतच् शिरो यदुखा, मुखतो वा
एतद्यज्ञमालब्ध, वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेति, छन्दोभिश्च वा एषा देवताभिश्च
क्रियते, छन्दोभिश्चैवैनां देवताभिश्च करोति, ध्रुवासि पृथि३व्यसीति, छन्दसामेवैषाशी,—र-
दित्या रास्ना,—स्यदितिष्टे बिलं गृभ्णात्विति, यजुषा करोत्य,—यजुषा हि मनुष्याः कुर्वन्ति
व्यावृत्त्यै, तां पुत्रेभ्यः प्रायछ,—ददितिः श्रपयानित्या,—दित्या वा इदꣳ सर्वं यन्मनु३ष्याꣳ,—
स्तेभ्य एवैनाꣳ संप्रादात्, त्र्युद्धिः का३र्या, त्रयो वा इमे लोका, एषाꣳ वा एषा लोकाना-
मुखा प्रतिमा क्रियते, ऽष्टस्तना कार्या, गायत्र्या रूपं, चतुस्तना कार्यादित्या दोहाय,
द्विस्तना का३र्या,—ऽन्तरिक्षꣳ वा उखे,—मौ लोकौ स्तनौ, प्रत्तौ ह वा इमौ लोकौ दुहे य एवꣳ
वेद, व्याममात्री का३र्यै,—तावद्वै पुरुषे वीर्यꣳ, वीर्यसंमिता क्रियते, ऽथो एतावान् वै
पुरुषे महिमा, महिम्नोऽवरुद्ध्या, अरत्निमात्री कार्या यज्ञपुरुषासंमिता, प्रादेशमात्री का३र्या
विष्णुना यज्ञेन संमिता,—ऽथो प्रजापतेरेवानतिवादाय सप्तभिर्धूपयति, सप्त वै शीर्षन् प्राणाः,
शिर एतद्यज्ञस्य यजुषा, शीर्षन् वा एतत् प्राणान् दधाति, सप्तभिर्धूपयति, सप्त वै छन्दाꣳ-
सि, छन्दोभिरेवैनां धूपयत्य,—थो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैवैनां धूपयति, वैष्णवꣳ वा
एतत् पात्रं, तत्स्वया देवतया व्यर्धयति यदन्याभिर्देवताभिर्धूपयति, यदाह, विष्णुस्त्वा
धूपयत्वङ्गिरस्वदिति, स्वयैवैनं देवतया समर्धयत्य,—श्वशकेन धूपयति, वृषा ह्यश्वो वृषाग्निः
समृद्ध्या, अथो प्राजापत्यो वा अश्वः, प्राजाप३त्योऽग्नि,—स्तस्मादश्वशकेन धूपयति सयो-
नित्वाय ॥ ७ ॥ ९
प्रजापतिर्वा अमन्यत, यो वा अस्या अग्रे विखनिष्यत्यार्तिꣳ स आरिष्यतीति, स एत-
द्यजुरपश्य,—ददितिष्ट्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववटेती,—यꣳ वा
अदितिर्देवी विश्वदेव्यवत्य,—नया वै स तदस्यामखनदहिꣳसायै, न हि स्वः स्वꣳ हिनस्ति,

[ ७ ] मै. २,७,६। तै. ५,१,६-७ । काठ. १९,६ । कपि. ३०,४ । श. ब्रा. ६,५,२,२, वा. ११,५७-६०;३७,८ । काण्व. १२,५९-६१;३७,८ ]

देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखा इ,—त्योषधयो वै देवानां पत्नीर्देवीर्विश्वदेव्यवतीरोषधीष्वेवैनां प्रतिष्ठापयति, धिषणा त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धातामुखा इति, वाग्वै धिषणा देवी विश्वदेव्यवती, वाचैवैनामभीन्द्धे, ग्नास्त्वा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखा इति, छन्दांꣳसि वै ग्नास्त्वा देवीर्विश्वदेव्यवती,—श्छन्दोभिरेवैनांꣳ श्रपयति, वरूत्री त्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्पचतामुखा इ,—त्यहोरात्रे वै वरूत्री देवी विश्वदेव्यवती, अहोरात्राभ्यामेवैनां पचति, जनुयस्त्वाछिन्नपत्रा देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखा इति, नक्षत्राणि वै जनयोऽछिन्नपत्रा देवीर्विश्वदेव्यवती,—र्नक्षत्रैरेवैनां पचत्ये,—तां वा एतामग्रे देवताः प्रजापतयेऽपचꣳ,—स्तस्मादेतानि पङ्क्तिमन्ति यजूꣳषि, तैरेवैनां पचति, द्वाभ्यां पचति, द्विपाद्यजमानः प्रतिष्ठित्यै, वरुणमेनिर्वा एष एतर्ह्यभीद्धो, मित्रस्य चर्षणीधृता इति, मित्रेणैव वरुणमेनिमुपैति, देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिरिति, सवितृप्रसूत एवैनामुद्वपत्यात्मनोऽहिꣳसाया, उत्तिष्ठ बृहती भवे,—त्याह धृत्या एवा,—ऽव्यथमाना पृथिव्यामाशा दिश आपृणेति, तस्मादग्निः सर्वा दिश आभाति ॥ मित्रैतां त उखां परिददाम्यभित्त्या, एषा मा भेदि ॥ इति मित्रायैवैनां परिददात्यभित्त्यै, यद्धि मित्रायापरित्ता भिद्येत पुनः कार्या स्याद्, वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसेति, छन्दोभिश्च वा एषा देवताभिश्च क्रियते, छन्दोभिश्चैवैनां देवताभिश्चाछृणत्ति, स्वेनायतनेनाजक्षीरेणाछृणत्त्या,—ग्नेयꣳ वा एतत् पयो यदजक्षीर,—माग्नेयमेतत् पात्रꣳ यदुखा, स्वेन वा एतत् पयसा स्वं पात्रमाछृणत्ति, परमꣳ वा एतत् पयो यदजक्षीरं, परममेतत् पात्रꣳ यदुखा, परमेण वा एतत् पयसा परमं पात्रमाछृणत्ति ॥ ८ ॥

१०-१२

षडेतान्याधीतयजूꣳषि जुहोति, षड्वा ऋतव, ऋतुभिर्वा एतत् पृथिव्या ग्री३र्यमुद्यछते, नाना जुहोति, नानावीर्या३हीमे प्राणाः, प्राणानाꣳ विधृत्यै, यं कामयेत, बधिरः स्यादिति, तस्य सकृत्सर्वाण्यनुद्रुत्य जुहुयात्, प्राणानस्य संभिनत्ति, बधिरो भवति, तस्माद्बधिरो वाचा वदति, न शृणोति, वाचꣳ ह्यस्येन्द्रियमनुपद्यते, प्राणा वा एतानीतराणि

[ ८ ] तै. ५,१,७। काठ. १९,७। कपि. ३०,५। श. ब्रा. ६,५,४। वा. ११,६१-६५। काण्व. १२,६२-६६।
[ मित्रस्य चर्षणी०। ऋ. ३,५९,६; तै. सं. ३,४,११,५;४,१,६,३; तै. आ. ४,३,२,। सुपाणिः (सुबाहुः) स्वङ्गुरिः०। ऋ. २,३२,७; अथर्व. ७,४६,२, तै. सं. ३,१,११,४ ]
[ ९ ] मै. २,७,७। तै. ५,१,९-१०। काठ. १९,९-१०। कपि. ३०,७-८। श. ब्रा. ६,६,१,१५। वा. ११,६८-८१ काण्व. १२,६९—८२।

छन्दांऽसि, वागनुष्टुब्, यदनुष्टुभा सप्तमं जुहोति वाचंऽ वा एतत् प्राणेषूपसंदधाति, तस्मा-दियंऽ वाक्सप्तमी प्राणानां, मा सु भित्था मा सु रिषा, इति प्रवृणक्त्य,—सुरमाया वा एषा-सीत्, तां देवा एतेन यजुषावृञ्जता,—ऽऽसुरीं मायां स्वधया कृतासीति, तन्मायामेवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते, द्वाभ्यां प्रवृणक्ति, द्विपाद्यजमानः प्रतिष्ठित्यै, प्रवृञ्ज्याद्भूतिकामस्य, भविष्यद्वा इदमुपजीवामो, भविष्यदेवोपैतीति, श्वःश्वः श्रेयान् भवति, जातमवदध्याद्गतश्री,—र्जातो वा एष यो गतश्री,—र्जातेनैवैनं जनयति, श्रेष्ठादाहरेद्यं कामयेता,—ऽन्नादः स्यादित्ये,—ष वा अग्नीनामन्नादो, ऽन्नकरणं श्रेष्ठ,—मन्नाद्यमस्मा अवरुन्द्धे, प्रदावादाहरेद्यं कामयेत, प्रसेनेनास्य राष्ट्रं जायुकंऽ स्यादिति, प्रसेनेनास्य राष्ट्रं जायुकं भवति, यतः कुतश्चाहृत्यावद-ध्याद्यं कामयेता,—ऽस्य पाप्मा भ्रातृव्यो द्वितीयो जायेतेत्ये,—तद्वै यजमानस्यायतनंऽ, स्वे वावास्मा एतदायतने पाप्मानं भ्रातृव्यं द्वितीयं जनयति, द्रुवन्नः सर्पिरासुतिरिति, क्रुमुकं घृतान्वक्तमादधात्ये,—षा वा अग्नेः प्रिया तनूर्यत्क्रुमुकं,—स्तेजो घृतं, प्रिययैवैनं तन्वा तेजसा च समर्धयति, परस्या अधि संवता, इत्यौदुम्बरीं, देवा यत्रोर्जंऽ व्यभजन्त तत उदुम्बर उदतिष्ठद्, यदौदुम्बरी,—र्जमेवावरुन्द्धे, परमस्याः परावता, इति वैकङ्कती,—मग्नेर्वै सृष्टस्य भा अपाक्रामत्, तद्विकङ्कतं प्राविशद्, यद्वैकङ्कती, भा एवावरुन्द्धे, यदग्ने यानि कानि चे,—ति शमीमयींऽ शान्त्या, अग्नये वै न किंचनापरशुवृक्णमस्वदन्त, तस्मै वा एतया सङ्गः प्रयोगिः सर्वमस्वदयद्, यदग्ने यानि कानि चैति, तदग्नय एवैतया सर्वंऽ स्वदयति, सर्वमस्मै स्वदितं भवति, रात्रींऽ रात्रीमप्रयावं भरन्ता इत्या,—शिषमेवाशास्ते, नाभा पृथिव्याः समि-धानो अग्निमिति, पृतनाजितमेवैनमक,—रग्निंऽ वै सृष्टंऽ रक्षांऽस्यजिघांऽसंऽ,—स्तानि वा एताभिरेवापाहत, याः सेना अभीत्वरीरिति, तदग्नेरेवैताभी रक्षांऽस्यपहन्त्ये,—ता एव समि-धा आदध्याद्यत्र रक्षोभ्यो बिभीयाद्, रक्षसामपहत्या, अथो ग्राहुका ह तांऽ समांऽ स्तेनान् भवन्ति, तैल्वकीमभिचरन्नादध्या,—देष वै वनस्पतीनांऽ वज्र,—स्ताजग्घ प्रमीयते, यं द्वि-ष्यात्तं तर्हि मनसा ध्याये,—न्मनो वा आशी,—र्यो वाच आहुतिमेवैनं भूतमग्नयेऽपिदधाति,

---

[ द्रुवन्नः सर्पिरासुतिः० । ऋ. २,७,६; तै.सं. ४,१,९,२। परस्या अधि० । ऋ. ८,७५,१५;तै.सं.२,६,११,३; ४,१,९,२ । यदग्ने यानि ( कानि ) कानि० । ऋ. ८,१०२,२०; अथर्व. १९,६४,३; तै. सं. ४,१,१०,१ । सर्वं तदस्तु ते । ऋ. ८,१०२,२१; अथर्व. १९,६४,३; तै. सं. ४,१,१०,१; नि. ३,२० ]

यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जना इति, तस्मादग्निचितोऽश्लीलं न कीर्तयितव्यं, नो
अग्निविदः, संशितं मे ब्रह्म संशितं वीर्यं बलमिति, ब्रह्मणा वा एतत् क्षत्रं सं
श्यति, क्षत्रेण ब्रह्मा,—ऽथो ब्रह्म चैव क्षत्रं च सयुजा अक,—रेतद्वा एषाभ्यनूक्ता ॥ ब्रह्म क्षत्रं
सयुजा न व्यथेते इति, ब्रह्माह क्षत्रं जिन्वति क्षत्रियस्य ।
क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत्सुमीचीं कृणुतो वीर्याणि ॥ ९ ॥ १३-१४

अग्निभ्यः ॥ इति कामायालभ्यन्ते, यत्कामो भवति सं हास्मै स कामो नमत्या,—प्री-
णान्ति, याज्ञियानेवैनान्मेध्यान् कुर्वन्ति, पर्यग्निकृतानुत्सृजन्त्ययातयामत्वायै,—केन संस्थाप-
यन्ति यज्ञस्य संतत्या अविच्छेदाय, पुष्करा भवन्ति सेन्द्रियत्वाय, त्रिष्टुभो याज्यानुवाक्या
भवन्तीन्द्रियस्यावरुद्ध्या, अथैषोऽग्नये वैश्वानराय द्वादशकपालः, संवत्सरो वा अग्नि-
र्वैश्वानर, एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः, प्रिययैवैनं तन्वा समर्धयत्य,—थो अयातया-
मत्वायैवा,—ऽयातयामा हि वैश्वानरः, श्वेतं वायवे नियुत्वत आलभेत तेजस्कामो, वायुर्वा
अग्नेस्तेज,—स्तस्माद्वायुमग्निरन्वेति, यद्वायवेऽग्नेः सतेजस्त्वाय, यद्वायव एकधा स्यादुन्मा-
दुको यजमानः स्याद्, यन्नियुत्वते द्वितीयत्वाया,—ऽथो धृत्या अनुन्मादाय, सर्वेषां वा एष
पशूनां रूपाणि प्रति, यद्वायव एकधा स्यादुन्मादुको यजमानः स्याद्, यदेष प्राजापत्यो
द्वादशकपालो द्वितीयत्वाया,—ऽथो धृत्या अनुन्मादाया,—ऽथैष आग्नावैष्णव एकादशकपालो,
ऽग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालब्धा,—ऽथैष आदित्यो घृते चरु,—रादित्या
वा इत उत्तमाः स्वर्गं लोकमायं,—स्तेभ्य एव प्रोच्य स्वर्गं लोकमेत्या,—दित्या वा अस्मिँल्लोक
ऋद्धा, आदित्या अमुष्मिन्, पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नुवं,—श्चरुणामुष्मि,—न्नस्मि-
न्नेव लोके पुरोडाशेन ऋध्नोति, चरुणामुष्मि,—न्नथैषोऽग्नये वैश्वानराय द्वादशकपालो,
देवायतनं वा अग्निर्वैश्वानरो, देवायतन एव प्रतिष्ठाप्याग्निं बिभर्त्य,—थो कामो वै वैश्वानरो,
यत्कामो भवति सं हास्मै स कामो नमति ॥ १० ॥ १५-१६

[ १४७५ ]

॥ इत्युपरिकाण्डे जुहूमग्रीयः प्रथमः प्रपाठकः ॥ १ ॥

---

[ संशितं मे० । अथर्व. ३,१९,१ ]
[ १० ] तै. ५,१,८,२ । काठ. १९,८ । कपि. ३०,६ ।

## अथ द्वितीयः प्रपाठकः।

दृशानो रुक्म उरुया विभाती,—ति रुक्मं प्रतिमुञ्चते, ऽमृतं वै हिरण्यं, मृत्योरेतद्रूपं यदग्नि,—र्यत् पाशोऽमृतेनैव मृत्युमन्तर्धत्ते, ऽथैते निर्बाधा, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा एतान्निर्बाधानपश्यं,—स्तैरसुरानेभ्यो लोकेभ्यो निरबाधन्त, तन्निर्बाधानां निर्बाधत्वं, तदेतैरेव निर्बाधैर्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यो निर्बाधता, एकविंशतिनिर्बाधो भवति प्रतिष्ठित्या, उपरिष्टान्निर्बाधं बिभर्त्य,—धस्तान्निर्बाधं सादयति भ्रातृव्यस्य विनुत्त्यै, नक्तोषासा समनसा विरूपा इत्य,—होरात्राभ्यामेवाग्निमाधत्ते, धापयेते शिशुमेकं समीची, इत्येतं ह्येतौ धापयेते शिशुमेकं समीची, द्यावाक्षामा रुक्मो अन्तर्विभातीत्ये,—षं ह्येतयो रुक्मो ऽन्तर्विभाति, देवा अग्निं धारयन्द्रविणोदा इति, प्राणा वै देवा द्रविणोदाः, प्राणैरेवाग्निमुद्यच्छते, विश्वा रूपाणि प्रतिमुञ्चते कविरिति, विश्वा हि रूपाण्यग्निः, प्रासावीद्भद्रं द्विपदे चतुष्पदा, इत्याह प्रसूत्या एव, वि नाकमख्यत्सविता वरेण्या इति, सवितृप्रसूत एवाग्निं बिभर्त्य,—नु प्रयाणमुषसो विराजतीति, तस्मादुषसो व्युष्टिमन्वग्निराधीयते, सुपर्णोऽसि गरुत्मां,—स्त्रिवृत्ते शिरो, गायत्रं चक्षुरित्य,—ग्नेर्वा एषा संभृति,—रग्निमेतत्संभरति, तस्मात् संभरति, तस्मात्सर्वैरङ्गैः पशुर्जायते, पशुर्ह्यग्नि,—र्दिवं गच्छ स्वः पते,—त्याह स्वर्गस्य लोकस्य समष्ट्या, अथैते क्रमा, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा एतान् क्रमानपश्यं,—स्तैरसुरानेभ्यो लोकेभ्यः प्राणुदन्त, तानन्पजय्यमजयं,—स्तदेतैरेव क्रमैर्यजमानो भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुदते, ऽनपजय्यं ह जयति, षडुद्यावं शिक्यं भवति, षड्वा ऋतव, ऋतुभिरेवाग्निं परिगृह्णात्यु,—परिनाभि बिभर्त्यु,—परिनाभि ह्यात्मनः संदेवं, संदेव एव देवता आत्मन् बिभर्ति, यदधोनाभि बिभृयाद्योनिं निर्दहे,—दथोऽवधैनं घातुकं स्यात्, प्रक्रामति, तस्माद् ग्राम्याः पशवः प्रेरते, ऽथ यत् पुनरभ्यावर्तते तस्मात् पुनः समावर्तन्त, ऊर्जा वा एष पशुभिरुत्क्रामन्त्सहोत्क्रामति, पुनरूर्जा निवर्तस्वेति, तदूर्जमेव पशून् पुनरवरुन्द्धे, पुनर्वतीर्भवन्ति समृद्ध्यै, चतसृभिरभ्यावर्तते, चतुष्पादो वै पशवः, पशूनेवा-

---

[१]तै.५,१,१०;९। काठ.१९,११। कपि. ३२,१। श. ब्रा. ६,६,४;७,२। वा. १२,१—४,९—१५,२५,४०–४१;१७,७०; १०,२४। काण्व. १३,१—६,१०—१६,२६,४१—४२;१८,७०;११,३४। [ दृशानो रुक्म. ऋ. १०,४५,८; तै. सं. १,३,१४,५;४,१,१०,४;२,२,४। नक्तोषासा समनसा० (वर्णमा०)। ऋ.१,९६,५; तै. सं. ४,१,१०,४;६, ५,२;७,१२,३। विश्वा रूपाणि०। ऋ. ५,८१,२; अथर्व. ७,७३,६; तै. सं. ४,१,१०,४; नि. १२,१३ ]

*

वृरुन्द्ध, इत्थं पर्यावर्तत, एवँ हि यज्ञः पर्यावर्तते, ऽथो अमुष्य वा एतदादित्यस्यावृ-
तमनुपर्यावर्तता, आ त्वाहार्षमन्तरभूरित्यन्त ३र्ह्येष एतर्ह्यु,—दुत्तमँ वरुण पाशमस्मदिति,
वरुणपाशमेवोन्मुञ्चत आत्मनोऽहिंसाया, अग्ने बृहन्नुषसामूर्ध्वो अस्थादिति, ज्योतिषैवैनँ
समर्धयति, हंसः शुचिषद्वसुरन्तरिक्षस,—दिति सादयति, सप्त एवैनँ होत्रासु प्रतिष्ठाप-
यत्य,—थो सप्त वा एतेन सामान्यग्नेर्ऋध्नोत्या,—ऽऽसप्तमात्पुरुषादन्नादो भवति, रेतो वा अग्नि,-
—रन्तरिक्षँ वै रेतोऽनुषिच्यते, यदधो निदध्याद्धृताः पशूनां गर्भाः प्रपादुकाः स्यु,—रथ
यदुपरि सादयत्यन्तरिक्षसदमेवैनमकर्गर्भाणां धृत्यै, सूयते वा एषोऽग्नीनाँ यच्चीयते, त-
स्मादेष आसन्दीसत्, सीद त्वं मातुरस्या उपस्था इती,—यँ वा अग्नेर्योनिः, स्व एवैनँ
योनौ संवेशयति, तिसृभिरुपतिष्ठते, त्रिवृ३द्ध्यग्निः ॥ १ ॥ 1

अथैतद्व्रात्सप्रं,—मेतेन वै वत्सप्रीर्भालन्द३नोऽग्नेः प्रियं धामाराध्नोत्, तदग्नेरेवैतेन प्रियं धाम राध्नोत्या,—गामुकमेनं प्रियं भवति, वत्सप्रियँ वै भालन्दनमृषयोऽध्यवद,—न्स्तेना इति, स एतत् सूक्तमपश्यत्, तेनाधिवादमपाजयत्, तेनापचितिमगच्छत्, तदधिवादमेवैतेनापजयत्य,—पचितिमेव गच्छति, द्वादशभिरुपतिष्ठते, द्वादश मासाः संवत्सरः, संवत्सरमेवाप्त्वावरुन्द्धे, त्रिष्टुभो भवन्तीन्द्रियस्यावरुद्ध्या, अन्येद्युः प्रक्रामयत्य,—न्येद्युरुपतिष्ठते, योगक्षेमँ वा एतत् प्रजानां दाधार, तस्माद्यायावरा अन्याः प्रजाः, क्षेम्या अन्या, अथ यत् प्रक्रम्योपतिष्ठते तस्माद्यायावरः क्षेम्यमभिप्रयाति, तस्माद्यायावरस्य क्षेम्योऽन्नं बभूव, यदहश्रेष्यमाणः स्यात्तदहरुभयँ समस्येत्, प्र च क्रामेदुप च तिष्ठेत, योगक्षेमँ वा एतदन्नाद्यँ यजमानो भ्रातृव्यस्य वृङ्क्ता, उदु त्वा विश्वे देवा इति, विश्वे ३ह्येदं देवाः स्मो यन्मनु३ष्या, अग्ने भरन्त चित्तिभिरिति, यस्मा एव चित्तायाग्निराधीयते तेनैनं चित्तेन समर्धयति, प्रेदग्ने ज्योतिष्मान् याहीति, ज्योतिषैवैनँ समर्धयित्वा प्रवापयत्य,—क्रन्ददग्निः स्तनयन्निव द्यौरित्य,—नुब्रूयाद्, यद्धचक्षु उत्क्ष्वेदेदीश्वरो वा एष उत्क्ष्वेदन् यजमानस्य प्रजा

---

[आ त्वाहार्षं०। ऋ. १०,१७३,१; अथर्व. ६,८७,१; तै. सं. ४,२,१,४; तै. आ. २,४,२,८। उदुत्तमं वरुण०। ऋ. १,२४,१५; अथर्व. ७,८३,३;१८,४,६९; सा. ५८९; तै. सं. १,५,११,३;४,२,१,३; नि. २,१३। अग्ने(अग्ने) बृहन्नुषसा०। ऋ. १०,१,१; तै.सं. ४,२,१,४। हंसः शुचिषद्०। ऋ. ४,४०,५; तै. सं. १,८,१५,२,४, २,१,५; तै. आ. १०,१०,२ ]

[ २ ] तै. ५,२,१—२। काठ. १९,१२। कपि. ३२,२। श. ब्रा. ६,७,४;६,६,४। वा. १२,६,९,२१,३०-३३,४०-४२; १७,५२। काण्व. १३,७,१०,२१,३१—३३,४१—४३;१८,५३। [ अक्रन्ददग्निः०...। ऋ. १०,४५,४;

पशून्निक्ष्विद,—स्तत्क्रुदितमेवास्याक,—र्थो शमयित्वैवाशिषमाशास्ते, समिधाग्निं दुवस्यते,—
ति गायत्र्या ब्राह्मणस्यादध्याद्, गायत्रो हि ब्राह्मण,—स्त्रिष्टुभा राजन्यस्य, त्रैष्टुभो हि राज३-
न्यो, द्वाभ्यां गायत्रीभ्याꣳ वैश्यस्य, ये हि द्वे गाय३त्र्यौ सा जगत्य,—थो ब्रह्मणे वा
एतद्विशमन्नं करोति, यदि भस्म प्रतिपूर्येताप्सु प्रवेशये,—दापो वा अग्नेर्योनिः, स्व एवैन-
द्योनौ दधाति, पुरीषं कुर्यात् पशुकामस्य, पशवो वै पुरीषं, पशुमान् भवती,—ष्टका वा
संꣳयुयात्, तेनास्य सर्वा आग्नेयीरिष्टका भवन्त्यू,—र्जो वा एषं पशुभिरुत्सीदन्त्सहोत्सीदति,
पुनरूर्जा निवर्तस्वेति, तदूर्जमेव पशून् पुनरवरुन्द्धे, बोधा मे अस्य वचसो यविष्ठे,—ति बोधद्व-
तीभ्यामुपतिष्ठते, तस्मात् प्रजाः सुप्त्वा पुनः प्रबुध्यन्ते, द्वाभ्यामुपतिष्ठते, द्विपाद्यजमानः
प्रतिष्ठित्यै ॥ २ ॥ २

अपेत वीत वि च सर्पताता, इत्याह, यमदेव३त्यो वा अयं लोको, य३मोऽमुष्य
लोकस्याधिपत्यमानश, यद्यमाद्देवयजनमनिर्याच्याग्निं चिन्वीतायमदेवत्योऽस्याग्निः स्यादस्वर्ग्यो,
यदाहा,—ऽऽदादिदꣳ यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मा इति, यमाद्वा एतेना-
स्या देवयजनं निरयाचिष्ट, स्मृते देवयजनेऽग्निं चिनुते, यमदेवत्योऽस्याग्निर्भवति स्वर्ग,
उद्घ्नन्ति, यदेवास्या अयज्ञियममेध्यं तदुद्घ्नन्ति, व्याममात्रमुद्घ्नन्त्ये,—तावद्वै पुरुषे
वीर्यꣳ, वीर्यसम्मिते चीयते, ऽथो एतावान् वै पुरुषे महिमा महिम्नोऽवरुद्ध्या, अवो-
क्षति, यदेवास्या उद्घ्नन्तः क्रूरमक्रꣳस्तदक्रूरमक,—स्तच्च् शमयत्य,—थो आपो वा अग्नेर्यो-
निः, स्व एव योनौ चीयते, ऽग्नेर्भस्मास्यग्नेः पुरीषमसी,—ति सिकता निवपत्य,—ग्नेर्वै
एतद्वैश्वानरस्य भस्म यत्सिकता, स्व एव भस्मꣳश्चीयते, योनिर्वै सिकता, रेता ऊषा,
यत्सिकता न्युप्योषान्निवपति योनौ वा एतद्रेतो दधाति, तस्माद्योनौ रेतो हितं, तस्माद्योने
रेतः प्रजायते, प्रजापतिः प्रजा असृजत, ता वा ऊषेभ्य एव योनेरसृजत, प्रजननꣳ वा
ऊषाः, प्रजनने वा एतदग्निश्चीयत, इमे वै सहास्तां, ते वियती अब्रूता,—मस्तु नौ प्रियं
धाम सहे,—त्यापो वा अस्या यज्ञिया मेध्या,—स्ता अमू,—रूषा अमुष्या यज्ञिया मेध्या,—स्तं

---

तै. सं. १,३,१४,२;४,२,१;२,२,२ । समिधाग्निं० । ऋ. ८,४४,१; तै. सं.४,२,३,१; तै. ब्रा. १,२,१,९ ।
बोधा मे अस्य० ... । ऋ.१, १४७,२; तै. सं. ४,२,३,४; नि. ३,२० ]
[ ३ ] तै. सं. ५,२,३ । काठ. २०,१ । कपि. ३२,३ । वा. १२,४५,६०—६१;५,३ । काण्व. १३,४६,६१—६२;५,३ ।
[ अपेत वीत वि० ... । ऋ. १०,१४,९; अथर्व. १८,१,५५; तै. सं. ४,२,४,१; तै. ब्रा. १,२,१,१६; तै.आ.१,
२७,५; ६,६,१ ]

इमे, यदापश्चोषाश्च भवन्ति यदेवैनयोर्यज्ञियं मेध्यं तदवरुन्द्धे, ऽथो अनयोरेवैनं प्रिये धाम-न्निधत्ते, संज्ञान९ं वा ऊषा, उभये वा एतान् पशवोऽभिसंजानते, ये ग्राम्याः पशवो ये चारण्या, उभये हैनं पशवोऽभिसंजानते, चतस्रः प्राचीः सादयति, चत्वारि वै छन्दा९ं-सि, छन्दोभिर्वै देवाः स्वर्गं लोकमाय९ं,—स्तै दिशा आक्रमन्त, ता अव्लीयन्त, ता एताभिरदृ९ंहन्, यदेता उपधीयन्ते दिशां धृत्यै, पशवो वा इष्टका, गार्हपत्य९ं वै पशवो ऽनूपतिष्ठन्ते, द्वे समीची पुरस्तादुपदधाति, द्वे समीची पश्चा,—दुभयत एवास्मै समीचः पशूनुपदधाति पशूनां परिगृहीत्या,- अष्टोपदधात्य,—ष्टाक्षरा गायत्री, गायत्रो ऽग्नि,—र्यावानेवाग्निस्तं चिनुता, एकविंशतिः का३र्या प्रतिष्ठित्यै, प्रतिष्ठा ह्येकविंशों, ऽथो एकविंशतिविधो हि गार्हपत्य,—स्त्रिचितिकः का३र्य,—स्त्रयो वा इमे लोका, इमानेव लोकानाप्नोति, पञ्चचितिकः का३र्यः, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, चतुर्भिः संनिवपति, चत्वारि वै छन्दा९ंसि, छन्दोभिरेव संनिवपत्य,—थो ब्रह्म वै छन्दा९ंसि, ब्रह्मणैव संनिवपति, क्षत्र९ं वा एषोऽग्नीना९ं यच्चीयते, क्षत्र९ं य उख्यो, ब्रह्म यजु,-—र्यद्यजुषा संनिवपति ब्रह्मणा वा एतत् क्षत्र९ं संनयति, तस्माद्ब्रह्मणा क्षत्र९ं सं चैति वि च, द्वौ वा एतौ व्याघ्रौ संपद्येते, ता ईश्वरा अशान्तौ यजमान९ं हि९ंसितो,—र्यदाह, भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति, शमयत्येवै, शान्त एव न्युप्यते यजमानस्या-हि९ंसाया, ऋतुभिर्वै पृथिव्या वी३र्यमुद्धृतं, तदृतुभिः पुनर्विमुच्यते, यदाह, प्रजा-पतिर्विश्वकर्मा विमुञ्चत्विति, प्रजापतिरेवैना९ं विश्वकर्मा विमुञ्चति ॥ ३ ॥ ३

अथैता नैर्ऋती,—स्तिस्रस्तुषपक्वा भवन्त्ये,—तद्वै नैर्ऋतमन्नस्य यत्तुषाः, कृष्णा भवन्त्ये,-—तद्धि निर्ऋत्या रूप,—मेतां दिश९ं हरन्त्ये,—षा हि निर्ऋत्या दिक्, ताः स्वकृता इरिणे परा-चीर्निदधात्ये,—तद्वै निर्ऋतिगृहीतं पृथिव्या, निर्ऋतिगृहीत एव निर्ऋतिं निरवदयते, प्राण-मेवास्य प्रथमया मुञ्चत्य,—पानं द्वितीयया, व्यानं तृतीयया,—ऽथो त्र्यक्षरो वै पुरुषो, यावानेव पुरुषस्तं निर्ऋत्याः पाप्मनो मुञ्चति, निर्ऋतिर्वै कर्मण उपद्रष्ट्रिका, ता९ं वा एत-स्वेन भागधेयेन शमयित्वाथ सवितृप्रसूतोऽग्निं चिनुते, यं ते देवी निर्ऋतिराबबन्धेति,

---

[ ४ ] तै. ५,२,४,—५ । काठ. २०,२—३ । कपि. ३१,४–५ । वा. १२,६५—६६ । काण्व. १३,६६—६७ ।
[ यं ते देवी० । ... अथर्व. ६,६३,१ ]

जालमिष्टकास्त्वँभ्यस्यति, निर्ऋतिपाशमेवोन्मुञ्चत आत्मनोऽहिँसायै ॥ ४

यदस्य पारे रजसो महश्चित्रं ज्योतिरजायत । तन्नः परिषदति द्विषोऽग्ने वैश्वानरः ॥ ५

स्वाहेत्यपः परिषिञ्चन् पर्येति निर्ऋत्या अनन्ववायाय, भूत्यै नमा, इत्युक्त्वावर्तते, भूतिरेव भूत्वावर्तत आत्मनोऽहिँसाया, अनपेक्षमाणा आयन्ति निर्ऋत्या अनन्ववायाय, परोगोष्ठं मार्जयन्ते, परोगोष्ठमेव निर्ऋतिं निरवदयन्त, इन्द्रियेण वा एष वीर्येण व्यृध्यते यो नैर्ऋतीरुपधत्ते, निवेशनः संगमनो वसूना,—मित्यैन्द्र्या गार्हपत्यमुपतिष्ठत, इन्द्रियेणै-वात्मानँ समर्धयति, त्रिष्टुभोपतिष्ठता, ओजो वै वीर्यं त्रिष्टुबो,—जस्येव वीर्ये प्रतिति-ष्ठति, गार्हपत्योऽग्रे चीयते प्रतिष्ठित्यै, गार्हपत्ये वै देवाः प्रतिष्ठाय प्राञ्चः स्वर्गं लोकम-भिजयन्त आयन्, यावान् पुरुष ऊर्ध्वबाहुस्तावता वेणुना विमिमीत, एतावद्वै पुरुषे वीर्यँ, वीर्येणैव विमिमीतेऽ, थो एतावान् वै पुरुषे महिमा, महिम्नोऽवरुद्ध्यै, यो वै वनस्पतीनां फलग्रहितमः स एषाँ वीर्यवत्तमो, वेणुर्वै वनस्पतीनां फलग्रहितमः, स एषाँ वीर्यवत्तमो, ऽन्नँ वै फल,—मन्नमर्को, ऽर्कोऽग्नि,—रर्केण वा एतदन्नमर्कमग्निँ विमिमीते, सप्त पुरुषान् प्रमिमीते, सप्तभ्य एव पुरुषेभ्यो लोकँ विन्दत्या,—ऽऽसप्तमात्पुरुषादन्नादो भवत्य,—रत्निमात्रं पक्षयोरत्युपदधाति, पक्षं बृहद्धि वयः, षड्भिः कृषति, षड्वा ऋतव, ऋतु-भिरेव कृषती,—त्थमभ्यावर्तन्त, कृषत्ये,—षा हि देवानामावृ,—दथो अमुष्य वा एतदादित्य-स्यावृतमनुपर्यावर्तन्ते, तिस्रस्तिस्रः सीताः संपादयति, त्रिवृद्धयग्नि,—द्वादश सीता भवन्ति, द्वादश मासाः सँवत्सरः, सँवत्सरस्य वा एष विधामनुविधीयत, इयँ वा अबिभे,—द-ग्निर्मातिधक्ष्यतीति, यत्कृषत्यस्या वा एतद् द्विगुणं क्रियतेऽनतिदाहाया,—ऽथो पृथिव्या वा एतद् द्विगुणेनाग्नेर्वीर्यमुद्यच्छन्त, एतां दिशमुत्सृजन्त्ये,—षा हि देवानां दि,—गथो स्वर्गमे-वैनां लोकमनूत्सृजन्ति ॥ ४ ॥ ६

कृष्टे वपति, कृष्टे ह्योषधयः क्षेपिष्ठं प्रतितिष्ठन्त्य,—न्नस्यान्नस्य वपत्योषधीनामाप्त्यै,—ब्रह्म वा ऋग्, ब्रह्मणैवास्मा अन्नाद्यमवरुन्द्धे, चतुर्दशभिर्वपति, द्वादश मासाः सँवत्सरो, ऽथ य एते चतुर्दशे अहोरात्रे एवैते, तत् सँवत्सरेण च वावास्मा एतदहोरात्राभ्यां चान्नाद्य-मवरुन्द्धे, ऽन्नँ वै फल,—मन्नमर्को, ऽर्कोऽग्नि,—रर्केण वा एतदन्नमर्कमग्निँ वपति,

---

[ निवेशनः संगमनो० ( रायो बुध्नः० ) । ऋ. १०,१३९,३; अथर्व. १०,८,४२; तै. सं. ४,२,५,४ ]

यस्यान्नस्य निर्वपति यत्तस्याश्नीयाद्यान्यवरुद्धानि तैर्व्यृध्येत,—ध्मे तस्यापि कुर्या,—दथो तन्मनसा
ध्यायेत्, तेनैव तदवरुन्द्धे, यदि सर्वं न संविन्देद्यवान्मधूद्युतान् वपेद्, यद्यवा ग्राम्यं
तेनान्नाद्यमवरुन्द्धे, यन्मध्वारण्यं तेन, तेनैव तदुभयमवरुन्द्धे, ऽथैते संभारा, दिग्भ्यो
वा एतत् पृथिव्या ऊर्जं संभरत्यू,—र्ज्यग्निश्चीयते, यां जनतां कामयेत, क्षोधुका स्यादि-
ती,—षमूर्जमहमित आदीति, तस्या अर्धादाददीत, क्षोधुका ह सा जनता भवति, कामं
कामदुघे धुक्ष्वेत्य,—भिमृशति, तेनास्य सर्वा इष्टकाः कामदुघा भवन्त्यु,—त्तरवेदिं निर्वपत्यु-
त्तरवेदिमित्ये,—वास्याग्निश्चीयते, ऽथो यज्ञपुरुषोऽनन्तर्हित्या, अग्निर्वा एष न्युप्यते यदुत्त-
रवेदिं,—यदुत्तरवेदिं न्युप्याग्निं चिनोत्यग्नौ वा एतदग्निश्चीयते, ऽग्ने तव श्रवो वया, इति
सिकता निर्वपत्ये,—ता वै वैश्वानरीरिष्टका अपरिमिता, एतदग्नेरपरिमितं चीयते, ऽग्नेर्वा
एतद्वैश्वानरस्य सूक्त,—मेषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः, प्रियायां वा एतत्तन्वामग्निश्चीयते,
संतनूरको निधीयते, लोमशं वा एतच्छन्दः पशव्यमूनातिरिक्तं प्रजननायाशीत्यक्षर,—मेतेन
वै देवाः स्वर्गं लोकमायं,—स्तदस्याशीत्यक्षरत्वं, समुद्रं वा एतच्छन्दो, योनिः
समुद्रः, सोमो रेतोधा, यत्सौमीभ्यां व्यूहति योनौ वा एतद्रेतो दधाति, तस्माद्योनौ
रेतो हित,—माप्यानवती भवत,—स्तस्माद्योनौ रेता आप्यायते, छन्दोभिर्वा अग्निरुत्तरवेदिम-
भिप्रह्रियते, या अग्नौ प्रह्रियमाणेऽन्वाहुस्तां तर्हि मनसा ध्याये,—च्छन्दोभिरेवैनमुत्तरवेदिमभि-
प्रहरति, मनसान्वाहा,—ऽनिरुक्तमिव ह्येतदव्यावृत्तं, व्यावृतं पाप्मना भ्रातृव्येण गच्छत्य,-
—श्वं पुरस्तान्नयन्ति रक्षसामपहत्या, आक्रमयन्ति, य एवैनेन भ्रातृव्यः सदृङ् तं वज्रेणाव-
बाधन्ते, प्राञ्चं प्रक्रमयन्ति, य एवैनं भ्रातृव्योऽति तं वज्रेण प्रणुदते, प्रत्यञ्चमभ्याव-
र्तयन्ति, य एवैनं भ्रातृव्योऽनु तं वज्रेण प्रतिनुदते, तद् भ्रातृव्यस्य वा एष विनोदः,
कृष्णो वै भूत्वाग्निरश्वं प्राविशत्, स एतदगच्छद्यत्र मृगशफो, यदश्वमाक्रमयन्ति, यद्देवा-
त्राग्नेर्न्युक्तं तस्यावरुद्ध्यै ॥ ५ ॥ ७

तपो योनिरसीति, पुष्करपर्णमुपदधाति, योनिर्वा एष योऽग्नेर्यत्पुष्करपर्णं, नाभिर्विधुकः,
सयोनिरेव सनाभिश्चीयत, इयं वा अबिभे,—दग्निर्मातिधक्ष्यतीति, यत्पुष्करपर्णमुपदधात्यस्या

---

[ ५ ] मै. २,७,१३ । तै. ५,२,५—६ । काठ. १९,३—४ । कपि. ३२,५—७ । वा. १२,७२,१०६ । काण्व. १३,७३,
१०५ । [ अग्ने तव श्रवो०... । ऋ. १०,१४०,१; सा.१८१६; तै. सं. ४,२,७,२ ]

अनतिदाहाया,—ऽधस्तान्नाभि सादयत्योषधीनां प्रतिष्ठित्या, अथो इयऽ३प्स्वग्नयस्तानेवा-वरुन्द्धे, प्रजापतिः प्रजा असृजत, याः पुरा ब्रह्मणोऽसृजत ताभिर्नाराध्नो,—दथ या ब्रह्ममुखा असृजत ताभिरराध्नोद्, यद् ब्रह्म, जज्ञानं प्रथमं पुरस्ता,—दिति रुक्ममुपदधात्य, र्द्ध्या, ऋध्नोत्येवा,—ऽथो मिथुनत्वाय, न पृथिव्यामग्निश्चेत३व्यो नान्तरिक्षे न दिवी,—त्याहु,—रमृत९ वै हिरण्य,—ममृते वा एतदग्निश्चीयते, श्मशानचितो वा एते चीयन्ते, चित्यां चित्या९ हिरण्यशकलमुपास्यति, तेन वा एषोऽश्मशानचित्, तेन स्वर्गो, ऽथैष पुरुषो हिरण्मयो, यजमानलोकमेवैष दाधारै,—ष ह ३त्वेव यजमानोऽग्निनामुष्मिंल्लोके सम्यङ् यस्यैष उपधीयते, ऽथो मध्ये ज्योतिरेव चीयते, द्रप्सश्चस्कन्द पृथिवीमनु द्यामि,—त्यभि-मृशति, हौत्रास्त्वेवैनं प्रतिष्ठापयत्य,—थैतानि सर्पनामानि, मृत्युर्वै सर्पनामानि, यदुपद-ध्यात् प्रमायुकः स्यात्, तस्मादनुदिशति, सोमे वा एका त्विषि,—र्व्याघ्र एका, सर्पे एका, ता एवावरुन्द्धे, वामदेवस्य राक्षोघ्नेन व्याघारयत्ये,—तेन वै वामदेवः कुसिताय्याः शिर आदीपयद्, रक्षसामपहत्यै, पञ्चभिर्व्याघारयति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्त-मालब्धा,—ऽथो यावानेव यज्ञस्तस्माद्रक्षा९स्यपहन्त्य,—थैते स्रुचौ, कार्ष्मर्यमय्यौ दक्षिणतः सादयति रक्षसामपहत्यै, दक्षिणतो वै देवाना९ यज्ञ९ रक्षा९स्यजिघा९स९,—स्तानि कार्ष्मर्ये-णैवापाघ्नत, यत् कार्ष्मर्यमय्यौ दक्षिणतः सादयति, रक्षसामपहत्यै, घृतस्य पूर्णा भवत्ये,—षा वा अग्नेः प्रिया तनूर्यद् घृतं, प्रिययैवैनं तन्वा समर्धयति, गायत्र्या सादयति, तेजो वै गायत्री ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमवरुन्द्धा, औदुम्बरीमुत्तरतः सादयति दध्नः पूर्णा,—मूर्ग्वा उदुम्बरो, ऽन्नं दध्यू३,—र्ज्येवास्यान्नं दधाति, त्रिष्टुभा सादयत्यो,—जो वै वीर्यं त्रिष्टु,—बोज एव वी३र्यमवरुन्द्धे, पूर्णे सादयत्य,—क्षिते यजमानलोकमुपतिष्ठेते, मूर्ध-न्वतीभ्या९ सादयति, मूर्धन्योऽसानीति, विराज्यग्निश्चेत३व्या, इत्याहुः, स्रुचौ वै विराजौ, यत्स्रुचा उपदधाति विराजि वा एतदग्निश्चीयते, ऽथैषा स्वयमातृणे,—यं९ वै प्रथमा स्वयमातृणा,—ऽन्तरिक्षं द्वितीया,—ऽसौ तृतीये,—मानेव लोकाननुपूधत्ते, ऽश्वमुपघ्राप्य सादयति, प्रजापतिचित एवास्य भवत्य,—थो प्राणानामुत्सृष्ट्यै, भूरसी,—ति प्राचीमुदूहेद्य-

---

[ ६ ] मै. २,७,१५ । तै. ५,२,६—८ । काठ. २०,५-६ । कपि. ३२,७-८ । वा. १३,३,५,१८,२० । काण्व. १४,३, ५,१८,२० । [ ब्रह्म जज्ञानं० । अथर्व. ४,१,१;५,६,१ । द्रप्सश्चस्कन्द पृथिवी० ... । ऋ.१०,१७,११; अथर्व. १८,४,२८; तै. सं. ३,१,८,३;४,२,८,२;९,५; तै. आ. ६,६,१ ]

द्येनं भ्रातृव्योऽतीव स्याद्, भूमिरसी,—ति प्रतीचीꣳ यद्यन्व,—दितिरसि भूमिरसी,—ति तिर-
श्चीꣳ यदि सद्द,—इन्द्रियꣳ वा अदिति,—रनया वा एतद्यजमानो भ्रातृव्यं प्रभूतं प्रणुदते, ऽनया
प्रतिनुदते, ऽनया विनुदते, तद्भ्रातृव्यस्य वा एष विनोदः, काण्डात्काण्डात्प्ररोहन्ती,—
ति दूर्वेष्टकामुपदधात्यो,—षधीनां प्रतिष्ठित्यै, काण्डात्काण्डा३द्ध्येषा प्रतितिष्ठतीति, पशवो
वा इष्टका, न वै पशवा आयवसे रमन्ते, यद्दूर्वेष्टकामुपदधात्यायतनमिव वा एतत् क्रियते,
पशूनाꣳ यत्या, अथैषा वामभृद् द्वियजु,—र्यजमानलोकमन्येन दाधार, भ्रातृव्यलोक-
मन्येन वृङ्क्त, एतया वै देवा असुराणाꣳ वामं पशूनवृञ्जत, तद्वामभृतो वामभृत्त्वं,
छन्दाꣳसि वै देवानाꣳ वामं पशव,—श्छन्दाꣳस्येवैतया वामं पशून् यजमानो भ्रातृव्यस्य वृङ्क्ते,
ऽथैते रेतःसिचा, इयꣳ विरा,—डसौ स्वरा,—डसा एव रेतः सिञ्चती,—यं प्रजनयत्य,—भि-
रत्यन्नादो भवति यस्यैते उपधीयेते, यदि पुत्री चिन्वीत प्रथमायां चित्यामन्यामुपदध्या,—
दुत्तमायामन्याꣳ, रेतसः सिक्तस्य परिगृहीत्यै, यद्यपुत्रः प्रथमायां चित्यामुभे उपधेये,
सम्यञ्चौ हि भूत्वा रेतः सिञ्चतः ॥ ६ ॥ ८

अथैता विश्वज्योतिष, एषु वा एतँल्लोकेषु ज्योतिष्मन्तमग्निं निधत्ते, ऽथो प्राणानाꣳ
विधृत्या, अथैषा त्र्यालिखिते,—मे वै लोकास्त्र्यालिखिते,—मानेव लोकानुपाधत्त, उभये
वा एतामुपादधत देवाश्च वा असुराश्चो,—परिष्टाल्लक्ष्माणं देवा उपादधता,—ऽधस्ताल्लक्ष्माणमसुरा,
—स्ततो देवा अभवन्, परासुरा, उपरिष्टाल्लक्ष्माणमुपदधीत भ्रातृव्यवान्यो वास्य प्रियः स्यात्,
तस्य भवत्यात्मना, परास्य भ्रातृव्यो भवत्ये,—षा वा असपत्नेष्टका,—ऽसपत्नो भवति य
एतामुपधत्ते, ऽथो देवलक्ष्मꣳ वा एषा, देवलक्ष्ममेवोपधत्ते, या सोपाया अधि मृदुच्
छिष्यते तस्या एतां कुर्यात्, तेनास्य सर्वा आग्नेयीरिष्टका भवन्त्य,—थैष कूर्मः, श्मशानचितो
वा एते चीयन्ते, जीवः कूर्म उपधेय,—स्तेन वा एषोऽश्मशानचित्, तेनोत्पाती, पशू-
नाꣳ वा एष मेधो, एतꣳ वै मेधं पश्यन्त एनं पशवोऽमुष्मिँल्लोक उपतिष्ठन्ते, प्रत्यञ्चꣳ
सादयति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते, द्यावापृथिवीयया सादयति, द्यावापृथिवी
हि पशवोऽनूपतिष्ठन्ते, पशुभिरेवैनꣳ सम्यञ्चं दधाति, विष्णोर्नाभ्यामग्निश्चेत३व्या,
इत्याहुः, प्रादेशमात्रमुलूखलं कार्यं,—मेतावान् वै विष्णु,—र्विष्णोर्वा एतन्नाभ्यामग्निश्चीयत,

---

[७] तै. ५,२,८-९। काठ. २०,६-७। कपि. ३१,८-९।

ऊ३र्ध्वग्निश्चेत३व्या, इत्याहु,—रूर्ग्वा उदुम्बरो, यदौदुम्बरमुलूखलं भवत्यूर्जि वा एतदग्निश्ची-
यते, वैष्णव्या सादयति, वैष्णव९ ३ह्युलूखल९, स्वयैव देवतया,—ऽथैपोपा, पृथिव्यां
वा एतदोजो वी३र्य९ संश्रियता, ओजो वा एतद्वीर्यं मध्य३तोऽग्नेर्धीयते, ऽथो मध्ये ज्योति-
रेवं चीयते, यद्रिक्तामवेक्षेत क्षोधुको यजमानः स्या,—दथ यत् पूर्णामवेक्षते तथा ह्याक्षोधुको
भवति, सिकताभिः पूरयित३व्या,—ऽग्नेर्वा एतद्वैश्वानरस्य भस्म यत् सिकताः, स्वेनैवैनं
भस्मना प्रीणाति, दध्नः पूरयितव्यो,—ग्वै दध्यू,—र्जमेवावरुन्द्धे, घृतस्य पूरयित३व्यं,—
यां वा अग्नेः प्रिया तनूर्यद् घृतं, प्रिययैवैनं त३न्वा समर्धयति, मधोः पूरयितव्या,—ऽऽ
हास्य प्रजायां मधव्यो जायते व्यृध्यै,—न्द्रियाणि वै पशुशीर्षाण्ययज्ञियान्युमेध्यानि, यच्छि-
द्रेषु हिरण्यशकलान्यप्यस्यतीन्द्रियेणैवैनानि वीर्येण समर्धयति, मेध्यान्येनानि यज्ञियानि करो-
त्य,—र्ध९ वै पुरुषः सहस्रस्य, यच्छन्त्यर्धमितरे पशव,—स्तस्मादेतन्मध्यत उपदधात्य,—भिता
इतराणि, पशोः सवीर्यत्वाया,—ऽथो सायतनत्वाय, यं कामयेत, पशुमान्त्स्यादिति,
तस्य समीचीनानि पशुशीर्षाण्युपदध्यात्, समीच एवास्मै पशूनुपदधाति, पशुमान् भवत्य,—
थ यं कामयेता,—ऽपशुः स्यादिति, तस्य विषूचीनानि पशुशीर्षाण्युपदध्याद्, विषूच एवा-
स्मै पशूनुपदधात्य,—पशुर्भवत्ये,—ता वै साहस्रीरिष्टकाः पश्विष्टका,—स्ताः सोमदक्षः कौश्रेयो
विदांचकार, ताः श्यापर्णायोपदधौ, स सहस्रं पशून् प्राप, प्र सहस्रं पशूनाप्नोति यस्यै-
ता उपधीयन्ते, यविष्ठो वै नामै३षोऽग्नि,—स्तस्माचिन्वतान्तरा न व्येतवै, यद्वीयात्
प्राणानस्य युवेतो,—त्सर्गैरुपतिष्ठत, आरण्यानेव पशूञ्छुचमनूत्सृजति ॥ ७ ॥ ९

पुरुषशीर्षमुपदधात्ये,—ष हि पशूनां९ वीर्यवत्तमो, वीर्यमस्मिन् दधात्यै,—कमुपदधात्ये,—
कधास्मिन् वीर्यं दधाति, सौर्या पुरुषशीर्षमभिजुहोति स्वर्गस्य लोकस्य समष्ट्यै, सौरी वा
एषा सती मैत्रावरुण्य,—हर्वै मित्रो, रात्रिर्वरुणो, ऽहोरात्रयोरेव प्रतितिष्ठत्य,—र्धर्चाभ्यां
जुहोती,—यं९ वा अर्धर्च३चो, ऽसा अर्धर्च३चो, ऽनयोरेव प्रतितिष्ठत्य,—थ यदेकय
र्चा द्विर्जुहोति तस्मादेकः सन् पुरुषो द्विपाद्, यद्वा एतत्किंचाकर्योनि९ वा एतदृक्,—यदेता
अपस्याः सादयति तस्मिन्नेव योनौ रेतो दधाती,—यं९ वा अबिभे,—दग्निमीतिधक्ष्यतीति,
सैता इष्टका अपश्य,—दथो आहुः, प्रजापतिरपश्यदिति, ता उपाधत्ते, यदेता उपधीयन्ते-

---

[ ८ ] मै. २,८,१ । तै. ५,२,९—१० । क.ठ. २०,८—९। कपि. ३२,१०—११ । वा. १२,५४-५५;१५,५९—६० ।
काण्व. १३,५५-५६;१६,८०-८१ ।

❀

ऽस्या अनतिदाहाय, यदिदन्न,—मिति होवाचेयꣳ, य एता उपदधाता इत्य,—न्नादो भवति यस्यैता उपधीयन्ते, तस्माद्रेतसः सिक्तादेष पशुः संभवति, यदेताश्छन्दस्याः, पशवो वै छन्दाꣳसि, यद्दक्षिणत उपदध्यादभीपतः प्रजा वरुणो गृह्णीया,—दथ यदुत्तरत उपदधा-त्यपवाहत एवा,—ऽथैताः प्राणभृत,—स्तस्मिन् पशौ संभूते प्राणं चक्षुः श्रोत्रꣳ वाचं तानि दधा-त्य,—क्ष्णया सादयति, पशुꣳ वा एतदाक्रमयति, तस्मात् पशवोऽक्ष्णयाङ्गानि प्रहरन्तो यन्ति, दशभिर्दशभिर्वा अता इष्टकाभिर्ऋषय आर्ध्नुवꣳ,—स्ता ऋद्धीर्ऋध्नोति यस्यैता उपधीयन्ते, ऽथैताः सꣳयतो, रेतो वा एतत् सिच्यते यदग्निश्चीयते, यदेता उपधीयन्ते रेतसः सिक्तस्य संꣳयत्यै, लोकं पृण छिद्रं पृणेत्ये,—षा वा अछिद्रेष्टका, अछिद्रा वा एतया चितयश्चीयन्त, इन्द्राग्नी त्वा बृहस्पतिरित्यो,—जो वै वीर्यमिन्द्राग्नी, ओजसा वा एतद्वीर्येणाग्निश्चीयते, ता अस्य सूददोहसा, इति परुषि परुष्येव रसं दधाति, सोमꣳ श्रीणन्ति पृश्नय इत्य,—न्नꣳ वै पृश्न्य,—न्नमेवावरुन्द्धे, जन्मन्देवानाꣳ विशा, इत्याह, प्रजात्या एव, त्रिष्वा रोचने दिव इति, सवनानि वै त्रीणि रोचनानि, सवनचितमेवैनमकरनुष्टुब् वा एषा, वाग्वा अनुष्टुप्, प्राणो वै वाग्, यदेषा सर्वा इष्टका अनुसंचरति तस्मात् प्राणः सर्वाण्य-ङ्गान्यनुसंचरत्या,—ग्नेयी वा एषा वर्णेन स्वेन वा एतच्छन्दसाग्निश्चीयते, नाध्वर्युः सर्वामार्ति-मार्छति य एवꣳ वेद ॥ ८ ॥ १०

उत्सन्नयज्ञो वा एष यदग्निश्चित्यः, को ह तद्वेद यदेतस्य क्रियते य,—न्नाश्विनौ वै देवानां भिषजा अक्लृप्तस्य कल्पयितारौ, यदेता आश्विनीरुपधीयन्तेऽक्लृप्तस्य क्लृप्त्यै, पञ्चोपदधाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्धा,—ऽथो यावानेव यज्ञस्तमचीक्लप,—दथैता आश्विनी-र्ऋतव्या अनूपधीयन्ते, रेतसे वा एतत्सिक्ताय ऋतूननुपाधात्, तस्मात् सर्वेष्वृतुषु रेतो हितं, तस्मात् सर्वानृतून् रेतोऽनुप्रजायते, ऽथैता ऋतव्या वायव्या अनूपधीयन्ते, तस्मात् सर्वा-नृतून् वायुरन्वावरीवर्त्य,—थैता वायव्या अपस्या अनूपधीयन्ते, तस्मात् पशवो नानाव्रताः सन्तोऽप एवाभि संव्रता,—श्चतस्रः पुरस्तादुपदधाति, चतुर्विधꣳ हि शिरः, प्राणश्चक्षुः श्रोत्रꣳ वाङ्, मूर्धन्वतीभिः सादयति, मूर्धन्योऽसानीति, पञ्च पश्चाभिता उपदधाति, पशोः सवीर्यत्वाया,—ऽथो सायतनत्वाय, तस्मात् पशुः पश्चाद्वरीयाच् श्रोणिमुत्तर,—स्तस्माद्ु प्राङ् संꣳहाना, इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतꣳ युवमित्य,—न्तरिक्षꣳ वा एषा चिति,—

---

[ ता अस्य सूददो० ... । ऋ. ८,६९,३; तै. सं. ४,२,४,४; तै. आ. ३,११,६,२ ]

रन्तरिक्षमिमाः प्रजा, इन्द्राग्नी वै देवानामोजोभृता, ओजो वीर्यमिन्द्राग्नी, ओजो वा एतद्वीर्यं मध्यतः प्रजानां धीयते, ऽथैता दिश्या, देवा वै स्वर्गं लोकमायꣳ,—स्ते दिशा आक्रमन्त, ता अव्लीयन्त, ता एताभिरदꣳहन्, यदेता उपधीयन्ते दिशां धृत्यै, पञ्चो-पदधाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्ध, दशैताः पुरस्तात् सादयति, दशाक्षरा विराड्, विराट् खलु वै चक्षुर्ज्योतिश्छन्दसां, चक्षुर्वा एतज्ज्योतिः पुरस्तात् पशो-र्दधाति, तस्मादिदं पुरस्ताच्चक्षु,—रथो अन्नꣳ वै विरा,—डन्नꣳ वा एतन्मुखतो दधाति, मा छन्दः, प्रमा छन्दः, प्रतिमा छन्दा इती,—यꣳ वै मा, ऽन्तरिक्षं प्रमा, ऽसौ प्रतिमे,—मानेव लोकानुपधत्ते, ऽथो देवछन्दसानि वा एतानि, देवछन्दसान्येवोपधत्ते, द्वादश द्वादशाभिता उपदधाति, तत् षट्त्रिꣳशत्, षट्त्रिꣳशदक्षरा बृहती, बृहती खलु वै छन्दसाꣳ स्वाराज्यमानशे, गच्छति स्वाराज्यꣳ यस्यैता उपधीयन्ते, पशवो वै बृहती, पशवो मध्यमा चिति,—स्तस्मादेतस्यां चित्यामेता उपधीयन्त, आदित्यधामानो वा उत्तरे प्राणा, अङ्गिरोधामानोऽधरे, मूर्धासि राड्डिति, य उत्तरे प्राणास्तानेताभिर्दाधार, यन्त्री राड्डिति, येऽधरे प्राणास्तानेताभिर्दाधार, तदेषाꣳ वावैताः प्राणानाꣳ विधृत्यै, समावद्भाजः सादयति, समावद्भाजो ह्यमी प्राणाः, प्राणानाꣳ विधृत्यै, यं द्विष्यात् तस्याक्ष्णया सादयेत्, प्राणानस्य मोहयति, प्रमायुको भवति, मूर्धन्वतीभिः सादयति,

मूर्धन्योऽसानीति ॥ ९ ॥ ११

त्रिवृद्वतीं पुरस्तात् सादयति, त्रिवृद्धि यज्ञमुखं, मुखतो वा एतद्यज्ञमुखं दधाति, सप्तदशवतीं दक्षिणतो, ऽन्नꣳ वै सप्तदशो, ऽन्नꣳ वा एतद्दक्षिणतो दधाति, तस्माद्दक्षि-णेन हस्तेनान्नमद्यते, तस्माद्दक्षिणोऽर्धं आत्मनो वीर्यवत्तर,—स्तस्माद्दक्षिणमर्धꣳ वयाꣳस्यनु-पर्यावर्तन्ते, पञ्चदशवतीमुत्तरत, ओजो वै पञ्चदश, ओजो वा एतदुत्तरतो दधात्ये,—कविꣳशवतीं पश्चात् प्रतिष्ठित्यै, त्रिवृद्वतीं पुरस्तात् सादयति, त्रिवृद्धि यज्ञमुखं, मुखतो वा एतद्यज्ञमुखं दधाति, पञ्चदशवतीं दक्षिणतः सादयति, सप्तदशवतीमुत्तरतः, पक्षयोः सवीर्यत्वाया,—ऽथो सायतनत्वाय, तस्मादुभाभ्याꣳ हस्ताभ्यामन्नमद्यते, ऽथो वज्रो वै पञ्च-

[ ९ ] मै. २,८,१—३ । तै. ५,३,१—२ । काठ. २०,१०—११ । कपि. ३१,१२—१३ । वा. १४,११,१८,२१—२२ । काण्व. १५,१४,१८,२३—२४ ।

[ १० ] मै. २,८,६–७। तै. ५,३,३—५। काठ. २०,१२—१३। कपि. ३१,१४—१७। वा. १४,२३—२४;१५,१-३।

दशो, वज्रेण वा एतद्यजमानो भ्रातृव्यमुभयतो निर्भजत्ये, कवि॑ꣳशवतीं पश्चात् प्रतिष्ठित्यै, प्रतिष्ठा ह्येकवि॒ꣳशो, ऽर्कस्य वा एष विधामनुविधीयते, ऽन्नमर्को, ऽन्नादो भवति यस्यैता उपधीयन्ते, ऽग्नेर्भागोऽसि, दीक्षाया आधिपत्यं, ब्रह्म स्पृतं त्रिवृत्स्तोमा इति, स्पृतो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदस्पृणोद्, यद्युदेवैताभिर्यजमानः कामयते तत्तत्स्पृणोत्ये, कयास्तुवत, प्रजा अधीयन्तेति, सृष्ट्यो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तदसृजत, यद्युदेवैताभिर्यजमानः कामयते तत्तत्सृजते, अग्ने जातान् प्रणुदा नः सपत्नानिति, पुरस्तात् सादयति, य एव जाताः सपत्नास्तानेतया प्रणुदते, प्रत्यजातान् जातवेदो नुदस्वे, ति पश्चाद्, य एव जाताः सपत्नास्तानेतया प्रतिनुदते, तद्भ्रातृव्यस्य वा एष विनोदं, श्चतुश्चत्वारि॑ꣳशीं स्तोमो, वर्चो द्रविणमिति दक्षिणतः सादयति, षोडशीं स्तोमा, ओजो द्रविण, मित्युत्तरत, श्चतुश्चत्वारि॑ꣳशदक्षरा वै त्रिष्टुप्, वज्रस्त्रिष्टुब्, वज्रः षोडशी, सव्यापग्रहणो वै वज्रो दक्षिणाप्रहरणः, सव्यापग्रहण॑ꣳ वा एतद्वज्रं दक्षिणाप्रहरण॑ꣳ यजमानो भ्रातृव्याय प्रहरति, पुरीषवतीं मध्यतः सादयति, पुरीषमिव ३हीदं मध्यतः पशोः, पुरीषं मध्यमात्मनः, सात्मानमेवाग्निं चिनुते, ऽथैता विराजो, वाग्वै विराट्, पशवो वा एता इष्टकाः, पशुषु वा एतदुत्तमा॑ꣳ वाचं दधाति, तस्मात् पशुमानुत्तमा॑ꣳ वाच॑ꣳ वदति ॥ १० ॥ १२

[ १५०६ ]

॥ इत्युपरिकाण्डे द्वाशनो नाम द्वितीयः प्रपाठकः ॥ २ ॥

अथ तृतीयः प्रपाठकः ।

अथैताः स्तोमभागा, एता॑ꣳ वै बृहस्पतिरसुरेभ्योऽधि यज्ञस्य प्रतिष्ठामाहरद्, यदेता उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै, यज्ञो वै देवानामपद्यत, तं देवाः स्तोमभागाभिः प्रत्युदस्तभ्नुवन्, यदेता उपधीयन्ते यज्ञस्योत्तब्ध्यै, प्रजापतिर्वा एतत् पृथिव्या अग्नेस्तेजः संमभरत्, तदग्नेरेवैतत्तेजः संभ्रियते, ऽथैता नाकसदो, नाक॑ꣳ ह वा अस्मा अग्निं चिक्यानाय भवति,

---

काण्व. १५,२५—२८;१६,१—३। [ अग्ने जातान्प्रणुदा० । अथर्व ७,३४,१। सहसा जातान्प्रणुदा० । अथर्व. ७,३५,१ ]

[ १ ] तै. ४,४,८—१०। तै. ५,३,५—७। काठ. २१,१—३। कपि. ३१,१७।

न वै तत्र किं चन जग्मुषे कं, तस्मान्नाकसदो, नाकसत्सु पञ्चचूडा अध्युपदधाति स्वर्गस्य लोकस्य समष्ट्या, एषं ह इत्वेव यजमानः पत्नीभिरग्निनामुष्मिल्लोके सम्यङ् यस्यैता उपधीयन्ते, ऽथो मध्ये ज्योतिरेव चीयत, एता वा अमुष्मिल्लोके यजमानस्य पत्नी,—स्तस्मादग्निचिता स्त्रीं नोपेत्ये,—ष्यी हि सा, पश्चात् प्राचीमुत्तमामुपदधाति, पश्चा३द्ध्येतं प्राची पत्न्यन्वास्ते, ऽथैताः क्लृप्तयः, प्रजापतिः प्रजा असृजत, ता एनꣳ सृष्टा अत्यमन्यन्त, स प्रजापतिरेता इष्टका अपश्यत्, ता उपाधत्त, ततो वा अकल्पत, यदेता उपधीयन्ते प्रजानां क्लृप्त्या, अथैता वृष्टिसनुयो, वृष्टिर्वै देवेभ्योऽन्नाद्यमपाक्रामत्, तत इदꣳ सर्वमशुष्यत्, ते देवाः प्रजापतिमेवोपाधावन्, स प्रजापतिरेता इष्टका अपश्यत्, ता उपाधत्त, तेभ्यो वृष्टिमन्नाद्यमवारुन्द्ध, यदेता उपधीयन्ते वृष्ट्या अन्नाद्यस्यावरुद्ध्या, आवपुनꣳ वा उत्तमां चितिं,—रन्या अन्या इष्टका उपदधात्य,—न्यानन्यानेवास्मै पशून् प्रजनयति, प्राणो वै स्वयमातृणायु,—र्वायन्या, समीची उपदधात्या,—युश्चैव प्राणं च सयुजा अक,—रथो समीचीं नाभ्याꣳ ह्यायुषा च प्राणेन च भुङ्क्ते, प्राणो वै स्वयमातृणा, तामुत्तमामुपदधात्यु,—त्तमꣳ ह्यायु,—र्यदन्यामुत्तरामुपदध्यात् प्राणमस्यापिदध्यात, प्रमायुकः स्यात्, तस्मात्तामुत्तमामुपदधात्यु,—त्तमꣳ ह्यायुः ॥ १ ॥ १

अथैषा छन्दश्चितिं,—श्छन्दाꣳसि वै देवानाꣳ वामं पशव,—श्छन्दाꣳस्येवैतया वामं पशून् यजमानोऽवरुन्द्ध, एताꣳ वै यज्ञसेनश्चैत्र उपदधे, स आनर्ध, ऋध्नोति य एतामुपधत्ते, गायत्रीभिः पुरस्तात् सादयति, तेजो वै गायत्री ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमवरुन्द्धे, तिस्र उपदधाति, त्रिवृ३द्ध्यग्नि,—र्मूर्धन्वतीभिः सादयति, मूर्धन्योऽसानीति, त्रिष्टुब्भिर्दक्षिणत, ओजो वै वीर्यं त्रिष्टु,—बोज एव वी३र्यमवरुन्द्धे, जगतीभिः पश्चा,—ज्जागताः पशवः, पशूनेवावरुन्द्धे, ऽनुष्टुब्भिरुत्तरतो, ऽनुष्टुब्वै सर्वाणि छन्दाꣳसि, सर्वाण्येवास्य छन्दाꣳस्युपहितानि भवन्त्य,—थ पङ्क्ती,—रथ बृहती,—रथोष्णिहो, ऽथ ककुभो, ऽथ विराज, एवमस्य यथापूर्वं छन्दाꣳस्युपहितानि भवन्ति, द्विपदा उत्तमाः सादयति, द्विपाद्यजमानः प्रतिष्ठित्यै, छन्दाꣳसि वै देवानाꣳ वामं पशवो, यजमानायतनꣳ वा आहवनीयो, भ्रातृव्यायतनं धिष्ण्या, यत्पश्चोपदध्याद् भ्रातृव्यायतने वामं पशून् दध्या,—दथ यत्पुर उपदधाति यजमानायतने वा एतद्वामं पशून् दधात्य,—ष्टोपदधात्य,—ष्टाक्षरा गायत्री, गाय३त्रोऽग्नि,—र्यावानेवाग्निस्तं चिनुते, ऽष्टौ गायत्रीभिः पुरस्ताद्बहिःपवमाने-

[ १ ] मै. २,८,११ । तै. ५,३,८ । काठ. २१,४ । कपि. ३२,१९ ।

स्योपदध्याद्यद्येनं भ्रातृव्योऽतीव स्या,—देकादश त्रिष्टुभिः पुरस्तान्माध्यंदिनस्य पवमानस्य, द्वादश जगतीभिः पुरस्तादार्भवस्य पवमानस्यै,—ता एव पश्चात् पवमानानामुपदध्याद्यद्येनं भ्रातृव्योऽतीव स्यात्, प्राणो वै पवमानो, ऽग्नेस्तेजः पवमान,—स्तेजसा वा एतद्यजमानो भ्रातृव्यं प्रभूतं प्रणुदते, तेजसा प्रतिनुदते, तेजसा विनुदते, तद् भ्रातृव्यस्य वा एष विनोदो, जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत गायत्रीचितं, नाभिदघ्नं द्वितीयं चिन्वानश्चिन्वीत त्रिष्टुप् चितं, चुबुकदघ्नं तृतीयं चिन्वानश्चिन्वीत जगच्चितꣳ, यज्ज्यायाꣳसं चित्वा कनीयाꣳसं चिन्वीत कनीयाꣳसꣳ यज्ञक्रतुमुपेयात्, कनीयसीं प्रजां, कनीयसः पशून्, कनीयोऽन्नाद्यं, पापीयान्त्स्या,—दथ यत्कनीयाꣳसं चित्वा ज्यायाꣳसं चिनुते ज्यायाꣳसमेवं यज्ञक्रतुमुपैति, भूयसीं प्रजां, भूयसः पशून् भूयोऽन्नाद्यꣳ, वसीयान् भवत्ये,—षा वा अग्नेरुत्तरवती नाम चिति,—रुत्तरमुत्तरꣳ श्वः श्वः श्रेयान् भवति य एवꣳ वेद ॥ २ ॥ २

पञ्चचितिकः कार्यः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशव,—स्तस्मात् पञ्चचितिकः, पञ्च चितयः, पञ्च पुरीषाणि, तद्विराजꣳ संपद्यते, तद्यद्विराजꣳ संपद्यते तदग्नेः स्तोत्रं कार्यꣳ, यत् पञ्चचितिकः स्यादियाद्विराजो, यद्दशचितिक इयाद्यज्ञाच्च पशुभ्यश्च, यत्पञ्चचितिकस्तेन यज्ञाच्च पशुभ्यश्च नैत्य,—थ यत्पञ्च चितयः पञ्च पुरीषाणि तेन विराजो नैति, तदुभाभ्याꣳ वावास्मा एतद्वर्णाभ्यां पशूनवरुन्द्धे, यदेषा पाङ्क्तꣳ यच्च वैराजं, द्व्यक्षरं लोम, द्व्यक्षरा त्वग्, द्व्यक्षरं माꣳसं, द्व्यक्षरमस्थि, द्व्यक्षरो मज्जा, तद्दश, दशाक्षरा विराड्, वैराजाः पशवः, पशूनेवावरुन्द्धे, पञ्चचितिकः कार्यं, इमे वै लोकास्तिस्रश्चितयो, यजमानो द्वे, यजमानꣳ वा एतदेषु लोकेषु प्रतिष्ठापयामुकः, का प्रथमा चितिः, किं पुरीषमि,—त्याहु,—रियꣳ वाव प्रथमा चिति,—रोषधयः पुरीषं, का द्वितीया चितिः, किं पुरीषमि,—त्याहु,—रन्तरिक्षꣳ वाव द्वितीया चिति,—र्वयाꣳसि पुरीषं, का तृतीया चितिः, किं पुरीष,—मित्याहु,—रसौ वाव तृतीया चिति,—र्नक्षत्राणि पुरीषं, का चतुर्थी चितिः, किं पुरीष,—मित्याहु,—र्यज्ञो वाव चतुर्थी चिति,—र्दक्षिणा पुरीषं, का पञ्चमी चितिः, किं पुरीष,—मित्याहु,—र्यजमानो वाव पञ्चमी चितिः, प्रजा पुरीष,—मेतावद्वा अस्ति, यावद्देवास्ति तत् स्पृणोति, तदवरुन्द्धे, ऽथैता कर्तव्याः, सꣳवत्सरो वा अग्निर्वैश्वानर, एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानर,—स्तस्य वा अहोरात्राण्येवेष्टका उपधीयन्ते, द्वे द्वे उपदधाति प्रति-

[ ३ ] मै. २,८,१२ । तै. ५,४,२ । काठ. २१,५ । कपि. ३२,२० ।

छित्या, अवकामुपास्य सादयति शान्त्या अनिर्दाहाय, चतस्रो मध्यमायां चित्यामुपदधात्य—प्रतिष्ठितमिव ३ह्यन्तरिक्षं, प्रतिष्ठित्यै, द्वादशोपदधाति, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरो वा अग्निर्वैश्वानरं, एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः, प्रियायाꣳ वा एतत्तन्वामग्निश्चीयते, संतनूरर्को निधीयते, ऽग्नेरन्तःश्लेषोऽसीत्य,—तस्य ह ३त्वेवाग्निः सꣳश्लिष्टो यस्यैता उपधीयन्ते, सꣳश्लिष्टो वा एतस्याग्निर्यस्यैता उपधीयन्ते, कल्पेतां द्यावापृथिवी इति, कल्पते ह वा अस्मा अग्निं चिक्यानाय, प्र समानानां ज्यैष्ठ्यमाप्नोति य एवꣳ वेद, सꣳ वा एतदग्निमिन्द्धे यच्चिनोति, तं दीपयत्येवं ऋतव्याभिः ॥ ३ ॥ ३

तमो वै स्वर्गं लोकमन्तरा तिष्ठत्य,—ता वै ज्योतिष्मतीरिष्टका यद्धिरण्यशकलैः प्रोक्षति, विवासयति वा एतद्यजमानाय, ज्योतिरस्मिन् दधाति, सहस्रं भवन्ति, साहस्रो वै प्रजापतिः, प्रजापतिमेवाप्नोति, यावद्वै सहस्रं तावदि३तोऽसौ लोकः, स्वर्गस्य लोकस्य समष्ट्या, इमा मे अग्न इष्टका धेनवः सन्त्वित्य, धेनवो वै नामैता इष्टका, एताभिर्वै प्रजापतिर्यद्यदकामयत तत्तददुह, यद्यदेवैताभिर्यजमानः कामयते तत्तद्दुहे, ऋतुष्ठाः स्थ ऋतावृधा इत्य,—तुष्ठा एवैना अकृत ऋतावृधो, घृतश्चुतो मधुश्च्युता इति, घृतश्चुत एवैना अकृत मधुश्च्युता, ऊर्जस्वतीः पयस्वतीरित्यू,—र्जस्वतीरेवैना अकृत पयस्वतीः, स्वधायिनीः कुलायिनीरिति, कुलायिनी३ह्येता विराजो नाम, कामदुघा इति, यत्र वा अदो देवेभ्यः कामदुघाः काममदुह तदेता अपि दुदुहे, तत् पुष्टिमेवैताभिरवरुन्द्धे, ऽमुत्रामुष्मिँल्लोक इत्य,—मुष्मै हि लोकायाग्निश्चीयते, रुद्रꣳ वै देवा यज्ञादन्तरायꣳ,—स्तानायतयाभिपर्यावर्तत, तस्माद्वा अबिभयु,—स्ते देवाः प्रजापतिमेवोपाधाव,—न्त्स प्रजापतिरेतच्च् शतरुद्रियमपश्यत्, तेनैनमशमयत्, तद्य एवꣳ वेद वेदाह वा एनं प्रजापति,—र्नैनमेष देवो हिनस्ति, यत्र रुद्रः प्रजाः शमायेत तद्दुदङ् परेत्य,—तदेव वद्दꣳश्चक्रम्येत, स्वायाꣳ वा एतद्दिशि स्वेन भागधेयेन रुद्रꣳ शमयति, जानुदघ्ने प्रथमं जुहोत्य,—स्या एवैनं तेन शमयति, नाभिदघ्ने द्वितीय,—मन्तरिक्षात्तेन, छुबुकदघ्ने तृतीयं, दिवस्तेन, त्रिर्जुहोति, त्रयो वा इमे लोका, एभ्यो वा एतं लोकेभ्यो रुद्रꣳ शमयति, त्रिरमुतः पुनः प्रत्यवहारं जुहोति, यानेवेतो रुद्रान् यजति तानमुतोऽवयजति, त्रिरितो जुहोति, त्रिरमुत,—स्तत् षट्, षड्वा ऋतव, ऋतुभ्यो वा एतद्रुद्रमवयजति, समावच्च् शो विभाजं जुहोति, समावद्भाजो हि रुद्राणां भागा, द्वासाहानि जुहोति, द्वासाहैर्वै स तमश-

---

[ ४ ] मै. २,८,१४ । तै. ५,४,२—३ । काठ. २१,६ । कपि. ३२,२१ । वा. १७,२—३ । काण्व. १८,२—४ ।

मयद्, द्वासाहैरेवैनं शमयत्य, —र्कपर्णेन जुहोत्य, —र्कैण वा एतदुर्कमवयजति, यत् पात्रेण जुहुयाद्रुद्रं प्रजास्वन्ववनयेत्, तस्मादारण्येन जुहोति, पशुर्वा अग्निः, स वै तर्ह्येव जायते यर्हि चीयते, स भागधेयमिछति, यथा वत्सो जातः स्तनमिछति सोऽध्वर्युं च यजमानं च प्रेक्षते, यच् शतरुद्रियं जुहोति स्वेनैवैनं भागधेयेन शमयति, यासा उत्तरार्धे जघनार्धे श्रोणिस्तस्याः होतव्यं, स्वायां वा एतद्दिशि स्वेन भागधेयेन प्रतिहत्य रुद्रं शमयत्य, —ङ्गिरसो वै स्वर्यन्तो ऽजायां घर्मं प्रासिञ्च, —न्त्सा शोचन्ती पर्णं परामृशत्, सोऽर्कोऽभवद्, यदर्कपर्णेन जुहोत्यर्कैण वा एतदुर्कमवयजति, यं द्विष्यात्तस्य पशूनां संचरे न्युस्येद्, यः प्रथम आक्रमति स आर्तिमार्छति ॥ ४ ॥ ४

अश्मन्नूर्जं पर्वते शिश्रियाणा, —मित्यपः परिषिञ्चन् पर्येति, प्रजापतेर्वा एष रसः, प्रजापतेरेव रसेन परिषिञ्चत्य, —श्मंस्ते क्षुदित्य, —श्मानमेव क्षुधार्पयति, मयि ता ऊर्गित्या, —त्मन्नेवोर्जं धत्ते, यं द्विष्मस्तं ते शुगृछत्विति, यमेव द्वेष्टि तमग्नेः शुचार्पयति, त्रिः परिषिञ्चन् पर्येति, त्रयो वा इमे लोका, एभ्यो वा एतं लोकेभ्योऽग्नेः शुचं शमयति, त्रिः परिषिञ्चन् पर्येति, त्रिरपरिषिञ्चं, —स्तत् षट्, षड्वा ऋतव, ऋतुभ्यो वा एतदग्नेः शुचं शमयति, यद्यभिचरेदेतदेव यजुर्वदन्नपरिषिञ्चन् पुनः परीयाद्, यैवाग्नेः शुक्तयैनमर्पयति यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणममुष्मात् पुत्रममुष्यां दिशि प्रक्षिणामि ॥ इति कुम्भं जघन्यायां श्रोण्यां प्रक्षिणीयाद्, यत् प्रक्षिणाति तस्यैवार्तिमन्वार्तिमार्छत्य, —थ यन्नाम गृह्णात्यायतनमेवास्य छिनत्त्या, —ग्नेयपावमान्यां गायत्रं गायते, प्राणो वै पवमानः, शिरो गायत्री, यदाग्नेयपावमान्यां गायत्रं गायते शीर्षन्वा एतत् प्राणान् दधाती, —यं वै रथन्तर, —मन्तरिक्षं वामदेव्य, —मसौ बृहत्, त्रिधातुर्वा एतदर्को निधीयत, आत्मा वै वामदेव्यं, प्रतिष्ठा यज्ञायज्ञियं, बृहद्रथन्तरे पक्षौ, यद्बृहद्रथन्तरे अभितो गायत आत्मन्नेव पक्षौ धत्ते, यज्ञं वै देवानां रक्षांस्यजिघांसं, —स्तानि बृहद्रथन्तराभ्यामेवापाघ्नत, यद्बृहद्रथन्तरे अभितो गायते रक्षसामपहत्यै, प्रजापतेर्हृदयमापिपक्षे गायते, तस्मादिदमपिपक्ष आत्मनो हृदयमनूचं गायते, तस्मादुनस्थकं हृदय, —मरक्यैः सामभिरर्कं परिष्टुवन्ति, संतनूरर्को निधीयते ॥ ५ ॥ ५-७

वरुणमेनिर्वा एष एतर्ह्यभीद्धस्तिष्ठति, स एनं तर्ह्यधीयात्, तस्य प्राणेन वीयान्, मण्डूकेनाध्येति, तस्यैव प्राणेन व्येति, न ग्राम्यान् पशून् हिनस्ति नारण्या, —नवकया विकर्षत्य, —पां वा एषा योनिर्यदवका, —ऽपां वा एतद्योनिनाग्नेः शुचं शमयत्य, —पां वा एतद्रूपं

[ ५ ] मै. २,१०,१ । तै. ५,४,४ । काठ. २१,७ । वा. १७,१ । काण्व. १८,१ ।

यद्वुका,—ऽपां२ वा एतद्रूपेणाग्नेः शुच२ शमयति, वेतसेनाध्येत्य,—पां२ वा एतत् पुष्प२ यद्वेत२सो,
ऽपां२ वा एतत् पुष्पेणाग्नेः शुच२ शमयति, सप्तभिर्विकर्षति, सप्त वै छन्दा२ंसि, छन्दो-
भिर्वा एतदग्नेः शुच२ शमयत्य,—थो ब्रह्म वै छन्दा२ंसि, ब्रह्मणा वा एतदग्नेः शुच२ शमयत्य,—
ग्निर्वै सृष्टो भागधेयमैछत्, स प्रजापतिमेवोपाधावत्, तस्मा अन्नं प्रायछत् कत्वाय, तदस्मै
कमभव,—दन्न२ वै कं,—मन्नेन वा एतदग्निमुपचरति कत्वाय, क२ हास्मा अग्निं चिक्यानाय
भवति, पराञ्चमध्येति, पराङ् हि पशुः शान्तरथो, पराङ् हि पशुः पशौ रेतो दधात्य,—
न्यां२स्ते अस्मत्तपन्तु हेतय:, पावको अस्मभ्य२ शिवो भवेत्य,—न्न२ वै पावकं,—मन्नेन वा
एतदग्नेः शुचमन्तर्धत्ते, हिरण्यशकलैर्व्याघारयत्य,—मृत२ वै हिरण्यं, तेजोऽग्नि,—रमृतेन वा
एतत्तेजो व्याघारयति, पञ्चभिर्व्याघारयति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य,
द्रुया वै देवा यजमानस्य गृहमागछन्ति, यद्दध्ना मधुस२श्लिष्टेन व्यवोक्षति तानेव प्रीणाति,
सर्वमनु व्यवोक्षति, सर्वानेवैनान् प्रीणाति, तिसृभिर्व्यवोक्षति, त्रिवृ३द्ध्यग्नि,—स्त्रिष्टुभिर्व्य-
वोक्षतीन्द्रियस्यावरुद्ध्या, अन्नवतीभिर्व्यवोक्षत्यन्नाद्यस्यावरुद्ध्यै, दर्भगुरुमुष्टिना व्यवोक्षति,
स२ हि प्राजापत्यः, प्राणैर्वा एष व्यृध्यते ३योऽग्निमध्येति, यदाह, प्राणदा अपानदा
इति, प्राणानेवात्मन् धत्ते, प्रजया च वा एष पशुभिश्च व्यृध्यते ३योऽग्निमध्येति, प्रजा वै
वर्चः, पशवो वरिवो, यदाह, वर्चोधा वरिवोधा इति, प्रजां चैव पशू२श्चात्मन्धित्वा-
८
वरोहति ॥ ६ ॥

इन्द्रो वै वृत्रमह,—न्त्स प्राऽपद्यत, स पद्यमाना इन्द्र२ षोडशभिर्भोगैः पर्यगृह्णात्, स वा
अग्निनैव वृत्रस्य भोगाननुपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निरमुच्यता,—ऽग्निस्तिग्मेन शोचिषे,-
—ति यज्जुहोत्यग्निना वा एतत् पाप्मनो भोगाननुपिदह्य वैश्वकर्मणाभ्यां पाप्मनस्तमसो निर्मुच्यते,
नाना जुहोति सूक्तयोर्नानावीर्यत्वाय, षोडशगृहीतेन जुहोति, षोडशभिर्हि स तं भोगैः पर्य-
गृह्णा,—देतेन वै स वृत्रस्य भोगेभ्यो निरमुच्यत, तत् पाप्मन एवैतेन भोगेभ्यो निर्मुच्यते,
ऽथैतदप्रतिरथ,—मेतेन वै देवा असुरान् प्रत्यजय२,—स्तदप्रतिरथस्याप्रतिरथत्वं, तदप्र३त्ये-

[ ६ ] मै. २,१०,१ । तै. ५,४,४—५ । काठ. २१,७ । वा. १७,४-५,७,११,१५;३६,२० । काण्व. १८,५-६,८,
१२,१५;३६,२० ।
[ ७ ] मै. २,१०,२-३ । तै. ५,४,५ । कठ. २१,८ । वा. १७,१६ । काण्व. १८,१६ । [ अग्निस्तिग्मेन शोचिषा० ।
ऋ. ६,१६,२८; साम० २२; तै. सं. ४,६,१,५ ]

*

वैतेन यजमानो भ्रातृव्यं जयत्ये,—तेनैव याजयेत्, संग्रामे जयति संग्राम,—मेतेनैव याजयेद् भ्रातृव्यवन्तꣳ यो वास्य प्रियः स्यात्तं, भवत्यात्मना, परास्य भ्रातृव्यो भवत्ये,—तेन वै भरद्वाजः प्रतर्दनं दैवोदासिꣳ समनह्यत्, स राष्ट्रमभवद्, यं कामयेत, राष्ट्रियमयꣳ राष्ट्रꣳ स्यादिति, तमेतेन संनह्येद्, राष्ट्रꣳ ह भवत्ये,—तेन वै देवा विराजमभ्यजयन्, दशा-न्वाह, दशाक्षरा विराड्, विराजमेवैतेनाभिजयति, दक्षिणतो वै देवानाꣳ यज्ञꣳ रक्षाꣳ-
स्यजिघाꣳसꣳ,—स्तानि वा अप्रतिरथेनैवापाघ्नत, यद् ब्रह्माप्रतिरथं दक्षिणतो वदन्नेति ९
रक्षसामपहत्यै ॥ ७ ॥

उदेनमुत्तरं नये,—ति समिधा आदधाति, प्रह्रियमाणायैवास्मै भागमक,—स्तिस्र आदधाति, त्रिवृद्ध्यग्नि,—रुदु त्वा विश्वे देवा इति, विश्वे ह्येदं देवाः स्मो यन्मनुष्या, अग्ने भरन्त चित्तिभिरिति, यस्मा एव चित्तायाग्निराधीयते तेनैनं चित्तेन समर्धयति, पञ्च दिशो दैवीर्यज्ञ-मवन्तु देवीरिति,—मा एवैनं पञ्च दिशोऽनु तेजस्विनं करोत्य,—थपत्रा इंडयो गृभीत इत्य,—थपत्रो ह्येष परिगृह्य यज्ञमायन्निति, परिगृह्य ह्येतꣳ यन्ति, हरिकेशः सूर्यरश्मिः पुर-स्तादित्य,—सौ वा आदित्यो हरिकेशः सूर्यरश्मिः पुरस्तात्, सविता ज्योतिरुदयꣳ अजस्र,—मित्याह प्रसूत्या एव, तस्य पूषा प्रसवे याति विद्वानिति, पशवो वै पूषा, पशूनेवावरुन्द्धे, ततो वाका आशिषो नो जुषन्तामित्या,—शिषाꣳ वा एष दोह, आशिष एव दुहा, इन्द्रꣳ विश्वा अवीवृध,—न्निति वृधद्वत्या यन्ति, वृद्धिमेवोपयन्त्य,—नुष्टुभा यन्ति, वाग्वा अनुष्टुब्, वैश्वदेवी वाग्, वैश्वदेवोऽग्नि,—स्तस्मादनुष्टुभा यन्ति, षड्भिराग्नीध्रायन्ति, षड्वा ऋतव, ऋतुभिरेव यन्ति, विमान एष दिवो मध्य आस्ता, इत्यश्मानꣳ सादयति, विमानो ह्यसा आदित्यः स्वर्गस्य लोकस्य, सुम्नहूर्यज्ञ आ च वक्षद्, यक्षदग्निर्देवो देवꣳ आ च वक्षदित्या,—शीरेवैषा देवहूर्यज्ञ आ च वक्षद्, यक्षदग्निर्देवो देवꣳ आ च वक्षदित्या,—शिष एवैष परिग्रहो, वाजस्य मा प्रसवेनोद्ग्राभेणोदजिग्रभदित्य,—सौ वा आदित्य उद्ग्राभ, एष निग्राभ, उद्यन्वा एतद्यजमानमुद्गृह्णाति, निम्रोचन्नस्य भ्रातृव्यं निगृह्णात्यु,—द्ग्राभश्च निग्राभ-

[ ८ ] मै. २,१०,४—५ । तै. ५,४,६ । काठ. २१,८ । वा. १२,३१;१७,५०,५३—५९,६१—६४;१२,५६;१५,६१। काण्व. १३,३२;१८,५०,५३—५९,६१—६४;१३,५७;१६,८२ । [ उदेनमुत्तरं ( रां ) ० । अथर्व. ६,५,१ । हरिकेशः सूर्यरश्मि० ( सूर्यरश्मिर्हरिकेशः )० । ऋ. १०,१३९,१; तै. सं. ४,६,३,३। इन्द्रं विश्वा०... पतिम् । ऋ. १,११,१; सा. ३४३,८२७; तै. सं. ४,६,३,४; तै. ब्रा. २,७,१५,५ । विमान ( नृचक्षा ) एष० । ऋ. १०,१३९,२; तै. सं. ४,६,३,३ ]

श्वेति, ब्रह्म वा उद्ग्राभो, ब्रह्म निग्राभो, ब्रह्मणा वा एतद्यजमानमुद्गृह्णाति, ब्रह्मणास्य भ्रातृव्यं निगृह्णात्य,—था सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामित्यो,—जो वै वीर्यमिन्द्राग्नी, ओजसा वा एतद्वीर्येण यजमानो भ्रातृव्यꣳ विष्वञ्चꣳ विनुदते, चतुर्भिराहवनीयायन्ति, चत्वारि
वै छन्दाꣳसि, छन्दोभिरेव यन्त्य,—थो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैव यन्ति ॥ ८ ॥ १०

क्रमध्वमग्निना नाकमित्या,—ह स्वर्गस्य लोकस्य समष्ट्यै, दिवः पृष्ठꣳ स्वर्गत्वेति, पृष्ठेन हि यन्त्यू,—र्जं नो धेहि द्विपदे चतुष्पदा इति, द्विपात्सु चैव चतुष्पात्सु च पशुषूर्जं दधाती,—यक्षमाणा भृगुभिः सहेति, भृगवो ह्यग्रे यज्ञेनार्ध्नुवन्नृद्ध्यै, पृथिव्या अहमुदन्तरिक्षमारुह,—मन्तरिक्षाद्दिवमारुहमित्ये,—षाꣳ वा एष लोकानाꣳ समारोहः, पञ्चभिराक्रमते, पाङ्क्तो यज्ञो, यज्ञेन वा एतद्यज्ञमभ्यारोहत्यप्रतिनोदाय, कृष्णायाः श्वेतवत्सायाः पयसा जुहोत्य,—हर्वै वत्सो, रात्रिर्माता, ऽह्ने वा एतद्रात्रीं प्रदापयति, प्रत्ते ह वा अहोरात्रे दुहे य एवꣳ वेद, सर्वे वै पशवो नानारूपाः सन्तः पय एव प्रत्येकरूपा, यदेव प्रत्येकरूपास्तदेनान् प्रत्यवरुन्द्धे, नक्तोषासा, ऽग्ने सहस्राक्ष, सुपर्णोऽसि गरुत्मान्, पृष्ठे पृथिव्याः सीदे,—त्येषु वा एतं लोकेषु ज्योतिष्मन्तमग्निं निधत्ते, ऽथो प्राणानाꣳ विधृत्यै, द्वाभ्याꣳ सादयति, द्विपाद्यजमानः प्रतिष्ठित्या, आजुह्वानः सुप्रतीकः पुरस्तादित्या,—ह स्वर्गस्य लोकस्य समष्ट्यै, ताꣳ सवितुर्वरेण्यस्य चित्रामि३त्ये,—तꣳ वै कण्वः श्रावय३सोऽग्नेर्दोहꣳ विदाचकारा,—ऽग्नेर्वा एष दोहो, ऽग्निꣳ वा एतेनाग्निचिद्दुहे, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवꣳ वेद, विधेम ते परमे जन्मन्नग्ना, इत्याह, ऋद्ध्या एव, प्रेद्धो अग्ने दीदिहि पुरो न इत्ये,—षा वै कर्णकवती सूर्म्यजस्रं ज्योति,—रजस्रꣳ वावास्मा एतज्ज्योतिरप्यधा,—देताꣳ वै वासिष्ठः सात्यहव्यः सत्त्रिण आसीनान् पप्रच्छ, विद कर्णकवतीꣳ सूर्मीमिति, विद्मेति होतुर्या वनेषु ताꣳ विद्मेति, पशवो वा एतस्याः कर्णाः, पशुमान्भवत्य,—ताꣳ वै वज्रꣳ शतघ्नीꣳ विघ्नीं देवा असुरेभ्य उपप्रावर्तय,—स्तेषाꣳ शततर्हमतृꣳहꣳ,—स्तदेतामेव वज्रꣳ शतघ्नीꣳ विघ्नीꣳ

[ ९ ] मै. २,१०,६ । तै. ५,४,७ । काठ. २१,९ । वा. १७,६५—६७,७०—७९;१२,२;१५,४४ । काण्व. १८,६५–६७,७०—७९;१३,२;१६,६६ । [ क्रमध्वमग्निना० । अथर्व. ४,१४,२ । पृथिव्या अहमुदन्तरिक्ष० । अथर्व. ४,१४,३ । नक्तोषासा समनसा ( वर्णमा० ) । ऋ. १,९६,५; तै. सं. ४,१,१०,४;६,५,२;७,१२,३ । ताꣳ सवितुर्वरेण्यस्य० । अथर्व. ७,१५,१ । विधेम ते परमे० । ऋ. २,९,३; तै. सं. ४,६,५,४ । प्रेद्धो अग्ने० । ऋ. ७,१,३; साम० १३७५; तै. सं. ४,६,५,४ ]

यजमानो भ्रातृव्यायोपप्रावर्तयति, शततर्हꣳ ह द्ꣳहत्यं,—ग्ने तमद्ये,—ति पङ्क्त्या जुहोति, यजमानो वै पङ्क्ति,—र्यजमानꣳ वा एतद्विराजि प्रतिष्ठापयामुक,—रथो पङ्क्त्यै वाहुत्या यज्ञमा-लभते, सप्त ते अग्ने समिधः सप्त जिह्वा इत्य,—तावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त, यो वा अस्यैता अग्निं चिक्यानो वितर्षयति वि ह तृष्यति, ता एवास्य तर्पयति, चित्तिं जुहोमि मन-सेत्य,—षा वा अग्नेरदाभ्याहुतिर्वैश्वकर्मणी, नैनं भ्रातृव्यो दभ्नोत्य,—ग्निं चिक्यानं प्र समानानां ज्यैष्ठ्यमाप्नोति य एवꣳ वेदा,—ऽग्निर्वा अमन्यत, न वा अहमिदमभागधेयं,—स्तेजो यꣳस्यामी-ति, तदेतेन भागधेयेनायछ,—देतद्वा अग्निरग्निहोत्रं,—मग्निꣳ वा एतेनाग्निचिद्यछति, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवꣳ वेद, सꣳ वा एतदग्निमिन्द्धे यच्चिनोति, तं
११
दीपयत्येवाग्निरग्निहोत्रेण ॥ ९ ॥

अथैꣳषोऽग्नये वैश्वानराय द्वादशकपालः, सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सरमेव प्रीणात्यं,—थो प्राहुतायैवास्मै भागमुक,—राहुतीनाꣳ वै प्रतिष्ठित्या यजमानः प्रतितिष्ठत्या,—हु-तीनामप्रतिष्ठित्या न प्रतितिष्ठति, यदेतं जुहोत्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनु-प्रतितिष्ठति, यज्ञꣳ यजमानो, ऽथो कामो वै वैश्वानरो, यत् कामो भवति सꣳ ह्यस्मै स कामो नमति, यत्प्राङ् पर्यावर्तेत दैवीर्विशो मुह्येयु,—र्यद्दक्षिणा यमदेवत्या स्याद्, यत्प्रत्यङ् सौꣳर्यो, यदुदङ् रौद्रं, ऋजु होतꣳव्यः प्रतिष्ठित्यै, सर्वहुतं करोति प्रतिष्ठित्यै, क्षत्रꣳ वै वैश्वानरो, विण्मारुता, यदेतꣳ हुत्वा मारुतान् जुहोति विशꣳ वा एतत् क्षत्राय नियुनक्त्य,-—थो विशमेव क्षत्रायानुकां करोत्य,—ग्निमुखान् वै प्रजापतिः पशूनसृजत, पशवो मारुता, यदेतꣳ हुत्वा मारुतान् जुहोत्यग्निमुखानेवास्मै प्रजापतिः पशून् प्रजनयति, सप्तकपाला भवन्ति, सप्त सप्त मारुता गणा,—स्तस्मात् सप्तकपाला, गणेन गणेन जुहोति, गणेश एव मरुतः प्रीणाति, योऽरण्येऽनुवाक्यो गणस्तन्मध्यतो जुहुयात्, क्षत्रꣳ वा एष, मरुताꣳ विडितरे, विशो वा एतत् क्षत्रं मध्यमेष्ठं करोति, यदि कामयेत, विशा क्षत्रꣳ हन्यामिति, योऽरण्ये ऽनुवाक्यो गणस्तमितरैर्गणैर्मोहयेद्, विशा वा एतत् क्षत्रꣳ हन्ति, यदि कामयेत, क्षत्रेण विशꣳ हन्यामिति, योऽरण्येऽनुवाक्यो गणस्तेनेतरान् गणान् मोहयेत, क्षत्रेण वा एतद्विशꣳ हन्ति, तस्य त्रिष्टुभौ याज्यानुवाक्ये स्याता,—मोजो वै वीर्यं त्रिष्टु,—बोजो वा एतद्वीर्यꣳ विशो

[ अग्ने तमद्याश्वं० । ऋ. ४,१०,१; साम. ४३४,१७७७; तै. सं. ४,४,४,७ । ]

[ १० ] काठ. २१,१० । वा. १७,८६ । काण्व. १८,८६ ।

आदाय क्षत्रायापिदधाति, यदि कामयेत, क्षत्रेणास्य क्षत्रꣳ हन्यां, प्र स्वादायतनाच्च्यवेतेति, योऽरण्येऽनुवाक्यो गणस्तेनाग्निष्ठꣳ रथवाहनꣳ व्युङ्गयेत्, क्षत्रꣳ वा एष मरुतामग्निष्ठꣳ रथवाहनं, क्षत्रियस्य क्षत्रं बिभर्ति, क्षत्रेणैवास्य क्षत्रꣳ हन्ति, प्र स्वादायतनाच्च्यवता, इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो इत्ये,—तद्वै देवानामनुवर्त्म, दैवीं च वावास्मा एतद्विशं मानुषीं चानुवर्त्मानौ करोति, सꣳ वा एतदग्निमिन्द्धे यच्चिनोति, तं दीपयत्येव मारुतैः॥ १०॥ १२

[ १५१८ ]

॥ इत्युपरिकाण्डे स्तोमभागो नाम तृतीयः प्रपाठकः ॥ ३ ॥

अथ चतुर्थः प्रपाठकः।

वसोर्धारां जुहोत्यक्लृप्तस्य क्लृप्त्या अशान्तस्य शान्त्या अनभिजितस्याभिजित्या अनवरुद्धस्यावरुद्ध्यै, संततं जुहोति प्राणानाꣳ संतत्या एषां लोकानाꣳ संतत्या अन्नाद्यस्य संतत्या, अविच्छिन्नं जुहोत्यन्नाद्यस्याविच्छेदाय, यद्विच्छिन्द्यात् प्राणान् विच्छिन्द्याद्, यं द्विष्यात्तस्य विच्छिन्द्या,—दन्नाद्यमस्य विच्छिन्नत्त्यक्षुचान्नं चेत्ये,—तानि वा अन्नस्य रूपाणि, रूपैरेवान्नमवरुन्द्धेऽग्निश्चापश्चेत्ये,—षा वा अन्नस्य योनिः, सयोन्येवान्नमवरुन्द्धे, वसोर्मे धारास,—दिति वसोर्धारां जुहोति, घृतस्य वा एषा धारा यजमानममुष्मिꣳल्लोक उपतिष्ठन्ते, द्वादश द्वादशाति जुहोति, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमेवावरुन्द्धे, ऽर्धेन्द्राणि जुहोत्य,—र्धेन्द्रैर्वै देवा इन्द्रियꣳ वीꣳर्यमसुराणामवृञ्जते,—न्द्रियमेवैतैर्वीꣳर्यꣳ यजमानो भ्रातृव्यस्य वृङ्क्ते, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा इन्द्रमब्रुवꣳ,—स्त्वया मुखेनेमान् जयामेति, सोऽब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवी,—दुꣳध्यों वा अहं देवतानामसानीति, ततो वा अजयꣳ,—स्तस्मादेषोऽर्धभाग्देवतानाꣳ, यदर्धेन्द्राणि हूयन्ते विजित्या, इन्द्रोत्तमानि भवन्ती,—न्द्रियꣳ वै वीꣳर्यमिन्द्र, इन्द्रिये वा एतद्वीर्ये ततो यज्ञस्य यजमानः प्रतितिष्ठत्यꣳ,—शुश्च रश्मिश्चेति, यज्ञमुखꣳ वा अꣳशुश्च रश्मिश्च, यज्ञमुखमेवावरुन्द्धेऽधिपतिश्चादाभ्यश्चेति, नैनं भ्रातृव्यो दभ्नोत्यग्निं चिक्यानं, प्र समानानां ज्यैष्ठ्यमाप्नोति य एवꣳ वेदे,—ते ग्रहा भवन्त्ये,—तानि वै यज्ञस्य रूपाणि, रूपैरेव यज्ञमवरुन्द्धे, स्रुचश्च चमसाश्चे,—ति यज्ञायुधानि संभरति,

[ १ ] मै. २,११,५। तै. ५.४,८। काठ. २१,११। वा. १८,१९,२१। काण्व. १९,३१,३३।

यज्ञायुधान्येवं संभृत्य यज्ञं प्रयुङ्क्ते, पात्राणि जुहोति, पात्रैर्वा अन्नमद्यते, ऽनुरूपेणैवान्नाद्यमवरुन्द्धे, बर्हिश्च वेदिश्चे,त्याशीरेवैषा, ऽवभृथश्च स्वगाकारश्चे,ति प्रतिष्ठित्यै ॥ १॥ १

अग्निश्च घर्मश्चेत्ये,तद्वा अग्नेर्ब्रह्मवर्चस्य, रुचं चैवैतेन ब्रह्मवर्चसं चावरुन्द्धे, तेजस्वी ब्रह्मवर्चसी भवत्यृ,तुश्च व्रतं चेत्य,होरात्रे वा ऋतुश्च व्रतं चा,ऽहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवता, एका च तिस्रश्चेति, देवछन्दसं वा एका च तिस्रश्च, देवछन्दसमेवावरुन्द्धे, चतस्रश्चाष्टौ चेति, मनुष्यछन्दसं वै चतस्रश्चाष्टौ च, मनुष्यछन्दसमेवावरुन्द्धे, देवलोक एवं देवछन्दसेन ऋध्नोति, मनुष्यलोके मनुष्यछन्दसेनै,का च तिस्रश्च चतस्रश्चाष्टौ चेति, रोहो वा एष एषां लोकाना, संक्रान्तिः स्वर्गस्य लोकस्य, द्व्युत्तरेण वै स्तोमेनादित्याः स्वर्गं लोकमाय,श्चतुरुत्तरेणाङ्गिरसो, यदेतौ स्तोमौ जुहोति स्वर्गस्य लोकस्य समष्ट्यै, युग्मदयुजौ वा एतौ स्तोमौ मिथुनौ प्रजननाय, रेत एवं द्व्युत्तरेण दधाति, रेतो हितं चतुरुत्तरेण प्रजनयत्ये,का च तिस्रश्चे,त्या त्रयस्त्रिंशतस्त्रयस्त्रिंशद्देवता,स्ता एवास्यैतेनाभीष्टाः प्रीता भवन्ति, चतस्रश्चाष्टौ चेत्य,ष्टाचत्वारिंशतो, ऽष्टाचत्वारिंशदक्षरा जगती, जागताः पशवः, पशूनेवावरुन्द्धे, त्र्यविश्च त्र्यवी चेत्ये,तानि वै वयांसि पशूनां, पशव एव पशूनवरुन्द्धा, आयुर्यज्ञेन कल्पते, प्राणो यज्ञेन कल्पता इति, यज्ञस्य वा एषा क्लृप्ति,र्यज्ञमेवैतदचीक्लृपद्, वाजाय स्वाहा, प्रसवाय स्वाहेति, त्रयोदश वा एता आहुतय,स्त्रयोदश मासाः संवत्सरः, संवत्सरं वावास्मा एतदुपदधाति स्वर्गे लोके, तस्मिन्नेव प्रतितिष्ठति, स्तोमश्च यजुश्चे,त्यन्नं वै स्तोमश्च यजुश्चा,ऽन्नं वा एतदात्मन्धित्वान्नादो भूत्वा देवक्षेत्रमन्ततः प्रावसत्य,ग्निर्वै वसु,स्तस्य वा एषा धारा, सर्वान् ह वा अस्मा अग्निर्दोहान्त्सर्वान् कामान् दुहे य एवं वेद, सं वा एतदग्निरन्नाद्यमिन्द्धे यच्चिनोति, तं दीपयत्येव वसोर्धारया ॥ २ ॥ २

वाजप्रसव्यं जुहोति, वाजं वा एतेनाग्निरन्नाद्यमुदजयद्वाजमेवैतेनान्नाद्यं यजमाना उज्जयत्य,न्नस्यान्नस्य जुहोति वाजप्रसव्याभि,रन्नं वै वाजोऽन्नाद्यस्यावरुद्ध्या, उभयं ग्राम्यं चारण्यं च जुहोत्युभयस्यान्नाद्यस्यावरुद्ध्या, औदुम्बरेण स्रुवेण जुहोत्यू,र्ग्वा उदुम्बर,

---

[ २ ] मै. २,११,६ । तै. ५,४,८ । काठ. २१,११ । वा. १८,२२-२९। काण्व. १९,३४—४३ ।

[ ३ ] मै. २,१२,१—३ । तै. ५,४,९। काठ. २१,१२। वा. १८,३०,३७,३८—४३,४५। काण्व. २०,१, ७,८—१३,१५ ।

ऊर्जोऽवरुद्ध्यै, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳪं सरस्वत्या वाचा यन्तुर्यन्त्रेण बृहस्पतिᳪं साम्राज्यायाभिषिञ्चामीत्य,—भिषिञ्चेद्, यदि ब्राह्मणो यजेत, बृहस्पतिसवो ह्येष, इन्द्रᳪं साम्राज्यायाभिषिञ्चामीत्य,—भिषिञ्चेद्, यदि राजन्यो यजेते,—न्द्रसवो ह्येष, कृष्णाजिनें ब्रह्मवर्चसकाममभिषिञ्चेद्, ब्रह्मणो वा एतदृक्सामयो रूपं,—मृक्सामे ब्रह्मवर्चसं, ब्रह्मवर्चसमेवावरुन्द्धे, बस्ताजिनें पशुकामं, पशवो वै बस्ताजिनं, पशूनेवावरुन्द्धे, सूयते वा एषोऽग्नीनाᳪं यश्चीयते, स्वेनैवैनᳪं सवेन समर्धयति, देवा ओषधीषु पक्कास्वाजीमयु,—स्ता अग्निरुदजय,—दुर्गेर्वा एषोऽभिषेको, ऽन्नस्य वा एतत् सूयते, सर्वानाᳪं वा एष एको, बृहस्पतिसवो वा एष बार्हस्पत्यो ब्राह्मणो देवतया, स्वेनैव सवेन सूयते, तदाहु,—र्होतव्यमेव, न हि सुपुवाणः कं चन प्रत्यवरोहतीति, सुपुवाणो वा एष देवतया योऽग्निं चि,—दृतवो वै सुपुवाणस्य राष्ट्रमनुविभ्रति, षड्वा ऋतव, ऋतवो राष्ट्रभृतो, यत् षड्भिर्जुहोत्यृतुष्वेवास्य राष्ट्रं प्रतिष्ठापयति, तेऽस्मै राष्ट्रमनुविभ्रति, द्वादशगृहीतेन जुहोति, द्वादश मासाः सᳪंवत्सरः, सᳪंवत्सरमेवाप्त्वावरुन्द्धे, मिथुना वा एता आहुतय,—स्तस्मै स्वाहा वट्, ताभ्यः स्वाहा वडिति, तस्मिन्नेव मिथुने रेतो दधाति, रथशीर्षे सप्तमं जुहोति दिशामभिजित्यै, दिश एवाभिजिता रथेन जीयन्ते, ऽथैते वातहोमा, अग्निचितो वा अमु-त्राहोरात्रे, अग्निचितेऽयᳪं वायुः पवते, प्राणो वै वायुः, प्राणमेवावरुन्द्धे, ऽञ्जलिना जुहोति, न ह्येतस्यावदानमस्त्य,—थो परिगृहीत्या एव, प्राणो वै वायु,—र्हस्तः प्राणायोपकल्पतम,—स्तस्मादञ्जलिना जुहोति, त्रिर्जुहोति, त्रयो वा इमे लोका, इम एवास्मै लोका वातं धुन्वन्ति, समुद्रोऽसि नभस्वानार्द्रदानुरित्ये,—तानि वै वायो रूपाणि, रूपैरेव वायुमवरुन्द्धे, मारुतोऽसि, मरुतां गण इति, मारुतो हि वायुः, सᳪं वा एतदग्निमिन्द्धे यच्चिनोति, तं दीपयत्येव वातहोमैः ॥ ३ ॥ ३

प्राणो वै गायत्री, गायत्रᳪं हविर्धान,—मपानो जगती, जागत ᳪंसदो, व्यानस्त्रिष्टुप्, त्रैष्टुभमाग्नीध्र,—मसुः पृश्नि,—र्मध्ये दिव्यो निहितः पृश्निरश्मे,—त्ययमुᳪं वावास्यैतन्मध्यतः प्राणापानानाᳪं व्यत्रदधाति प्राणानां धृत्या, अश्मनवमा आग्नीध्रे सादयति, नव वै प्राणाः, प्राणान् वावास्यैतद्यजमानलोके दधात्येकविᳪंशतिᳪं होत्रिये प्रतिष्ठित्यै, प्रतिष्ठा ह्येकविᳪंशं,

---

[ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

[ ४ ] मै. २,१२,३ । तै. ५,४,१० ।काठ.२१,१२;२२,१। वा.१७,६० ( तृ. पा. ); १८,५२। काण्व. १८,६० (तृ. पा.); २०,२१ । [ पृश्निर्मध्ये दिवो० ( मध्ये दिवो निहितः पृश्निरश्मा ) । ऋ. ५,४७,३; तै. सं. ४,६,३,३ ]

एकादश ब्राह्मणाञ्छꣳस्या, एकादशाक्षरा त्रिष्टुब्, वीर्यं त्रिष्टुब्, वीर्य एव प्रतितिष्ठत्य,—ष्टाष्टा इतरेष्व,—ष्टाक्षरा गायत्री, ब्रह्म गायत्री, ब्रह्मण्येव प्रतितिष्ठति, षण्मार्जालीये, षड्वा ऋतव, ऋतवो वा एतं दक्षिणतः पर्यहरन्त, पितरो वा ऋतवो, ऽथो षड्वै छन्दाꣳसि, छन्दाꣳसि वावास्यैतद्यज्ञमुखे युनक्ति, सजूरब्दो आयवोभिरित्ये,—ता वा अग्नेर्देवताः पुरस्ताद्भागा,—स्ता एव प्रीणात्य,—थो अत्र वै देवानां प्रियास्त३न्व,—स्ता एवावरुन्द्धे, सजूरब्दो आयवोभिरिति, सꣳवत्सरो वा अब्द, ऋतवा आयवानः, सꣳवत्सर एवास्यैतेना ऋतवोऽभीष्टाः प्रीता भवन्ति, सजूरुषा आरुणीभिरित्यु,—षसमेव प्रीणाति, सजोषा अश्विना दꣳसोभिरित्य,—होरात्रे वा अश्विना, ऽहोरात्रे एवास्यैतेनाभीष्टे प्रीते भवतः, सजूः सूर एतशेनेति, सूर्यमेव प्रीणाति, सजूर्वैश्वानर इडया घृतेन स्वाहेति, सꣳवत्सरो वै वैश्वानरः, पशवा इडा, पशवो घृतꣳ, सꣳवत्सरा एवास्यैतेनु पशवोऽभीष्टाः प्रीता भवन्ति, दर्भस्तम्बे जुहोत्ये,—षा वा अस्यामृतचित्तन्,—रमृते वा एतदग्निश्चीयते, हिरण्यं निधाय जुहोत्य,—ग्निमत्येव जुहोत्यायतनवत्य,—न्धोऽध्वर्युः स्याद्यदनायतने जुहुयात्, स्वर्गाय वै लोकाय देवरथो युज्यते, कामाय मनुष्यर३थो, ऽग्निꣳ युनज्मि शवसा घृतेनेत्य,—ग्निꣳ वा एतद्युनक्ति, तेन युक्तेन स्वर्गं लोकं गछति, यत् सर्वाभिर्युञ्ज्याद्युक्तोऽस्य यज्ञः स्यादप्रतिष्ठिता आहुतयो, द्वाभ्यां नाभियुनक्त्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनुप्रतितिष्ठति, यज्ञꣳ यजमानस्तिसृभिर्युनक्ति, त्रिवृ३द्ध्यग्नि,—र्यावानेवाग्निस्तꣳ युनक्ति, तस्मिन् युङ्क्ते सर्वꣳ हव्यꣳ समाधीयते, पञ्चभिर्युनक्ति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, सꣳ वा एतमेतौ तपतो यश्चीयते यश्च वैश्वानरो, यदप्सुमतीभ्यां पुरस्ताद्यज्ञायज्ञियस्य संमृशति शान्त्या, एषा वै यज्ञस्य मात्रा यदग्निष्टोमो, भूम ३त्वेवास्यात्तु ऊर्ध्वं क्रियते ॥ ४ ॥ ४

यो वा अग्निꣳ योगा आगते न युङ्क्ते न युञ्जानेषु युङ्क्ते, ऽग्ने युक्ष्वा हि ये तवेत्य,—ग्निꣳ वा एतद्योगा आगते युङ्क्ते, युङ्क्ते युञ्जानेषु, यो वा अग्निꣳ विमोक आगते न विमुञ्चते न विमुञ्चमानेषु विमुञ्चते, वि ते मुञ्चामि रशनाꣳ वि रश्मीनित्य,—ग्निꣳ वा एतद्विमोक आगते विमुञ्चते, वि मुञ्चमानेषु मुञ्चते, यथा वै पुनराधेयमेवं पुनश्चिति,—र्यो वा आधेयेन ऋध्नोति पुनः

[ ५ ] तै.५,४,१०। काठ. २२,२। कपि. ३४।

स आधत्ते, ३योऽग्निं चिक्यानो मन्येत, वि स्या ऋध्यता इति, स एतां पुनश्चितिमुपदधीता,
—ऽपि प्रथमं चिन्वानश्चिन्वीता ऋद्ध्या, ऋध्नोत्येवा,—ऽथो मिथुनत्वाय, यां वा अग्निचिद-
निष्टका आहुतिं जुहोति स्रवति सा, तां स्रवन्तीं यज्ञोऽनुस्रवति, यज्ञं यजमानो,
यदेतां पुनश्चितिमुपदधात्याहुतीनां प्रतिष्ठित्यै, ताः प्रतितिष्ठन्तीर्यज्ञोऽनु प्रतितिष्ठति, यज्ञं
यजमानो, ऽष्टौपदधात्य,—ष्टाक्षरा गायत्री, गाय३त्रोऽग्नि,—र्यावानेवाग्निस्तं चिनुते,
ऽष्टौ लोकंपृणा उपधाय पुरीषेणाभ्यूहत्य,—ष्टाक्षरा गायत्री, ब्रह्म गायत्री, गायत्र्यैवैनं छन्दसा
ब्रह्मणा चिनुता, एकादश लोकंपृणा उपधाय पुरीषेणाभ्यूहत्यै,—कादशाक्षरा त्रिष्टुब् वीर्यं,
त्रिष्टुभैवैनं छन्दसा वीर्येण चिनुते, द्वादश लोकंपृणा उपधाय पुरीषेणाभ्यूहति, द्वादशाक्षरा
जगती, जागताः पशवो, जगत्यैवैनं छन्दसा पशुभिश्चिनुत, एषा वा अग्नेरुत्तरवेदि,—रेत-
दग्निरुत्तरवेदिमाश्रीयते, योऽस्याग्निः पुरा चितः स्यात्तमन्ववसाय यजेत, यथा वा इदं
दीप्यमाने भूयोऽभ्यादधात्येवं वावास्मिन्नेतदभिपूर्वं भूयस्तेजो दधाति, तदाहुः, कः श्रेयां-
सं विषुप्तं बोधयिष्यतीति, यद्यजुता आहुत्यैवैनं व्यर्धयाति, गृहान्वा एष कुरुते ३योऽग्निं
चिनुते, यद्वा अन्यतो विन्दते गृहांस्तदाहरति, य इष्ट्या वा पशुना वा सोमेन वा यजेत
योऽस्याग्निः पुरा चितः स्यात्तमन्ववसाय यजेत, यथा वा इदमन्यतो वित्त्वा गृहानाहरत्येवं तत्त-
दाहुः, पुनर्वा स्रुवा एतद्यज्ञे क्रियते, यत्रैव क्व च यजेत तदेता एकविंशतिमुपधाय यजेत
५
प्रतिष्ठित्यै, प्रतिष्ठा ह्येकविंश इति ॥ ५ ॥

समास्त्वाग्ना ऋतवो वर्धयन्त्विति, समाभिश्चैवैनमृतुभिश्च समिन्द्धे, सं दिव्येन दीदिहि
रोचनेनेति, ज्योतिष्मन्तमेवैनं चिनुते, विश्वा आभाहि प्रदिशश्चतस्रा इति, तस्मादग्निः
सर्वा दिशा आभात्य,—मुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चा, इत्यामयाविनः कुर्या,-
—न्मृत्युर्वै यमो, ब्रह्म बृहस्पति,—र्यावदेव ब्रह्म तेनैनं भिषज्यति, प्रत्यूहतामश्विना मृत्यु-
मस्मादित्य,—श्विनौ वै देवानां भिषजौ, ता अस्मान्मृत्युं प्रत्यूहता, उद्वयं तमसस्परीति,
पाप्मानमेव तमोऽपहत्य स्वर्गं लोकमभ्यारोहत्या,—हतो वै हैतनामनः सुव्रतेरापाष्ठेरग्नेश्चित्यस्य

[ ६ ] मै. २,१२,५—६ । काठ. २२,१ । वा. २७,१,९—१०;२०,२१;३५,१४;३८,२४ । काण्व. २९,१,९—१०;२२,६;३५,४७;३८,२४ । [ समास्त्वाग्ना० ( ०ग्न )। अथर्व. २,६,१ । अमुत्रभूयादध० । अथर्व. ७,५३,१ । तै. सं. ४,१,७,४; तै. ब्रा. २,४,४,९;६,६,४; अथर्व. ७,५३,७; उद्वयन्तमसस्परि स्वः० । ऋ. १,५०,१०; तै. आ. ६,३,२ ]

\　*

होतासीत्, तमब्रुवन्, या अप्सुमतीस्ता इच्छेति, तस्मै वा एता गन्धर्वाप्सरसः प्राब्रुवन्, यदप्सुमतीः सामिधेनीर्भवन्ति शान्त्यै, चतुर्विंꣳशतिमन्वाह, चतुर्विंꣳशत्यक्षरा वै गायत्री, गायत्री यज्ञमुखꣳ, यज्ञमुखमेवालब्धा,—ऽथो चतुर्विंꣳशतिर्वा अर्धमासाः सꣳवत्सर, एषा वा अस्थिता श्रीर्यत्सꣳवत्सरो, न वा एष श्रियेलयति, न हास्य श्रीरिलयति, गायत्रीरन्वाह, तेजो वै गायत्री ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमवरुन्द्धे, त्रिष्टुभोऽन्वाहौ,—जो वै वीर्यं त्रिष्टु,—वोज एव वीर्यमवरुन्द्धे, यद्गायत्र्युश्च त्रिष्टुभश्च भवन्ति तेनैव तदुभयमवरुन्द्धे, या आग्नेयीरनिरुक्तास्ताः काꣳर्या, अनिरुक्तमिव ꣳह्येतदव्यावृत्तꣳ, व्यावृतं पाप्मना भ्रातृव्येण गछति, ता अग्नीषोमीयस्य पशोः कुर्यात्, को हि देवक्षेत्रे द्विरभ्यारोक्ष्यतीति, तिस्रो रात्रीर्भृत्वाग्निश्चेतꣳव्या, इत्याहु,—स्त्रिपदा विराड्, विराजमेवाप्नोति षड्रात्रीर्भृत्वाग्निश्चेतꣳव्या, इत्याहुः, षड्वा ऋतवः सꣳवत्सरः, सꣳवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, दश रात्रीर्भृत्वाग्निश्चेतꣳव्या, इत्याहु,—र्दशाक्षरा विराड्, विराजमेवाप्नोति, द्वादश रात्रीर्भृत्वाग्निश्चेतꣳव्या, इत्याहु,—र्द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, चतुर्विंꣳशति रात्रीर्भृत्वाग्निश्चेतꣳव्या, इत्याहु,—श्चतुर्विंꣳशतिर्वा अर्धमासाः सꣳवत्सरः, सꣳवत्सरमनु विराडायत्ता, विराजमेवाप्नोति, मासं भृत्वाग्निश्चेतꣳव्या, इत्याहु,—र्मासश एव सꣳवत्सरमाप्नोत्य,—ष्टौ वा एतन्मासो वसवोऽबिभ्रु,—स्त इमं लोकमाजयन् गायत्री छन्दा, एकादश रुद्राꣳ,—स्तेऽन्तरिक्षं लोकमाजयꣳस्त्रिष्टुभं छन्दो, द्वादशादित्याꣳ,—स्तेऽमुं लोकमाजयन् जगतीं छन्द,—स्त आर्ध्नुव,—न्नृध्नोति य एवꣳ विद्वान्त्सꣳवत्सरमग्निं बिभर्ति, तस्मादाहुः, सꣳवत्सरभृत एवाग्निरित्यु,—थैता आप्रियः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एता आप्रीरपश्यत्, ताभिरात्मानमाप्रीणीता,—ऽग्निर्वै प्रजापति,—र्यदेता आप्रियो भवन्त्यग्निमेवैताभिर्यजमाना आप्रीणीते, लोमशꣳ वा एतच्छन्दः पशव्यमूनातिरिक्तं प्रजननाय, विराजो भवन्ति, विराड् वै सर्वाणि छन्दाꣳसि, सर्वाण्येवास्य छन्दाꣳस्युपहितानि भवन्ति, ता विश्वचितः कुर्यात्, प्राणा वा एता ज्यायसीरिव च कनीयसीरिव च भवन्ति, ज्यायाꣳस इव च ꣳहीमे कनीयाꣳस इव च प्राणाः, प्राणानेवात्मन् धत्ते ॥ ६ ॥ ६

यस्याग्निरुख्योऽनुगछति यथा पुत्रो जातः प्रमीयत एवं तद्, यद्यनुगछेत् तामेवोपां पुनः

[७] तै. ५,४,११। वा. ३,५,३७;७,२९;८,५३;२३,८;३६,३ । काण्व. ३,५,४५;९,५,३७;२५,९;३६,३ ।

परीन्धीते,—पा वा अग्नेर्योनिः, स्वादेवैना२ योनेः प्रजनयती,—श्वरो वा एषो प्रजानितो३र्योऽग्निं चिनुते ॥ ७

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीर्ये ते अग्ना इन्दवो या उ नाभयः ।
ताभिष्ट्वमुभयीभिः सꣳविदानः प्रजानꣳस्त३न्वेह निषीद ॥ ८

इति यदेषाद्रां योनिमति शान्त्यै, प्रजा वै कुलायं, पशवः कुलाय२, यत्कुलायिनीः प्रजात्यै, हविर्भूतो वा एष ३योऽग्निं चिनुते, ३योऽग्निं चित्वान्यस्य स्त्रियमुपैति यथा हविः स्कन्नमेवं२ स्याद्, यथा हविषे स्कन्नाय प्रायश्चित्तिमिछन्त्येवमस्मै प्रायश्चित्तिमिछेयु,—र्यद्युपेया-न्मैत्रावरुण्यामिक्षया यजेत, मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्नत्वाय, पशुर्वा अग्नि,—र्यो वै पशुं पुरस्तादुपचरति हिनस्ति वा एन२ स, तस्मात् पुरस्तात् प्रत्यश्चं नाक्रामति, तस्माद् पश्चात् प्राश्चमुपचरत्यात्मनोऽहिꣳसायै, यो वै यथावृत्तमग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते, या दक्षिणावृतस्ता दक्षिणत उपदधाति, याः सव्यावृतस्ता उत्तरत,—स्त्र्यालिखिताः पश्चात् प्राची-रुपदधाति, यथावृत्त२ वा एतदग्निं चिनुते यथारूपं प्रजाश्च ऋतवश्च कल्पन्ते, संसत्योऽग्निश्चेत३-व्या, इत्याहुः॥ भूर्भुवः स्वः॥ इति पुरस्तात् स्वयमातृणा, यावदेतद्वै वाचः सत्य२ संसत्यमेवाग्निं चिनुते, प्राणो वै स्वयमातृणा, ऽमृत२ हिरण्य२, यद्धिरण्येष्टकामुपधाय स्वयमातृणामुप-दधात्य,—मृत एवास्य प्राणान् दधाति, तेजोऽसि तेजो मे यछे,—ति हिरण्येष्टका उपदधात्ये,—ताभिर्वा इमे लोका विधृता, अथो एताभिरेवाग्निं चिनुत, इमे लोकाः प्रभान्ति, देवा असु-रान् हत्वा मृत्योरबिभयु,—स्ते छन्दाꣳस्यपश्य२,—स्तानि प्राविश२,—स्तेभ्यो यद्यदछदयत्तेना-त्मानमछादयन्त, तच्छन्दसां छन्दस्त्वं, चितिं चितिमुपधायाग्रेय्या धाम छन्दोऽभिमृशति, स्वामेव देवतामुपप्रविशत्यात्मनोऽहिꣳसायै ॥ श्येनचितिं चिन्वीत स्वर्गकामः, श्येनो वै भूत्वा गाय३त्र्यमुं लोकमपतत् स्वर्गस्य लोकस्य समष्ट्यै, रथचक्रचितिं चिन्वीत भ्रातृव्यवान्, रथचक्र२ वै वज्रं कृत्वा देवा असुरेभ्य उपप्रावर्तय२,—स्तेषा२ शततर्हमद२ह२,—स्तदेतामेव वज्रं कृत्वा यजमानो भ्रातृव्यायोपप्रवर्तयति, शततर्ह२ ह द२हति, प्रौगचितिं चिन्वीत भ्रातृव्यवा,—नुभयतो वै देवानसुराः परीयत्ता आसन्, पुरस्तादन्ये, पश्चादन्ये, तान्वा एतेन व्यनुदन्त, तद्भ्रातृव्यस्य वा एष विनोदो, द्रोणचितिं चिन्वीतान्नकामो, द्रोणेन वा अन्नमद्यते, ऽनुरूपेणैवान्नाद्यमवरुन्द्धे, पश्चाच्चरुर्भवत्यनुरूपत्वाय, श्मशानचितिं चिन्वीत यः

कामयेता,—ऽञ्जसा पितृलोकमुपेयामित्य,—ञ्जसा पितृलोकमुपैत्यु,—प चान्यं चिन्वीत ग्रामकामो, यथैवैतमुपाचिनोत्येवमस्मै ग्राममुपचिनोति, समूह्यं चिन्वीत पशुकामो, यथैवैतꣳ समूहत्येवमस्मै दिग्भ्यः पशून्त्समूहति ॥ ७ ॥ ९-१२

प्रजापतिर्वा एतमग्रेऽग्निमचिनुत ऋतुभिः सꣳवत्सरꣳ, वसन्तेन पुरस्तादचिनुत, ग्रीष्मेण दक्षिणं पक्षꣳ, वर्षाभिरुत्तरꣳ, शरदा पुच्छꣳ, हेमन्तेन मध्यं, ब्रह्मणैव पुरस्तादचिनुत, क्षत्रेण दक्षिणं पक्षꣳ, विशोत्तरं, पशुभिः पुच्छ,—माशया मध्य,—मेतावद्वा अस्ति, यावदेवास्ति तत् स्पृणोति, तदवरुन्द्धे, स्वर्गाय वै लोकायाग्निश्चीयते, वज्र एकादशिनी, यदेकादशिनीं मिनुयाद्वज्रः पुरस्तादवगृह्णीया,—दस्वर्ग्यः स्याद्, यन्न मिनुयादपशुः स्यादेकयूप, एकादश पशवो नियुञ्ज्या,—स्तेन पशव्या,—स्तेन स्वर्गो, यत्पक्षसंमितां मिनुयात् कनीयाꣳसꣳ यज्ञक्रतुमुपेयात् कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं, पापीयान्त्स्या,—दथ यद्वेदिसंमितां मिनोति ज्यायाꣳसं चिनुते ज्यायाꣳसमेव यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून् भूयोऽन्नाद्यꣳ, वसीयान् भवत्ये,—षा वा अग्नेरुत्तरवती नाम चिति,—रुत्तरमुत्तरꣳ श्वः श्वः श्रेयान् भवति य एवꣳ वेद, द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गच्छत्य,—ग्निꣳ वा गच्छत्यात्मानꣳ वा ॥ १३

रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु धारय ।
रुचꣳ विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ १४

इति यज्जुहोत्यात्मानꣳ वा एतदग्नेर्यशसार्पयती,—श्वरो वा एष दुश्चर्मा भवितो३र्योऽग्निमध्येति॥ १५

तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः ॥ १६

इति यज्जुहोति शान्तिर्वा एषाग्नेर्गुप्तिरात्मनो, वयो वा अग्नि,—स्तस्मादग्निचिता पक्षिणो नाशितव्यं नो अग्निविदा, यदश्नीयात्तमेवाश्नीयात्, स एनमार्तिं निनयेत्, प्रजापतिर्वा एतमग्रेऽग्निमचिनुत ज्यैष्ठ्यकामः, स ज्यैष्ठ्यं महिमानमगच्छ,—ज्ज्यैष्ठ्यं महिमानं गच्छति य एवꣳ विद्वानग्निं चिनुते, प्रजापतिः प्रजाः सृष्ट्वा ता अनुप्राविशत्, सोऽब्रवीद्, यो मेतः

[ ८ ] तै. ५,५,७ । काठ. २२,४ । कपि. ३५,१-२ । वा. १८,४८—४९;२१,२ । काण्व. २०,१८—१९;२३,२ ।
[ तत्त्वा यामि ब्रह्मणा० । ऋ. १,२४,११; तै. २,१,११,६ ]

संचिन्वन्नुदद्धुवत्सं इति, तं देवाः समाचिन्वꣳ,—स्त आर्ध्नुवꣳ,—स्तच्चित्यस्य चित्यत्वं, तद्य
एवꣳ विद्वानग्निं चिनोति प्रजापतिमेव संचिनोत्यृ,—ध्नोति, तस्मादाहुः, प्रजापतिचित एवा-
ग्निरिति ॥ ८ ॥ १७

देवेभ्यो वा अग्निं चिक्यानेभ्यो न व्यौच्छत्, तेऽग्ना आहुतिमजुहवु,—स्तुभ्यमग्रे व्युच्छ,
तथास्मभ्यꣳ विवत्स्यतीति, तयाग्नये व्यौच्छद्, व्यग्नया औच्छ,—न्नाहुत्यै व्यौच्छत्, तस्या
आहुत्यै यज्ञेन व्यौच्छद्, व्याहुत्या औच्छ,—न्न यज्ञाय व्यौच्छत्, तस्मै यज्ञाय दक्षिणया व्यौच्छद्,
वि यज्ञायौच्छन्न दक्षिणायै व्यौच्छत्, तस्यै दक्षिणायै ब्राह्मणेन व्यौच्छद्, वि दक्षिणाया औच्छन्न
ब्राह्मणाय व्यौच्छत्, तस्मै ब्राह्मणाय ब्रह्मणा व्यौच्छद्, वि ब्राह्मणायौच्छ,—न्न ब्रह्मणे व्यौच्छत्,
तस्मै ब्रह्मणे तपसा व्यौच्छ,—देता वै तपःपरार्धा व्युष्टयः, श्वोवसीयस्यस्मै व्युच्छति य एवꣳ
विद्वान् व्युष्टीरुपधत्ते, यो वै यथापूर्वꣳ व्युष्टीर्वेद यथापूर्वमस्मै व्युच्छत्यौ,—षसी वाव प्रथमा
व्युष्टिर्व्यैवा,—ऽडिति वा आहु,—र्यदौषस्युदेति, यद् व्युच्छति, यदग्निराधीयते, यत्सूर्य उदेति,
यद्धस्ता अवनेनिक्ते, यदश्नाति, यत् पिबत्ये,—ता वै यथापूर्वꣳ व्युष्टयो, यथापूर्वमस्मै
व्युच्छति य एवꣳ विद्वान् व्युष्टीरुपधत्ते ॥ ९ ॥ १८

यो वा अग्निमयोनिमनायतनं चिनुतेऽयोनिरनायतनो भवत्या,—पो वा अग्नेर्योनि,—र्यत् कुम्भेष्टका
उपदधाति योनिमन्तमेवायतनवन्तमग्निं चिनुते, योनिमानायतनवान् भवत्य,—धरसपत्नोऽग्निश्चेत-
व्या, इत्याहु,—रापो वा अग्नेः सपत्नो, यत् कुम्भेष्टका उपदधात्यधरसपत्नमेवाग्निं चिनुते,
ऽधरोऽस्मात् पाप्मा भवत्य,—धरः सपत्नः, शुग्वा अग्नि,—रापः शान्ति,—र्यत् कुम्भेष्टका उपदधाति
शान्त्यै, यत्कुम्भाश्च कुम्भ्यश्च तन्मिथुनꣳ, यद् द्वन्द्वं प्रजात्यै, द्वादशोपदधाति, द्वादश
मासाः सꣳवत्सरः, सꣳवत्सरमेवाप्त्वावरुन्द्धे, नैवारश्चरुस्त्रयोदशो भवत्य,—स्ति मासस्त्रयो-
दश,—स्तमेवैतेनाप्त्वावरुन्द्धे, पयसि भवति, यत्पयो, ग्राम्यं तेनान्नाद्यमवरुन्द्धे, यन्नीवा-
रा, आरण्यं तेन, तेनैवं तदुभयमवरुन्द्धे ॥ १० ॥ १९

[ १५३७ ]

॥ इत्युपरिकाण्डे वसोर्धारीयः चतुर्थः प्रपाठकः ॥ ४ ॥

अथ पञ्चमः प्रपाठकः ।

आ वा एष प्रजापतये वृश्चते यः शिर उपदधाति नैतुराण्यङ्गान्य,—स्थिचिदस्य श्मशानचिद्भव-
ति, यदेता पुरुषचितिमुपदधाति न प्रजापतया आवृश्चते, ऽनस्थिचिदस्याश्मशानचिद्भवति,
षट्त्रिꣳशतमेता उपदधाति, षट्त्रिꣳशदक्षरा बृहती, बार्हताः पशवो, बार्हतः पुरुषः,
पुरुषस्य प्रतिमोपधीयते, स ३ह्येष धीयतु, एष ह ३त्वेव यजमानोऽमुं लोकं नाति प्रमीयते
यस्यैता उपधीयन्ते ॥ १ ॥ १

अथैताः पश्चापश्चीनाः, शिथिर इव वा अग्निश्चित्यो, यत्पश्चापश्चीना उपदधात्य,—ग्ने-
धृत्या अशिथिरत्वाय, पञ्चोपदधाति, पाङ्क्तो यज्ञो, यात्रानेव यज्ञस्तमालब्ध, भूय-
स्कृदसि, वरिवस्कृदसीत्य,—ग्ना एव भूमानं दधाति, भूयान् प्रजया पशुभिर्भवत्य,—प्सुषदसि,
गृध्रसदसीति, वयो वा अग्निः, समिक्ष्यमेवैनꣳ वयः करोति, वयो भूत्वा स्वर्गं लोकमेति
यस्यैता उपधीयन्ते ॥ २ ॥ २

चितः स्थ परिचितः स्थेति, शर्कराः परिश्रयति, यच् शर्करा अपरिश्रित्य सिकता निर्वपे-
द्रेतः सिक्तं परासिच्येता,—ऽथ यच् शर्करा अपरिश्रित्य सिकता निर्वपति रेतसः सिक्तस्य परि-
गृहीत्यै ॥ ३ ॥ ३

वि वा एष यज्ञश्छिद्यते यदसꣳस्थितं पशुमुत्सृजन्ति, सꣳ ह स्म वा एतमाशोकेयः स्था-
पयत्या,—ज्येन सꣳस्थाप्यꣳ यज्ञस्य संतत्या अविच्छेदाय ॥ ४ ॥ ४

स्वर्गꣳ वा एष लोकमन्वारोहति ३योऽग्निं चिनुते, यदन्वारोहान् जुहोति स्वर्गमेवैनं लोकं
गमयित्वाथ कामं चरति ॥ ५ ॥ ५

[ १५४२ ]

॥ इत्युपरिकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

अथ षष्ठः प्रपाठकः ।

## अध्वरादीनां त्रयाणां विधिः ।

आग्नावैष्णवमेकादशकपालं निर्वपे,—दग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालब्धा,—ऽग्निर्वै यज्ञस्या३न्तोऽवस्ताद्, विष्णुः पुरस्ता,—दुभयतु एव यज्ञस्यान्ता आलब्ध, तदाहु,—र्न ऋतं इन्द्राय३ज्ञोऽस्त्विति, यदष्टाकपालस्तेनाग्नेयो, यत् त्रिकपालस्तेन वैष्णवो,

---

[ १ ] काठ. २२,१३ ।

यदेकादशकपालः संपद्यते तेनै३न्द्रो, ऽग्निर्वै यज्ञस्य पवित्रं, विष्णुर्यज्ञः, पवित्रपूतमेव यज्ञमालब्ध, मेधस्य वा एतद्यज्ञस्य रूपं यत्पुरोडाश,—स्तस्मात् पुरोडाश एव कार्य,—श्चरूं कुर्वन्ति, धेन्वा वै घृतं पयो, ऽनडुहस्तण्डुला,—स्तन्मिथुनं, मिथुनमेवास्य यज्ञमुखे दधाति, तेजो वै घृतं, तेजस एव प्रजायते, पुरुषो वा एष मेधायालभ्यते, पुरुषस्येव ३ह्येषा प्रतिमा, यत इव हिं रूपं तस्माच्चरुरेव का३र्यो, वेदिमति दीक्षते, विन्दा, इति वै वेदिमति दीक्षते, विन्दते ह वै यो वेदिमति दीक्षते, ऽथो यज्ञपथ एवादीक्षिष्ट, वेद्या वै देवा इममसुराणामविन्दत,—मामेव विन्दते यो वेदिमति दीक्षते, ऽथो यज्ञपथमेवालब्ध, प्राचीनवंशं कुर्वन्ति दिशो, यदिमां व्यकल्पयन्निमामेव देवेभ्योऽकल्पय,—न्निमां पितृभ्य, इमामसुरेभ्य, इमां मनुष्येभ्यो, देवतामेष उपैति यो दीक्षते, देवानामेव दिशमुपावर्तते, प्राचीनामेव दिशमुपावर्तते, ऽथो देवक्षेत्रमेव प्रावस्यति परिश्रयन्त्य,—न्तर्हितो वै देवात्क्षया-न्मानुषः क्षयो, मानुषादेवैनं क्षयादन्तर्दधत्य,—थो रक्षसामनन्ववायायै,—ति वा एषोऽस्मा-ल्लोकाद्यो दीक्षते, जनं ह्येति, देवलोकमभ्यारोहति, परिश्रयन्तोऽतिरोकान्कुर्वन्ति, तेना-स्माल्लोकान्नैति, तेनास्मिंल्लोके धृतः पुरस्तात् प्रायणं कुर्यात् स्वर्गकामस्या,—ऽसौ वा आदित्यः स्वर्गो लो३को, ऽमुष्यैनमादित्यस्य सामक्षं गमयति, दक्षिणतः प्रायणं कुर्याद्यं कामयेत, पितृलोकं ऋध्नुयादित्ये,—षा वै पितॄणां दिक्, पितृलोक एव ऋध्नोति, पश्चात् प्रायणं कुर्यात् प्रजाकामस्य, पश्चाद्धि रेतो धीयते, रेतो दीक्षितो, रेतोऽस्मिन्दधात्यु,—त्तरतः प्रायणं कुर्याद्यं कामयेत, मनुष्यलोकं ऋध्नुयादित्ये,—षा वै मनुष्याणां दिङ्, मनुष्यलोक एव ऋध्नोत्यु,—त्तरतः पुरस्तात् प्रायणं कुर्याद्यं कामयेतो,—भयोर्लोकयोर्ऋध्नुयादित्यु,—भयोर्वा एतल्लोकयो,—रुभयोरेव लोकयोर्ऋध्नोति, सर्वतः प्रायणं कुर्याद्यं कामयेत, सर्वासु दिक्ष्वित्यृध्नुयादिति, सर्वासु दिक्ष्वित्यृध्नोति ॥ १ ॥ १

केशश्मश्रु वपते, दतो धावते, नखान्निकृन्तते, स्नाति, मृता वा एषा त्वं,—गमेध्यं वा अस्यैतदात्मनि शमलं तदेवापहते, मेध्य एव मेधमुपैत्य,—प्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोक-मायन्, यदप्सु स्नाति तामेव दीक्षामालभते, ऽथ यदपोऽवभृथमभ्यवैति तां वा एतद्दीक्षां पुन-रप्सु प्रवेशयत्यो,—षधे त्रायस्वैन,—मित्याह त्रात्या एव, स्वधिते मैनं हिंसीरिति, वज्रो वै

[ २ ] मै. १,२,१ । तै. ६,१,१। काठ. २२,१३; २३,१। कपि. ३५,७। वा. ४,१-२; ५,४२; ६,१५ । काण्व. ४,२-४; ५,५४; ६,२० ।

स्वधितिः, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—र्यत्तृणमन्तर्दधाति यजमानस्याहिꣳसायै,
देवश्रुदिमान् प्रवपा इति, देवश्रु३र्ह्येतान् प्रवपते, स्वस्त्युत्तरं अशीयेति, स्व३स्त्ययस्य यज्ञ-
स्योदृचमशीये,—ति वा एतदाहा,—ऽऽपो मा मातरः सूदयन्त्वित्या,—पो हि यज्ञो, घृतेन मा
घृतप्वः पुनन्त्विति, देवताभिरेवात्मानं पावयते, विश्वꣳ हि रिप्रं प्रवहन्तु देवीरिति, यदेवास्य
रिप्रममेध्यमात्मनि शमलं तदस्मादधि प्रवहन्त्यु,—दिदाभ्यः शुचिरा पूत एमीति, शुचिरेवाभ्यो
यज्ञियो मेध्यः पूत उदेति, हविर्वै दीक्षितो, यदा वै हविर्यजुषा प्रोक्षत्यथ हविर्भवति,
यद्यजुषा स्नपयति हविरेवैनमक,—रश्नाति, प्राणा वा अशनं, प्राणानेवात्मन्धित्वा दीक्षते,
सुषिरो वै पुरुषः, स वै तर्ह्येव सर्वो यर्ह्याशितो, यदाशितो भवति मेध्य एव मेधमुपैति,
यथा वा इह दीक्षित एवꣳ वा ए३षोऽमुष्मिंल्लोक एव वा अत्याशितस्य तिष्ठति, तस्मान्नात्या-
शितेन भवित३व्यं, तन्न सूक्ष्यं,—माशितेनैव भवित३व्यꣳ, यथैव कनीयः कनीयोऽश्नीया-
देवमश्नीयाद्, यद्धि दीक्षितः सन् कनीयोऽश्नाति तेन दीक्षित आङ्क्ते, ऽभ्युङ्क्ते, वासः
परिधत्त, एता वै पुरुषस्य त३न्वः, सतनूरेव मेध्यमुपैति, नवनीतेनाभ्युङ्क्ते, घृतं देवाना,—
मायुतं मनुष्याणां, निष्पक्वं गन्धर्वाणाꣳ, स्वयꣳविलीनं पितृणाꣳ, सर्वदेव३त्यꣳ वा एतत्,
तस्मान्नवनीतेनाभ्युङ्क्ते, दर्भपिञ्जूलाभ्याꣳ समायौति, तत्स्विदभ्यञ्जनमक,—रथो अ३भ्येवैतद्
धारयति मेध्यत्वाय, महीनां पयोऽसीत्या,—ह, महीनाꣳ ह्येतत्पयो, ऽपामोषधीनाꣳ रसा
इत्य,—पाꣳ ह्येष ओषधीनाꣳ रसो, वर्चोधा असि, वर्चो मे धेहीत्याशिषमेवाशास्ते ॥२॥ २

प्रस्वाङ्क्ते प्रजात्या, ईषीकयाङ्क्ते, शल३ल्या हि मनुष्या आञ्जते, सतूलयाङ्क्ते,
ऽपतूलया हि मनुष्या आञ्जते, दक्षिणं पूर्वमाङ्क्ते, सव्यꣳ हि पूर्वं मनुष्या आञ्जते,
त्रिरन्यत्त्रिरन्यदाङ्क्ते, ऽपरिमितꣳ हि मनुष्या आञ्जते, न पुनर्निषेचयति, पुनरावर्तꣳ हि
मनुष्या आञ्जता, इन्द्रो वै वृत्रमहꣳ,—स्तस्य कनीनिका परापतत्, सा त्रिककुभमगछत्, तदा-
ञ्जनं त्रैककुभमाङ्क्ते, सत्यꣳ वै चक्षु,—र्नैव वाचे श्रद्दधाति, सत्यमेवालभ्य दीक्षामुपैत्य,—
न्तरहं त्वया द्वेषो अन्तरारातीर्दधे महता पर्वतेनेति, पर्वतेन वा एतद् द्वेषोऽरातीरन्तर्धत्ते,
चक्षुःपा असि, चक्षुर्मे पाहीत्या,—शिषमेवाशास्त, ऊर्ध्वं चावाञ्चं च पावयत्य,—र्ध्वश्च ह्ययम-
वाङ् च प्राणो, यं द्विष्यात्तमक्षण्या पावयेत्,. प्राणानस्य मोहयति, प्रमायुको भवति,

---

[ ३ ] मै. १,२,१ । तै. ६,१,१ । काठ. २३,१ । कपि. ३५,७। वा. २,१६;१४,१७;१,१२,३१;४,४;१०,६। कण्व. २, ३३;१५,१७;१,१६,४८;४,५;११,१३ । [ चक्षुःपा असि० ( चक्षुर० ) ।अथर्व. २,१७,६ ]

चित्पतिस्त्वा पुनात्वित्याह, यज्ञो वै चित्पतिः, वाचस्पतिस्त्वा पुनात्वित्याह, वाचस्पतिरेवैनꣳ यज्ञाय पावयति, देवस्त्वा सविता पुनात्वित्याह, सवितृप्रसूत एवैनाभिर्देवताभिर्मेधायात्मानं पावयते, ऽच्छिद्रेण पवित्रेणेत्याह,—तद्वा अच्छिद्रं पवित्रꣳ यत्सूर्यस्य रश्मयो, ऽच्छिद्रेणैवैनं पवित्रेण पुनाति, तस्य ते पवित्रपते पवित्रेणेत्याह, यज्ञो वै पवित्रपतिः,—र्यज्ञाय खलु वा एष कर्मात्मानं पावयते ॥ यज्ञꣳ शकेयम्॥ इतीन्द्रो वै वृत्रमहन्त्स्वघ्नुहꣳ,—स्तासाꣳ यद्यज्ञियं मेध्यमासीत्तदुदक्रामत्, ता इमा ओषधयोऽभवꣳ,—स्तासाꣳ वा एतत्तेजो यद्दर्भा, एता वै शुष्का आपो, यद्देवासाꣳस्तेजस्तदवरुन्द्धे, त्रयीर्वा आपो, दिव्याः पार्थिवाः समुद्रिया,—स्ताः सर्वा दर्भा विवस्थैत्, तस्माद्दर्भः पवित्रं, द्वाभ्यां पावयति, द्वे पवित्रे, द्विपाद्यजमानो, यावानेवास्यात्मा तं पावयति, त्रिः पावयति, त्रिषत्या हि देवा, अथो त्रयो वा इमे प्राणाः, प्राणोऽपानो व्यानो, यावानेवास्यात्मा तं पावयति, सप्तभिः पावयति, सप्त वै छन्दाꣳसि, छन्दोभिरेवैनं पावयत्य,—थो ब्रह्म वै छन्दाꣳसि, ब्रह्मणैवैनं पावयत्यै,—कविꣳशत्या पावयति, दश हस्त्या अङ्गुलयो दश पाद्या, आत्मैकविꣳशो, यावानेवास्यात्मा तं पावयति, त्रया वै नैर्ऋता, अक्षाः स्त्रियः स्वप्नो, यद्दीक्षते तेनाक्षैश्च स्त्रीभिश्च व्यावर्तते, यां प्रथमां दीक्षितो रात्रीं जागर्ति तया स्वप्नेन व्यावर्तते, यां प्रथमां दीक्षितो वसति यज्ञं तयावरुन्द्धे, याꣳ सोमे क्रीते प्रजां तया, याꣳ श्वःसुत्यया पशूꣳस्तया ॥ ३ ॥ ३-८

आकूत्यै प्रयुजे ऽग्नये स्वाहेत्या,—कूत्या वा आकूतिर्यक्ष्यते स्य इति, प्रयुजः खलु वा एनꣳ यज्ञाय प्रयुञ्जते, मेधायै मनसे ऽग्नये स्वाहेत्याह, मेधया हि मनसा यज्ञमश्नुते, दीक्षायै तपसे ऽग्नये स्वाहेति, दीक्षया हि तपसा यज्ञमश्नुते, सरस्वत्यै पूष्णे ऽग्नये स्वाहेति, वाग्वै सरस्वती, वाचा व्याहरति, यक्ष्यते स्य इति, पूषा खलु वा एनꣳ यज्ञं प्रापयिष्यन्नेनमपूपुप,—दापो देवीर्बृहतीर्विश्वशंभुवा इत्या,—पो हि यज्ञो, द्यावापृथिवी उरो अन्तरिक्षेति, द्यावापृथिवी वा अन्वन्तरिक्षꣳ यज्ञ उपश्रित,—स्तत एव यज्ञमालभ्य, बृहस्पतिर्नो हविषा वृधात्विति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणा वा एतत् पुरस्तात् सर्वान् कामानाप्त्वा दीक्षामालभते,—सत्र वा अस्य यज्ञः श्रितो यत्र यत्रोपश्रितस्ततस्ततो वा एतत् सर्वं ब्रह्मणा यज्ञꣳ संभृत्यालभ्य, न वा एकाहुतिर्दीक्षितं करोति, यदेतानि जुहोति द्वितीयत्वाय, प्रजापतिर्वै यत्किंच मनसा-

[ ४ ] मै. १,२,२। तै. ६,१,२। काठ. २३,२। क.पि. ३५,८। वा. ४,७। काण्व. ४,८।

❀

दीधेत्तदाधीतयजुर्भिरेवाप्नोत्, तदाधीतयजुषामाधीतयजुष्ट्वं, तद्य एवं विद्वानाधीतयजूंषि
जुहोति यदेव किंच मनसा दीध्यञ्जुहोति तदाप्नोत्येते वै यज्ञस्य संभारा, एष ह त्वेव
संभृतसंभारेण यज्ञेन यजते यस्यैतानि हूयन्त, एतद्ध स्म वा आहारुण औपवेशिः, किमु स
यज्ञेन यजेत यो यज्ञस्य संभारान्न विद्यादिति, पञ्चभिर्जुहोति, पाङ्क्तो यज्ञो, यावानेव
यज्ञस्तमालब्ध, षड्भिर्जुहोति, षड्वा ऋतव, ऋतुष्वेव प्रतितिष्ठति, यज्ञो वै सृष्टः, प्र
सामाम्लिनात्, प्र यजु,—स्तं वा ऋगेवायच्छ,—दैका वा एनमृगयच्छद्, द्वादश यजूंषि,
नव सामानि, तस्मान्नवभिर्बहिष्पवमाने स्तुवते, नव ह्येनं सामान्ययच्छं,—स्तस्माद्वात्संब-
न्धविदो द्वादशभिरौद्ग्रभणं जुह्वति, द्वादश ह्येनं यजूंष्यायच्छ,—न्नेतर्हि खलु वा एष सृज्यते
यर्हि दीक्षते, यदृचौद्ग्रभणं जुहोति यज्ञं वा एतत् सृष्टमृचायच्छति, तस्मादारुणिविद् ऋचौ-
द्ग्रभणं जुह्वत्ये,—का नह्येमृगयच्छत् ॥ ४ ॥ ६

यज्ञो वै प्रजापतिः, प्राजापत्यमेतच्छन्दो यदनुष्टुब्, यदनुष्टुभा जुहोति स्वेनैवैनं छन्दसा-
वरुन्द्ध, एकया जुहोत्ये,—को हि प्रजापति,—रनिरुक्तया जुहोत्य,—निरुक्तो हि प्रजापतिः,
पूर्णया जुहोति, पूर्णो हि प्रजापति,—र्यदूनया जुहुयाद्भ्रातृव्याय लोकमुच् शिंषे,—दथ यत्पूर्णया
जुहोति न भ्रातृव्याय लोकमुच् शिंषत्यू,—र्जो वा एतद्रूपं यत् पूर्णं, यत् पूर्णया जुहोति
यज्ञे वा एतदूर्जं दधाति, विश्वो देवस्य नेतु,—रिति सावित्रं, मर्तो वुरीत सख्य,—मिति
पितृदेवत्यं, विश्वो राय इषुध्यती,—ति वैश्वदेवं, द्युम्नं वृणीते,—ति बार्हस्पत्यं,
पुष्यसा, इति पौष्णं, सारस्वतः स्वाहाकारः, सर्वदेवत्या वा एषा ऋक्, तस्मादेषैका
सत्यौद्ग्रभणं परिबभूव, सर्वाभ्यो देवताभ्यो यज्ञ आलभ्या, इत्याहुः, सर्वदेवत्या वा
एषा ऋग्, यदेतयर्चौद्ग्रभणं जुहोति सर्वाभ्यो वा एतद्देवताभ्यो यज्ञमालभते, ऽनुष्टुभो वा
एतस्याः सत्यास्त्रीण्यष्टाक्षराणि पदान्येकं सप्ताक्षरं, यत्सप्ताक्षरं तस्य चत्वार्यक्षराण्येकस्मिन्
पद उपयन्ति, त्रीण्येकस्मिन्, यत्र चत्वार्युपयन्ति सा जगती, यत्र त्रीणि सा त्रिष्टुब्,
यदष्टाक्षरं तेन गायत्री, यदनुष्टुप्तेनानुष्टुप्, सर्वैरेवास्य छन्दोभिर्हुतं भवति, छन्दःप्रतिष्ठानो
वै यज्ञ,—श्छन्दःसु वावास्यैतद्यज्ञं प्रतिष्ठापयामकः, स्वाहाकारेण खलु वा एषा पङ्क्तिः,
पाङ्क्तो यज्ञः पङ्क्तिप्रायणः पङ्क्त्युदयनः, पङ्क्तिप्रायणमेवास्य यज्ञं पङ्क्त्युदयनमक,—रथो

---

[ ५ ] मै. १,२,२ । तै. ६,१,२ । काठ. २३,२ । कपि. ३५,८ । वा. ४,८;११,६७;२२,२१ । क.ण्व. ४,९;१२,६८;२४,
२९ । [ विश्वो देवस्य०... स्वाहा । ऋ. ५,५०,१; तै. सं. १,२,२,१;४.१,९,१ ]

वाग्वै छन्दांꣳसि, वाचꣳ वा एतन्मध्यत आप्त्वावरुन्द्धे, तस्मादियꣳ वाङ् मध्यतो वदति,
मध्यतो ३हीयꣳ वाक्, प्रजापतिर्वै स्वां दुहितरमभ्यध्यैदुषसं, तस्य रेतः परापतत्, ते देवा
अभिसमगच्छन्त, तस्माद्दीक्षितो न ददाति, न पचत्य,—थैनमभिसंगच्छन्ते, तदुदगृभ्णꣳ,-
—स्तदौद्ग्रभणस्यौद्ग्रभणत्वं, तेनु यज्ञमतन्वन्त, यज्ञो यदग्रे व्यभुवत् स त्रेधा व्यभवत्, स वा
ऋ३क्ष्वेव तृतीयेनाश्रयत, सामसु तृतीयेन, यजुःषु तृतीयेन, या वा अस्य प्रिया तनूरासीत्
तया यजुरश्रयतो,—च्चैर्ऋचा क्रियत, उच्चैः साम्नो,—पांꣳशु यजुषा, यज्ञस्य ह्यत्र प्रिया तनू,-
—र्यद्यजुषोच्चैः कुर्याद्यज्ञस्य प्रियां तन्वमुद्धृतां कुर्या,—दब्रह्मवर्चसी स्यान्नग्रंभावुकः ॥ ५ ॥ ७
आहिताग्निर्वा एष सन्नाग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजते, तद्या आहुतिभाजो देवतास्ता
अनुध्यायिनीः करोति, कर्शयत आत्मानं, तेनैवास्य तद्धुतं भवति, देवा असुरान् हत्वेभ्यो
लोकेभ्यः प्राणुदन्त, तेषामसवो मनु३ष्यान् प्राविशꣳ,—स्तदिदꣳ रिप्रं पुरुषेऽन्तं,—रथो कृष्णमिव
चक्षुष्यन्तं,—स्तन्नाश्नीया,—दसुर्यमेवापहते, यदा वै पुरुषे न किंचनान्तर्भवति, यदास्य कृष्णं
चक्षुषोर्नश्यत्य,—थ मेध्यो, यदि कुर्यान्नक्तं कुर्या,—दसु३र्यो वै रात्रि,—रसूर्यमेवासूर्यं क्रियते,
वाचꣳ वा एतद्दीक्षयन्ती,—ति ह स्माहारुण औपवेशि,—र्य उताज्ञानोऽभ्यज्ञानोऽथ दीक्षितवादꣳ
वदति स वाव दीक्षित इति, सायं प्रातर्वै मनुष्याणां देवहितमशनमतिनीय सायमशनमतिनीय
प्रातरशनꣳ व्रतꣳ व्रतयति, मानुषस्य व्यावृत्त्या, अदन्ती,—ति वै गा आहु,—रश्नन्ती,—ति
मनुष्यान्, जुहुधी,—ति देवेभ्यो, ऽथवा एतमाहुः॥ व्रतमुपेहि व्रत्य॥ इति, व्रतꣳ ३ह्येतस्य,
व्रतेन यज्ञः संततो, व्रतेनैव यज्ञꣳ संतनोत्य,—भ्यर्धो वा ऋक्सामे यज्ञादास्तां, तयोर्यौ
महिमाना आस्तां ता अपिनिधाय यज्ञमुपावर्तेतां, तौ महिमाना अहोरात्रे अभवतां, तयोर्वा
एतद्रूपꣳ यत् कृष्णाजिनस्य, यच्च् शुक्लं तदह्नो रूपꣳ, यत् कृष्णं तद्रात्रे,—स्तौ वा एतन्म-
हिमाना अन्वारभते संपारणाय, सं मा पारयता इत्य,—होरात्रे मिथुनꣳ समभवतां, तयोस्ते-
जोऽपाक्रामत्, तत् कृष्णं प्राविशत्, तद्वा एतदुन्वारभते, द्यावापृथिवी मिथुनꣳ समभवतां,
तयोर्वी३र्यमपाक्रामत्, तत् कृष्णं प्राविशत्, तद्वा एतदुन्वारभते, यथा वा इदं नाव्रं पारं
तरिष्यन्नारोहत्येवꣳ वा एतदृक्सामे आरुक्षत्, ते एनमा यज्ञस्योदृचः संपारयतो, यतो वै
लोमानि कृष्णाजिनस्य ततो यज्ञो, यतो यज्ञस्ततो देवता, यद्बहिर्लोमं पर्यूर्णुवीतान्तर्हितो

---

[ ६ ] मै. १,२,२ । तै. ६,१,३ । काठ. २३,३ । कपि. ३५,८ । वा. ४,९—१०;३,६३;१८,५३;१९,७;२०,१;३६,२१;३७,२०;३८,१६। काण्व. ४,१०-१३;२०,२३;२१,६,९३;३६,२१;३७,१९;३८,१६ ।

दीक्षितो यज्ञास्याद्, यदन्तर्लोममन्तर्हितो यज्ञो देवताभ्यो, द्वे विषूची प्रतिमुञ्चेद्, अनन्तर्हितो दीक्षितो यज्ञाद्भवत्य, नन्तर्हितो यज्ञो देवताभ्यो, यद्येक्कं स्यादन्तं प्रतिमुञ्चेत्, तेनैव तदुभयमाप्नोति, हविर्वै दीक्षितो, यदन्यत्र कृष्णाजिनादासीत यथा हविः स्कन्नमेवं स्याद्, यथा हविषे स्कन्नाय प्रायश्चित्तिमिछन्त्येवमस्मै प्रायश्चित्तिमिछेयु, श्छन्दाꣳसि च वा एषं देवताश्चाभ्यारोहति, तान्येनमीश्वराणि प्रतिनुदो, यदाह, नमस्ते अस्तु, मा मा हिꣳसीरिति, नमस्कारो वा एषोऽप्रतिनोदाय, देवता वै यज्ञस्य शर्म, यज्ञो यजमानस्य, यदाह, विष्णोः शर्मासि, शर्म मे यछेति, देवता वा एतद्यज्ञस्य शर्माक्, यज्ञं यजमानस्य, प्रोर्णुते, प्रावृत इव हिं दीक्षितो, ऽथो एतद्धिव हिं दीक्षितस्य रूपं यत् प्रावृतं, तस्मात् प्रोर्णुते, वासः परिधत्ते, सर्वदेवत्यं वै वासः, सर्वाभिर्वा एतद्देवताभिरात्मानं परिश्रयन्ति ॥ ६ ॥ ८-१०

यज्ञस्य वै सृष्टस्योल्बमन्वलम्बत तद्वासः क्षौममभवत्, तस्मात् क्षौमेण दीक्षयन्ति यज्ञस्य सयोनित्वाय, प्राचीनमात्रा पत्नी दीक्षयन्ती, न्द्रस्य वै प्राचीनमात्रे, न्द्रियं स्त्रियाः प्रजा, यत् प्राचीनमात्रा पत्नी दीक्षयन्तीन्द्रियमस्यां दधाति, योनिर्वै दीक्षितस्य दीक्षितविमितं, जरायु कृष्णाजिनं, मुल्वं दीक्षितवासो, नाभिर्मेखला, गर्भो दीक्षितः, स्वं वा एतद्योनिं दीक्षितं आप्नुयेत्, तस्माद्दीक्षितेन दीक्षितविमितान्नानृतुभिः क्रम्यु, मेषं ह्येतस्य योनि, रेतो ह्येषोऽधि प्रजायते गर्भो दीक्षितो, यद्दतं आविःकुर्वीत दत्वन्तो गर्भा जायेरन्, यदनृतु स्मयेत तेजोऽस्य परापातुकं स्यात्, तस्मान्नानृतु स्मेतव्यं तेजसोऽपरापाताया, ऽजातो वै पुरुषः, स वै यज्ञेनैव जायते, स वै तर्ह्येव जायते यर्हि दः सोमे क्रीते प्रोर्णुता, इतोऽग्रे प्रोर्णुते, ऽथो ह्यग्रे पुरुषो जायते, स वै तर्ह्येव सर्वो जायते यर्ह्युदोऽपोऽवभृथमभ्यवैति, तर्हि स तस्मात् सर्वो निर्मुच्यते, त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत, यत् त्रिवृन्मेखला भवति प्रजननाय, त्रिवृद्धै वज्र उदरं वृत्रः पाप्मा क्षुद् भ्रातृव्यः पुरुषस्य, यन्मेखला पर्यस्यते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, वज्रमेवास्मै प्रहरति, स्तृणुत एवा, ऽङ्गिरसो वै स्वर्यन्तो यत्र मेखलाः संन्यास्यंस्ततः शरोऽजायत, तस्माच्छरमय्यू, र्गर्वा ओषधया, ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, योक्त्रेण

---

[ नमस्ते अस्तु । अथर्व. १,१३,१; ११,४,२ ]

[ ७ ] तै. ६,१,३ । काठ. २३,३—४ । कपि. ३६,१ ।

पत्नी संनह्यते, मेखलया दीक्षितो, ऽथो मिथुनत्वायो,—र्ध्वꣳ वै पुरुषस्य नाभ्यै मेध्य,—मवा-
चीनममेध्यꣳ, यन्मेखलां पर्यस्यते मेध्यस्य चामेध्यस्य च विधृत्यै, देवताभ्यो वा एष मेधा-
यात्मानमालभते यो दीक्षते, वध्नीत इव वा एतदात्मानꣳ यन्मेखलां पर्यस्यते, तस्माद्वा
एतस्यान्नमन्नाद्यं,—मार्त इव ३ह्येष बद्धं,—स्तस्माद्धु बद्धस्यान्नमन्नाद्यꣳ, यथा वा इह गरगीरेवꣳ
वा ए३षोऽमुष्मिँल्लोके यो दीक्षितस्यान्नमत्ति, यज्ञेन ३त्वेवास्य तता उन्मुक्ति,—र्हविर्वै दीक्षितो,
यदस्य जुहुयात्तमेव जुहुयात्, प्रमायुकः स्यात्, सर्वाभ्यो वा एष देवताभ्या आप्यायते यो
दीक्षते, यदस्य जुहुयाद्यज्ञमस्य विदुह्या,—दुपधीतोऽस्य यज्ञः स्यात्, तꣳ वा एतदागते
काले सर्वꣳ संꣳस्फीतꣳ यज्ञं देवताभ्यो दुहेत्, त्रेधा वा एतस्य पाप्मानꣳ विभजन्ते यो
दीक्षते, ३योऽस्यान्नमत्ति स तृतीयꣳ, योऽस्याश्लीलं कीर्तयति स तृतीयꣳ, या एनं पिपी-
लिका दशन्ति तास्तृतीयं, तस्माद्वा एतस्यान्नमन्नाद्यं, तस्मादस्याश्लीलं न कीर्तयित३व्यं,
तस्माद्दीक्षितवासोऽभर्तव्यं,—मत्र हि ताः पिपीलिका या एनं दशन्ति ॥ ७ ॥ ११

दक्षिणा वै देवेष्वासीद्, यज्ञोऽसुरेषु, तां दक्षिणाꣳ य३ज्ञोऽभ्युकामयत, तामभिपर्या-
वर्तत, ताꣳ समभवत्, स इन्द्रोऽवेद्, यो वा अस्माद्योनेः संभविष्यति स इदं भविष्यतीति
तामिन्द्रः प्राविशत्, तता इन्द्रः समभवत्, तता इन्द्रोऽजायत, स जायमानोऽवेद्, यो
वा अस्माद्योनेरन्यो मत्संभविष्यति मादृक्संभविष्यतीति, तया सहोपवेष्टयन्नजायत, यन्न्यवेष्टय-
त्तस्मान्निवेष्टिता, यन्निवेष्टयमाना श्यावाभवत् तस्मात् कृष्णे,—न्द्रं च वा एष प्रेप्सति दक्षिणां
चै—न्द्रस्य च खलु वा एतद्योनिमालभ्य दक्षिणायाश्चात्मान,—मथो सयोनिमेव यज्ञमालभते,
कृषिꣳ सुसस्यामुत्कृषा इति, विषाणया भूम्यामुपहन्ति, कृषिमेवास्य सस्येन समर्धयति,
यजुषा कण्डूयते, यजुषा हि मनुष्याः कण्डूयन्ते व्यावृत्त्यै, यजुषा कण्डूयते, तस्मात् प्रजा
अपामंभविष्णवः, पामंभविष्णवः प्रजाः स्युर्यदयजुषा कण्डूयेत, सुपिप्पला ओषधीस्कृधी,—
ति, शिरः कण्डूयता, ओषधीरेव फलं ग्राहयति, तस्मादोषधयः शीर्षन् फलं गृह्णन्ति,
वाग्वै सृष्टा चतुर्धा व्यभवत्, ततो या अत्यरिच्यत सा वनस्पतीन् प्राविशत्, सैषा
याक्षे या दुन्दुभौ या तूणवे या वीणायां दण्डं प्रयच्छति तामेवास्मै वाचं प्रयच्छत्यं,—
थो वज्रमेवास्मै प्रयच्छति गोपीथाया,—ऽस्यदण्डं प्रयच्छत्ये,—तावती ३हीयꣳ वाग्यदुत्यं,—थो

[ ८ ] मै. १,२,२ । तै. ६,१,३-४ । काठ. २३,४—५ । कपि. ३६,१—२ । वा. २१,२९-४७;२३,६४;२८,१—११,
२४—३४;४,६ । काण्व. २३,३०—४६;२५,६६;३०,१—११,२४,—३४;४,७ ।

एतावती हि वाचो वीर्यं क्रियते, यद्वर्षीयाꣳसं प्रयच्छेत् स्वाꣳ वाचं मैत्रावरुणो विभजेत्, ताꣳ श्वःसुत्यायां मैत्रावरुणाय प्रयच्छति, ताꣳ श्वो भूते मैत्रावरुण ऋत्विग्भ्यो विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज ॥ इति सा सह वषट्कारेणाहवनीयं गच्छति, तां पुरोऽध्वर्यु-र्विभजति ॥ होतर्यज पोतर्यज नेष्टर्यज ॥ इत्यध्वर्युः पुरो वाचꣳ विभजति, मैत्रावरुणः पश्चात् ॥ स्वाहा यज्ञं मनसा ॥ इति मनसा यज्ञमभिगच्छन्ति, तत एव यज्ञमालभ्य, स्वाहा दिवः स्वाहा पृथिव्या इति, द्यावापृथिवी वा अन्वन्तरिक्षꣳ यज्ञ उपश्रित,—स्तत एव यज्ञमालभ्य, स्वाहोरोरन्तरिक्षादित्य,—न्तरिक्षꣳ वै यज्ञो, यदि वातो यदि वा पशवस्तत एव यज्ञमालभ्य, स्वाहा वातात्परिगृह्णामि स्वाहेत्य,—यꣳ वाव यः पवत एष यज्ञस्तमेवालभ्य, वाचꣳ यच्छति, यज्ञꣳ वा एतद्यच्छति, यद्वाचꣳ विसृजेद्यज्ञꣳ विसृजेत्, तदाहुः, पुनर्दीक्षयित्वा वाग्यन्तव्येति, यत् पुनर्दीक्षयेदाहुतीरतिरेचयेद्, वैष्णवीमनूच्य वाग्यन्त३व्या, विष्णुर्वै यज्ञो, यज्ञमेवालभ्या,—ऽऽग्नावैष्णवीमनूच्य वाग्यन्त३व्या, ऽग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालभ्य, सारस्वतीमनूच्य वाग्यन्त३व्या, वाग्वै सरस्वती, वाचो यज्ञः संततो, वाचैव यज्ञꣳ संतनोति, बार्हस्पत्यामनूच्य वाग्यन्त३व्या, ब्रह्म वै बृहस्पति,—र्ब्रह्मणा यज्ञः सꣳहितो, ब्रह्मणैव यज्ञꣳ संदधाति ॥ ८ ॥ १२-१८

दीक्षि३तोऽयमसा आमुष्यायणः ॥ इत्युद्वदति वा आह, प्रियो वै देवानां दीक्षितो, देवेभ्य एवैनं प्राह, त्रिराह, त्रिषत्या हि देवा, अथो त्रयो वा इमे लोका, एभ्य एवैनं लोकेभ्य आवेदयति, तस्मादीक्षितं दूराच् शृण्वन्त्ये,—भ्यो ह्येनं लोकेभ्य आवेदयति, नक्षत्रं दृष्ट्वा वाचꣳ विसृजते, द्वौ वा ऋतू, अहश्च रात्रिश्चा,—ऽन्यमेव ऋतुꣳ संप्राप्य वाचꣳ विसृजते, व्रतं चरते,—ति वाचꣳ विसृजते, व्रतꣳ ह्येतस्य, व्रतेन यज्ञः संततो, व्रतेनैव यज्ञꣳ संतनोति, दैवीं धियं मनामहा, इति यजुषा हस्ता अवनेनिक्ते, यजुषा हि मनुष्या अवनेनिजते व्यावृत्त्यै ब्रह्मणः सदेवत्वाया,—ऽथो आपो मे दीक्षां नैत्प्रमुष्णानित्य,—न्नꣳ वै मनुष्येभ्या उदबीभत्सत, तद्देवा मनुष्येष्वदिधीर्षꣳ,—स्तदापोऽब्रुवन्, वयꣳ व एताꣳ शुन्धामा,—ऽथोपावर्तस्वेति, ततोऽन्नं मनुष्यानुपावर्तन्त, त इदमन्नं मनुष्येषु धृतं, तस्माद् ब्राह्मण आहा३र्या, आहुते हस्ता अवनेनिजीता,—ऽन्नाद्यस्यावरुद्ध्या, अथो अन्नाय वा एत-

[९] मै. १,२,३ । तै. ६,१,४ । काण्व. २३,५—६ । वा. ४.११,१६;६,२७ । काण्व. ४,१५—१६,२१—२२;६, ३९—४० ।

द्रात्मानं पावयते, ये देवा मनुजाता मनोयुजा, इति व्रतं व्रतयत्ये,—ते वै देवा मनुजाता
मनोयुजो यदिमे प्राणा, एषा वा अस्मिन्नेतर्हि देवता, तां प्रीणाति, तस्यां हुतं व्रतयति,
यदैतोऽन्यथा व्रतयेत् प्राणैरेनं व्यर्धयेत्, प्रमायुकः स्यात्, त्वमग्ने व्रतपा असी,—ति
वदेत्स्वप्स्यन्त्सुप्त्वा वा प्रबुध्य, यदि वा दीक्षितवादं वदे,—दग्निर्वै देवानां व्रतपति,—
स्तस्मादेवाधि व्रतमालभते, नोत्तानः शयीत, यदुत्तानः शयीतेमे लोका ययेयु,—र्नाग्नेरधि
पराङ् पर्यावर्तेत, यत् पर्यावर्तेत यज्ञात् पर्यावर्तेत, नान्यत्रदीक्षितं दीक्षितविमितान्त्सूर्योऽभिनि-
म्रोचे,—न्नाभ्युदियाद्, दीक्षितव्रतमेव तद्, यज्ञो वै देवानां न समभवत्, तं भूत्या समभाव-
यन्, यद्भूतिं वनुते यज्ञस्य संभूत्यै, रास्वेयत्सोमे,—ति यद्ब्रूया,—देतावदस्य स्या,—न्न भूयो,
यदाहा,—ऽऽभूयो भरेत्य,—परिमितस्यावरुद्ध्यै, देवः सविता वसोर्वसुदावे,—ति सवितृ-
प्रसूत एवै,—ताभिर्देवताभिरुप प्रतिगृह्णात्यात्मनोऽहिंसायै, वायुर्गोपास्त्वष्टाधिपतिः, पूषा
प्रतिग्रहीते,—ति वायुमेवासां गोप्तारमक,—स्त्वष्टारमधिपतिं, पूषणं प्रतिग्रहीतार,—मापो वै
यज्ञो, यदपो दीक्षितोऽवगाहेत यज्ञमवक्रश्नीयाद्, यदाह, देवीरापो अपां नपा,—दिति यदे-
वासां यज्ञियं मेध्यं तन्नाक्रामति, यदपो दीक्षितोऽवगाहेत विहृदिनीः स्यु,—स्तस्मान्नाव-
गाहेत, यद्यवगाहेत लोष्टं विमृणं स्तरेत्, तमेव सेतुमनुसंतरति, न वै दीक्षितं तरन्तं देवता
अनुतरन्त्य,—रणिभ्यां सह तरति, सहैव देवताभिस्तरति, न वै दीक्षितं तरन्तं यज्ञोऽनु-
तरति, रथाङ्गेन सह तरति, सहैव यज्ञेन तरति ॥ ९ ॥ १९-२०

अमुं वा आदित्यं सर्वा वाचो गच्छन्ति, ता उद्यति सर्वाः सृज्यन्ते, यदाह, याः पशू-
नामृषभे वाचा इति, सृज्यमानां वा एतद्वाचं पुनरालभते, वायवे त्वे,—ति नष्टामनुदिशति,
वरुणाय त्वे,—त्यप्सु मग्नां, रुद्राय त्वे,—ति महादेवाहुतां, निर्ऋत्यै त्वे,—त्यवसन्ना,—
मिन्द्राय त्वे,—ति श्लेष्कहुतां या वा संशीर्येतु, मरुद्भ्यस्त्वे,—ति ह्रादुनिहता,—मेते वै
देवा भूत्या स्कन्नभागा,—स्तानेव प्रीणाति, देवेभ्यो वा अन्या दक्षिणा दीयन्ते, मनुष्येभ्यो-
ऽन्या, एता वै देवेभ्यः प्रत्यक्षं दक्षिणा दीयन्त, एताभिर्वै भूयोऽवरुन्द्धे, यदु चेतराभि,—
र्देवाश्च वा असुराश्चास्पर्धन्ते,—तावान्वै तर्हि यज्ञ आसी,—दग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि,

[ त्वमग्ने व्रतपा असि० । ८,११,१; अथर्व. १९,५१,१; तै. सं. १,१,१४,४;२,३,१ ]
[ १० ] मै. १,२,३ । काठ. २३,७ । कपि. ३६,४ ।

ते देवा यज्ञमपश्यꣳस्तेनादीक्षन्त, तेषाꣳ यदग्निहोत्रमासीत्तद्व्रतमुपायꣳस्तस्माद्द्विव्रतेन भवितव्यं, द्विर्ह्यग्निहोत्रꣳ हूयते, यदग्नीषोमीयं पूर्णमासे हविरासीत् तमग्नीषोमीयं पूर्वेद्युः पशुमालभन्त, यदैन्द्राग्नममावास्यायां तमाग्नेयꣳ श्वो भूते पशुमालभन्त, वैश्वदेवं प्रातःसवनमकुर्वत, वरुणप्रघासान्माध्यंदिनꣳ सवनꣳ, साकमेधान् पितृयज्ञं, त्र्यम्बकास्तत्तृतीयसवनं, तस्मात् तृतीयसवने विश्वꣳ रूपꣳ शस्यते, विश्वꣳꣳ ह्येतद्रूपं, तमेषाꣳ यज्ञमसुरा णान्ववायꣳस्तेन वा एनानपानुदन्त, ततो देवा अभवन्, परासुरा, स्तंय एवꣳ वेद भवत्यात्मना, परास्य भ्रातृव्यो भवति, ते, ऽध्वृतोऽयमभूदित्यं, प्राक्रामꣳस्तदध्वरस्याध्वरत्वं, तस्मादेकव्रतेन भवितव्यꣳ, सकृद्ध्यग्निहोत्रꣳ हूयते ॥ १० ॥ २१

[ १५६३ ]

॥ इत्युपरिकाण्डे आग्नावैष्णवं नाम षष्ठः प्रपाठकः ॥ ६ ॥

अथ सप्तमः प्रपाठकः।

अक्लृप्तꣳ वा इदमासीद्, दिशो वा इमानप्रजानꣳस्तद्देवा अꣳन्योऽन्यस्मिन्नैछꣳस्तन्नाविन्दꣳस्ते देवा अदितिमब्रुवꣳस्त्वया मुखेनेमा दिशः प्रजानामेति, साब्रवीद्, भागो मेऽस्त्विवति, वृणीष्वेत्य, ब्रुव, न्तसोऽब्रवी, न्मद्देवत्यमेव प्रायणीयमसꣳन्मद्देवत्यमुदयनीयं, सामेवानुप्रायाथ, मामनूद्याथेति, स एष आदित्यश्चरु, रदितिꣳ वा एतदनुप्रयन्त्य, दितिमनूद्यन्ति, ततो वा इमा दिशः प्राजानन् पथ्याꣳ यजति, मामेव तेन दिशः प्राजानन्, यदग्निमिमां तेन, यत्सोममिमां तेन, यत्सवितारमिमां तेन, यददिति, मियꣳ वा अदिति, रूर्ध्वा वा अस्या दि, गूर्ध्वामेव तेन दिशं प्राजानꣳस्ततो वा अकल्पता, ऽक्लृप्तस्य वै क्लृप्त्यै प्रायणीय, स्तंय एवꣳ विद्वान् प्रायणीयेन चरति कल्पते, कल्पन्ते हास्मा ऋतव, स्ततो वा इमा दिशोऽन्वपश्यन्, यत् पथ्याꣳ यजतीमामेव तेन दिशमन्वपश्यन्, यदग्नीषोमौ, चक्षुषी वा अग्नीषोमा, अनु ताभ्याꣳ समपश्यन्, यत्सवितारꣳ, सवितृप्रसूता एवेमा दिशोऽन्वपश्यन्, यददिति, मियꣳ वा अदिति, रस्याꣳ वै प्रतिष्ठाय देवा यज्ञमतन्वत, यत् पथ्याꣳ यजति, वाग्वै पथ्या, वाचमेवावरुन्द्धे, यदग्निं देवतास्तेन, यत् सोमꣳ यज्ञं तेन, यत् सवितारं प्रसूत्यै, यददिति, मादित्या वा इमाः प्रजा, स्ता

[ १ ] तै. ६,१,५। काठ. २३,८—९। कपि. ३६,५—६।

एवावरुद्ध, ता आद्या अकृत, यद्वै यज्ञस्यान्तर्यन्ति तच्छिद्रं, तेन यज्ञः स्रवति, तेन यजमानोऽग्नये समवद्यत्य,—ग्निर्वै समिष्टि,—रग्निः प्रतिष्ठितिः, समिष्ट्या एवं प्रतिष्ठित्या अग्निं प्रथमं यजत्यग्निमुत्तमं, समानी वा एषा देवता पाङ्क्तत्वाय, पाङ्क्तो यज्ञो, यावानेवं यज्ञस्तमालब्ध, स्वस्तिं यजति यज्ञस्य स्वस्त्यै, पथ्यां यजति, वाग्वै पथ्या, वाचमेवानुप्रयन्ति, तामुत्तमामुदयनीये यजति, वाग्वै पथ्या, वाचमेवानूद्यन्ति, मरुत्वतीः पथ्याया ऋचो भवन्ति, देवविशा वै मरुतो, देवविशामेवाचीक्लृपत्, तां शान्तां क्लृप्तां मनुष्यविशा अनुकल्पन्ते, स्तेनभविष्णुर्हविर्भवति ॥ १ ॥ १

जुषाणेनान्य आज्यभागा इज्यन्ते, ऽथात्र ऋचोभयतो यजति द्रढिम्नेऽशिथिरत्वाय, सप्तदश सामिधेनीः का३र्याः, पञ्च ऋतवो, द्वादश मासा, एष संवत्सरः, संवत्सरादेवाधि यज्ञमुखं प्रतनुते, तदाहुः, पञ्चदश सामिधेनीः का३र्या, न सप्तदश, संवत्सरीयस्यैवायनस्य, सप्तदश कार्याः संवत्सरस्या ऋद्ध्या इति, तन्न सूक्ष्यं, सप्तदशैव कार्याः, प्रयाजवत् स्यात् प्रायणीयमननुयाजं,—मनुयाजवत् स्यादुदयनीयमप्रयाजं,—मुभयतो वा एतत् प्रयाजानुयाजा यज्ञमभिसंधीयते, समानो ह्येष यज्ञो, निष्कापं च मेक्षणं च निदधाति, तेन यज्ञः संतत, आत्मा वै प्रयाजाः, प्रयाजानुयाजा देवक्षेत्रं, यज्ञो देवक्षेत्रमाक्रममाणः प्रजामन्तरियाद्, यदनुयाजानन्तरियात् प्रयाजवत् स्यात् प्रायणीयमनुयाजं,—दनुयाजवत् स्यादुदयनीयं प्रयाजवत्, पयसि प्रायणीयः स्यात्, पयस्युदयनीयो, ऽपां वा एतच् शुक्रिय,—मपामेव शुक्रियमवरुन्द्धे, पशवो वै शुक्रियं, पशूनेवावरुन्द्धे, ऽथो प्रायणे च वावास्मा एतदुदयने च पशून् दधात्या,—दित्यः प्रायणीयः स्या,—दादित्य उदयनीय, इयं वा अदिति,—रस्यां वा एतद्यज्ञमुखेन प्रतितिष्ठत्य,—स्यामुपरिष्टाद्, यत्र वै यज्ञस्याधिऽग्रे समृद्धं क्रियते क्रियमाणं क्रियमाणं ह वा अस्य समृध्यते, संस्थाप्यं प्रायणीयं यज्ञस्य समृद्ध्यै, याः प्रायणीयेऽनुवा३क्यास्ता उदयनीये याज्याः स्यु,—र्या उदयनीयेऽनुवा३क्यास्ताः प्रायणीये याज्याः स्युः, पथः प्रतिप्रज्ञात्या, अथो अनुसंतत्यै, यदतोऽन्यथा कुर्युश्छम्बट्कुर्युः ॥२॥ २

इयं वै कद्रू,—र्वाक् सुपर्णी, छन्दांसि सौपर्णानि गायत्री त्रिष्टुब्जगती, सा वै कद्रूः सुपर्णीमात्मानमयजत, साब्रवीत्, सोममाहर, तेनात्मानं निष्क्रीणीष्वेति, सा छन्दांसि

[२] तै. ६,१,५। काठ. २३,९। कपि. ३६,६।
[३] तै. ६,१,६। काठ. २३,१०। कपि. ३७,१।

*

ग्रेण्यु,—दुग्मुत: सोममाहरत, तेनु मा निष्क्रीणीतेति, ततो जगत्युदपतत्, सा पशुभि-श्चागच्छद्दीक्षया च, तस्मात् पशवा इति जगतीमाहु,—स्तस्माद्यदा पशून् विन्दतेऽथ दीक्षते, ततस्त्रिष्टुबुदपतत्, सा दक्षिणया चागच्छत् तपसा च, तस्मात् त्रिष्टुभो लोके दक्षिणा दीयन्ते, तस्मादु मध्यंदिने तपस्तपनीयमिति, ततो गायत्र्युदपतत्, सा सोममाहरत्, तमाह्रियमाणꣳ सामिगन्धर्वो विश्वावसुराग्रुष्णात्, स तिस्रो रात्रीरुपहृतोऽवसत्, तस्मात्तिस्रो रात्रीः क्रीतो वसति, तेऽब्रुवन्, पुनर्याचामहा इति, ते देवा अब्रुव,—न्स्त्रीकामा वै गन्धर्वा, वाचमेव संभृत्य यथा योषिद्वनपक्षेयतमेव तया निष्क्रीणामेति, तꣳ वै निरक्रीणꣳ,—स्तस्मादाहु,—र्वाग्वै सोमक्रयणी, वाचꣳ वा एतद्देवा निष्क्रीणातीति, तेऽब्रुव,—न्नन्वृतीयामहा इति, ताम-न्वार्तीयन्त, तदनृतस्य जन्म, तद्य एवꣳ विद्वान्त्सत्यानृताꣳ वाचꣳ वदति न हैनं द्रुणाति, तेऽब्रुवन्, विह्वयामहा इति, ताꣳ व्यह्वयन्त, गाथां देवा अगायन्, ब्रह्म गन्धर्वा अवद,—न्त्सा देवानुपावर्तत, तस्माद्विवाहे गाथा गीयते, तस्माद्गायन्त्स्त्रियाः प्रिय,—स्तद्य एवꣳ विद्वान् गाथां गायन् हस्तं गृह्णाति, सꣳ हि जीयतः, सर्वमायुरितो, नार्ति नीत,—स्त-दाहु,—रा वै सा पुनरगछ,—न्नैव किं चन सोमक्रयणीति ॥ ३ ॥ ३

या द्विरूपा सा वार्त्रघ्नी, यत्तया क्रीणीयाज्ज्यायुकमस्य राष्ट्रꣳ स्या,—दथ यस्य ताद्दश्युनुस्तरुणी भवति ताजगेषामपुरः प्रमीयते, या रोहिणी कृष्णाक्षी कृष्णवाला कृष्णशफा सा पितृदेवꣳ-स्या, यत्तया क्रीणीयात् प्रमायुको यजमानः स्या,—दथ यस्य ताद्दश्युनुस्तरुणी भवत्यृतुमदेषा-मपुरः प्रमीयते, यारुणा बभ्रुलोम्नी श्वेतोपकाशा शुच्यदक्षी तत्सोमक्रयण्या रूपꣳ, स्वेनैव रूपेण क्रीयते, काणा स्यादखर्वा श्रोणा सप्तशफा, तथा सर्वया क्रीयता, एकहायन्याक्रय्या, वाग्वै सोमक्रयणी, तस्मात् प्रजाः सꣳवत्सरे वाचꣳ वदन्त्य,—प्सु क्रय्या, ओषधयो वै सोमा, आपा ओषधीनाꣳ रस,—स्तथा स रसः क्रियते, क्रये वा अहꣳ सोमस्य तृतीयꣳ सवनमवरुन्द्धे, वेदे,—ति ह स्माहारुण औपवेशिः, पशवो वै तृतीयꣳ सवनं, पशूनां चर्म, यच्चर्मणि निवपति तेनैव तृतीयꣳ सवनमवरुन्द्धे, रौहिते निवपति, तस्मात् पशूनाꣳ रौहित-रूप,—मानडुहे निवपत्य,—नड्वान्वै सर्वाणि वयाꣳसि पशूनाꣳ, सर्वाण्येव वयाꣳसि पशूनामा-प्त्वावरुन्द्धे, ऽथो बह्वेव यज्ञस्यावरुन्द्धे, सोमꣳ विचिन्वन्ति पापवसीयस्य व्यावृत्त्या, अथो

[ ४ ] मै. १,२,५। तै. ६.१,६;९। काठ. २४,१—२। कपि. ३७,२-३। वा. ४,२५। काण्व. ४,३४।

देवेभ्य एवैनं शुन्धन्ति, नाध्वर्युः सोमं विचिनुया,—न्न यजमानो, न यजमानस्य पुरुषा नोपद्रष्टारो विचीयमानस्य स्युं,—यदुपद्रष्टारो विचीयमानस्य स्युः क्षुधं प्रजा नीयु,—र्वार्तियंज-मानं गृह्णीयात्, क्षोधुकोऽध्वर्युः स्यात् ॥ शुन्ध सोममापन्न निरस्य ॥ इति ब्रूयाद्, ग्रसितं वा एतत् सोमस्य यदापन्नं, ग्रसितमेतं सोमस्य निष्खिदन्ति ये सोमं विचिन्वन्ति, तस्मात् सोमविक्रयिणो बहु क्रीणन्तो बहु विन्दमानाः क्षोधुका, ग्रसितं ह्येते सोमस्य निष्खिदन्त्या,-—स्मा३क्रोऽसीत्य,—भित्सार एवास्यै,—प शुक्रस्ते ग्रहा, इति शुक्रमेवास्य गृह्णात्य,—भि त्यं देवं सवितार,—मिति सवितृप्रसूत एवं गृह्णात्य,—तिछन्दसा गृह्णाति, सर्वाणि वै छन्दांस्य-तिछन्दाः, सर्वैरेवैनं छन्दोभिर्गृह्णाति, वर्ष्म वा एषा छन्दसां, वर्ष्मैनं समानानां गमयति, पञ्चभिर्गृह्णाति, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्धै,—कैकामुत्सर्जं मिमीते, ऽयातयाम्न्यायातयाम्न्यैव मिमीत, एतावती वा आसामेकैकस्या वीर्यमाप्यते, तस्मादिमाः कामं प्रसारयति, कामं प्रत्यञ्चति, दश कृत्वो मिमीते, दशाक्षरा विराड्, विराजमेवाप्नोत्य,-—थो वैराजाः पशवः, पशूनेवावरुन्द्धे, द्विर्गृह्णाति, द्वे हि सवने, यावान्वै सोमो गृहीतः स यजमानस्य, यमभ्यूहति स सदस्यानां, प्रजाभ्यस्त्वेत्य,—भ्यूहति, गोत्राद्गोत्राद्धि प्रसर्प-न्त्यो,—षधयो वै सोमो, ऽपरिमितं जीवनं, यत्परिमितं गृह्णीयात् परिमितं जीवनं स्या,-—दथ यदभ्यूहत्यपरिमितस्यावरुद्धै, यजमानो वै प्रजापतिः, प्रजा अंशवो, यत्सोममु-पनह्यति प्रजानां वा एतत् प्राणमुपनह्यति, यदाह, प्रजास्त्वानुप्राणन्त्विति, प्राणमासु दाधार, क्षौममुपनह्यत्यौ,—षधं वै क्षौम,—मोषधयः सोमस्य योनिः, स्व एवैनं योनौ दधाति, यज्ञो यदग्रे देवानामगछत्तं रक्षांस्यजिघांसन्,—न्त्सं देवता व्यद्रवासर्पत्, सर्वदेव-त्यं वै वासो, यत्क्षौममुपनह्यति सर्वाभिर्वा एतद्देवताभिर्यज्ञाद्रक्षांस्यपहन्त्य,—थो सर्वाभिरेव देवताभिर्यज्ञं समर्धयति ॥ ४ ॥ ४-६

चतुर्गृहीतमाज्यं भवति, चतुष्पादो वै पशवः, पशूनेवावरुन्द्धे, हिरण्यमवधाय जुहोत्या,-—ग्नेयं घृत,—मग्निजं हिरण्यं, सतनूरेव सतेजा हूयत, एषा वा अग्नेः प्रिया तनूर्यद् घृतं, तेजो हिरण्यं, यद्धिरण्यमवधाय जुहोत्यग्नेर्वा एतत् प्रियां त३न्वं तेजसा समर्धयत्य,—थो रूपाण्येव ग्राहयति, पशवो वै घृतं, रेतो हिरण्यं, यद्धिरण्यमवधाय जुहोति पशुषु वा

[ अभि त्यं देव० । अथर्व. ७,१४,१; श्रौ. पू. अ. ४, खं ६, ]

[ ५ ] मै. १,२,४ । तै. ६,१,७ । काठ. २४,३ । कपि. ३७,४ । वा. ४,१७—१९ । काण्व. ४,२३—२५ ।

एतद्रेतो दधाति, तस्मादनस्थकाद्रेतसोऽस्थन्वन्तः पशवः प्रजायन्ते, बद्धेन जुहोति, तस्मात् पशूनां गर्भा अप्रपादुकाः, प्रपादुकाः पशूनां गर्भाः स्युर्यदबद्धेन जुहुया,—ज्जूरसीति, यद्वाव जवत, इत्थमसा३दित्थमसा३दिति, तदस्या जूत्वं, धूता मनसेति, मनसा हि वाचं दाधार, जुष्टा विष्णवा इति, यज्ञायैवैनां जुष्टा९ विष्णवेऽक,—स्तस्यास्ते सत्यसवसः प्रसव इति, वाचा हि प्रसूतं क्रियते, तन्वो यन्त्रमशीय स्वाहेत्या,—ऽऽशिषमेवाशास्ते, शुक्रमसि, चन्द्रमसीत्यु,—द्धरति स्वर्गस्य लोकस्य समष्ट्यै, वाग्वै सोमक्रयणी, शास्ति वावैनामेतत्, तस्मात् प्रजाः सृष्टा प्रजायन्ते, वत्सो जातः स्तनमिछति, स्तनं कुमार इछति, चिदसीति, यद्वाव चिकित्सत, इत्थमसा३दित्थमसा३दिति, तदस्याश्चित्त्वं, मनासीति, यद्धि मनसा मन्युते यन्मनसाभिगछति तद्वाचा वदति, धीरसीति, यद्वावध्यायती,—त्थमसा-३दित्थमसा३दिति, तदस्या धीत्वं, दक्षिणासीति, यत्स्विद्वाचा दीयते तदस्या दक्षि-णात्व९, यज्ञियासीति, वाग्घि यज्ञिया, क्षत्रियासीति, य९ हि वाग्जुषते स क्षत्रियो, ऽदितिरस्युभयतःशीर्ष्णीति, यत्स्विदादित्यः प्रायणीय आदित्य उदयनीयस्तदस्या उभयतः-शीर्षत्व९, सा नः सुप्राची सुप्रतीची भवेति, सुप्राची ३ह्येषा प्रायणीये सुप्रतीच्युदयनीये॥५॥

७

यत्कर्णगृहीतया क्रीणीयाद्वात्रघ्नी स्याद्, यच्च शृङ्गाभिहितया मनुष्यदेव३त्या, यत् पदि बद्धया पितृदेव३त्या, यदबद्धयायता स्याद्, यदाह, मित्रस्त्वा पदि बध्नात्विति, मित्र-स्यैवैनां पाशेन यछति, पूषाध्वनः पात्विती,—य९ वै पूषे,—यमेवास्या अध्वान९ संभरती,—न्द्रायाध्यक्षायेती,—न्द्रो वै देवानामोजिष्ठ,—स्तमेवास्या अध्यक्षमक,—रनु त्वा माता मन्यतामनु पितेत्य,—नुमत एवैनं मात्रा पित्रा भ्रात्रा सख्या क्रीणाति, सा देवि देवमछेहीति, देवी ३ह्येषा, देवः सोमा, इन्द्राय सोममिती,—न्द्राय ३ह्येषा सोममछैति, रुद्रस्त्वावर्तयत्विति, रुद्रमेवास्याः पुरस्ताद्दधाति, स्वस्ति सोमसखा पुनरेहीति, प्रत्यक्षमेवालब्ध, रुद्राय वा एतत् पशूनपिदधाति, यदाह, रुद्रस्त्वावर्तयतु, यदाह, स्वस्ति सोमसखा पुनरेहीति, स्वस्तिमेवास्यै पुनरावृत्तायै दधाति, वाग्वै सोमक्रयणी, सा देवरूपाणि प्रविशति, यदाह, वस्व्यसि, रुद्रासीती,—दमसीदमसीति, वाग्वैनामेतदाह यद्यद्भवति, यद्वा एतत् किंच वद-त्येता९ वा एतदाप्त्वावरुन्द्धे, षट् पदान्यनु निष्क्रामति, षड्वा अहानि वाग्विभज्यते, न वै

[ ६ ] मै. १,२,४। तै. ६,१,७—८। काठ. २४,३—४। कपि. ३७,४—५। वा. ४,१९—२२। काण्व. ४,२६—२९।

षष्ठमहर्वागतिवदति, सर्वा वै षष्ठेऽहन्वागाप्यते, यावत्येव वाक्तामाप्नोति, दक्षिणेनार्धेन दक्षिणमर्धमनु निष्क्रामति, तस्माद्दक्षिणेन हस्तेनान्नमद्यते, तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यवत्त-र,—स्तस्माद्दक्षिणमर्धꣳ वयाꣳस्यनु पर्यावर्तन्ते, सप्तमे पदे जुहोति, सप्त छन्दाꣳसि, छन्दाꣳसि वाग्, यावत्येव वाक्तामाहुत्याप्त्वावरुन्द्धे, सप्त छन्दाꣳसि, सप्त होत्राः, सप्त ग्राम्याः पशवः, पशूꣳस्तानेवावरुन्द्धे, बृहस्पतिष्ट्वा सुम्ने रम्णात्विति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनाꣳ यछति, रुद्रो वसुभिराचक इति, रुद्रमेवास्या वसुभिराकर्तारमकः, पृथिव्यास्त्वा मूर्धन्नाजिघर्मीत्ये,—ष वै पृथिव्या मूर्धा यद्देवयजन,—मिडायास्पद इति, गौर्वा इडा, तस्या वा एतत् पदं, घृतवतीति स्वाहेति, स्वाहाकारेणैवैनाꣳ यछति ॥ ६ ॥ ८

हिरण्यं निधाय जुहोत्य,—ग्निमत्येव जुहोत्यायतनवत्य,—न्धोऽध्वर्युः स्याद्यदनायतने जुहुयात्, पशवो वै घृतं, पशवः पदꣳ, वज्रꣳ स्फ्यो, यत्स्फ्येन पदं परिलिखति वज्रेण वा एतद्य-जमानाय पशून् परिगृह्णाति, त्रिषाणयानुपरिलिखति, सयोनीनेवास्मै पशून् परिगृह्णाति, स्थाल्यां पदꣳ संवपत्य,—स्यां वा एषाधिक्रियत, इयꣳ हि पशूनाꣳ योनिः, स्व एवैनान् योनौ दधाति, शोचन्ति वा एतत् पशवो योनेश्छिन्ना, यदुप उपसृजति शमयत्येव, यजमानाय पदं प्रयछति, तदध्वर्युर्पशुर्भवति, यजमानाय हि पशून्त्संप्रादाद्, यदाह, तव राया इति, तदध्वर्यु पशुष्वाभजति, तेनाध्वर्युः पशुमान् गृहेषु पदं निदधाति, गृहेष्वे-वास्य पशून् दधाति, स्वर्गो वै लोक आहवनीयो, यदाहवनीय उपवपेदन्यलोकेऽस्य पशून् दध्याद्, गार्हपत्या उपवपति, गार्हपत्यꣳ हि पशवोऽनूपतिष्ठन्ते, पशुभिरेवैनꣳ सम्यञ्चं दधाति, पशवो वै पदं,—मग्नी रुद्रो, यदग्निमत्युपवपेद्रुद्रायास्य पशून् दध्याद्, यत्र शान्तं तदुपोष्यं पशूनामप्रदाहाय, यत्सोमक्रयण्या पत्नीꣳ संक्शापयन्ति मिथुनत्वाय, त्वाष्ट्रीमन्तस्त्वेति, त्वष्टा हि रूपाणि विकरोति, सपेमेति, सपाद्धि प्रजाः प्रजायन्ते, सूर्यस्य चक्षुरारुहमित्ये,-—ष वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एत्य,—मुष्य वा एतदादित्यस्य पथ इति, वृणक्ति विन्दते वस्विति, वसो३ह्येष विन्दते यः सोमं क्रीणाति॥ सोमविक्रयित्सोमं ते क्रीणानि महान्तं बहर्हं बहु शोभमानं, कलया ते क्रीणानि, कुष्टया ते क्रीणानि, शफेन ते क्रीणानि, पदा ते क्रीणानि ॥ इति, गौर्वा एतन्महिमानमुदाचष्टे, ऽथो महयत्येवैना,—मथो अक्षर-शो वा एतद्यज्ञं मिमीते, सुवाङ्नभ्राडङ्गारे बम्भारा इत्ये,—ते वै देवानाꣳ सोमरक्षय,

[७] मै. १,२,४—५। तै. ६,१,८–१०। काठ. २४,५–६। कपि. ३७,५,७। वा. ४,२७,२९,३२। काण्व. ४,२९,४१,४४।

एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳ,—स्तेभ्य एवैनाननुदिशत्य,—थो यदेवात्र यज्ञस्योपश्लिष्टं
तत् परिक्रीणीते, दशभिः क्रीणाति, दशाक्षरा विराट्, तथा वैराजः क्रियत, एकादशभिः
क्रीणाति, दश वै पशोः प्राणा, आत्मैकादश,—स्तथा सर्वः क्रियते, धेन्वा क्रीणात्या,—
शिरमेवास्य क्रीणात्य,—थो वाचमेव गृह्णाति, हिरण्येन क्रीणाति, शुक्रमेवास्य क्रीणात्य,-
—थो तेज एव गृह्णाति, वाससा क्रीणाति, सर्वदेवत्यमेवास्य क्रीणात्य,—जया क्रीणाति,
तप एवास्य क्रीणाति, यत्र वा अदश्छन्दाꣳसि सोममाहरꣳस्तानि तमसा न प्राजानꣳ,—स्त-
तो गाय३त्र्यजामादायोदपतत्, सा वा एभ्यः प्रारोचयत्, ततो वै छन्दाꣳसि सोममाहरꣳ,—
स्तत् सोमं ना आजा,—मिति वावाजानडुहा क्रीणाति, वह्नयेवास्य क्रीणात्यृ,—षभेण क्रीणाति,
सैन्द्रमेव क्रीणाति, यदृषभेण क्रीणीयात् प्रजापतिना विक्रीणीते, वत्सतरेण साण्डेन क्रय्यस्यै-
न्द्रमहः क्रीणाति, न प्रजापतिना विक्रीणीते, मिथुनाभ्यां गोभ्यां क्रीणाति, मिथुनमेवास्य
क्रीणाति ॥ ७ ॥ ९-११

सोमो वा अमुत्रासीत्, तं देवा गायत्रीं प्राहिण्व,—न्नमुꣳ सोममाहरेति, सा विततꣳ यज्ञ-
मवापश्यत्, सैक्षत, यद्यज्ञस्यान्तरेष्याम्यात्मानमन्तरेष्यामीति, तस्यै वा एतꣳ सोमो जीव-
ग्रहं प्राब्रवीत्, स्वजा असि, स्वभूरसीति, सोमस्य वा एष जीवग्रहः, सोमस्य वा एत-
ज्जीवग्रहं गृह्णीते, नाध्वर्युः सन्नार्तिमार्छति य एवꣳ वेद, वरुणो वा एष एतर्हि वरुणदेव३त्यो
यदुपनद्धो वरुण एनं भूत्वा प्रविशेद्, यदाह, मित्रो ना एहि सुमित्रधा इति, मित्रमे-
वैनमकः, शमयत्येवै,—न्द्रस्योरुमाविश दक्षिणमित्यै,—न्द्रो वै यज्ञ, इन्द्रः सोमस्य योनिः,
स्व एवैनꣳ योनौ दधाती,—न्द्रो वा एतमग्रा आगतमूरू न्यगृह्णीत, ताꣳ वा एतदनुकृतिमूरा आसा-
दयतेऽपोर्णुते, यथा श्रेयस्यायत्यपोर्णुत एवं त,—दु३र्वन्तरिक्षꣳ ३वीहीत्य,—न्तरिक्षदेव३त्यो वा
एष एतर्हि, प्रच्युत इतोऽप्राप्तोऽमुत्रादित्याः सदा आसीदेत्या,—दित्यो वै यज्ञो, ऽदितिः
सोमस्य योनिः, स्व एवैनꣳ योनौ दधाति, वरुणꣳ वा एनमेतत्सन्तं मित्रमकः,—स्तदेनꣳ
स्वया देवतया व्यर्धयति यदाह ॥ १२

अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ १३

---

[८] मै. १,२,६ । काठ. २४,७—८ । कपि. ३७,७—८ । वा. ४,२७,३०—३१,३३—३४,३६ । काण्व. ४,३८,४२—४३, ४५—४६,४८ । [ अस्तभ्नाद् द्यामृषयो० । ऋ. ८,४२,१;३,३०,९, ( प्र. पा. ); तै. सं. १,२,८,१ ]

इति वरुणमेवैनमकः, स्वयैवैनं देवतया समर्धयति, वनेषु ३व्यन्तरिक्षं ततानेति
वाससा पर्याणह्यति, सर्वदेव३त्यꣳ वै वासः, सर्वाभिर्वा एतद्देवताभिर्यज्ञं क्रीतं परिश्रयति,
धूरसि, ध्वर ध्वरन्त,—मित्याह रक्षसां ध्वरायै रक्षसामन्तरित्यै, वारुणमसि, वरुणस्त्वोत्त-
भ्नात्विति, वारुणꣳ ३ह्येष एतर्हि वरुणदेव३त्यं, मनसाच्छ यन्ति, महिमानमेवास्याच्छ
यन्त्य,—नसा वहन्ति, तस्मादनोवा३ह्यमोषधयः फलं पच्यन्ते, शीर्षाहार्यमोषधयः फलं
पच्येरन्यत्सोमं क्रीतꣳ शीर्ष्णा हरेयु,—स्तस्माद्गिरा ओषधयः शीर्षाहार्यं फलं पच्यन्ते, शीर्ष्णा हि
सोमं क्रीतꣳ हरन्ति, प्रच्यवस्व भुवनस्पत इति, भूतानाꣳ ३ह्येष पति,—र्विश्वान्यभि
धामानीति, विश्वानि ३ह्येष धामान्यभि प्रच्यवते, मा त्वा परिपरिणो मा परि-
पन्थिनो मा त्वा वृका अघायवो विदन्निति, यत्र वा एनमदं आह्रियमाणꣳसामिगन्धर्वो विश्वा-
वसुरमुष्णात्तादंशेभ्यो वावास्मा एतद्रक्षोभ्यो भीषा स्वस्तिमक,—र्वरुणो वा एष क्रीतो यजमानस्य
गृहमोह्यते, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—र्यदाह, नमो मित्रस्य वरुणस्य चक्षसा
इति, शमयत्येवं, शान्त एवोह्यते यजमानस्याहिꣳसायै, सर्वाभ्यो वा एष देवताभ्या
उह्यते, यदेकोल्मुकेन प्रतितिष्ठेत् पितृदेवत्योऽस्य यज्ञः स्या,—दग्निमहत्समाधेयो, ऽग्निर्वै
सर्वा देवताः, सर्वाभिर्वा एतद्देवताभिर्यज्ञमायन्तं प्रतितिष्ठत्य,—ग्नीषोमौ वा एतौ संभवतो,
यजमानꣳ वा एता अभिसंभवेताꣳ यजमानस्य वा पशूꣳ,—स्तद्य एष पशुर्धार्यते तमेव भागधेय-
मभिसंभवतो, देवता वा एतं पशुं धार्यमाणं नाभिप्राच्यवन्ता,—ऽस्मिन् यज्ञ आशꣳसमाना३ग्नो-
ऽयमितरस्तमग्नीषोमा उपप्राच्यवेतां, तस्मादेषोऽग्नीषोमीयो, ऽग्नीषोमाभ्याꣳ वा एष मेधाया-
त्मानमालभते, यो दीक्षते स वा एतेनैव पशुनात्मानं निष्क्रीणीते, स्थूलः पीवा स्यादात्मनो
निष्क्रीत्यै, तस्मादग्नीषोमीयस्य पशोर्नाशित३व्यं, पुरुषो ३ह्येतेनात्मानं निष्क्रीणीते, तस्मा-
दग्नीषोमीये सꣳस्थिते यजमानस्य गृहेऽशित३व्यं, तर्हि निष्क्रीतोऽनृणो, वार्त्रघ्नꣳ वा एतत्,
सोमो वै वृत्रः, पूर्वेद्युर्वा इन्द्रो वृत्रमहन्, पूर्वेद्युर्वावैनमेतत्सृत्वाथापरेद्युरभिषुणोति, वरुण-
पाशाभ्याꣳ वा ए३षोऽभिधीयते यो दीक्षते, ऽहोरात्रे वरुणपाशौ, यद्दिवा सꣳस्थापयेदनुन्मुक्तो
वरुणपाशाभ्याꣳ स्या,—न्नक्तꣳ सꣳस्थाप्यो, वरुणपाशाभ्यामेवोन्मुच्यत आत्मनोऽहिꣳ-
सायै ॥ ८ ॥ १४

[ वनेषु व्यन्तरिक्षं० । ऋ. ५,८५,२; तै. सं. १,२,८,१ ]

यु३क्तोऽन्योऽनड्वान् भवति, विमुक्तोऽन्यो, ऽथातिथ्यं निर्वपति यज्ञस्य संतत्यै,
पत्न्या हस्तान्निर्वपति, पत्नी वै पारिणह्यस्येशे, पत्न्यैव शातमनुमतं क्रियते, यद्वै पत्नी
यज्ञे करोति तन्मिथुनं, मिथुनत्वाय वै पत्न्या हस्तान्निर्वपत्ये,—ष वै पत्न्या यज्ञस्यान्वारम्भो
यद्यज्ञे करोत्य,—न्वारम्भाय वै पत्न्या हस्तान्निर्वपत्य,—ग्नेस्तनूरसि, विष्णवे त्वेति, गायत्री
तेन छन्दसा गृह्णाति, सोमस्य तनूरसि, विष्णवे त्वेति, त्रिष्टुभं तेना,—ऽतिथेरातिथ्यमसि,
विष्णवे त्वेति, जगतीं तेना,—ऽग्नये त्वा रायस्पोषदे, विष्णवे त्वेत्य,—नुष्टुभं तेन, श्येनाय
त्वा सोमभृते, विष्णवे त्वेति, गायत्री वै श्येनः सोमभृत्, ताꣳ वा एतत् पुनरालभतेऽयात-
याम्नीं पाङ्क्तत्वाय, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालब्धै,—तद्वै छन्दाꣳस्यग्रहीत्,
तैश्छन्दोभिर्गृहीतैर्यज्ञं गृह्णाति, यावन्तो वा अतिथिमन्वायन्त्यपि तेषां भाग,—श्छन्दाꣳसि वा
एतममुतोऽन्वायन्ति, तेभ्य एष भागः क्रीयते, वरुणो वै यज्ञः क्रीतो, विष्णुः प्रततः,
प्रततो वा एतर्हि यज्ञ,—स्तस्माद्वैष्णवो नवकपालो भवति, त्रिवृतꣳ वा एतद्यज्ञमुखे व्यायातयन्ति
त्रिवृता प्रयन्ति, ते वै त्रयस्त्रिकपाला,—स्त्रिकपालो वैष्णवो देवतया, विष्णुꣳ वै देवा आनय-
न्वामनं कृत्वा, यावदयं त्रिविक्रमते तदस्माकमिति, स वा इदमेवाग्रे व्यक्रमता,—ऽथेदमथाद,-
—स्तस्मात् त्रिकपालो वैष्णवः, सोमस्य वा एतदातिथ्यꣳ यदातिथ्य,—मथवा एतदग्नेरातिथ्यꣳ
यदग्ना अग्निं मन्थन्त्य,—थो यज्ञाय वा एतत् क्रीताय देवतां जनयन्त्य,—थो तेज एवास्मै जन-
यन्त्य,—थो उपसत्सु वावास्मा एतद्वीरं जनयन्त्या,—ऽऽ हास्य वीरो जायते, ये वै देवाः साध्या
यज्ञमत्यमन्यन्त तेषाꣳ वा एतद्यदतिरिक्तꣳ यज्ञे क्रियते, ऽतिरिक्तꣳ वा एतद्यज्ञे क्रियते यदग्ना
अग्निं जुह्वति, यच्चपालादुपर्यूपस्य तद्देवेनाꣳ स्पृशति, सꣳस्थाप्या३न्न सꣳस्थाप्या३,—मिति
मीमाꣳसन्ते, यत्सꣳस्थापयेद्यज्ञमुखे यज्ञꣳ सꣳस्थापये,—दातिथ्यꣳ वा उपसदां प्रयाजास्तान-
नुप्रमाशी,—स्तस्मादिडान्तमेव कार्य,—मातिथ्यꣳ वा उपसदां प्रयाजा,—स्तस्मात्ता अप्रयाजा,
उपसदो वा आतिथ्यस्यानुयाजा,—स्तस्मात्तास्तिस्र,—स्त्रयो ह्यनुयाजाः, शिरो वा आतिथ्यं,
ग्रीवा उपसदो, ऽथैष इतरो यज्ञः सꣳहितः, प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववारा,
अस्य भ्रुवा इक्षुकाण्डे, यज्ञमुखं प्रजापति,—र्यज्ञमुखादेवाधि यज्ञमुखं प्रतनुते, ऽश्वो वै मेध्यो,
यज्ञः प्रजापतिः, प्राजापत्योऽश्व,—स्तस्मादाश्ववारः प्रस्तरः, कार्ष्मर्यमयाः परिधयो भवन्ति
रक्षसामपहत्यै ॥ ९ ॥ १५

---

[ ९ ] मै. १,२,६ । तै. ६,२,१ । काठ. २४,८ । कपि. ३८,१ । वा. ५,१ । काण्व. ५,१ ।

देवा अ॒न्योन्यस्य श्रैष्ठ्ये तिष्ठमानाश्चतुर्धा व्युदक्राम,—न्नग्निर्वसुभिः, सोमो रुद्रै,—रिन्द्रो मरुद्भि,—र्वरुण आदित्यै,—स्तान्वा एतेन बृहस्पतिरयाजयत्, तेषामिन्द्रोऽभवत्, तद्वा एतेन यजते भवति, ते वा अ॒न्योन्यस्याभिद्रोहाद्बिभयु,—स्तेषाꣳ याः प्रियास्तन्व आसꣳस्ताः समवद्यꣳ,—स्ताः समत्राममृशन् ॥ यो नस्तन्नपाद्यो नोऽन्योन्यस्मै द्रुह्यादिति एव स निर्ऋच्छात्॥ इति, ते यदा समवामृशꣳस्ततो देवा अभवन् परासुरा,—स्तद्य एवꣳ विद्वाꣳसः समवमृशन्ति भवन्त्यात्मना, परैषां भ्रातृव्या भवन्ति, यं कामयेत, ऋध्नुयादिति, तं पृथक्समवमर्शयेद्, ऋध्नोति, यदि कामयेत, सर्वे सदृशाः स्युरिति, सर्वान्त्सहावमर्शयेत्, सर्वे ह सदृशा भवन्ति, ये वै ते समवामृशन्नपि वा इदानीं तेऽन्योन्यस्मै न द्रुह्यन्ति, तस्मात् संतानूनप्त्रिणे न द्रोग्धवै, यद् द्रुह्येत् प्रियायै तन्वै द्रुह्येत्, ते वा अमुष्मिन्नादित्ये प्रियास्तन्वः संन्युदधत, तस्मादेष तेजिष्ठं तपति, तस्मात् सूर्यदेवत्या हि सर्वे सोमा गृह्यन्ते, ऽथो अत्र वै देवानां प्रियास्तन्व,—स्ता एवावरुन्द्धा, आपतये त्वा गृह्णामीत्य,—ग्नये तेन वसुभ्यो गृह्णाति, परिपतये त्वेति, सोमाय तेन रुद्रेभ्य,—स्तनूनप्त्र इती,—न्द्राय तेन मरुद्भ्यः, शक्मने शाक्करायेति, वरुणाय तेनादित्येभ्य, एतेभ्यो वै तद्देवेभ्योऽग्रे गृह्यते, तेभ्य एवैनद्गृह्णाति, चतुर्गृह्णाति, चतुर्धा हि ते व्युदक्राम,—न्नापतये त्वा गृह्णामीत्या,—त्मानमेव तेन गृह्णाति, परिपतये त्वेति, प्रजां तेन, तनूनप्त्र इति, गृञ्जं तेन, शक्मने शाक्करायेति, पशूꣳस्तेन, यो वै देवान्त्साध्यान् वेद सिध्यति ह वा अस्मै, यन्नु कामयेत, इहं मे सिध्येदिती,—मे वै लोका देवाः साध्या, आत्मानमेव दीक्षया स्पृणोति, प्रजामवान्तरदीक्षया संतरामेखलामायच्छते, कनीयो व्रतमुपैत्य,—न्तरा ह्यात्मानं प्रजा, द्विव्रतेन भवितव्यं, द्वौ वा ऋतू अहश्च रात्रिश्च, यदेकव्रतः स्यात्पत्नीमन्तरियाद्, या ते अग्ने रुद्रिया तनू,—रिति व्रतꣳ व्रतयत्ये,—षा वा अस्मिन्नेतर्हि देवता, तां प्रीणाति, तस्याꣳ हुतꣳ व्रतयति, यदेतोऽन्यथा व्रतयेद्रुद्र एनमभिमानुकः स्याद्, देवताभिर्वा एष सायुज्यं गच्छति, यो दीक्षते यच् शीताभिर्मार्जयेत शमयेयु,—रथो यथेदमद्भिरग्निरुपसृष्ट एवꣳ स्या,—दथ यत्तप्ताभिर्मार्जयते शान्त्या, अथो तेजो वै मदन्ती,—स्तेज एवावरुन्द्धे ॥ १० ॥ १६–१८ [ १५८१ ]

॥ इत्युपरिकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

[ १० ] मै. १,२,७ । तै. ६,२,२ । काठ. २४,९ । कपि. ३८,२ । वा. ५,५–६ । काण्व. ५,५–८ ।

अथाष्टमः प्रपाठकः ।

असुराणाꣳ वा एषु लोकेषु पुर आस,—न्नयस्मय्यस्मिंल्लोके, रजतान्तरिक्षे, हरिणी दिवि, ते देवाः सꣳस्तम्भꣳ सꣳस्तम्भं पराजयन्ता,—ऽनायतना ह्यासꣳ,—स्त एताः श्रुतिपुरोऽमिन्वत, हविर्धानं दिव्या,—ग्नीध्रमन्तरिक्षे, सदः पृथिव्यां, तेऽब्रुव,—न्नुपसीदामो,—पसदा वै महापुरं जयन्तीति, त उपासीदꣳ,—स्तदुपसदामुपसत्त्वं, तानेभ्यो लोकेभ्यः प्राणुदन्त, त एभ्यो लोकेभ्यः प्रणुत्ता अहरश्रयन्त, यत्प्रातरुपसदमुपायन्नह्न एनाꣳस्तेन प्राणुदन्त, तेऽह्नः प्रणुत्ता रात्रीमश्रयन्त, यत्सायमुपसदमुपायन् रात्र्या एनाꣳस्तेन प्राणुदन्त, ततो देवा अभवन् परासुरा,—स्तद्य एवꣳ विद्वानुपसदमुपैत्यहोरात्राभ्यामेव भ्रातृव्यमेभ्यो लोकेभ्यः प्रणुदते, भवत्यात्मना, परास्य भ्रातृव्यो भवत्य,—थ वै तर्हि नेषुरासीत्, ते देवा एतामिषुꣳ समस्कुर्व,—न्नग्निꣳ मृज्ञꣳ, सोमꣳ शल्यꣳ, विष्णुं कुल्मलं, तेऽब्रुवन्, क इमामिषुमस्यतीति, ते देवा अब्रुव,—न्नयमेव रुद्र इति, सोऽब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुवन् स सोऽब्रवी,—न्नैवमेकश्चनैषुमस्ताम्मीमाꣳसाता इति, तस्मादेतस्यैषुरस्ता न मीमाꣳसितव्या ॥ सत्यꣳह्म् ॥ इत्येव ब्रूयात्, ताꣳ वै रुद्रो व्यसृज,—देष हि देवानां क्रूरतम,—स्तयेमाः पुरोऽभिन,—दग्निना वै स तास्तेजसाभिनत्, तस्मादग्निः प्रथम इज्यते, यदन्यां देवतां पूर्वाꣳ यजेदवीर्यवतीः स्यु,—रष्टौ कृत्वो जुह्वां गृह्णाति, चतुरुपभृति, पूर्वार्धो हीषोः समाहिततमः, सकृत् पराङतिक्रामति, सकृ३द्ध्येवेषुः पराच्यपत,—दतिक्रम्याश्रावयति, यज्ञस्याभिजित्यै, यदनतिक्रम्याश्रावयेदनभिजितोऽस्य यज्ञः स्यात्, स्रुवेणोपसदो जुहोति, पुरꣳ वा एष जितानामन्वारोह, एकामेकाहं जुहोत्यै,—कामेकाह,—मेकाꣳ हि त एकाहमजयन्नेकामेकाहं, तिस्र उपसदो जुहोति, त्रयो वा इमे लोका, एषां लोकानामभिजित्या, अग्निना वै मुखेन देवा इमांल्लोकानन्वायन्नुपसद्भिरसुरान् पराणुद्या,—ऽग्निना वा एतन्मुखेन यजमान इमांल्लोकानन्वेत्युपसद्भिर्भ्रातृव्यं पराणुद्य, याः सायमनुवा३क्यास्ताः प्रातर्याज्याः स्यु,—र्याः प्रातरनुवा३क्यास्ताः सायꣳ याज्याः स्यु,—स्तथोभयीर्वीर्यवतीर्भवन्ति ॥ १ ॥ १—३

अयः प्रथमायामवधाय जुहोति,—रजतं मध्यमायाꣳ, हरितमुत्तमाया,—मेतद्वै बृहस्पति-

---

[ १ ] तै. ६,२,३ । काठ. २४,१०;२५,१ । कपि. ३८,३—४ ।
[ २ ] मै. १,२,७ । काठ. २५,१ ! कपि. ३८,४ । वा. ५,७;११,३५ । काण्व. ५,६— ११;१२,३५ ।

देवेभ्यः पर्जयनमकरोद्, यत्र पुरꣳ युध्येयुस्तद्देवाभिर्जुहुयात्, सरा वा एषा यज्ञस्य, तस्मा-
द्यत्किंच प्राचीनमग्नीषोमीयात्तदुपाꣳशु चरन्त्य,—थ वा एतदग्नीषोमीयं प्रति वाचꣳ विसृजन्ते,
यज्ञमेवाप्त्वा वाचꣳ विसृजन्ते, घृतꣳ वै देवा वज्रं कृत्वा सोममघ्न,—न्त्स्रुचौ बाहू, तस्मात्
स्रुचौ सौमीमाहुतिं नाशाते, अन्वधिषुवौ एतत् सोमꣳ यदस्य स्रुचौ चाज्यं चान्तिकमभार्षु,—
यदाहा,—ऽꣳशुरꣳशुष्टे देव सोमाप्यायतामिति, यदेवास्य घ्नन्तः क्रूरमक्रꣳस्तदक्रूरमक्र,—स्तदा-
प्याययति, सर्व ऋत्विजा आप्याययन्ति, सर्वे हि तान्तं भिषज्यन्ति, यन्ति वा ए३ते
ऽस्माल्लोकाद्ये सोममाप्याययितुमुदस्थुः, पराञ्चो हि यन्ती,—श्वराः प्रमेतो,—यदाहे,—ष्टा राया
एष्टा वामानि प्रेषे भगायेति, तेनास्माल्लोकान्नैति, तेनास्मिँल्लोके धृता, अनयोर्वा एष गर्भ,
आभ्यामेष आवृश्चते यः सोमꣳ हन्ति, यदाह, नमो दिवे नमः पृथिव्या इत्या,—भ्यामेव
नमोऽक,—रातिथ्यꣳ वा उपसदां प्रयाजा,—स्तानूनप्त्रमाशी,—स्तस्मान्न होतारꣳ वृणीते
नार्षेयम् ॥ सीद होतः ॥ इत्येवाह चतुर्व्रतस्तिस्र,—श्चत्वारिहीषोः पर्णानि, त्रिव्रतस्तिस्र,—स्त्रि-
षन्धिर्हीषुः, भृङ्गꣳ शल्यः कुल्मलं, द्विव्रतस्तिस्रो, द्विषन्धिर्हीषुः, शल्यश्च कुल्मलं चै,-
—कव्रतास्तिस्र, एका ३ह्येवैषु,—रेषा वै परोवरीयसी दीक्षा कनीयो व्रतमुपैति, ज्यायाꣳसं
लोकमभिजयत्यै,—कव्रतास्तिस्रो, द्विव्रतास्तिस्र,—स्त्रिव्रतास्तिस्र,—श्चतुर्व्रतास्तिस्र, एषा वा
उत्क्रामन्ती स्वर्गकामस्यो,—त्तरमुत्तरꣳ श्वः श्वः श्रेयान्भवति य एवꣳ वेद, यद् द्वादशाग्निष्टोम-
स्योपसदः स्युरशान्ता निर्दहेयु,—र्यत्ति३स्रोऽहीनस्य, यथा गरीयान् भारं उष्णिहां निश्रिणा-
त्येवं तत्, तत्तिस्र एवाग्निष्टोमस्योपसदः का३र्या, द्वादशाहीनस्य सवीर्यत्वाय ॥ २ ॥ ४--६
अभ्यर्धो वै देवेभ्यो यज्ञ आसीत्, तेनाविदु,—रिह वा स इह वेत्य,—स्ति
यज्ञ, इति त्वविदु,—स्तेन वै संꣳसृष्टिमैछꣳ,—स्तं प्रैषमैछꣳ,—स्तन्नाविन्दꣳ,—स्तꣳ
वयाꣳस्युपर्युपरि नात्ययतꣳ,—स्तमिन्द्र उपर्युपर्यत्यक्रामत्, तमचायत्, सोऽवे,—दच्छि-
केद्वै मेति, सोऽब्रवी३त्, कोऽसा इत्य,—हं दुर्गे हन्तेत्य,—थ कस्त्वमसीत्य,—हं दुर्गादाह-
र्तेति, सोऽब्रवीद्, दुर्गे वै हन्तावोचथा, अयꣳ वराह आमुष एकविꣳशत्याः पुरां पारेऽ-
श्ममयीनां, तस्मिन्नसुराणाꣳ वसु वाममन्त,—स्तं जहीति, तस्येन्द्रो द्रुभूल्याभ्यायत्य पुरस्ता-
च्छिरो हृदयं प्रावृश्च,—देतद्वा एषाभ्यनूक्ता ॥ ७

---

[ सीद होतः० । ऋ. ३,२९,८; तै. सं. ३,५,११,२;४,१,३,३ ]

[ ३ ] तै. ६,२,४ । काठ. २५,२ । कपि. ३८,५।

अतिविद्धा विथुरेणा चिदस्त्रास्त्रिःसप्त सानु सꣳहिता गिरीणाम् ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥ ८

इति सोऽब्रवीद्, दुर्गीद्वा आहर्तवोचथा, एतमाहरेति, तꣳ वै विष्णुराहरद्, यज्ञो वै विष्णु,—र्यज्ञो वै तद्यज्ञमसुरेभ्योऽध्याहरद्, यज्ञेन वै तद्यज्ञं देवा असुराणामविन्दन्तै,—तद्वा एषाभ्यनूक्ता ॥ ९

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान् क्षीरपाकमोदनꣳ वराहमिन्द्र एमुषम् ॥ १०

इति तद्वै देवा यज्ञमविन्दन्, यद्वै तद्यज्ञमविन्दꣳस्तद्देवयजनस्य देवयजनत्वꣳ, यद्देवयजनमिछन्ति यज्ञमिछन्ति, यद्विन्दन्ति यज्ञꣳ विन्दन्ति, यद्वाव यजमानो जोषयते तद्देवयजनꣳ, यज्ञꣳ वावैतद्यजमानो जोषयतेऽसुराणाꣳ वा इयमग्र आसीद्, यावन्निषद्य परापश्यꣳस्तद्देवानां, ते देवाः सलावृकीमब्रुवन्, यावदियं त्रिः सुमन्तं पर्येति तदस्माकमिति, सा वा इमां त्रिः सुमन्तं पर्यैत्तद्वै देवा इमामविन्दन्त, तद्वेद्या वेदित्वꣳ, विष्णुꣳ वै देवा आनयन्वामनं कृत्वा, यावदयं त्रिर्विक्रमते तदस्माकमिति, स वा इदमेवाग्रे व्यक्रमता,—ऽथेदमथाद,—स्तद्वै देवा इहेमामविन्दन्त, तद्वेद्या वेदित्वꣳ, सर्वा वा इयं पृथिवी वेदि,—रियं मेखल,—मिति ३त्वेवास्या यजमानः परिगृह्णीते, यावद्यावद्वै यजमानो वेद्याः कुरुते तावत्तावत्तात्पृथिव्या जयति, तस्मान्महतीं का३र्या ज्यायसी ज्यायसी, देवाश्च वा असुराश्चास्पर्धन्त, तद्यत्किंचासुराणाꣳ स्वमासीत् तद्देवा वेद्याविन्दन्त, तद्वेद्या वेदित्वं, तेषाꣳ यत् प्रियꣳ वस्वासीत्तेनापाधाव,—न्नैन चिन्मुच्यामहा इति, तद्देवा उत्तरवेद्याविन्दन्त, तदुत्तरꣳ वै श्रेयो विदामहीति, तदुत्तरवेद्या उत्तरवेदित्वं, तद्य एवꣳ विद्वान्वेदिं चोत्तरवेदिं च कुरुतेऽभिपूर्वमेव सपत्नस्य भ्रातृव्यस्य वसु वेदो वृञ्जान एति ॥ ३ ॥ ११

षट्त्रिꣳशत् प्रक्रमाः प्राची, चतुर्विꣳशतिरग्रेण, त्रिꣳशज्जघनेन, तथा विराजा संमिता,—ऽथो छन्दाꣳसि वै विराट्, छन्दाꣳसि वावास्यैतद्यज्ञमुखे युनक्त्ये,—तद्वा एषाभ्यनूक्ता ॥ १२

---

[ अतिविद्धा विथुरेणा०... चकार । ऋ. ८,९६,२ । विश्वेत्ता विष्णुराभरद्० । ऋ. ८,७७,१०; नि. ५,४ ]

[ ४ ] तै. ६,२,४;६ । काठ. २५,३ । कपि. ३८,६ ।

इन्द्राणी पत्या सुजितं जिगायोदꣳशेन पतिविद्ये विभेद ।
त्रिꣳशद्यस्या जघनꣳ योजनान्युपस्था इन्द्रꣳ स्थविरं विभर्ति ॥ १३

इति, यद्वाव प्राचीनप्रवणं तद्देवयजनं, प्राञ्चꣳ हि तꣳ शयानमविद,—न्नथ यत् प्राचीनप्रवणमुदीचीनापनतं तद्यजेत, यः कामयेतो,—भयोर्लोकयोर्ऋध्नुयामित्यु,—भयोर्वा एतल्लोकयो,—रुभयोरेव लोकयोर्ऋध्नोत्य,—थ यस्य देवयजनस्योत्तरादन्यद्देवयजनं तद्यजेत, यः कामयेता,—ऽभि मोत्तरो यज्ञो नमेदित्ये,—तद्वा उत्तरावन्नाम देवयजन,—मभ्येनमुत्तरो यज्ञो नमत्य,—थ यस्य देवयजनस्य मध्यतो बहुला ओषधयस्तत्पशुकामो यजेत, पशवो वा ओषधयः, पशुमान् भवति, यत्समं प्रतिष्ठितं तद्गतश्रीर्यजेत, प्रतिष्ठितꣳ वा एतत्, प्रतिष्ठित एष यो गतश्री,—स्तदेवैनं प्रतिष्ठापयति, पापो हि स, ततः प्रच्यवमानो, ऽथ यस्य देवयजनस्यापः पुरस्तात्तद्यजेत, यः कामयेता,—ऽभि मोत्तरो यज्ञो नमेदित्ये,—तद्वै पुरोहविर्नाम देवयजन,—मभ्येनमुत्तरो यज्ञो नमत्य,—थ यस्य देवयजनस्य पन्थाः पुरस्तादिरिणꣳ वा कृतो वा भ्रातृव्यवान् यजेतै,—तद्वा आप्तं देवयजनꣳ सदेवꣳ, यद्धि देवयजनाद्देवयजनमुच्छिꣳषेद्भ्रातृव्याय लोकमुच्छिꣳषे,—दथ यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति गार्हपत्यादन्याः प्रतीचीस्तद्यजेत यं तल्पे वा पात्रे वा मीमाꣳसेर,—न्ननुपक्तो हि वा एष पाप्मना, ऽथैतन्मीमाꣳसन्त, एतद्वै व्यावृत्तं पाप्मना, पाप्मनैवैनꣳ व्यावर्तयन्ति, यद्वै यज्ञः संतिष्ठते प्राचीनमस्य समृद्धमेति प्रतीचीनꣳ व्यृद्धं, पशवो वै यज्ञस्य समृद्ध,—मापः खलु वै पशवो, यत् प्रत्यङ्ङवभृथमभ्यवेयाद्यज्ञस्य व्यृध्येन व्यृध्येता,—ऽथ यत् प्राङवभृथमभ्यवैति यज्ञस्य वा एतत् समृध्येन समृध्यते, यत् त्र्युन्नतं तद्भ्रातृव्यवान् यजेत, यस्याहवनीयं च हविर्धानं चान्तरोन्नतꣳ, यस्य हविर्धानं च सदश्चान्तरोन्नतꣳ, यस्य सदश्च गार्हपत्यं चान्तरोन्नत,—मतो वै विष्णुरिमाँल्लोकानुदजयद्, विष्णोरेवोज्जितमन्विमाँल्लोकानुज्जयति, प्रैभ्यो लोकेभ्यो भ्रातृव्यं नुदतै, ऽथ यस्य देवयजनस्य दक्षिणत उन्नतं तद्भ्रातृव्यवान् यजेतै,—ताꣳ वै दिशं देवा असुरान् प्रणुद्य स्वर्गं लोकमाय,—न्नथैभ्योऽमुमादित्यं पुरिधिं पर्यदधुरपुनराभावायै,—ताꣳ वा एतद्दिशꣳ यजमानो भ्रातृव्यं प्रणुद्य स्वर्गं लोकमेत्य,—थास्मा अमुमादित्यं पुरिधिं परिदधात्यपुनराभावाय, स्थले यजेत यः कामयेतो,—भयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति, प्रकाशो वै नामैतद्देवयजन,—मुभयेषां देवमनुष्याणां प्रकाशं गच्छत्य,—भिशस्यमानꣳ याजयेत्, परोक्षं गुहा वने परोक्ष

पृष्ठान्यपेयुः, परोक्षꣳ वा एष यमभिशꣳसन्ति, परोक्षमेवास्माद्रुहा पापीयाꣳ वाचं करोत्य,-थ यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमपः सूर्यं तानि पश्येत्, तद् ब्रह्मवर्चसकामो यजेत, ब्रह्मवर्चसꣳ वा अग्नि,-र्ब्रह्मवर्चसमापो, ब्रह्मवर्चसमसमा आदित्यो ब्रह्मवर्चसमेव संदधाति, ब्रह्मवर्चसी भवत्य,-थ यस्य देवयजनस्यान्या अन्या मध्यतो बहुला ओषधयो, ऽतो वा अङ्गिरसः पशूनसृजन्त, तत् पशुकामो यजेता,-ऽथ यस्य देवयजनस्य मध्यत उन्नत,-मतो वा अङ्गिरसः स्वर्गं लोकमायꣳ,-स्तत्स्वर्गकामो यजेत, निर्वस्केऽभिचरन् यजेत, यथैवैतं निर्णयत्येवं तं निर्णयति यमभिचरति, यत् कार्यमिव स्यात् तद्यजेत, यः कार्य इव स्या,-दात्मा वै देवयजनं, करोत्येवैनꣳ, ये युवान आर्षेया ऋत्विजो वह्वयस्तद्देवयजनं, तस्मादाहु,-र्युवैवार्त्विजीना इत्य,-ग्निर्वाव देवयजनं, तद्य एवꣳ विद्वान् यत्रैव क्वचाग्निमाधाय यजते देवयजन एव यजते ॥ ४ ॥ १४

यद्वा अस्या यज्ञियं मेध्यꣳ यत्संदेवं तदुत्क्रम्यातिष्ठदन्तरा देवासुरान्त्सꣳयत्तान्त्सिꣳहीरूपमिव भूत्वा, तेऽविदु,-र्यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति, तस्याꣳ वा उभय ऐछन्त, सा नान्यतराꣳश्चनोपावर्तत, तां देवा अपाशासु,-रुप ना आवर्तस्वे,-ति साब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,-त्यब्रुव,-न्त्साब्रवी,-न्मामेव पूर्वामग्नेर्व्याघारयात्, स यत्कामो माꣳ व्याघारयात्तमेव स काममश्नुवदिति, तां देवाः पूर्वामग्नेर्व्याघारयꣳ,-स्ततो देवा अभवन्, परासुरा,-स्तद्य एवꣳ विद्वानेतां पूर्वामग्नेर्व्याघारयति भवत्यात्मना, परास्य भ्रातृव्यो भवति, यद्वै तदुत्क्राम्यातिष्ठदन्तरा देवासुरान्त्सꣳयत्तान्त्सिꣳहीरूपमिव भूत्वा, सा वा उत्तरवेदि,-स्तप्तायनी मेऽसीति, तप्ता हि तं तामविन्दन्त, वित्तायनी मेसीति, वित्ता हि तं तामविन्दन्ता,-ऽवतान्मा नाथितमिति, नाथिताꣳ हि सा तानावद,-वताद्व्यथितमिति, व्यथिताꣳ हि सा तानावु,-देतद्देतद्वा एतया देवा असुराणामविन्दन्तै,-तदेतद्वैतया यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽग्ने अङ्गिरो ३ योऽस्यां पृथिव्यामध्यसीति, य एवैषु त्रिषु लोकेष्वग्नयस्तानेवावरुन्द्धे, विदेरग्ने नभो नाम यत्ता इति, नभो हि नाम ३ सोऽग्निरासीज्ञानुदग्नं खेयु,-मेतावती वा अस्याः पृथिव्या जीवꣳ यज्ञियं, तदेवावरुन्द्धे, सिꣳहीरसि, महिषीरसीति, सिꣳहीरूप-

---

[५] मै. १,२,८। तै. ६,२,७—८। काठ. २५,६। कपि. ३९,२—४। वा. ५,९—१३;३३,३०। काण्व. ५,१३—१८;३२,३०।

मित्र हिं तन्मुहिर्षीरूपमिव भूत्वातिष्ठद्, देवेभ्यः शुन्धस्व, देवेभ्यः शुम्भस्वेति, देवेभ्य एवैना॒ꣳ शुन्धन्ति, देवेभ्यः शुम्भन्ति, निःसारयति, यदेवास्या उद्धन्तः क्रूरमक्रꣳस्तद्- क्रूरमक,—स्तन्निःसारयती,—न्द्रघोषास्त्वा पुरस्ताद्वसुभिः पान्त्वित्ये,—तदेव३त्या वा इमा दिशो, यथादेवतमेवैनां प्रोक्षी,—दतो वै देवा असुरान्मनसा विनुद्य स्वर्गं लोकमायꣳ,—स्त एता देवता अन्ततोऽदधतासुराणामनन्वग्भावाया,—ऽतो वा एतद्यजमानो भ्रातृव्यं मनसा विनुद्य स्वर्गं लोक- मेति, स एता देवता अन्ततो धत्ते भ्रातृव्यस्यानन्वग्भावाय, तेऽकामयन्त, सपत्नं भ्रातृव्यꣳ सहेमहीति, सिꣳहीरसि सपत्नसाही स्वाहेति, तमेव तेन काममाश्नुवत, सपत्नं भ्रातृव्यꣳ साढ्वा तेऽकामयन्त, पशवो नः स्युरिति, सिꣳहीरसि रायस्पोषवनिः स्वाहेति, तमेव तेन काममाश्नुवत, सपत्नं भ्रातृव्यꣳ साढ्वा पशून् भित्त्वा तेऽकामयन्त, प्रजा नः स्यादिति, सिꣳहीरसि सुप्रजावनिः स्वाहेति, तमेव तेन काममाश्नुवत, सिꣳहीरस्यादित्यवनिः सजातवनिः स्वाहेत्या,—दित्याभिर्हि सा प्रजाभिः सह, तेऽकामयन्त, देवा नो यज्ञꣳ विद्युरिति, सिꣳहीरस्या,—वह देवान् देवायते यजमानाय स्वाहेति, तमेव तेन काममाश्नुवत, भूतेभ्य- स्त्वे,—त्युद्दिशति, देवा ३ह्येव भूता, यत्र वा अ३दोऽग्निर्होत्रादिपापाक्रामत्स सर्वेषु भूतेष्ववसद्, यो पशुष्ववसत्तामनाछिन्नस्तुकस्यान्तराशृङ्गमवसद्, याꣳ वनस्पतिषु तां पूतुद्रौ, यामोषधीषु ताꣳ सुगन्धितेजने, यत्संभारान्त्संभरति यदेवात्राग्नेर्यक्तं तत्संभरति, यानि वा अ३दोऽग्निर- स्थान्यधूनुत स पूतुद्रुरभवद्, यन्माꣳसं तद्गुग्गुलु, यत् पूयितमुपश्लिष्टꣳ स सुगन्धितेजनो, यदेते संभारा भवन्ति यदेवात्राग्नेर्यक्तं तस्यावरुद्ध्यै, विश्वायुरसि, पृथिवीं दृꣳहेत्ये,—षाꣳ ३ह्येते लोकानाꣳ विधृत्यै परिधीयन्ते, ध्रुवक्षितिरस्य,—न्तरिक्षं दृꣳहेत्य,—न्तरिक्षꣳ हि यज्ञो, ऽच्युतक्षिदसि, दिवं दृꣳहेति, दिवमेवैनमजीगम,—दग्नेर्भस्मास्य,—ग्नेः पुरीषमसीत्य,—ग्ने३- र्ह्येतद्भस्मा,—ऽग्नेः पुरीषं, देवपात्रꣳ वा उत्तरवेदिं, देवेभ्यो देवपात्रं प्रोच्यꣳ, वैभ्राजा देवा, यदाह, विभ्राड् बृहत्पिबतु सोम्यं मध्विति, देवेभ्यो वा एतद्देवपात्रं प्राह, प्र वसीयसः पात्रमाप्नोति, ब्राह्मणं तु पात्रे न मीमाꣳसेत यः पात्रिय इव स्यात् ॥ ५ ॥ १५

एतावती वा इयं पृथिवी यावती वेदि,—रपरिमिताद्वा एतद्भ्रातृव्यं निर्भज्य यजमानाय परि- गृह्णात्यृ,—क्षꣳ वा अमेध्य,—मापो हवि,—र्यत्प्रोक्षति मेध्यमेवैनत्करोत्यृ,—क्षꣳ वा अमेध्यꣳ,

[ विभ्राड् बृहत्पिबतु०... । ऋ. १०,१७०,१; सा. ६२८,१४५३ ]

[ ६ ] काठ. २५,७ । कपि. ३९,२,५ । वा. २,२;९,२०;१८,२८;२२,३२ । काण्व. २,३;१०,२७;१९,४०;२४.४५ । मै० ३५

यद्बर्हिः स्तृणाति मध्यमेवैनां करोत्ये,—तावती वा इयं पृथिवी यावती वेदिः, प्रजा बर्हि,—
यद्बर्हिः स्तृणात्यस्यां वा एतत् प्रजाः प्रतिष्ठापयति, यजमानो वै प्रस्तरः, प्रजा बर्हि,—
यत्प्रस्तरमुत्तरं बर्हिषः सादयति यजमानं वा एतदुपरिष्टादासां प्रजानां दधात्य,—थ यत्तृणे
अन्तर्दधाति तेन यजमानो यजमानेन व्यावर्तते, बहुलं बर्हिः स्तृणात्यं,—क्षोधुका अस्य पशवो
भवन्ति, प्राचीनं बर्हिः स्तृणाति, प्राङ् हि यज्ञो, यत्प्रतीचीनं स्तृणीयात् प्रत्यादाज्यास्य
राष्ट्रं घातुकं स्याद्, देवेषुर्वै वेदि,—र्यत्र वै देवेष्वा संनतया कामयते तद्वन्ति, यद्वेदिं
कल्पयति देवेषुं वा एतत्संनमति, तया संनतया यत्र यजमानः कामयते तद्वन्ति, त्रयो वै
पूर्वेऽग्नयः प्राधन्वन् हव्यं देवेभ्यो वहन्तो, वषट्कारः प्रावृश्च,—देथ ३यो ऽयमिदानीं स भीषा-
पाद्रवदीदंगु स आरिष्यतीति, तं देवा अपाशासु,—रुप ना आवर्तस्वेति, सोऽब्रवीद्,
भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीत्, त्रयो वै मे पूर्वे भ्रातरः प्राधन्वन् हव्यं
देवेभ्यो वहन्तो, वषट्कारः प्रावृश्चत्तेषां भा३गोऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीद्,
यदेव किंचाहुतं बहिष्परिधि स्कन्देत्तदेव तेषां भागधेयमसदिति, तेषां वा एतद्भागधेय,—म-
स्थन्वन्तो हि वै त आस,—न्नथ ते प्राधन्व,—न्त्सोऽब्रवी,—दस्थानि नु धुविष्ये, ऽथोपाव-
र्त्स्यामीति, तं वा अन्वायं,—स्तं सुमन्तं पर्यविशन् यज्ञस्य गोपीथाया,—ऽयं वाव यज्ञायो-
पधीयते, ऽयं यजमानाया,—ऽयं भ्रातृव्याये,—मौ प्रतरं करोती,—मंमपतरं, यज्ञेन वा
एतद्यजमानं प्रतरं करोति, यज्ञेनास्य भ्रातृव्यमपतरं करोति, संधिं प्रतिजुहोति, न ३ह्यग्नि-
माहुतिस्तरति, मुखत एवैनान् प्रीणात्यं,—थो सुतीर्थेन वा एतदाहुतीस्तारयत्य,—यं वाव
भूपतिं,—रयं भुवनपतिं,—रयं भूतानां पति,—रथ ३यो ऽयमिदानीं स भूति,—र्यदाहुतं बहिष्प-
रिधि स्कन्देत्तदभिमन्त्रयेत।। भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा।। इति
भागधेयं वावैषामेतत्, प्रीणात्येवैना,—नथो हविषा वा एतत् स्कन्नेन द्वितीयामाशिषमवरुन्द्ध,
एतद्ध स्म वा आहारुणं औपवेशिः, किमु स यज्ञेन यजेत यो हविषा स्कन्नेन द्वितीयामाशिषम-
वरुन्धे न विद्यादिति, तद् द्वितीयामेवैतेनाशिषमवरुन्द्धे ।। ६ ।। १६–१८

ये पुरा ग्रन्थयो भवन्ति तान् विस्रंसयन्ति मानुषस्य व्यावृत्त्यै, प्रणेनिजति, यदेवैनयो-

---

[७] मै. १,२,९। तै. ६,२,९। काठ. २५,८। कपि. ४०,१। वा. ५,१४१८–२१;११,४;३७,२;५,। काण्व. ५,१९,२४–२७ १२,४;३७,२ ।

रभिनिषण्णꣳ शमलममेध्यं तच्छुन्धन्ति, युञ्जते मन उत युञ्जते धिया, इति जुहोति, युक्त्या एव, सावित्र्या जुहोति, सवितृप्रसूते एव प्रवर्तेते, हविर्वै हविर्धाने, यदुपानक्ति हविर्भूत एव प्रवर्तेते, अथो अभिवृत्ते एव पत्न्युपानक्ति, यद्वै पत्नी यज्ञे करोति तन्मिथुनं, मिथुनत्वाय वै पत्न्युपानक्त्ये,—प वै पत्न्या यज्ञस्यान्वारम्भो यद्यज्ञे करोत्य,—न्वारम्भाय वै पत्न्युपानक्ति, प्राचीनमुपानक्ति, प्राङ् हि यज्ञ,—स्त्रिरन्यत्त्रिरन्यदुपानक्त्य,—परिमितꣳ हि मनुष्या उपाञ्जन्ति, दक्षिणत उपानक्त्यु,—दीची ३ह्येते मनुष्यलोकमुपावर्तेते, निर्ऋतिगृहीतो वा एष उभयतः संदष्टः शुष्को, यदुपानक्ति शमयत्येवं, शुष्को वा एष दुर्वाग्यजमानस्य गृहमावदति, स ईश्वरोऽशान्तो यजमानꣳ हिꣳसितो,—स्तदनुगृह्णन्तो यन्ति, यद्युत्क्वेदेत्, सुवागावद देव दुर्यानिति वदेच्, शमयत्येवा,—ऽथोऽशमयित्वैवाशिषमाशास्ते, हविर्वै हविर्धाने, स्तीर्त्वा वै बर्हिर्हविरासादयन्ति, तस्मात् प्रस्तरꣳ स्तीर्त्वा प्रवर्तयन्ति, हविर्वै हविर्धाने, अनूच्यमानासु वै सामिधेनीषु हविरासादयन्ति, तस्मात् प्रवर्त्यमानयोर्होतान्वाहे,—मे वा एते, इमे वा एतत् प्रवर्तयन्ति यद्धविर्धाने, तस्मात् पूर्वस्या जनताया अपरा जनता क्षेत्रमभ्यारोहुका, ते यर्हि प्रवर्तयेयुस्तर्हि होतानुब्रुवन्मनसा पदा तां जनतां प्रतिनुदे,—दपर्जन्यं भयं नुदेति, विड्वा एषा, विशꣳ वा एतत् प्रतिनुदते, ऽनभ्यवचारुकास्य विट् क्षेत्रं भवति, नीयानꣳ वै रक्षाꣳसि यज्ञमवयन्ति, यद्वर्त्मनि जुहोति रक्षसामपहत्यै, वैष्णव्या जुहोति, विष्णुर्वै यज्ञो, विष्णुनैव यज्ञेन यज्ञाद्रक्षाꣳस्यपहन्ति, यद्गायत्र्या जुहोतीमां तेनाक्रमते, यत्त्रिष्टुभान्तरिक्षं तेना,—ऽथ यदाहवनीयं गच्छतः स्वर्गं तेन लोकं, त्रीन् प्रक्रमान् प्रतिविक्रमते, त्रयो वा इमे लोका , इमानेव लोकान् यजमानायोच्छिꣳषति, वैष्णवमसि, विष्णुस्त्वोत्तभ्नात्विति, वैष्णवꣳ हि हविर्धानं, दिवो विष्ण उत वा पृथिव्या, इति दक्षिणस्य हविर्धानस्य मेथीन्निहन्ति, मुखत एव यज्ञस्याशिषमवरुन्द्धे, यमध्वर्युः प्रथमं ग्रन्थिं ग्रथ्नाति तं प्रथमꣳ विस्रꣳसयति, यदन्यं पूर्वꣳ विस्रꣳसयेदमेहेन प्रमीयेत, विष्णोर्नु कꣳ वीर्याणि प्रवोचमित्युत्तरस्य हविर्धानस्य मेथीन्निहन्ति वैष्णव्या, वैष्णवꣳ हि हविर्धानꣳ, स्वयैव देवतया, यो अस्कभायदुत्तरꣳ सधस्थमित्य,—दो वा उत्तरꣳ सधस्थ,—ममुष्मिन्नेव हविर्धानꣳ संमिनोति॥ १९

[ युञ्जते मन उत०...। ऋ. ५,८१,१; तै. सं. १,२,१३,१:४,१,१,१; तै. आ. ४,२,१ । दिवो ( वा ) विष्ण उत० ...। अथर्व. ७,२६,८ । विष्णोर्नु कं वीर्याणि०... । ऋ. १,१५४,१; अथर्व. ७,२६,१; तै. सं. १,२,१३,२। ]

*

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ २०

इति य एवं देवा यज्ञियास्तान् हविर्धाना आसादयति, ताँ श्वो भू३ते ऽभियजते, दण्डो वा एतद्दौपरो वषट्कारेण निरहन्, यच्छदिरभिनिदधात्यपिहित्या अच्छिद्रत्वाय, विष्णोः पृष्ठमसीत्य,—द एवं, विष्णो ररराटमसीत्य,—द एवं, विष्णोः शिप्रे स्था, इतीमे एवं, मुखतो वा एतत्, स्वया देवतया शिरो यज्ञस्य संभरति, विष्णोः स्यूरसीति, तस्मादिदꣳ शिरः पोढाविष्कृतं, प्र तद्विष्णुः स्तवते वी३र्येणे,—ति प्राङुत्क्रम्य वदत्य,—तो वै विष्णुरिमां-ल्लोकानुदजयद्, विष्णोरेवोज्जितिमन्विमांल्लोकानुज्जयति, प्रैभ्यो लोकेभ्यो भ्रातृव्यं नुदते ॥
॥ ७ ॥ २१

देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्यामिति, देवताभिरेवा,—ऽभ्रिरसि, नारिरसीति, क्रूरमिव वा एतद्यदभ्रिः, शमयत्येवे,—दमहꣳ रक्षसो ग्रीवा अपिकृन्तामी,—त्याह रक्षसां ध्वरायै रक्षसामन्तरित्या, इदमहꣳ सोमे समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्ता-मीति, समानो वा ह्यसमानो वारातीयति सर्वमेवैतया पर्याप्त, प्राणा वा उपरवाः, शिरो हविर्धानꣳ, शीर्षन्वा इमे प्राणा,—स्तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् प्राणा,—स्तस्माद-न्त,—श्चत्वारो वा इमे शीर्षन् प्राणा,—स्तस्माच्चत्वारः संतृणाः परः, संतृणा हि परः प्राणा, विधृता उपरिष्टाद्, विधृता ३हीमे उपरिष्टात् प्राणाः, पूर्वार्धे वा इमे मुखस्य प्राणा, एतत् खलु वै हविर्धानस्य पूर्वार्धꣳ यद्दक्षिणꣳ हविर्धानं, तस्माद्दक्षिणे हविर्धाने, बृहन्नसि बृहद्ग्रावा इति, देवा ३ह्येव बृहद्, बृहतीमिन्द्राय वाचꣳ वदेत्यै,—न्द्रो हि यज्ञो, रक्षोहणꣳ वलगह-नमित्या,—ह रक्षसां ध्वरायै रक्षसामन्तरित्यै, वैष्णवीमिति, विष्णुर्हि यज्ञो, ऽसुरा वा एतान् वलगान् देवेभ्यः प्राणेषु न्यखनꣳ,—स्तान् बाहुमात्रेऽन्वविन्दꣳ,—स्तस्माद्बाहुमात्रे खेयꣳ, यद्वाव कृत्या यच्च् शफꣳ यदभिचरितं तदेतदुद्वपति, प्राणा वा उपरवा, यदव-

---

[ आ वामुपस्थमद्रुहा०... पीतये। ऋ. २,४१,२१; नि. ९,३७ । प्र तद्विष्णुः स्तवते०... विश्वा । ऋ. १,१५४,२; अथर्व. ७,२६,२—३; तै. ब्रा. २,४,३,४; नि. १,२० ]

[ ८ ] मै. १,२,१० । तै. ६,२,१०—११ । काठ. २५,९ । कपि. ४०,२ । वा. ५,२२—२३,२५—२८;६,१,३ । काण्व. ५,२८- २९,३१—३६;६,१,४ । [ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

सिञ्चति तस्मादिमे उदन्वन्तः प्राणाः, प्राणा वा उपरवा, यदवस्तृणाति तस्मादिमे लोमशाः प्राणा, अथ यदवसिञ्चत्येव च स्तृणाति मस्तिष्को वा एष क्रियते, हनू अधिषवणे, शिरो हविर्धानꣳ, शीर्ष्णा वा इमे हनू, तस्माद्धविर्धाने, ऽन्तर्वा इमे शीर्षन् हनू, तस्मादन्तरिमे वा एते यत्संतृन्द्या,—दिमे एवं संतृन्द्यात्, तत्संपाद्ये एवं, त्र्यङ्गुलमन्तरा कार्यं, त्र्यङ्गुलꣳ ह्यीदं,—मन्तरा वै नाकेव, शिरो हविर्धानं, पृष्ठमाग्नीध्र,—मुदरꣳ सदः, प्राङ् हि यज्ञः सꣳहितो, हनू अधिषवणे, जिह्वाधिषवणं, ग्रावाणो दन्ता, मुखतो वा एतत् प्रजापतेः सोमं पिबन्ती,—न्द्रो वै वृत्रमह,—न्त्स इमा प्राविशत्, तं देवताः प्रैषमैछꣳ,—स्तन्नाविदꣳ,—स्तं भूतान्युपारवन्त, यो नोऽधिपतिरभूत्तन्न विन्दामा इति, तदुपरवाणामुपरवत्वꣳ, यत्त-दुपारवन्त तच्चतुर्धावस्तादैछ,—न्नेकधा परोऽन्वविन्दꣳ,—स्तस्माच्चतुर्धावस्ता,—देकधा परो, यदुपरवानुमृशती,—न्द्रियस्यावरुद्धै ॥ ८ ॥ २२

पृथिव्यै त्वा, ऽन्तरिक्षाय त्वा, दिवे त्वे,—ति प्रोक्षत्ये,—षा३ ह्येषां लोकानाꣳ विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो त्रयो वा इमे लोका, एभ्य एवैनां लोकेभ्यः प्रोक्षी,—दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमतीभिः प्रोक्षत्यूर्जा वा एतदन्नꣳ सम-र्धयत्य,—क्षꣳ वा अमेध्य,—मापो हवि,—र्यदवसिञ्चति मेध्यमेवैनत् करोत्य,—क्षꣳ वा अमे-ध्यꣳ, यदवस्तृणाति मेध्यमेवैनत् करोति, पितृदेवꣳत्यꣳ वै निखातममेध्यमन्यदेवत्य,—मस्याः खलु वा इमा उत्तमार्धे ओषधयो, यदवस्तृणात्यस्या एवैनामुत्तमार्धे मिनोत्य,—निखातैवा-भू,—दन्नꣳ वै यवा, ऊर्गुदुम्बरो, यद्यवमवास्यत्यन्ने वा एतदूर्जं दधाति, न ह्यनमृत ऊर्जो धिनोति, नो ह्यूर्गृतेऽन्नाद्धिनोति, नितानस्त्वा मारुतो निहन्त्विति, मनो वै नितानः, प्राणा मारुता, मित्रावरुणौ ध्रुवेण धर्मणेति, मित्रमेवैनां दाधार, वरुणः कल्पयति, विधृत्यै च खलु वा एषां प्रजानां क्लृप्त्यै च मीयते, मित्रावरुणौ वै देवानां धर्मधारयौ, दैवꣳ वा एतद्धर्ममदीधरताꣳ, यदौदुम्बरी, ब्रह्मवनि त्वा क्षत्रवनि पर्यूहामीत्या,—शीरेवैषा, ब्रह्म दृꣳह क्षत्रं दृꣳहेत्या,—शिष एवैष परिग्रहो, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावा-पृथिवी व्युनत्त्यु,—दरꣳ वै सदा, ऊर्गुदुम्बरो, यदौदुम्बर्यू,—र्जꣳ वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, प्रजापतेर्वा एतदुदरꣳ यत्सदः, प्राजापत्य उद्गाता, तस्मादुद्गातान्वारभते,

[९] मै. ३,२,११। तै. ६,२,११। काठ. २५,१०। कपि. ४०,३ वा. ५.२६,२८;६,१,२६। काण्व. ५,३३,३६;६,२२।

यजमानो वा, औदुम्बरी वर्षिष्ठा कार्य्या, वर्ष्मैनꣳ समानानां गमयति, विश्वजनस्य छाया-सीं,—ति छर्दिरभिनिदधाति, गोत्राद्गोत्राद्धि प्रसर्पन्त्यु,—दरꣳ वै सदो, यदन्येनान्येन संमि-नोति तस्मादुदरमन्येनान्येनान्नेन संततं, उदरꣳ वै सदो, यदनूचीनं मिनुयात्पराचीनं जग्ध-मतीया,—दथ यत्तिरश्चीनं मिनोति तस्माज्जग्धꣳ, सर्वाण्यङ्गान्यनुवेति, प्रजा वा एतत् सुमी-चीनं मिनोति, समीचीरेनं प्रजा अभिसमावर्तते, सꣳयात इव स भवति, समानꣳ सांका-शिनं कार्यꣳ, समाना ३हीमे प्राणा, यं द्विष्यात्तस्याक्ष्णया मिनुयात्, प्राणानस्य मोहयति, प्रमायुको भवति, यदि कामयेत, वर्षेत् पर्जन्या इति, नीचैः सदो मिनुयाद्, वृष्टिमेव निय-च्छति, यदि कामयेत, न वर्षेत् पर्जन्या इत्यु,—च्चैः सदो मिनुयाद्, वृष्टिमेवापाग्रही,—न्नवच्छ-दिरग्निष्टोमे स्यात्, तेजसा त्रिवृता संमितं, पञ्चदशच्छदिरुक्थ्ये, पञ्चदशेन वज्रेण संमितꣳ, सप्तदशच्छदिरतिरात्रे, सप्तदशो वै प्रजापतिः, प्राजापत्या रात्रिरानुष्टुभी, यज्ञक्रतूनामेवैषा व्यावृत्तिः, प्राचीनवꣳशꣳ हविर्धानं मिनोत्यू,—र्ध्वा हि द्यौः, प्राचीनवꣳशमाग्नीध्र,—मूर्ध्वꣳ ३ह्यन्तरिक्षं, तिरश्चीनवꣳशꣳ सद,—स्तिरश्ची ३हीयꣳ, यजुषा हविर्धानं मिनोति, निरुक्ता हि द्यौ,—र्यजुषा सदो, निरुक्ता ३हीय,—मयजुषाग्नीध्र,—मनिरुक्तमिव ३ह्यन्तरिक्ष,—मर्धमा-ग्नीध्रस्यान्तर्वेदि मिनोत्य,—र्धं बहिर्वे३द्य,—र्धꣳ ३ह्यन्तरिक्षस्यास्मिल्लो३के, ऽर्धममुष्मिन् ॥९॥

२३

सुत्राङ्ग्नभ्राडङ्घारे बम्भारा इत्ये,—ते वै देवानाꣳ सोमरक्षय, एतेभ्यो वा अधि छन्दाꣳसि सोममाहरꣳ,—स्ते सोमपीथेन व्यार्ध्यत, त एतानि द्वितीयानि नामान्यधत्तमङ्गलेछायै, सोम-पीथो ना उपनमादिति, तस्मादेते द्विनामान,—स्ते वा अन्वायꣳ,—स्ते न प्राप्नुवꣳ,—स्तस्मा-देतेऽतिहाय वषट् क्रियन्ते, न हि प्राप्नुवꣳ,—स्तेषाꣳ वा एष लोको यावदुदभि न्युप्यते, तद्यो ऽविद्वानाक्रामत्यार्त्तिमार्छत्य,—थ य एवꣳ विद्वानाक्रामति न सुद३स्यामार्त्तिमार्छति, तेषाꣳ वा एष भागो यद्धाघार्यन्ते, त एवास्मै तेनाभीष्टाः प्रीता भवन्ति, यज्ञमुखꣳ वै पवमानो, यत्पवमाने स्तु३ते३भ्यो विह्रियन्ते यज्ञमुखादेवाधिविह्रियन्ते, जम्भो वै नामासुर आसीत्, स यज्ञमगिरत्, स आग्नीध्रं न प्राप्नोत्, तमाग्नीध्रात्पुनर्व्युरुज,—देतद्वै जीवं, तस्मादाग्नीध्राद्वि-ह्रियन्ते, दक्षिणतो वै देवानसुरा यज्ञमजयꣳ,—स्त उदञ्चा आग्नीध्रꣳ समातिष्ठꣳ,—स्तमाग्नीध्रात् पुनरभ्यजय,—न्नेतद्वा अनभिजितं, तस्मादाग्नीध्राद्विह्रियन्त, एतत् प्रति वै देवानसुरा यज्ञ-

[ १० ] तै. ६,३,१ । काठ. २६,१ । कपि. ४०,४ । वा. ५,३२ । काण्व. ५,४० ।

मजयꣳ,—स्तं आग्नीध्रादधि बहिष्पवमानेन यज्ञमभिजित्याग्नीनाधाय बर्हिरस्तृणत, पराजिज्ञाना वा एतत् सर्पन्ति यद्बहिष्पवमानꣳ स्तोष्यन्तः सर्पन्ति, यद्बहिष्पवमाने स्तुत आह ॥ अग्नीदग्नीन्विहर, बर्हिः स्तृणाति ॥ इत्याग्नीध्राद्वा एतदधि बहिष्पवमानेन यज्ञमभिजित्याग्नीनाधाय बर्हिः स्तृणते, ऽत्र वा एतर्हि यज्ञो यत्रास्तुतꣳ स्तोत्रꣳ, यत्रैव यज्ञस्तदाभिपर्यावृत्य जुहोति, शुक्रवती वै पूर्वे सवने, अशुक्रं तृतीयꣳ सवनꣳ, यज्ज्योतिष्मतीस्तृतीयसवने व्याघारयन्ति तेन तृतीयसवनꣳ शुक्रवत्, सꣳवत्सरो वा अग्निष्टोम,—स्तस्य वा एतास्त३न्वो यद्धिष्ण्या,—स्ता वा अस्यैतत्समुद्धर्षयित्वा ज्योतिष्मतीः कृत्वाथाग्निष्टोमेन स्तुवते, सꣳवत्सरो वा अग्निष्टोमो, द्वादश मासाः सꣳवत्सरो, यत् प्राचीराहुतयो हूयन्ते, प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते सꣳवत्सरस्य विधृत्या, उभयतो वै देवानसुराः परीयत्ता आसन् पुरस्तादन्ये, पश्चादन्ये, यत् प्राचीराहुतयो हूयन्ते, ये पुरस्तादासꣳस्ताꣳस्तेनापानुदन्त, यत् प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते, ये पश्चादासꣳस्ताꣳस्तेनापानुदन्त, तद्भ्रातृव्यस्य वा एष विनोदो, ऽध्वर्युणा वै यज्ञो विधृत, इदमिव वा एतद्यज्ञस्य यद्धिष्ण्या, यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयात् प्राणात्संकर्षेत, प्रमायुकः स्याद्, यद्युतीयाद्यज्ञपरुष्यतीयादैन्द्रीमनुब्रूया,—दैन्द्रꣳ हि सद:, स्वयैवैनद्देवतयोपचरत्या,—त्मनोऽहिꣳसायै, प्राचीनꣳ वै धिष्ण्येभ्योऽध्वर्योर्लोको, यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयादन्यजनतास्य क्षेत्रमभ्यारोहुका स्या,— ३न्न्यन्य उप्यन्ते, नान्ये, तदेषां मिथुनं प्रजायै, निरुक्ता अन्ये, ऽनिरुक्ता अन्ये, ये निरुक्ता३स्तेऽस्मै लोकाय, येऽनिरुक्ता३स्तेऽमुष्मै क्षयाय, यथा वा इदं मेखला पर्यस्यते मेध्यस्य चामेध्यस्य च विधृत्या, एवꣳ वा एते न्युप्यन्ते यज्ञस्य विधृत्यै, यत् प्राचीनं धिष्ण्येभ्यस्तद्देवानाꣳ, यत् प्रतीचीनं तन्मनुष्याणां, तस्मात् सोमं पिबते प्राञ्चो धिष्ण्या नातिसृपे, जनꣳ ह्येति, देवलोकमभ्यारोहति, चात्वालाद्धिह्रियन्त, एष वा अग्नीनाꣳ योनिः, स्वादेव योनेर्विह्रियन्ते, ऽस्कन्नत्वाय, तेषाꣳ वा एतदभ्यवायनं चोदयनं च, यदन्तरा चात्वालं चाग्नीध्रं चैतद्वै यज्ञस्य तीर्थं, तस्मादेतेन संचरति, तेन योऽविद्वान्त्संचरत्यार्तिमार्छत्य,—थ य एवꣳ विद्वान्त्संचरति न सुद३स्यामार्तिमार्छति ॥ १० ॥ २४–२६ [ १६०७ ]

॥ इत्युपरिकाण्डे असुराणां नाम अष्टमः प्रपाठकः ॥ ८ ॥

अथ नवमः प्रपाठकः ।

यज्ञो वा एष संक्रामन्नेति प्रायणीयादध्यातिथ्यं, मातिथ्यादध्युपसदः, स उपसद्भ्योऽधि प्राङ् प्रणीयते, यदगृहीत्वाज्यानि प्रणयेयुरपघ्नीत यजमान, मथ यद्गृहीत्वाज्यानि प्रणयन्ति यज्ञꣳ वा एतद्यजमानोऽन्वारभते, प्राञ्चः सोमेन प्रयन्ति, प्राची पत्नी पूर्वमाग्निमभ्युदैति, सोमेन वा एतद्राज्ञाभिजयन्तो यन्ति, यस्य वै मनुष्यराजो गृहमागच्छति तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रायतेऽथ तेषां तत्पुनर्भवति, तस्मादाहुरपिव्रता इत्य, पि ह्येषां तस्मिन् व्रतꣳ, सोमो वा एतद्राजा गृहं प्राप, तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रच्यवतेऽथ स तत्तेभ्यो विसृजते, तद्वैसर्जनानाꣳ वैसर्जनत्वं, त्वꣳ सोम तनुकृद्भ्या इति, यदेव तनुकृतं चान्यकृतं चैनस्तदेतेनावयजति, द्वाभ्यां गार्हपत्ये जुहोति, द्विपाद्यजमानः प्रतिष्ठित्या, आग्नेय्याग्नीध्रे, ऽन्तरिक्षमेव प्राप्यान्यदेव रूपमक, वैष्णव्या हविर्धाने, ऽद एव प्राप्य, विष्णुर्वै यज्ञो, विष्णुमेव यज्ञमुक, रसुरा वा एतं देवानामादित्सन्त, तं देवा अमुं कृत्वामुं लोकमहरन्, यदमुमत्या जुहोत्यमुमेवैनं कृत्वामुं लोकꣳ हरन्ति, सर्वेभ्यो वा एष भूतेभ्य आह्रियते, यत्सौम्या जुहोति मनुष्येभ्यस्तेनाह्रियते, यदमुमत्या पितृभ्यस्तेन, यदाग्नेय्या देवेभ्यस्तेन, यद्वैष्णव्या यज्ञाय तेन, सर्वा वा एतत् प्रजा वरुणो गृह्णाति, यत् सौम्या जुहोति मनु३ष्याꣳस्तेन वरुणान्मुञ्चति, यदमुमत्या पितॄꣳस्तेन, यदाग्नेय्या देवाꣳस्तेन, यद्वैष्णव्या यज्ञं तेन, सर्वा वा एतत् प्रजा वरुणान्मुञ्चत्यग्निना वै मुखेन देवा इमाँल्लोकानभ्युजनयन्, गार्हपत्येनामुं लोकं, माग्नीध्रेणान्तरिक्ष, माहवनीयेनामुं लोकं, तस्मात् त्रेधा अग्नय आधीयन्त एषां लोकानामभिजित्या, इन्द्राग्नी वा अपरा अग्नी, अग्निरपुरा, इन्द्रः पूर्वः, प्रजापतिराहवनीय, स्तस्मादेष उपोप्ते साद्यता, उत्तरो हि पिता पुत्रा, दुत्तरो भ्रातृव्याद्भवति य एवꣳ वेदा, ऽग्रेण प्रणयेद्गतश्रीः श्रिय एव परिगृहीत्यै, सौम्यो वै ब्राह्मणो देवतया, स्वयैव देवतया, प्रजा वै पशवोऽꣳशवो, रुद्र आहवनीयो, यदग्रेण प्रणयेद्रुद्रायास्य पशूनपिदध्यात्, पश्चादेव प्राङ् प्रणीयः पशूनां गोपीथायो, ३र्वन्तरिक्षꣳ ३वीहीत्य, न्तरिक्षदेव३त्यो वा एष एतर्हि, प्रच्युत इतोऽप्राप्तोऽमुत्रा, ऽऽदित्याः सदा आसीदेत्या, दित्यो वै यज्ञो, ऽदितिः सोमस्य योनिः, स्व एवैनꣳ योनौ दधाति, देव सवितरेष ते सोमा इति, मनुष्येषु वा एष पुराभूद्, देवेभ्य एवैनꣳ संप्रादा, देतत्त्वं देव सोम देवानुपावृता इति, देवो

---

[ १ ] मै. १,२,१३। तै. ६,३,२। काठ. २६,२। कपि. ४०,६। वा. ५,३५,३९–४०;२,७। काण्व. ५,४४,४८–५०;२,१०।

३ह्येष देवानुपावर्तत, इदमहं मनुष्यान्त्सह रायस्पोषेण प्रजया चोपावर्तता, इत्याशिषमेवा-
शास्ते, नमो देवेभ्यः, स्वधा पितृभ्या इति, नमस्कारो देवानाꣳ, स्वधाकारः पितॄणां,
निर्वरुणस्य पाशादमुक्षीति, वरुणपाशादेव निर्मुच्यत आत्मनोऽहिꣳसायै स्वरभिव्यख्यमिति,
यज्ञो वै स्व,र्यज्ञमेवाभिविपश्यति, ज्योतिर्वैश्वानरमित्य,सौ वा आदित्यो ज्योतिर्वैश्वानर,-
मग्निना वा एष तन्वꣳ विपरिधत्ते यो दीक्षते, ऽग्नी रुद्रो, यदग्निना पुनर्यथायथं त३न्वं न
विपरिदधीत रुद्र एनमभिमानुकः स्याद्, यदाहा,ऽग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा
त्वय्य,ग्ने व्रतपते या मम तनूस्त्वय्यभूदियꣳ सा मयीत्य,ग्निना वा एतत् पुनर्यथायथं तन्वꣳ
विपरिधत्त आत्मनोऽहिꣳसायै ॥ १ ॥ १

न यूपमच्छैष्यता होत३व्यं, न हि दीक्षितस्याग्नौ जुह्वति, वैष्णवीमनूच्याच्छैत्यो, वैष्णवो हि
यूप,स्तदाहु,र्होतव्यमेव, परुष्येव जुहोत्यायतना इति, तन्न सूक्ष्यꣳ, यूपस्यैवान्तेऽग्नि-
मथित्वाथ होत३व्यं, तस्मिन्नुभयमक,र्जुहोत्याह, न दीक्षितस्याग्नौ जुहोत्य,त्यन्यानगां,
नान्यानुपागामित्य,ती ३ह्यन्यानेति, नान्यानुपैत्य,र्वाक् त्वा परेभ्यः परोऽवरेभ्योऽविदभि-
हय,र्वाग्ध्येनं परेभ्यः परोऽवरेभ्यो विन्दति, तं त्वा जुषामहे देवयज्याया इत्य,तꣳ ३ह्येष
जुषते, जुष्टꣳ विष्णवा इति, यज्ञायैवैनं जुष्टꣳ विष्णवेऽक,र्विष्णवे त्वे,ति पर्यनक्ति,
हविर्भूतमेवैनꣳ वृश्चत्य,थो अभिघृतमेव, य इत्थꣳ वेत्थेवाहु,र्णो मेधा३त्सोऽपावृत्तो, य
ऋजुरूर्ध्वशल्कः स वाव मेधमुपस्थितो, य ऋजुरुपरिष्टादुपावनतो, योऽधिशाख्यो योनिः स,
यो वा अस्या अधिजायते स योनि,र्मानियꣳ हि वनस्पतीनाꣳ योनिः, परुषि व्र३श्च्यो,
यदपरुषि वृश्चेद्यथा परुष्यवकृत्तमेवꣳ स्या,द्यदनक्षसंगꣳ स्थाणुरुच्छिष्यो, यदक्षसंगꣳ स्थाणुमु-
च्छिꣳषेद्वज्रो भूत्वा यजमानस्य पशून् प्रतिहन्यात्, पञ्चारत्निः कार्यः, पङ्क्त्या संमितः,
षडरत्निः कार्यो, ऋतुभिः संमितः, सप्तारत्निः कार्यः, सप्तपदया शक्वर्या संमितो,
ऽष्टारत्निः कार्यो, गायत्र्या संमितो, नवारत्निः का३र्य,स्तेजसा त्रिवृता संमितो, दशा-
रत्निः कार्यो, विराजा संमिता, एकादशारत्निः कार्यः, त्रिष्टुभा संमितो, द्वादशारत्निः का३र्यो,
जगत्या संमित,स्त्रयोदशारत्निः कार्य,स्त्रयोदशेन प्रजापतिना संमितः, पञ्चदशारत्निः कार्यः,
पञ्चदशेन वज्रेण संमितः, सप्तदशारत्निः कार्यः, सप्तदशेन प्रजापतिना संमिता, एकविꣳ-

[ २ ] मै. १,२,१४ । तै. ६,३,३ । काठ. २६,३—४ । कपि. ४१,१—२ । वा. ५,४२ । काण्व. ५,५२—५३ ।

शत्यरत्निः कार्यु, एकविꣳशेन संमित,—स्त्रयोविꣳशत्यरत्निः कार्यु,—स्त्रयोविꣳशेन संमितः,
पञ्चविꣳशत्यरत्निः कार्युः, पञ्चविꣳशेन संमितः, सप्तविꣳशत्यरत्निः कार्यु,—स्त्रिणवेन
संमिता, एकत्रिꣳशदरत्निः कार्यु, एकत्रिꣳशेन संमित,—स्त्रयस्त्रिꣳशदरत्निः कार्यु,—स्त्र-
यस्त्रिꣳशेन संमितो, यावान् पुरुष ऊर्ध्वबाहुस्तावान् का३र्यो यदि वा यावान् रथे तिष्ठन्,
यावान् वै पुरुष ऊर्ध्वबाहुः सैतस्यावमा मात्रा, ऽथ ततो वर्षीयान्वर्षीयानेव का३र्यो, यो
बहुशाखो बहुपर्णः स कार्यो भूम्न एव, भूमानꣳ ह्येष एतस्य जग्राह, भूमानमस्य गृह्णाति,
भूमानमस्य पशवोऽनूपतिष्ठन्ते ॥ २ ॥ २

ओषधे त्रायस्वैनमित्या,—ह त्रात्या एव, स्वधिते मैनꣳ हिꣳसीरिति, वज्रो वै स्वधिति,-—र्वज्राद्वावास्मा एतदन्तर्दधात्यहिꣳसायै, यो वा एतस्याभिहतस्याग्रे शकलः परापतति तमस्य तेजोऽन्वपक्रामति, यत्तं पुनराहरति सतेजस्त्वाय, प्राञ्चं प्रहापयति, मधुमेवैनमनुपर्यावर्तयति, वज्रो वै यूप,—स्तस्माद्वा इमे लोका नीर्यमाणाद्बिभ्यती,—श्वरो ह्येषोऽशान्तो नीर्यमाण इमाँल्लोकान् हिꣳसितो,—यदाह, दिवमग्रेण मा हिꣳसीरन्तरिक्षं मध्येन पृथिव्याः संभव भ्राजं गच्छेति, शमयत्येव, शान्त एव नीर्यत, एषां लोकानामहिꣳसायै, सर्वस्य वा एष मित्रꣳ यो दीक्षितः, स एतमहिꣳसी,—दीश्वरा वनस्पतयोऽपिधिष्ण्यं भवितो, यदाव्रश्चने जुहोति पुनरेवैनं प्रजनयति, तस्मादाव्रश्चनाद्भूयाꣳसः प्रजायन्ते, पशुना संमितः का३र्यो, दश वै पशोः प्राणा, आत्मैकादशो, ऽष्टाश्रयो ब्रह्मणी दशमे, आत्मैकादश,—स्तथा पशुना संमितो, ऽष्टाश्रिः कार्यो, गायत्र्या रूपं, गायत्रो हि यूपो, गायत्र्या वै पतन्त्या यत्र पर्णं परापतत्ततः पर्णोऽजायत, तस्मात् पर्णमयु, एतत् खलु वै पर्णस्य सारꣳ यत्खदिरं,—स्तस्मात् खादिरं, इह वा असा आदित्य आसीत्, तमितोऽध्यमुं लोकमहरꣳ,—स्तद्यतोऽध्यमुं लोकमहरꣳस्तस्माज्ज्योतिषो बिल्वोऽजायत, तस्माद्बैल्वो, ब्रह्मवर्चसकामेन कार्यो ब्रह्मवर्चसस्य संसृष्ट्या, अथो ज्योतिषैव तमस्तरती,—न्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायच्छत्, तेषाꣳ वा एष ब्रह्मचारी चमसाध्वर्युरासी३द्, योऽयꣳ हरिणस्तस्य यः सोमपीथ आसीत् स स्वजोऽभवत्, तस्माद्धरिणः स्वजं खादति, सोमपीथो ह्यस्यैष स, यत्र चमसं न्यौब्जत्ततो रोहितकोऽजायत, तस्माद्रौहीतक,—स्तस्माद्रौहीतके रोहितके स्वजः, पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वे,—ति प्रोक्षत्ये,—षाꣳ ह्येष लोकानाꣳ विधृत्यै मीयते, त्रिः प्रोक्षति, त्रिषत्या हि देवा, अथो

---

[ ३ ] मै. १,२,१४ । तै. ६,३,३ । काठ. २६,५ । कपि. ४१,३ । वा. ४,१,१७;५,२६-२७,४२—४३;६,१-४,१५; ३७,११;१,१७—१८ । काण्व. ४,२,२३;५,३३,३५—३६,५४;६,१—५;३७,११;१,२८—२९;१३,३३ ।

त्रिपदयैवैनं गायत्र्या प्रौक्षीद्, वज्रो वै यूपो, ऽन्नं यवो, यद्यवमतीभिः प्रोक्षति वज्रेण वा एतदन्नं जयति, तेजो वै यूपं, एष खलु वा ओषधीनां तेजो यद्यव,—स्तस्मादुतं शिशिरा ओषधयोऽनुप्राणन्ति, यद्यवमवास्यति तेजसि वा एतत्तेजो दधात्यृ,—क्षं वा अमेध्यं,—मापो हविं,—यदवसिञ्चति मेध्यमेवैनत्करोत्यृ,—क्षं वा अमेध्यं, यदवस्तृणाति मेध्यमेवैनत्करोति, तक्षितो वा एष नग्नो यच्चशकमवास्यत्यं,—नग्नमेवैनमक्रः, स्वं एवैनं स्थाने दधात्यं,—वृक्ण एवाभूद्, घृतेन द्यावापृथिवी आपृणेति, घृतेनैव द्यावापृथिवी आपूरयति, यजमानो वा अग्निष्ठास्तेजो घृतं,—मान्तमविछिन्नमनक्ति, यजमानमेव तेजसानक्ति, देवस्त्वा सविता मध्वानक्त्वित्यं,—तद्धि देवानां मधु यद् घृतं, सवितृप्रसूत एवैनं मध्वानक्ती,—न्द्रस्य चषालमृ-सीत्यै,—न्द्रं हि चषालं सुपिप्पला ओषधीस्कृधीत्यो,—षधीरेव फलं ग्राहयति, तस्मादोष-धयः शीर्षन् फलं गृह्णन्ति, दिवमग्रेणोत्तभाना,—ऽन्तरिक्षं मध्येनापृण, पृथिवीमुपरेण दृंहेत्ये,-—षां ३ह्येष लोकानां विधृत्यै मीयते, ता ते धामान्युश्मसि गमध्या, इत्यवदधाति वैष्णव्या, वैष्णवो हि यूपः, स्वयैव देवतया, विष्णोः कर्माणि पश्यते,—ति संकल्पयति संमितत्वाय, ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामी,—त्याशीरेवैषा, ब्रह्म दृंह क्षत्रं दृंहेत्या,—शिषु एवैष परिग्रहो, ऽपोऽनुदरि षिञ्चति धृत्यै ॥ ३ ॥ ३

वज्रो वै यूपो, यदन्तर्वेदि मिनुयान्निर्दहेद्, यद्बहिर्वेद्यनवरुद्धः स्या,—दर्धमन्तर्वेदि मिनो-त्य,—र्धं बहिर्वेद्य,—वरुद्धो ह भवति, न निर्दहति, नोपरस्याविः कर्तवै, यदुपरस्याविः कुर्याद्रथेष्ठाः स्यात्, प्रमायुको यजमानो, नातिस्थूलः कार्यः, क्षुधं प्रजा नीयु,—र्नो अत्यणु,—रुभयमेवान्तरा, यज्ञेन वै देवाः स्वर्गं लोकमायं,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वारोक्ष्यन्तीति, तं यूपेनायोपयं,—स्तद्यूपस्य यूपत्वं, यद्यूपः पुरस्तान्मीयेत स्वर्गस्य लोकस्यानुख्यात्यै, तद्विष्णोः परमं पदं,—मिति समुन्मार्ष्टि स्वर्गस्य लोकस्य समष्ट्यै, नाभिदघ्ने परिव्ययत्यू,—र्ग्वा ओषधयो, ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च, यद्धि कामयेत, क्षुधं प्रजा नीयुरित्य,—रशनान्यूपान्मितुयात्, क्षुधं प्रजा

[ ता ( या ) ते ( वां ) धामान्यु ( वास्तु० )० । ऋ. १,१५४,६; तै. सं. १,३,६,१; नि. २,७ ।
विष्णोः कर्माणि पश्यत० । ऋ. १,२२,१९; सा. १६७१; अथर्व. ७,२६,६; तै. सं. १,३,६ २ ]

[ ४ ] मै. १,२,१४ । तै. ६,३,४ । काठ. २६,६ कपि. ४१,४ । वा. ६,५ । काण्व. ६,६ । [ तद्विष्णोः परमं पदं० ।
ऋ. १,२२,२०; सा. १६७२, अथर्व. ७.२६,७; तै. सं. १,३,६,२;४,२,९,३ ]

निर्यन्ति, यदि कामयेत, वर्षेत् पर्जन्य, ऊर्जा यजमानꣳ समर्धयेयमिति, परिवीयोर्ध्वा-मुदूहेद्, वृष्ट्या एवेमां न्यूहत्यू,—र्जा यजमानꣳ समर्धयति, यदि कामयेत, न वर्षेत् पर्जन्य, ऊर्जा यजमानꣳ व्यर्धयेयमिति, परिवीयावाचीमवोहेद्, वृष्टंचैवेमां न्यूहत्यू,—र्जा यजमानꣳ व्यर्धयति, सर्वदेव३त्यो वै यूपो, यन्निखातं तत् पितॄणाꣳ, यदूर्ध्वं तन्मनुष्याणाꣳ, यत्र रशना तदोषधीनाꣳ, यदूर्ध्वꣳ रशनायास्तद्विश्वेषां देवाना,—मिन्द्रस्य चषालꣳ, ये वै देवाः साध्या यज्ञमत्यमन्यन्त तेषाꣳ वा एतद्यदुपरिष्टाच्चषालस्याङ्गुलिमात्रं कार्य,—मङ्गुलिमात्रꣳ हि तदग्रा आसीद्, यत्ततो वर्षीयः कुर्याद्वज्रो भूत्वा यजमानस्य पशूनवतिष्ठे,—दिन्द्रो वै वृत्राय वज्रमुदयछत्, सोऽव्लीयत, तस्य वा एतदनुनद्धचै यच्चषालं पृथुमात्रं कार्यं, पृथुमात्रꣳ हि तदग्रा आसीद्, यदाणिमतोऽगृह्णात् तस्मादणिमतो, यदिन्द्र उदयछत् तस्मादैन्द्रꣳ, यदि कामयेता,—ऽन्येऽस्य लोकमन्वारोहयेयुरित्य,—न्यस्य वृक्षस्य स्वरुं कुर्या,—दन्येऽस्य लोकमन्वारोहन्ति, यदि कामयेत, प्रजामनुसंतनुया,—दिति यूपस्य स्वरुं कुर्यात्, प्रजामेवानुसंतनोति, यजमानो वा अग्निष्ठा,—स्तेजोऽग्नि,—र्यदित्थꣳ वेत्थꣳ वा मिनुयाद्यजमानं तेजसा व्यर्धये,—दग्निना सदृशं मेत३व्या यजमानस्य सतेजस्त्वाया,—ऽऽवृह्य ह स्म वै पुरा संꣳस्थिते य-३ज्ञेऽग्नौ यूपं प्रास्यन्ति, संभज्य स्रुचस्ते देवा अमन्यन्त, यज्ञवेशसमिदं कुर्या इति, तेऽब्रुवन्, परिधिभिरेव नः स्रुचः स्वगाकृताः सन्तु, स्वरुणा यूपः, प्रस्तरेण सदा इति, तेषाꣳ वा एष स्वगाकारो, न ह स्म वै पुरा पुरुषं महादेवो हन्ति, तत इदꣳ रु३द्रोऽन्ववातिष्ठत्, ते देवा एताꣳ रुद्रस्यावेष्टिमपश्यꣳ,—स्त्रिः परस्तादुनक्ति, त्रिरवस्तात्, तत्षट्, षड्वा ऋतव, ऋतुभ्यो वा एतद्रुद्रमवयजत्या,—हुतिभाजो वा ऋतवोऽस्तोमभाज,—स्त एवास्यैतेनाभीष्टाः प्रीता भवन्ति, यद्यूपाज्जुहोति वनस्पतिभ्यस्तेनावयजति, यद्रशनाया ओषधीभ्यस्तेन, यदात्मनो मनुष्येभ्यस्तेन, यदाह, दिवं ते धूमो गछत्विति, हविर्धानाच्चेना,—ऽन्तरिक्षं ज्योतिरित्या,—ग्नीध्राच्चेन, पृथिवीं भस्म स्वाहेति, सद्सस्तेन, सर्वतो वा एतद्रुद्रमवयजत्या,—हुत्या वा एतꣳ वनस्पतिभ्यः प्रच्यावयन्त्यु,—पयज्य मनु३ष्याः प्रयन्ति, तत्स्वाया देवताया अन्तर्धीयते, यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत, तस्माद्यूपो नोपस्पृश्यः, शुग्वा एष मीयते, स ईश्वरोऽशान्त इमांल्लोकाञ् शुचार्पयितो,—र्य-द्येकः स्यात् ॥ एष ते वायो ॥ इति ब्रूयाद्, यदि बहवः ॥ एते ते वायो ॥ इति ब्रूयाद्, वायुर्गोपा वै वनस्पतयः, स्वामेवैभ्यो देवतामपिसृजत्येषां लोकानामहिꣳसायै, यथा वै अग्निꣳ

रज्जुभिर्व्युत्तमेवमिमे लोका यूपैर्व्युत्ता,—स्त एनमार्ति निनयन्ति, यदाह ।। नमः स्वरुभ्यः ।। इति, तेभ्य एव नमोऽक,—स्तेऽस्मै विजिहते, तेऽस्मै लोकꣳ विन्दन्त्ये,—ते वै देवानामृड-याता अस्मिँल्लोके सन्नाः स्वरवोऽभिरोद्धारो, यान्न पश्यति ते सन्ना, अथ यान्पश्यति ते बृहन्त ऊर्जा, यदाह ।। नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः, सन्नान्मावगाम् ।। इति तानेव परिवृणक्त्ये,—ते वा अमुष्मिँल्लोकेऽन्नस्य प्रदातार,—स्तेऽस्मा अन्नं प्रयच्छन्ति ।। अपश्चाद्दघ्वान्नं भूयासम् ।। इत्यपश्चाद्दघ्वान्नं भवति ।। ४ ।। ४-१४

साध्या वै देवा आस,—न्नथ वै तर्हि नान्याहुतिरासीत्, ते देवा अग्निं मथित्वाग्नावजुहवु,—स्ते वै तयैवाहुत्या पशूँन्त्सृष्ट्वाथ पशुमालभन्त, यदग्निं मथित्वाग्नौ जुहोति तया वा एतदाहुत्या पशूँन्त्सृष्ट्वाथ पशुमालभन्ते, ऽथो पशवो वा एतदालब्धा यद्देवतां जनयन्त्य,—थो तेज एवास्मै जनयन्त्य,—ग्नेर्जनित्रमसीत्या,—यतनमिव एतत्क्रियते, वृषणौ स्थ इति, रेत एवैतद्दधाति, न हि तस्य रेतो धीयते यस्यैतौ न भवत, उर्वश्यसीति, वाग्वा उर्वशी, पुरूरवा असीति, प्राण एव तन्मिथुन,—मायुरसी,—ति समनक्ति, तस्मिन्नेव मिथुने रेतो दधाति, गायत्रमसि, त्रिष्टुबसि, जगदसीति, छन्दोभिरेवैनं प्रजनयति, सावित्रीं प्रथमामन्वाह प्रसूत्यै, सवितृ-प्रसूता हि प्रजाः प्रजायन्ते, ऽथ द्यावापृथिवीया,—मपि हि द्यावापृथिव्योः पशुषु, द्यावा-पृथिवी हि पशवोऽनुप्रजायन्ते, गायत्रीरन्वाह, गायत्रो३ ह्यग्नि,—र्गायत्रं छन्दा, अपरिमिता अन्वाहा,—ऽपरिमिता ३ ह्यग्नेस्त ३ न्वो, ऽग्निना वा अनीकेनेन्द्रो वृत्रमहꣳ,—स्तस्य समासृतस्य भीतस्य यत्र व्यार्ध्यत ततो भूम्नोऽसृज्यत, तस्माद्भूमवती नानूच्या, व्यृद्धा हि सा, रक्ष-सामनन्ववजयाय, परिधयः परिधीयन्ते, यत् समर्या परिधीन्प्रहरेत्तदनु रक्षाꣳसि यज्ञमवजये-यु,—रग्रेण परिधयः प्रहृत्या रक्षसामनन्ववजयाय, क्रूरमिव वा एतद्यज्ञे क्रियते यदग्ना अग्निं जुह्वति, यदाह, भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति, शमयत्येव, शान्त एव प्रह्रियते यजमानस्याहिꣳसायै, स्रुवेणाभिजुहोति, संजग्मानाभ्यामेवाभ्यां भागधेय-मपिदधाति, यः कूटो वा कर्णो वा काणो वा शुष्को वात्रतत तस्य यातयामा, स योऽपन्नद-न्मलं तत्पशूना,—माग्नेयः पशु,—रग्निष्टोम आलभ्य, आग्नेयो ह्यग्निष्टोम, ऐन्द्राग्नः पशुरुक्थ्य आलभ्य, ऐन्द्राग्नानि ३ह्युक्थ्यान्यै,—न्द्रो वृष्णिः षोडशिन्यालभ्य ऐन्द्रो वै वृष्णि,—रैन्द्रः

[ ५ ] मै. १,२,७ । तै. ६,३,५ । काठ. २६,७-८ । कपि. ४१,५ । वा. ५,२-३;१२,६० । काण्व. ५,२-३;१३,६१ ।

षोडशी, सारस्वतीं मेष्यु,—तिरात्रे आलभ्या, वाग्वै सरस्वती, वागनुष्टु,—बानुष्टुभी रात्रि,-
—र्यज्ञक्रतूनामेवैषा व्यावृत्ति,—र्यथा वै मत्स्योऽविचितो जलमवधूनुत एवꣳ वा एते प्रजायमाना
जलमवधून्वते, यस्त्वा एतानेवꣳ वेद तमेतेनावधून्वते, कथꣳ सवनानि पशुमन्ति वेच्छे,—ति
पृच्छेद्, यद्वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमद्, यत्पुरोडाशैर्माध्यंदिने सवने तेन
माध्यंदिनꣳ सवनं पशुमद्, यदङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत्, कियता तत्पशोश्चर-
न्ति यद्वपया चरन्ति, कियता तद्यत्पुरोडाशैः, कियता तद्यदवदानै, रूपेण तत् पशोश्चरन्ति
यद्वपया चरन्त्या,—त्मना तद्यत्पुरोडाशैः, शरीरेण तद्यदवदानैः, कस्मै पशुः प्रत्यङ् नियु-
ज्यता, उदङ् प्रणीयते, दक्षिणत उपसाद्यते, प्राङ् हूयता, इति पृच्छेद्, यत् प्रत्यङ्
नियुज्यत इमां तेन दिशमभिजयति, यद्दक्षिणत उपसाद्यत इमां तेन, यत्प्राङ् हूयत इमां तेन,
यदुदङ् प्रणीयते मनुष्यलोकं तेनाभिजयति, यद्दक्षिणत उपसाद्यते पितृलोकं तेन, यत्
प्राङ् हूयते देवलोकं तेन, यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन लोकꣳ, यदिडो-
पहूतं प्रत्यङ् हरन्तीमं तेन लोकꣳ, सर्वा वा इमा दिशः पशुया३ज्यभिजयति सर्वांल्लोका,—
न्त्सर्वा एवास्येमा दिशोऽभिजिता भवन्ति सर्वे लोकाः ॥ ५ ॥ १५
अथैता आप्रियः, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एता आप्रीरपश्यत्,
ताभिरात्मानमाप्रीणीत, यज्ञो वै प्रजापति,—र्यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमाना
आप्रीणीते, वपया वै पशोर्देवाः प्रातःसवने स्वर्गं लोकमायन्, यद्वपया प्रातःसवने चरन्ति
वपया वा एतत् पशोर्यजमानः प्रातःसवने स्वर्गं लोकमेति, ते वै स्वर्यन्तोऽस्थानि शरीराण्य-
धून्वत, यदङ्गैस्तृतीयसवने चरन्त्य,—स्थाꣳ शरीराणां निष्क्रीत्यै, पशुꣳ स्नपयन्ति, यद्देवा-
स्याभिनिषण्णꣳ शमलममेध्यं तच् शुन्धन्ति, पशुमुपाकृत्याग्निं मन्थन्ति पशूनामवरुद्ध्यै, द्वौ
वै वज्रो, घो३रोऽन्यः, शि३वोऽन्यो, यः शुष्कः स घोरो, य आर्द्रः स शिवो,
वज्रेण खलु वै वीर्यं क्रियते, वज्रꣳ वा एतदादत्ते वीर्याये,—षे त्वेती,—प एवैन,—मुपावीर-
सीत्यु,—प ३ह्येषोऽवत्यु,—पो देवान्दैवीर्विशः प्रागुरित्ये,—ता वै दैवीर्विशो यत् पशवो, वह्नय
उशिजा इत्ये,—ते वै वह्नय उशिजो यदृत्विजश्च धिष्ण्याश्च, बृहस्पते धारया वसूनीति, ब्रह्म
वै बृहस्पति,—र्ब्रह्मणैवैनाꣳ यच्छति, हव्या ते स्वदन्निति, स्वदितमेवैनमालभते, देवत्वष्ट-
र्वसु रणा इति, त्वष्टा हि रूपाणि विकरोति, रेवतीरमेध्यमिति, पशवो वै रेवती,—र्यच्छत्ये-

---

[ ६ ] मै. १,२,१५ । तै. ६,३,६;७,२—४ । काठ. २६,३ । कपि. ४१,६-७ । वा. ६,७-१०;४,२० । कण्व. ६,
८-१२;४,२६।

वैनां, देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनामादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्या,—मिति देवताभिरेव, द्वौ वै पाशौ, घो३रोऽन्यः, शि३वोऽन्यो, यो यज्ञियः स घोरो, योऽयज्ञियः स शिव, ऋतस्य त्वा देवहविः पाशेनेति, य एव यज्ञियः पाशस्तेनैनमालभते, प्रतिमुञ्चामीत्य,—भि हि मनु३ष्या दधत्य,-—मुष्मै त्वा जुष्टमिति, यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—र्धर्षा मानुषा इति, मनु३ष्या हि धारयन्ति, शुष्को वा एषोऽमेध्यो, यत्पशुं नियुनक्त्युभा एवैनौ मेध्यौ करोति, प्रत्यञ्चं नियुनक्ति, प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्ते, प्राणेषु वा एतस्य देवता उपस्थिता यत्पशुं नियुनक्ति, प्रतीचीरेवास्मै देवता नियुनक्त्य,—द्भ्यस्त्वौषधीभ्य इत्य,—द्भ्यो ३ह्येष ओषधीभ्यो जुष्टं प्रोक्षामीति यस्या एव देवतायै पशुरालभ्यते तस्या एनं जुष्टमक,—रनु त्वा माता मन्यतामनु पितेत्य,—नुमत एवैनं मात्रा पित्रा भ्रात्रा सख्यालभते, ऽनुमानावह देवान् देवायते यजमानायेति, देवताभ्य एवैनं निर्दिशत्य,—पां पेरुरसीत्य,—पाꣳ ३ह्येष पेरुः, स्वात्तꣳ संद्धविरापो देवीः स्वदन्त्विति, स्वदितमेवैनमालभते, ऽथ यदुप गृह्णात्युप च सिञ्चति सर्वत एवैनं मेधेन समर्धयति, सं ते वायुर्वातेन गच्छतामिति, वातमेवास्य प्राणमन्ववार्छति, सꣳ यजत्रैरङ्गानीति, यज्ञियमेवैनमकः, सꣳ यज्ञपतिराशिषेति, यजमानमेव यज्ञस्याशिषा समर्धयति, शिरो वा आघार, आत्मा हवि,—र्यदाघारमाघार्य पशुना समनक्त्यात्मन्वा एतच् छिरो यज्ञस्य प्रतिदधाति, वज्रो वै स्वरु,—र्वज्रः स्वधिति,—र्यत्स्वधितिनानक्ति वज्रेणैवैनꣳ स्तृणुते, याक्ता तया शृतस्यावद्यति, हविर्भूता वा एषा, हविषैव हविषो-ऽवद्यति ॥ ६ ॥ १६

अग्निना वै मुखेन देवा इमाँल्लोकानभ्यजयन्, यत्पर्यग्निं करोत्यग्निना वा एतन्मुखेन यजमान इमाँल्लोकानभिजयति, रक्षाꣳसि वा एतं जिघाꣳसन्ति, यत्पर्यग्निं करोति रक्षसामपहत्यै, त्रिः पर्यग्निं करोति, त्रयो वा इमे लोका, एभ्यो वा एतल्लोकेभ्यो यज्ञाद्रक्षाꣳस्यपहन्ति, चात्वालमपि पर्येत्ये,—षा वा अग्नीनाꣳ योनिः, स्कन्दति वा एतद्धविर्यद्विश्रोतति यद्विलिप्यते, ऽग्निर्वै सर्वा देवता, अत्र वै सापि देवता यस्या आलभ्यते, यत्पर्यग्निं करोति तामेवैनद्गम-यति, कियद्वाहैतत्पशोः, कियद्वा यत् प्रयाजा, एतर्हि खलु वै सर्वो यर्ह्याप्रीत,—स्तस्मादा-

[ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

[ ७ ] मै. १,२,१५ । तै. ६,३,८ । वा. ६,११ । काण्व. ६,१३-१५ ।

श्राव्योऽपप्रेष्यति, देवताभ्यो वै पूर्वमाश्रुश्राव,--दथ वा अत्र पशोराश्रावयति, तस्मादाश्रा-
व्योऽपप्रेष्यत्यु,--भये वा एतं बध्यमानमनुबध्यन्ते ये ग्राम्याः पशवो ये चारण्या, ये बध्यमा-
नमनु बध्यमाना अन्वैक्षन्त मनसे,--ति यज्जुहोति तेषा९ वा एषोन्मोक्षा; यन्न जुहुयादनुन्मुक्ताः
स्युरु३र्वन्तरिक्ष९ ३न्वीहीत्य,--न्तरिक्षदेव३त्यो वा एष एतर्हि, रक्षा९सि वा एतं जिघा९सन्ति,
प्रच्युतमितोऽप्राप्तममुत्रा,--ऽग्निं पुरस्ताद्धरन्ति रक्षसां पराणुत्त्यै रक्षसामपहत्या, अथो हव्याय वा
एतत् प्रणीयमानाय देवताः पुरस्ताद्धरन्त्य,--ग्निं पुरस्तान्निदधात्यस्कन्नत्वाय, पशोर्वै मारणा-
यानीयमानस्याहवनीयं मेध्योऽभ्युपक्रामति, यो वै तर्हि पशुमन्वारभते तं९ यज्ञस्याशीर्गच्छति,
यदाह, रेवति प्रेधा यज्ञपतिमाविशेति, यत्र वा एतत् क्व च यजमान९ सन्त९ यज्ञस्याशीर्ग-
च्छति, वपाश्रपणीभ्यामन्वारभते, तत्स्विदुभयमक,--रुरो अन्तरिक्ष सजूर्देवेन वातेनेत्य,--
न्तरिक्ष९ वै पशवो, वातः प्राणः, प्राणानस्मिन् दधाति, तमनास्य हविषो यजेति,
देवता एव प्रीणाति, समस्य तन्वा भवेति, पुनरेवैन९ संभावयति, वर्षीयो वर्षीयसा इति,
तेन यजमानो वसीयान् भवति, यद्यज्ञं पशुमाहुर्यत्तमभिमन्यन्ते ३क्व तर्हि यज्ञो भवतीति,
यदाह, यज्ञ९ यज्ञपतौधा इति, यज्ञपतौ वा एतद्यज्ञं प्रतिष्ठाप्याथ पशुमालभन्ते, स्कन्दति
वा एतद्धविर्यद्विश्रोतति यद्विलिप्यते यत्तृणमुपास्यत्यस्कन्नत्वाय, प्रत्यञ्च९ संज्ञपयन्ति,
प्रत्यञ्चो हि पशवो मेधमुपतिष्ठन्त उदीचीनपाद९ स्व्यावृत्त्यै ॥ ७ ॥ १७

ऋत्विजो वृणीते, छन्दा९सि वा ऋत्विज,--श्छन्दा९सि वा एतद्वृणीते, यद्धोतार९ वृणीते जगतीं तद्वृणीते, यदध्वर्युं पङ्क्तिं तद, यदग्नीधमतिछन्दसं तद, यन्मैत्रावरुणं गायत्रीं तद, यद् ब्राह्मणाच्छ९सिनं त्रिष्टुभं तद, यत्पोतारमुष्णिहं तद, यन्नेष्टारं ककुभं तद, यदाह ॥ अग्निर्दैवीना९ विशां पुरएता ॥ इति, यजमान९ वा एतद्वृणीते, स वृतो वषट्करोति, नाछावाक९ वृणीते, पश्चाजेव वा एषा, होत्राः स्व३र्ग्या, यदछावाक्या द्विदेवत्याः श९सति, द्विपाद्यजमानः प्रतिष्ठित्या, अथ यदग्नीधं मध्यतो वृणीते तस्मादयमग्निर्मध्यत ओषधीना९, यदुत्तमः स९यजता९ स९यजति तस्मादुपरिष्टान्मथ्यमानः प्रजायत, एतद्वा अस्य छन्दा९सि वृतानि युक्तान्यभूवन्, यदवृता वषट्कुर्युर्भ्रातृव्य९ यज्ञस्याशीर्गछे,--दथ यद्वृता वषट्कुर्वन्त्ये-कधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठति, तस्मादेकः पशोर्वषट्करोत्ये,--क९ हि वृणुते,

[८] तै. ६,३,७,५ । काठ. २६,९ । कपि. ४१,७ ।

दश वै पशोर्देवता, दशास्मिन् प्राणा, यद्दश प्रयाजा, या एवास्मिन् देवतास्ता एतद्युजत्य,—थ य एष एकादशो, यस्या एव देवतायै पशुरालभ्यते तामेवैतद्युजत्य,—थ यदेकादशानुयाजा, या एवैतद्देवता अयाक्षीत् ता एतैरनुप्रीणाति, हतो वा एष मृतोऽमुत्र भूतो, दश वै पशोर्देवता, दशास्मिन् प्राणाः, प्राणाः खलु वै पशोर्देवता, यद्दश प्रयाजाः प्राणानेवास्य प्रयजत्या,—त्मा वै प्राणानामेकादश, आत्मा वपा पशो,—र्यदेष एकादशः परिशय आत्मा वा एतदात्मानं परिशये, ऽथ यदेकादशानुयाजाः प्राणानस्मिन् दधाति ॥ ८ ॥ १८ – २०

[१६२७]

॥ इत्युपरिकाण्डे संक्रान्ता नाम नवमः प्रपाठकः ॥ ९ ॥

अथ दशमः प्रपाठकः।

पत्नी वै प्रच्यवमानामुष्यादित्यस्य लोकमभिप्रच्यवेत, हिनस्ति खलु वा एष तं यो ऽस्य लोकमभिप्रच्यवते, यदाह, नमस्त आतानेत्य,—मुष्मा एव नमोऽक,—रनर्वा प्रेहीत्युनेनाः प्रेही,—ति वा एतदाह यजमानाय, घृतस्य कुल्यामनु सह रायस्पोषेणेत्या,—शिषमेवाशास्ते, देवीरापः शुद्धा यूयं देवान् युयुध्वमित्य,—पो वा एतद्भूषन्ति, पूताभिराभिः पूताश्चरन्ति, तस्माद्वा एता बहु रिप्रममेध्यं चरन्तीमापो न हिंसन्ति, हतो वा एष मृतोऽमुत्र भूतो,-ऽद्भ्यो वै प्रजाः प्रजायन्ते, पत्नी प्रजनयति, यदद्भिरभिषिञ्चति पुनरेवैनं प्रजनयति, सर्वान् प्राणान्त्संमृशति सर्वाण्यङ्गान्ये,—तावान् हि पशुः, पशोर्वै मार्यमाणस्य प्राणाञ्शुगृछति, यदाह, वाचमस्य मा हिंसीः, प्राणमस्य मा हिंसीरित्य,—द्भिर्वा अस्यैतत् प्राणाञ्शुचो मुञ्चति, यत्ते क्रूरं यदास्थितं तदेतेन शुन्धस्व, देवेभ्यः शुम्भस्वेति, यदेवास्य गमयन्तः क्रूरमक्रंस्तदक्रूरमक,—स्तच् शमयति, ये वा एते स्तोका अवपद्यन्ते त इमामशान्ता ऋछन्ति, तत इमाञ्शुगृछति, यदाह, शमद्भ्य इति, शमयत्येव, शान्ता एवेमामृछन्त्यहिंसाया, ओषधे त्रायस्वैनमित्या,—ह त्रात्या एव, स्वधिते मैनं हिंसीरिति,

[१] मै. १,२,१६। तै. ६,३,८—९। वा. ६,१२-१३,१५-१६;५,१०;१,१,२२;७,३०;१४,२२;१,७,२९;६,११; २२,२८;३९,१३।काण्व. ६,१४—१५,१९—२२;५,१४;१,१,३७;७,३०;१५,२४;१,१०,४६;२४,३९;३९,१२।

वज्रो वै स्वधिति,—र्वज्रादेवास्मा एतदन्तर्दधात्यहिꣳसायै, सर्वाभ्यो वै देवताभ्यः पशुराल-
भ्यते, यदाह, रक्षसां भा३गोऽसीत्ये,—तेन वा एतद्भागधेयेन रक्षाꣳसि पशोर्निर्भजती,—द-
महꣳ रक्षोऽवबाध, इदमहꣳ रक्षोऽधमं तमो नयामीत्या,—ह रक्षसां ध्वरायै रक्षसाम-
न्तरित्यै, पशवो वै वपा, यदुपतृन्द्यात् पशून् हिꣳस्याद्, यन्नोपतृन्द्याद्यता स्यु,—र्यत्र
तन्निष्ठं तदुपतृन्द्यात् पशूनाꣳ यत्या, इषे त्वोर्जे त्वेती,—षे ३ह्येषोर्जे ३ह्येषा, देवेभ्यः शुन्धस्व,
देवेभ्यः शुम्भस्वेति, देवेभ्य एवैनाꣳ शुन्धति, देवेभ्यः शुम्भति, घृतेन द्यावापृथिवी
प्रोर्णुवाथामिति, घृतेनैव द्यावापृथिवी प्रोर्णोत्य,—मुष्मै त्वा जुष्टमिति, यस्या एव देवतायै
पशुरालभ्यते तस्या एनं जुष्टमक,—र्नमः सूर्यस्य संदृशा इत्य,—मुष्मा एव नमोऽक,—रित्थं
पर्याववर्तत, एवꣳ हि यज्ञः पर्यावर्तते, ऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्याववर्तत,
उ३र्वन्तरिक्षꣳ ३वीहीत्य,—न्तरिक्षदेव३त्यो वा एष एतर्हि, रक्षाꣳसि वा एतं जिघाꣳसन्ति,
अच्युतमितोऽप्राप्तममुत्र, कार्ष्मर्यमयी वपाश्रपणी भवतो रक्षसामपहत्यै, यस्मा एवामुतोऽग्निं
पुरस्ताद्धरन्ति तस्मा इतो देवता वा एतद्धव्यमनुपर्यावर्तमानमेति, चरमत उपप्रतिगृह्णात्यछम्ब-
ट्काराय, यद्वतिहरे देवतमेवातिहरेद्, विश्वतोमुखो ३ह्यग्निः, प्रत्युष्टꣳ रक्षः, प्रत्युष्टाराति,-
—रित्याह रक्षसां ध्वरायै रक्षसामन्तरित्यै, वायोः स्तोकाना,—मिति तृणमुपास्यति
स्तोकानाꣳ विधृत्यै, वायु३र्ह्येतानमुतो विसृजति प्रजानां क्लृप्त्या, अग्रꣳ वा एतद्ध-
व्यस्या,—ऽग्रमोषधीना,—मग्रेणैवाग्रꣳ समर्धयत्य,—थो अग्राय वा एतद्धव्यस्याग्रमोषधीनामग्निं
चिनोति, हविषो वा एते स्तोकाः, स्कन्दति वा एतद्धविर्यद्विश्चोतति यद्विलिप्यते,
यदाह ॥ १

जुषस्व सप्रथस्तमꣳ वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥ २

इति तेनैवास्य ते हुता अस्कन्ना वषट्कृता भवन्ति, नानादेव३त्या वा एकाद-
शिन्या पशवा आलभ्यन्ते, ऽथाग्नेयी प्रथमानूच्यते, ऽग्निर्वै सर्वा देवता, अत्र वै सापि
देवता यस्या आलभ्यते तामेवैनद्गमयति, यर्हि लोहिनीव शृता तर्हि रौद्री, यत्तर्हि जुहुया-
द्रुद्रायास्य पशूनपिदध्याद्, यर्हि श्येनीव शृता तर्ह्याग्नेयी, तर्हि होत३व्या, तथास्य
रुद्रः पशूननभिमानुको भवति, क्रव्यꣳ वा एतर्हि पशुर्यर्ह्यशृतो, यद्वपामभिघार्ये

---

[ जुषस्व सप्रथस्तमꣳ... आसनि । ऋ. १,७५,१; तै. ब्रा. ३,६,७,१ ]

पृषदाज्यमभिघारयेद्रुद्रायास्य पशूनपिदध्या,—दथ यत् पृषदाज्यमभिघार्य वपामभिघारयति यथा-
पूर्वꣳ वा एतत् पशुमुपैत्य,—थो एवमस्य रुद्रः पशूनानभिमानुको भवति, पुरस्तात्
स्वाहाकारा वा अन्ये देवा, उपरिष्टात् स्वाहाकारा अन्ये, त उभयेऽस्ये मेध्येऽवरुध्यन्ते ॥
स्वाहा देवेभ्यः ॥ इति पुरस्ताद्वपाया जुहुयात् ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ इत्युपरिष्टात्,
तथास्य त उभयेऽवरुद्धा भवन्ति, पशोर्वै मार्यमाणस्य प्राणाञ्छुगृच्छति, प्राणान्त्संगृह्य वपा-
मुपविसृजे,—दात्मा वपा पशो,—रात्मन्नेवास्य प्राणान् दधाति, दक्षिणस्य पूर्वपदस्यावदेय,-
—मिति ह स्माहुर्दाक्षायणा,—स्तथास्य सर्वस्य पशोरवत्तं भवतीति, स्वाहोर्ध्वनभसं मारुतं देवं
गच्छत,—मिति वपाश्रपणी अनुप्रास्यत्य,—र्ध्वनभसो वा एते मारुतस्य भागधेयं, तमेवैतेन
गमयती,—मे वा एते विषूची अनुप्रास्यत्य,—नयोर्विधृत्यै ॥ १ ॥ ३-७

पुरुषꣳ वै देवा मेधायालभन्त, तस्य मेधोऽपाक्रामत्, सोऽश्वं प्राविशत् तेऽश्वमालभन्त, तस्य मेधोऽपाक्रामत्, स गां प्राविशत्, ते गामालभन्त, तस्य मेधोऽपाक्रामत्, सोऽविं प्राविशत्, तेऽविमालभन्त, तस्य मेधोऽपाक्राम३त्, सोऽजं प्राविश३त्, तेऽजमालभन्त, तस्य मेधोऽपाक्रामत्, स यवं प्राविशत्, ते यवमालभन्त, तस्य मेधोऽपाक्रामत्, स व्रीहिं प्राविशत्, ते व्रीहिमालभन्त, तꣳ व्रीहा आप्नुवन्, यद्व्रीहिमयः पुरोडाशो भवति मध्यतो वा एतत् पशोर्मेधो धीयते, सुषिरो वै तर्हि पशुर्यर्हि वपामुत्खिदन्ति, यद्व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय, द्वादशकपालो भवति, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमनु पशवः प्रजायन्ते, प्रजननायैकादशकपालः का३र्या, एकादशाक्षरा त्रिष्टु,—बैन्द्रमेतच्छन्दो यत्त्रिष्टु,—बैन्द्राः पशवः, पशुष्वेवास्य पशून् दधाति, देवा अ३न्योऽन्यस्मै पशुमालभꣳ स्वर्गं लोकमायꣳ,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वारोक्ष्यन्तीति, तस्य मेध्रं प्लाक्षारय,—न्त्स प्लक्षोऽभवत्, तत् प्लक्षस्य प्लक्षत्वं, क्रोशो वै तꣳ हृदयात् प्लाक्षारयꣳ,—स्तस्मादेतत् सुषिरꣳ यत् प्लक्षशाखाया अवद्यति, मेधादेवाध्यवद्यति, पृषदाज्यस्योपहत्य परैति ॥ शृतꣳ हविः शमिता ॥ इति शृतत्वाय, त्रिराह त्रिसत्या हि देवा, अथो यथेदं ब्राह्मणेभ्य ओदनं पक्वं प्राहैवꣳ वा एतद्देवेभ्यो हविः शृतं प्राहो,—त्तरतः परीत्याभिघारयति पशूनामवरुद्ध्यै, प्राणापानौ वै पृषदाज्य,—मात्मा हृदयꣳ, यत्पृषदाज्येन हृदयमनक्ति मध्यतो वा एतत् पशोः प्राणापानौ दधाति, सोमस्य वा एतद्व्रीहिर्यद्व्रीहि,—रथ वा एतत्

[ २ ] तै. ६,३,९—१०।

*

पशोर्यैदुत्तरबर्हिर्बर्हिः, श्रद्धा एतद्धव्यमुक्,—रस्कन्नमविक्षुब्धं मे हव्यं देवता गच्छादिति, देवानां वै सर्वेषां मनांसि गच्छति पशा आलभ्यमाने, मनो वै मनोता, यन्मनोताया अन्वाह मनांस्येवैषां संभावयति, हतो वा एष मृतोऽमुत्र भूतो, मनो वै मनोता, यन्मनोताया अन्वाह पुनरेवैनं संभावयति ॥ २ ॥ ८-१०

हृदयस्यावद्यति, मनस एव तेनावद्यत्य,—थो यावानेव पशुस्तस्यावत्तं भवति, जिह्वाया अवद्यति, वाच एव तेनावद्यत्य,—थो एतया ह्यग्रा औषधीनां रसं प्राश्नाति, श्येनस्यावद्यति, वक्षस एव तेनावद्यत्य,—थो अत्र हि स रसः प्रतितिष्ठति दोष्णोऽवदाय पार्श्वयोरवद्यति यज्ञस्य परिगृहीत्यै, यक्नोऽवद्यति, मध्यस्यैव तेनावद्यति, मतस्नयोरवद्यति, रूपस्यैव तेनावद्यति, श्रोण्या अवदाय गुदस्यावद्यति, तदुत्तमस्यावद्यत्यु,—त्तमं ह्यायु,—र्यदुन्यस्योत्तरस्यावद्येत प्राणमस्यापिदध्यात्, प्रमायुकः स्यात्, तस्मात्तस्योत्तमस्यावद्यत्यु,—त्तमं ह्यायु,—हृदयस्यावदाय जिह्वाया अवद्यति, यथापूर्वं वा एतत् पशुमुपैत्य,—थो एवमस्य सर्वस्य पशोरवत्तं भवत्ये,—कादश कृत्वोऽवद्यति, दश वै पशोः प्राणा, आत्मैकादश,—स्तथास्य सर्वस्य पशोरवत्तं भवत्ये,—कादश वा एतान्युवदानानि, तानि द्विर्द्विरवद्यति, तद् द्वाविंशति,—स्त्रीणि त्र्यङ्गाणि, तत् पञ्चविंशतिः, पञ्चविंशेन वै स्तोमेन मनुः प्रजा असृजत, तन्मनुस्तोमो वा एष प्रजननायै,—तद्धि सर्वस्य पशोरवत्त,—मथ वै प्राणस्यापानस्य व्यानस्य तेषामनवत्तं, यत् त्र्यङ्गाणामवद्यति तेनैव प्राणस्यापानस्य व्यानस्य तेषामवत्तं भवति, विश्वरूपो वै त्वाष्ट्रः पशूनभ्यवमत्, तस्मात् पशवो विश्वरूपा, अभिवान्तो वै पशुः पूयितं,—स्तस्मात् पृष्टीनां मज्जा नाद्यः, स वा अधस्तान्न प्राप्नो,—देतद्धि जीवं, तस्मादतोऽवद्यत्य,—क्ष्णयाङ्गानामवद्यति, पशुं वा एतदाश्रमयति, तस्मात् पशवोऽक्ष्णयाङ्गानि प्रहरन्तो यन्त्या,—ग्नेयो वै सर्वः पशु,—रथ वा उतान्यस्यै देवताया आलभ्यते, यद्दोष्णः पूर्वार्धादग्नयेऽवद्यति गुदस्य मध्यतः श्रोण्या जघानतस्तथास्य सर्वस्य पशोरग्नयेऽवत्तं भवति, त्रेधा गुदं करोति, त्रेधा ह्येतर्हि पशु,—स्त्र्यङ्गाणि समवत्तमुवदानानि, यावानेव पशुस्तस्मिन्नायुर्दधाति, त्रेधा मेदः करोति, मेदोरूपा हि पशवः, सर्वाणि वै पशोर्मेद्यतोऽङ्गानि मेद्यन्ति, यावानेव पशुस्तस्मिन् मेदो रूपं दधाति, बर्हुर्मेर्या यज्ञकुणपी,—ति ह स्माह यज्ञवचा राजस्तम्बायनः प्र वा इतो मनुष्याः पशुं च्यावयन्ति,

[ ३ ] तै. ६,३,१०।

नामुत्र गछन्तीति, यद्धिरण्यमवधायु जुहोति हिरण्यज्योतिषमेवैन॒ स्वर्गं लोकं गमयति ॥ ३ ॥
११

वसाहोमं प्रयौति, रसं॒ वा एतत् प्रयौति, स्वधितिना प्रयौत्ये,—तेन हौतेरपामङ्गानामवद्यति, तत्स्विदवदानमक,—रथो वज्रेणैवाहुतिमवरुन्द्धे, यूपं एतयान्वित॒ शमयत्यू,—र्ज्रै रसो यूरू,—र्जो वा एतद्रसेन पशु॒ संमर्धयत्य,—थो यावानेव पशुस्तस्मिन्त्सदधाति, पार्श्वेनापिदधात्यूर्जः परिगृहीत्यै, हतो वा एष मृ३तोऽमुत्र भूतो, यत्पशु॒ संमृशति पुनरेवैन॒ संभावयति, हव्यं पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयित३व्य,—मित्याहुर्यदाहुतीर्हुत्वा पशु॒ संमृशति हव्य॒ वा एतत् पूर्वं देवता गमयित्वाथ शरीरमन्वारोहयत्य,—र्धऋचे जुहोती,—यं॒ वा अर्धऋ३चो, ऽसा अर्धऋचो, ऽन्तरेमे अन्तरिक्ष,—मन्तरिक्षमिमाः प्रजाः, प्रजास्वेव रसं दधाति, वनस्पति॒ यजति, सोमो वै वनस्पतिः, सौमीरिमाः प्रजाः, प्रजास्वेव रसं दधाति, प्राणापानौ वै पृषदाज्य,—मात्मा हविं,—र्यत्पृषदाज्यं जुहोत्यात्मन्वा एतत् पशोः प्राणापानौ दधाति, दिग्भ्यो जुहोती,—मा एव दिशो रसेन व्युनक्ति, प्राचीमुत्तमां जुहोति, प्राचीमेव दिशं पुनरुपावर्तन्ते, ऽध्युध्नी॒ होत्रे हरान्ति, वैश्वदेवो वै होता, वैश्वदेवीरिमाः प्रजा, ऊधः खलुः वै प्रजा अनूपजीवन्ति, सर्वा एवैनाः पयस्विनीः करोति, गुदेनोपयजति, प्राणा वै गुदः, प्राणादधि प्रजाः प्रजायन्ते प्रजननाय, स्थविमत उपयजति, स्थविमतो हि प्रजाः प्रजायन्ते, यदणिमत उपयजेत् प्रजननमपिहन्यात्, तस्मात् स्थविमत उपयजत्य,—संभिन्दन्नुपयजति प्राणानामसंभेदाय, यत्संभिन्द्यात् प्राणान्त्संभिन्द्याद्, यं द्विष्यात्तस्य संभिन्द्यात्, प्राणानस्य संभिनत्ति, नोपयज्य॒, यदुपयजेत् प्राणानुपयजेत्, प्रमायुकः स्यात्, तदाहु,—रुपयज्युमेव, प्रजनन॒ वा उपयजो, ऽपि ह स प्रजायते य उपयजतीत्याभारद्वाजे,—ति ह स्माह शुचिवृक्षो गौपालायनः, किं तर्हि प्रजा आसन्यर्हि यज्ञो नानोपयद्भिरासी,—न्न प्रजाः प्राजायन्त, नौषधयः फलमगृह्णन्, यदा वाव यज्ञ उपयद्भिः समभवदथ प्रजाः प्राजायन्ता,—ऽथौषधयः फलमगृह्ण,—न्नेकादश प्रयाजा, एकादशानुयाजा, एकादशोपयज,—स्तत्त्रयस्त्रि॒शत्, त्रयस्त्रि॒शद्देवता,—स्ता एवास्यैताभिरभीष्टाः प्रीता भवन्त्ये,—तद्वा अस्य पशोरन्तर्वागिष्टोऽनभीष्टोऽभूद्, यास्य मात्रा तामेनं गमयति, स्व३र्ग्यो वै सर्वः पशु,—र्यदन्यत्राहवनीयाज्जुहु-

---

[४] मै. १,२,१७। तै. ६,३,११।

यदस्वर्ग्यः स्यात्, पशुश्रपणादग्निमाहरन्ति तेन स्व३र्ग्यः सर्वः पशु,—र्यत एव पूर्वमवादात्ततोऽ-
परमवद्यति, तस्मात् समानाद्योनेर्नानारूपाः पशवः प्रजायन्ते, यज्ञो वै देवानामत्यने,—दत्तं
देवा उपयद्भिरप्यवपन्ननतिनेदाय, यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिवपन्त्यनातिनेदाय,
यथा वै पुरुषः प्रत्यङ् छिद्र एवं यज्ञः प्रत्यङ् छिद्रं,—स्तं देवा उपयद्भिरप्यदधुरच्छिद्रत्वाय,
यदेता उपयजो भवन्ति यज्ञमेवैताभिरपिदधात्यच्छिद्रत्वाय ॥ ४ ॥ १२

ये केचार्वाचीनमेकादशिन्याः पशवस्तानुत्तरमर्धं यूपस्य नियुञ्ज्याद्, रौद्रा वै पशवो,-ऽग्निर्विधृति,—र्दक्षिणे हविर्धाने सोममासादयन्ति, तथास्य रुद्रः पशूननभिमानुको भवति, पात्रेषु वा अहमध्वर्युं चानध्वर्युं च विजानामी,—ति ह स्माहारुण औपवेशिः, कति पात्राणी,—ति पृच्छेद्, द्वादश पात्राण्यु,—पांशुसवनस्त्रयोदशं, यत्तन्मीमांसन्ते, पात्रा३न्न-पात्रा३मिति, मीमांसन्ते हि त्रयोदशं मासं, मासा३न्न मासा इति, पञ्च प्रातःसवने पुरोडाशा,—श्चत्वारो माध्यंदिने सवने, चत्वारस्तृतीयसवने, इतो वा एता निरमिमीत प्रजापति,—रात्मन एव, यत्तु एवैता निरमिमीत तदेतैरपिधीयते, देवाश्च वा असुराश्चास्पर्धन्ता,—ऽऽयतनवन्तोऽसुरा आस,—न्ननायतना देवा, इमे लोका असुराणामायतनमासं,—स्ते देवाः संस्तम्भं संस्तम्भं पराजयन्ता,—ऽनायतना ह्यासं,—स्ते वै सवनान्येवायतनमचायं,—स्तानि प्राविशं,—स्तानि नाध्रियन्त, ते वै पुरोडाशानेव सवनानामायतनमचायं,—स्तान्निरवपं,—स्तान्यध्रियन्त, ततो देवा अभवन्, परासुरास्त,—द्य एवं वेदायतनवान् भवति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, तस्मादनुसवनं पुरोडाशा निरूप्याः सवनानां धृत्यै, तस्मादनुसवनं पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, घृतं वै देवा वज्रं कृत्वा सोममघ्न,—न्नभि खलु वा एतं घारयन्ति, यत् प्राश्नीयात् सोमपीथं हन्याद्, यन्न प्राश्नीयात् सोमपीथेन व्यृध्येत, यत्रानभिघृतं तत् प्राश्यः सोमपीथस्य धृत्यै, तन्न सूक्ष्यं, प्राश्य एवे,—न्द्रो वै वृत्रमहं,—स्तन्न किं चनाधिनोत्, तं पुरोडाश एवाधिनोत्, तस्मात् पुरोडाशः प्राश्यः सोमपीथस्य धृत्यै, पञ्च प्रातःसवने पुरोडाशाः, पुरोडाशः परिवापो धानाः करम्भः पय३स्या, सा पुरोडाशपङ्क्ति,—र्द्विनाराशंसाः प्रातःसवने,

---

[ ५ ] काठ. २९,१ । वा. १९,२१ । काण्व. २१,२१ ।

द्विर्नाराशꣳसा माध्यंदिने सवना, एकनाराशꣳसास्तृतीयसवने, सा नाराशꣳसपङ्क्ति,—स्त्रीणि सवनान्यवभृथो, ऽनुब३न्ध्या सवनानां पञ्चमी, सा सवनपङ्क्ति,—रेषा वै सा पङ्क्तिर्यामाहुर्ब्रह्मवादिनो, वेत्थ तां पङ्क्तिꣳ यया न स्तुवते न शꣳसन्त्य,—थ यज्ञꣳ वहन्त्य,—थ यज्ञꣳ
सꣳस्थापयन्ता इति ॥ ५ ॥ १३

देवाश्च वा असुराश्चास्पर्धन्त, तेषाꣳ वा इन्द्रियाणि वी३र्याण्यपाक्राम,—न्नृक्सामे वा एभ्यस्तदपाक्रामतां, पशवो वागिन्द्रियं प्राणापानौ, तैर्वा इन्द्रोऽकामयत, सायुज्यं गच्छेयमिति॥ हरिवꣳ इन्द्रो धाना अत्तु ॥ इत्यृक्सामे वा इन्द्रस्य हरी, ऋक्सामाभ्यामेव सायुज्यमगच्छत् ॥ पूषण्वान्करम्भः ॥ इति, पशवो वै पूषा, पशुभिरेव सायुज्यगच्छत् ॥ सरस्वतीवान् भारतीवान् परिवापः॥ इति, वाग्वै सरस्वती, वाचैव सायुज्यमगच्छत्॥ इन्द्रस्यापूपः॥ इतीन्द्रियꣳ वा इन्द्र, इन्द्रियेणैव सायुज्यमगच्छत् ॥ मित्रावरुणयोः पयस्या ॥ इति प्राणापानौ वै मित्रावरुणौ, प्राणापानाभ्यामेव सायुज्यमगच्छन्, ततो देवा अभवन्, परासुरा,—स्तद्य एवꣳ वेदैतैरेवेन्द्रियैर्वीर्यैरेतैर्महिमभिः सायुज्यं गच्छति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, दीर्घजिह्वी वै देवानां प्रातःसवनमवालेट्, तन्नमाद्यत्, सा पयस्याभवत्, तस्मात् पय३स्या विमदितरूपेव मैत्रावरुणी प्रातःसवने स्यात्, प्राणापानौ वै मित्रावरुणौ, प्राणापानौ वा एतन्मुखतो यज्ञस्य धीयेते, न गुदः पर्याकर्तवै, यद्गुदं पर्याकुर्यादुदावर्तः प्रजा हन्याद्रक्षसामनन्ववजयाय, यूपः पुरस्तान्मीयते, यदग्रेण यूपं पशुꣳ हरेयुस्तदनु रक्षाꣳसि यज्ञमवजयेयु,—रन्तराग्निं च यूपं
च हृत्यो रक्षसामनन्ववजयाय ॥ ६ ॥ १४-२४

समुद्रं गच्छ स्वाहेत्यु,—पस्थꣳ वा एतद्व्रजत्य,—न्तरिक्षं गच्छ स्वाहेति, रेत एवैतद्दधाति, देवꣳ सवितारं गच्छ स्वाहेत्या,—ह प्रसूत्या एवा,—ऽहोरात्रे गच्छ स्वाहेत्य,—होरात्रे ह्यनु प्रजाः प्रजायन्ते, मित्रावरुणौ गच्छ स्वाहेति, प्राणापानौ वै मित्रावरुणौ, प्राणापाना एवासु दधाति, द्यावापृथिवी गच्छ स्वाहेत्याभ्यामेवैनाः सृष्टाः परिगृह्णाति, छन्दाꣳसि गच्छ स्वाहेति, वाग्वै छन्दाꣳसि, वाचमेवासु दधाति, सोमं गच्छ स्वाहेत्य,—न्नꣳ वै सोमो, ऽन्नमेवासु दधाति, यज्ञं गच्छ स्वाहेति, यज्ञिया एवैना अक,—र्दिव्यं नभो गच्छ स्वाहेति,

[ ६ ] काठ. २९.१—२।

[ ७ ] मै. १,२,१८। तै. ६,४,१। वा. ६,२१। काण्व. ६,२८—२९।

वृष्टिमेवाभ्यो निनयन्त्य,—ग्निꣳ वैश्वानरं गच्छ स्वाहेति, सꣳवत्सरो वा अग्निर्वैश्वानरः, सꣳवत्सर एवैनाः प्रतिष्ठापयति, सꣳवत्सरायुपमेनाः करोति, मनो हार्दिꣳ यच्छे,—त्याह प्राणानां गोपीथायौ,—षधीभ्यस्त्वेत्यो,—षधीष्वेव रसं दधाति, यो वै विद्वान् वाविद्वान् वोप-यजो मिथुनयोप यजति प्राणान् वा एतन्मिथुनयाकुरुते, यदाह, मनो हार्दिꣳ यच्छेति, प्राणान् वा एतदृतुशः कल्पयते, पशुर्वा आलब्धः शोचति, तस्य मध्यꣳ शुगभिसमेति, सा हृदयेष्वागच्छति, यत् पुरुषमुपस्पृशेन्मनु३ष्याञ्छुगृच्छेद्, यद्गामुपस्पृशेत् पशूञ्छुगृच्छेद्, यद्वारूपस्पृशेद्वनस्पतीꣳ शुगृच्छेद्, यत्तृणमुपस्पृशेदोषधीः शुगृच्छेद्, यदुदकमुपस्पृशेदपः शुगृच्छेद्, यदार्द्रमनूदकं तच् शान्तं, तत्रोपोष्यं, तद्देवताꣳ शुचमवयजति ॥ ७ ॥ २५

[ १६५१२ ]

॥ इत्युपरिकाण्डे पात्नीवन्ता नाम दशमः प्रपाठकः ॥ १० ॥

अथैकादशः प्रपाठकः ।

## सौत्रामणी ।

समिद्धा इन्द्र उपसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रꣳ वि दुरो ववार ॥ १
नराशꣳसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥ २
ईडितो देवैर्हरिवां अभिष्टिराजुह्वानो हविषा शर्धमानः ।
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥ ३
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनꣳ सीदात् प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तꣳ वसुभिः सजोषाः ॥ ४
इन्द्रं दुरः कव३ष्यो धावमाना वृषाणꣳ यन्ति जनयः सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्ताꣳ सुवीरा वीरं प्रथमाना महोभिः ॥ ५

[ १ ] काठ. ३८,६ । तै. ब्रा. २,६,८ । वा. २०,३६—४६ । काण्व. २२,२१—३१ ।

उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
पेशस्वती तन्तुना सꣳव्ययन्ती देवानां देवꣳ यजतः सुरुक्मे ॥ ६

दैव्या मिमाना मनसा पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥ ७

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥ ८

त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥ ९
वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानः स्वदातु हव्यं मधुना घृतेन ॥ १०
स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा हव्यमुन्दन्त्स्वाहाकृतं जुषताꣳ हव्यमिन्द्रः ॥ १ ॥ ११

होता यक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं मधुशष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजं पथा मधुमदाभरन्नश्विनेन्द्राय वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षन्नराशꣳसं न नग्नहुं पतिꣳ सुराया भेषजं मेषः सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यं बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजꣳ यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षद्दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वती शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना संजानाने सुपेशसा सम-

[ २ ] तै. ब्रा. २,६,११। वा. २१,२९—३९। काण्व. २३,३०—४०।

ज्ञातं सरस्वत्या त्विषिमिन्द्रेण भेषजꣳ, श्येनो न रंजसा हृदा पयः सोमः परिस्रुता घृतं मधु वीतामाज्यस्य होतर्यज, होता यक्षद् दैव्या होतारा भिषजाश्विनेन्द्रं न जागृवि दिवा नक्तं न भेषजैः शूषꣳ सरस्वती भिषक् सीसेन दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु वीतामाज्यस्य होतर्यज, होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपसो रूपमिन्द्रे हिरण्ययमश्विनेडा न भारती वाचा सरस्वती महा इन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज, होता यक्षत्त्वष्टारꣳ रूपकृतꣳ सुपेशसꣳ वृषभं नर्यापसं त्वष्टारमिन्द्रमश्विना भिषजं नः सरस्वतीमोजो न जूतिरिन्द्रियꣳ वृको न रभसो भिषग्यशः सुराया भेषजꣳ श्रिया न मासरं पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं भीमं न मन्युꣳ राजानꣳ व्याघ्रं नमसाश्विना भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु वेत्वाज्यस्य होतर्यज, होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोकानाꣳ स्वाहा मेदसां पृथक् स्वाहा छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै स्वाहा ऋषभमिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाग्निं न भेषजैः स्वाहा सोममिन्द्रियैः स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारꣳ वरुणं भिषजां पतिꣳ स्वाहा वनस्पतिं प्रियं पाथो न भेषजैः स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजं पयः सोमः
परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥ २ ॥ १२

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः ।
दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ।
तनूपा भिषजा सु३तेऽश्विनोभा सरस्वती । मध्वा रजाꣳसीन्द्रियमिन्द्राय पथिभिर्वह ॥ १३
इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् ।
अधातामश्विना मधु भेषजं भिषजा सुते ॥ १४
आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ।
इडाभिरश्विना इषꣳ समूर्जꣳ सꣳ रयिं दधुः ॥ १५
अश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता । सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ १६
कव३ष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी उभे दुहे कामान्त्सरस्वती ॥ १७

---

[ ३ ] काठ. ३८,८ । तै. ब्रा. २,६,१२ । वा. २०,५५—६६ । २१,४१—५१ । [ समिद्धो अग्निरश्विना०... । अथर्व. ७,७३,२ ]

उषासा नक्तमश्विना दिवेन्द्र१ सायमिन्द्रियैः। संजानाने सुपेशसा समञ्जाते सरस्वत्या॥ १८
पातं नो अश्विना दिवा पाहि नक्त१ सरस्वति ।
दैव्या होतारा भिषजा पातमिन्द्र१ सचा सुते ॥ १९
तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥ २०
अश्विना भेषजं मधु भेषजं नः सरस्वती ।
इन्द्रे त्वष्टा यशः श्रिय१ रूप१ रूपमधुः सुते ॥ २१
ऋतुथेन्द्रो वनस्पतिः शशमानः परिस्रुता ।
कीलालमश्विभ्यां मधु दुहे धेनुः सरस्वती ॥ २२
गोभिर्न सोममश्विना मासरेण परिस्रुता ।
समधाता१ सरस्वत्या स्वाहेन्द्रे सुतं मधु ॥ ३ ॥ २३
अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती । आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे॥ २४
यमश्विना सरस्वती हविषेन्द्रमवर्धयन् ।
स बिभेद बलं मघं नमुचा आसुरे सचा ॥ २५
तमिन्द्रं पशवः सचाश्विनोभा सरस्वती ।
दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियम् ॥ २६
य इन्द्र इन्द्रियं दधुः सविता वरुणो भगः ।
स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥ २७
सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥ २८
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत॥ २९
युव१ सुराममश्विना नमुचा आसुरे सचा । विपिपाना सरस्वतीन्द्रं कर्मस्वावत ॥ ३०

होता यक्षदश्विनौ सरस्वतीमिन्द्रमिमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिस्रुता शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्च्युत,—स्तानश्विना सरस्वतीन्द्रो जुषन्ता१ सोम्यं मधु, पिबन्तु, मदन्ता१, व्यन्तु, होतर्यज ॥ ३१

---

[ ४ ] काठ. ३८,८—९ । वा. २०,६७—७९;१०,३३—३४;२१,४२ । काण्व. २२,५२—६४;११,४६—४७;२३,४३ । तै. ब्रा. २,६,१२ । [युव१ सुराम०...वत। ऋ. १०,१३१,४; अथर्व. २०,१२५,४; तै. ब्रा. १,४,२,१।

*

पुत्रमिव पितरा अश्विनोभेन्द्रावथुः काव्यैर्दं९सनाभिः ।
यत्सुराम९ व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३२
अश्विना गोभिरिन्द्रियमश्वेभिर्वी३र्यं बलम् । हविषेन्द्र९ सरस्वती यजमानमवर्धयन् ॥ ३३
ता नासत्या सुपेशसा हिरण्यवर्त्तनी नरा । सरस्वती हविष्मतीन्द्रं कर्मस्ववतु ॥ ३४
ता भिषजा सुकर्मणा सा सुदुघा सरस्वती ।
स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥ ३५
अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनि९ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ ३६
यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टासा आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ ४ ॥ ३७

देवं बर्हिः सरस्वती सुदेवमिन्द्रायाश्विना तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रिय९, वसुवने वसुधेयस्य वेतु, यज्ञ देवीर्द्वारो, अश्विना भिषजेन्द्र९ सरस्वती प्राणान्न वीर्यं नसि द्वारो दधुरिन्द्रिय९, वसुवने वसुधेयस्य व्यन्तु, यज्ञ देवी उषासा, अश्विना सुत्रामेन्द्र९ सरस्वती बलं न वाचमास्य उषाभ्यां दधुरिन्द्रिय९, वसुवने वसुधेयस्य वीता९, यज्ञ देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्धयन्, श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रिय९, वसुवने वसुधेयस्य वीता९, यज्ञ देवी ऊर्जाहुती दुघे, सुदुघेन्द्र९ सरस्वत्यश्विना भिषजावत९ शुक्रं न ज्योतिः स्तनयोराहुती धत्त इन्द्रिय९, वसुवने वसुधेयस्य वीता९, यज्ञ देवा देवानां भिषजा होतारा इन्द्रमश्विना वषट्कारैः सरस्वती त्विषिं न हृदये मति९ होतृभ्यां दधुरिन्द्रिय९, वसुवने वसुधेयस्य वीता९, यज्ञ देवीस्तिस्र,—स्तिस्रो देवीरश्विनेडा सरस्वती शूषं न मध्ये नाभ्या इन्द्राय दधुरिन्द्रिय९, वसुवने वसुधेयस्य व्यन्तु, यज्ञ देवं इन्द्रो नराशं९सस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथो, रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि, वसु-

[ पुत्रमिव पितरा०। ऋ. १०,१३१,५; अथर्व. २०,१२५,५; तै. ब्रा. १,४,२,१। अहाव्यग्ने हविरास्ये०। ऋ. १०,९१,१५; तै. ब्रा. १,४,२,१ । यस्मिन्नश्वास०। ऋ. १०,९१,१४; तै. ब्रा. १,४,२,२ ]

[ ५ ] वा. २१,४८—५८;२८,१५—१६,१८—२२,३८—३९,४१,४४—४५ । काण्व. २३,४७—५७;३०,१५—१६,१८—२२,३८—३९,४१,४४—४५ । तै. ब्रा. २,६ १४ ।

वने वसुधेयस्य वेतु, यज देवो देवैर्वनस्पतिर्हिरण्यपर्णो अश्विभ्याꣳ सरस्वत्या सुपिप्पल इन्द्राय पच्यते मध्वोजो न जूतिर्वृषभो न भामꣳ, वनस्पतिर्नो दधदिन्द्रियाणि, वसुवने वसुधेयस्य वेतु, यज देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या स्योनमिन्द्र ते सद ईशाया मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियꣳ, वसुवने वसुधेयस्य वेतु, यज देवो अग्निः स्विष्टकृद्देवान्यक्षद्य-थायथꣳ होतारा इन्द्रमश्विना वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत्स्विष्टा इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः, स्विष्टा देवा आज्यपाः, स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृत्संहो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधाꣳ, वसुवने वसुधेयस्य वेतु, यज ॥ ५ ॥ ३८

सोमो राजामृतꣳ सुत ओषधीनामपाꣳ रसः ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ३९
अद्भ्यः क्षीरꣳ व्यपिवत् क्रुङ्ङाङ्गिरसो धिया ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४०
अद्भ्यः सोमꣳ व्यपिबच्छन्दोभिर्हꣳसः शुचिषत् ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४१
अन्नात्परिस्रुतो रसं ब्रह्मणा क्षत्रꣳ व्यपिवत् ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४२
रेतो मूत्रꣳ विजहाति योनिं प्रविशदिन्द्रियम् ।
गर्भो जरायुणावृत उल्बं जहाति जन्मना ॥ ४३
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४४
दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।
अश्रद्धामनृतेऽदधाच् श्रद्धाꣳ सत्ये प्रजापतिः ॥ ४५
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४६

---

[ ६ ] काठ. ३८,१ । वा. १९,७२—७९ । काण्व. २१,७२—७६ । तै. ब्रा. २,६,२ ।

वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४७
दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रꣳ व्यपिबत् पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियꣳ विपानꣳ शुक्रमन्धसः। इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥६॥ ४८
परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वान्यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ ४९
सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ ५०
पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ५१
वायुः पूतः पवित्रेण प्राक् सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ॥ ५२
वायोः पूतः पवित्रेण प्रत्यक् सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ॥ ५३
ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरायाः सोमः सुत आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नꣳ यजमानाय धेहि ॥ ५४
कुविदङ्ग, नाना हि वाम् ॥ ५५
या व्याघ्रꣳ विषूचिकोभौ वृकं च रक्षति। श्येनं पतत्रिणꣳ सिꣳहꣳ सेमं पात्वꣳहसः॥ ५६
सुरावन्तं बर्हिषदꣳ सुवीरꣳ यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेनेन्द्रꣳ यजमानाः स्वर्काः ॥ ५७
यस्ते रसः संभृता ओषधीषु सोमस्य शुष्मः सुरायाꣳ सुतस्य ।
तेन जिन्व यजमानं मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥ ५८
यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ।
इमं तꣳ शुक्रं मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥ ५९

---

[ ७ ] काठ. ३८,२। वा. १९,२—७,१०,३२—३५;६,४;१०,३१—३२;१३,३३;२३,३८ । काण्व. २१,१—६,९, ३२—३५;६,५;११,४४—४५;१४,३५;२५,४० । तै. ब्रा. २,६,१,३ । [ परीतो षिञ्चता० । ऋ. ९,१०७,१; सा. ५१२,१३१३; तै. ब्रा. २,६,१,१ । पुनातु ( ०नाति ) ते परिस्रुतं० । ऋ. ९,१,६; तै. सं. १.८,२१,१; तै. ब्रा. २,६,१,२ । वायुः ( ०योः ) पूतः पवित्रेण० । अथर्व. ६,५१,१ । इन्द्रस्य युज्यः सखा । ऋ. १, २२,१९; सा. १६७१; अथर्व. ६,५१,१;७,२६,६; तै. सं. १,३,६,२। कुविदङ्ग यवमन्तो०। ऋ. १०,१३१,२; अथर्व. २०,१२५,२; तै. सं. १,८,२१,१;५,२,११,२; तै. ब्रा. २,६,१;३ ]

यदत्र शिष्टꣳ रसिनः सुतस्य यमस्येन्द्रो अपिबच् शचीभिः ।
अहं तमस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामि ॥ ७ ॥ ६०

देवस्य त्वा सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ६१
त्रया देवा एकादश त्रयस्त्रिꣳशाः सुराधसः ।
बृहस्पतिपुरोहिता देवस्य सवितुः सवे देवा देवैरवन्तु त्वा ॥ ६२

प्रथमास्त्वा द्वितीयैरभिषिञ्चन्तु, द्वितीयास्त्वा तृतीयै,—स्तृतीयास्त्वा सत्येन, सत्यं त्वा
ब्रह्मणा, ब्रह्म त्वा यजुर्भि,—र्यजूꣳषि त्वा सामभिः, सामानि त्वा ऋग्भि,—ऋचस्त्वा
पुरोनुवाक्याभिः, पुरोनुवाक्यास्त्वा याज्याभि,—र्याज्यास्त्वा वषट्कारै,—र्वषट्कारास्त्वाहुतिभि-
रभिषिञ्चन्त्वा,—हुतयस्ते कामान्त्समर्धयन्त्व,—सा अश्विनोस्त्वा तेजसा ब्रह्मवर्चसायाभिषि-
ञ्चामि, सरस्वत्यास्त्वा वीर्येण यशसेऽन्नाद्यायाभिषिञ्चामी,—न्द्रस्य त्वेन्द्रियेणौजसे बलायाभि-
षिञ्चामि, भूः स्वाहा ॥ ६३

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ ६४
जिह्वा मे भद्रꣳ वाङ्महो मनो मन्युः स्वराड् भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥ ६५
बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम ॥ ६६
पृष्ठीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोण्यौ ।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ ६७
नाभिर्मे चित्तꣳ विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दा आण्डौ मे भगः सौभाग्यं पसः ॥ ६८
लोमानि प्रयतिर्मम त्वङ् मा आनतिरागतिः ।
माꣳसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥ ६९
जङ्घाभ्यां पद्भ्यां धीरोऽस्मि विशि राजा प्रतिष्ठितः ।
प्रति ब्रह्मन् प्रतितिष्ठामि क्षत्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ ७०

---

[ ८ ] काठ. ३८,४ । वा. २०,३,५—१३ । काण्व. २१,९३—९४,९६-१०६ । तै. ब्रा. २,६,५ ।
[ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

प्रति प्रजायां प्रतितिष्ठामि पुष्टे, प्रति प्राणेषु प्रतितिष्ठाम्यात्मन्, द्यावापृथिव्योः प्रति-
तिष्ठामि यज्ञे ॥ ८ ॥ ७१

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति ।
अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपꣳ वरुणो भिषज्यन् ॥ ७२
तदस्य रूपममृतꣳ शचीभिस्तिस्रो दधुर्देवताः सꣳरराणाः ।
लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माꣳसमभवन्न लाजाः ॥ ७३
तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् ।
अस्थि मज्जानं मासरं कारोतरेण दधतो गवां त्वचि ॥ ७४
सरस्वती मनसा पेशलꣳ वसु नासत्याभ्याꣳ वयति दर्शतꣳ वपुः ।
रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ॥ ७५
पयसः शुक्रममृतं जनित्रꣳ सुराया मूत्राज्जनयन्त रेतः ।
अपामतिं दुर्मतिं बाधमाना ऊवध्यꣳ वातात्सꣳब्वं तदारात् ॥ ७६
इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान ।
यकृत् क्लोमानꣳ वरुणो भिषज्यन्मतस्ने वायव्यैर्नमिनाति पित्तम् ॥ ७७
आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः ।
श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता ॥ ७८
कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः ।
प्लाशिर्व्यक्तः शतधारा उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥ ७९
मुखꣳ सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती ।
चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥ ८०
अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन ।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितꣳ वसाते ॥ ८१
अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतं ग्रहाभ्याम् ।
सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥ ८२
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम् ।
यवैर्न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखे ॥ ८३

---

[ ९ ] काठ. ३८,३ । वा. १९,८०—९५ । काण्व. २१,७७—९२ । तै. ब्रा. २,६,४ ।

आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम ।
केशा न शीर्षन् यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ॥ ८४
अङ्गैरात्मानं भिषजा तदश्विनात्मानमङ्गैः समधात् सरस्वती ।
इन्द्रस्य रूपꣳ शतमानमायुः शुक्रं न ज्योतिरमृतं दधाना ॥ ८५
सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ।
अपाꣳ रसेन वरुणो न साम्नेन्द्रꣳ श्रियै जनयन्नप्सु राजा ॥ ८६
तेजः पशूनाꣳ हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु ।
अश्विभ्यां दुग्धं भिषजा सरस्वती सुतासुताभ्याममृतः सोमा इन्दुः ॥ ९ ॥ ८७
पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ ८८
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा सर्वमायुर्व्यश्नवै ॥ ८९
अग्न आयूꣳषि पवसे ॥ ९०
पवमानः ३स्वर्जनः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ ९१
पुनन्तु मा देवजनाः पुनन्तु मनवो धिया ।
पुनन्तु विश्वा भूता मा जातवेदः पुनाहि मा ॥ ९२
पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ ९३
उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनाहि विश्वतः ॥ ९४
पवित्रेण पुनाहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूꣳरनु ॥ ९५

---

[ १० ] काठ. ३८,२,५ । वा. ३,४५,५४;१९,३७—४८;२०,१४-१८,२०,२३;६,२२;१२,९०;३५,१६ । काण्व. ३,५३,६२;२१,३८—५०;२२,१-५,८;६,३०;१३,९१;३५,४८ । तै. ब्रा. २,६,३;६ । [ अग्ना ( ०ग्न ) आयूꣳषि० । ऋ. ९,६६,१९;सा. ६२७,१४६४,१५१८; तै. ब्रा. २,६,३,४; तै. आ. २,५,१; तै. सं. १,३,१४,७;४,२९,१;५,५,१;६,६,२ । पवमानः ३स्वर्जनः ( सो अद्य० )…मा । ऋ. ९,६७,२२ । पुनन्तु मा ( मां ) देवजनाः० । ऋ. ९,६७,२७; तै. ब्रा. १,४,८,१;२,६,३,४ । पवमानः पुनातु० ( आ त एतु० ) । [ आ न एतु० । वा. य. ३,५४ ] । ऋ. १०,५७,४; अथर्व. १,६,३;. तै. सं. १,८,५,२ । क्रत्वे दक्षाय जीवसे । अथर्व. ६,१९,२ । उभाभ्यां देव सवितः । ऋ. ९,६७,२५; अथर्व. ६,१९,३ । ]

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे ॥ ९६

वैश्वदेवी पुनती देव्यागाद्यस्या बह्वयस्तन्वो वीतपृष्ठाः ।

तया मदन्तः सधमाद्येषु वयꣳ स्याम पतयो रयीणाम् ॥ ९७

वैश्वानरो रश्मिभिर्मा पुनातु वातः प्राणेनेषिरो मयोभूः ।

द्यावापृथिवी पयसा पयोभिर्ऋतावरी यज्ञिये मा पुनीताम् ॥ ९८

बृहद्भिः सवितस्तिभिर्वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनीमहे ॥ ९९

ये समानाः समनसः पितरो यमराज्ये ।

तेषाꣳ लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ १००

ये समानाः समनसो जीवा जीवेषु मामकाः ।

तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समाः ॥ १०१

द्वे स्रुती ॥ १०२

इदꣳ हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ।

आत्मसनि प्रजासनि क्षेत्रसनि पशुसनि लोकसन्यभयसनि ॥ १०३

अग्निः प्रजां बहुलां मे कृणोत्वन्नं पयो रेतो अस्मासु धेहि ॥ १०४

यद्देवा देवहेडनं देवासश्चकृमा वयम् ।

अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १०५

यदि स्वपन्यदि जाग्रदेनाꣳसि चकृमा वयम् ।

वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १०६

यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ।

सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १०७

धाम्नो धाम्नो ॥ यद्ग्रामे ॥ १०८-१०९

पवित्रमसि यज्ञस्य पवित्रꣳ यजमानस्य ।

तन्मा पुनातु सर्वतो विश्वस्मादेवकिल्बिषात्सर्वस्माद्देवकिल्बिषात् ॥ ११०

---

[ यत्ते पवित्रमर्चि० । ऋ. ९,६७,२३; तै. ब्रा. १,४,८,२ । वैश्वदेवी पुनती० । ऋ. परि. १९,२ । यद्देवा देवहेडनं० । अथर्व. ६,११४,१ । यदि ( जाग्र० ) स्वपन्यदि० । अथर्व. ६,११५,२ । यदि दिवा (०द्विद्वांसो)०। अथर्व. ६,११५,१ । धाम्नो धाम्नो० । अथर्व. ७,८३,२;१९,४४,९ । श्रौ. पू. अ. ३, खं. ६ ]

द्रुपदादिवेन्मुमुचानः स्विन्नः स्नात्वी मलादिव ।
पूतं पवित्रेणेवाज्य॑ विश्वे मुञ्चन्तु मैनसः ॥ १११
समावृतत् पृथिवी समुषाः समु सूर्यः ।
वैश्वानरज्योतिर्भूयास॑ विश्वं कामं॑ व्यश्नवीय भूः स्वाहा ॥ १० ॥ ११२
समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः॥ ११३
तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती ।
उष्णिक् छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः ॥ ११४
इडाभिरग्निरीड्यः सोमो देवो अमर्त्यः । अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः॥ ११५
सुबर्हिरग्निः पूषण्वान्स्तीर्णबर्हिरमर्त्यः ।
बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥ ११६
दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इन्द्रियं तुर्यवाड् गौर्वयो दधुः ॥ ११७
उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः ।
त्रिष्टुप् छन्द इन्द्रियं पृष्ठवाड् गौर्वयो दधुः ॥ ११८
दैव्या होतारा भिषजेन्द्रेण सयुजा युजा । जगती छन्द इन्द्रियमनड्वान् गौर्वयो दधुः ॥
तिस्रो देवीरिडा मही भारती मरुतो विशः । विराट् छन्द इन्द्रियं धेनुर्गौर्न वयो दधुः॥
त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना । द्विपदा छन्द इन्द्रियमुक्षा गौर्न वयो दधुः ॥
शमिता नो वनस्पतिः सविता प्रसुवन् भगम् । ककुप्छन्द इहेन्द्रियमृषभो गौर्वयो दधुः ॥
स्वाहा यज्ञं॑ वरुणः सुक्षत्रो भेषजं करत् ।
अतिछन्दा इन्द्रियं बृहद्वशा वेहद्वयो दधुः ॥ ११ ॥ ११९-१२३
वसन्तेनु ऋतुना देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥
ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बल॑ हविरिन्द्रे वयो दधुः॥
वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतम् ।
वैरूपेणु विशौजसा हविरिन्द्रे वयो दधुः ॥ १२४-१२६

---

[ द्रुपदादिवेन्मुमुचानः ( ०दिव० ) । अथर्व. ६,११५,३ ]

[ ११ ] काठ. ३८,१० । वा. २१,१२—२२ । काण्व. २३,१३—२३ । तै. ब्रा. २,६,१८ ।

[ १२ ] वा. २१,२३—२८ । काण्व. २३,२४—२९ । तै. ब्रा. २,६,१९ ।

*

शारदेन॒ ऋतुना॑ दे॒वा एकवि॒ꣳश ऋभव॑ः स्तु॒तम् ।
वै॒राजे॑न॒ श्रि॒या श्रियꣳ ह॒विरि॑न्द्रे॒ वयो॑ दधुः ॥ १२७

हे॒मन्ते॑न॒ ऋतु॒ना दे॒वास्त्रि॑ण॒वे म॒रुतः॑ स्तु॒तम् । बले॑न॒ शक्व॑रीः सहो॑ ह॒विरि॑न्द्रे॒ वयो॑ दधुः ॥

शै॒शि॒रेण॒ ऋतु॒ना दे॒वास्त्र॑यस्त्रि॒ꣳशेऽमृत॒ꣳ स्तु॒तम् ।
स॒त्येन॒ रे॒वतीः॑ क्ष॒त्रꣳ ह॒विरि॑न्द्रे॒ वयो॑ दधुः ॥ १२ ॥ १२८-१२९

[ १७८१ ]

॥ इत्युपरिकाण्डे सौत्रामणीयो नाम एकादशः प्रपाठकः ॥ ११ ॥

अथ द्वादशः प्रपाठकः ।

## अश्वमेधः ।

इ॒माम॑गृभ्णन् र॒श॒नामृ॒तस्य॒ पूर्व॒ आयु॑नि वि॒दथे॑षु क॒व्या ।
सा नो॑ अ॒स्मिन्त्सु॒त आ ब॑भूव ऋ॒तस्य॒ सामन्त्स॒रमा॒रप॑न्ती ॥ १

अ॒भि॒धा अ॒सि, भुव॑नमसि, य॒न्तासि॑ ध॒र्ता, स त्वम॒ग्निं वै॑श्वान॒रꣳ सप्र॑थसं गच्छ॒ स्वाहा॑-कृतः, स्व॒गा त्वा दे॒वेभ्यः॑ प्र॒जाप॑तये॒ ब्रह्म॒न्नश्वं॑ भन्त्स्यामि, दे॒वेभ्यः॑ प्र॒जाप॑तये, तेन॑ राध्यास॒म्, तं ब॑धान, दे॒वेभ्यः॑ प्र॒जाप॑तये, तेन॑ राध्नुहि, प्र॒जाप॑तये त्वा॒ जुष्टं॒ प्रोक्षामि, वा॒यवे॑ त्वा॒ जुष्टं॒ प्रोक्षामीन्द्रा॒ऽग्निभ्यां॑ त्वा॒ जुष्टं॒ प्रोक्षामि, विश्वे॑भ्यस्त्वा दे॒वेभ्यो॒ जुष्टं॒ प्रोक्षामि, सर्वे॑भ्यस्त्वा दे॒वेभ्यो॒ जुष्टं॒ प्रोक्षामि ॥ २

यो अर्व॑न्तं॒ जिघा॑ꣳसति॒ तम॒भ्यमी॑ति॒ वरु॑णः । प॒रो मर्तः॑ प॒रः श्वा ॥ १ ॥ ३

अ॒ग्नये॒ स्वाहा॑, सोमा॑य॒ स्वाहा॑, ऽपां मोदा॑य॒ स्वाहा॑, वा॒यवे॒ स्वाहा॑, स॒वि॒त्रे स्वाहा॑, त्वष्ट्रे॒ स्वाहा॑, बृह॒स्पत॑ये॒ स्वाहे॒न्द्राय॒ स्वाहा॑, मि॒त्राय॒ स्वाहा॑, वरु॑णाय॒ स्वाहा॑ ॥२॥ ४

हि॒ङ्कारा॑य॒ स्वाहा॑, हिङ्कृ॑ताय॒ स्वाहा॑, क्रन्द॑ते॒ स्वाहा॑ऽवक्र॒न्दाय॒ स्वाहा॑, प्रोथ॑ते॒ स्वाहा॑, प्र॒प्रो॒थाय॒ स्वाहा॑, ग॒न्धाय॒ स्वाहा॑, घ्रा॒ताय॒ स्वाहा॑, निवि॑ष्टाय॒ स्वाहो॒पवि॑ष्टाय॒ स्वाहा॑,

[ १ ] तै. ७,१,११ । काठ. ५,१,२; ५,४,४ । वा. २२,२—५ । काण्व. २४,२—५ ।
[ २ ] तै. ७,१,१४ । काठ. ५,१,५ । वा. १०,५,२२,६,२७;३९,१ । काण्व. ११,१२;२४,६,३७;३९,१ । [ अग्नये स्वाहा । अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । वायवे स्वाहा । अथर्व. १९,४३,२ । इन्द्राय स्वाहा । अथर्व. १९,४३,६ ]
[ ३ ] तै. ७,१,१३;१९ । काठ. ५,१,१०,४ । वा. २२,७-८ । काण्व. २४,७—१२ ।

संहिताय स्वाहा, वल्गते स्वाहा, ऽऽसीनाय स्वाहा, शयानाय स्वाहा, स्वपते स्वाहा, जाग्रते स्वाहा, कूजते स्वाहा, प्रबुद्धाय स्वाहा, विजृम्भमाणाय स्वाहा, विचृत्ताय स्वाहा, जवाय स्वाहा, बलाय स्वाहा, ऽयनाय स्वाहा, प्रायणाय स्वाहा, यते स्वाहा, धावते स्वाहा,—दूद्रावाय स्वाहा,—दुद्रुताय स्वाहा, शूकाराय स्वाहा, शूकृताय स्वाहा,—पस्थिताय स्वाहा, संस्थानाय स्वाहा, निषण्णाय स्वाहा,—त्थिताय स्वाहा, विष्ठिताय स्वाहा, विवर्तमानाय स्वाहा, विवृत्ताय स्वाहा, विधून्वानाय स्वाहा, विधूताय स्वाहा, शृण्वते स्वाहा, शुश्रूषमाणाय स्वाहा,—क्षिताय स्वाहा, वीक्षिताय स्वाहा, वीक्षमाणाय स्वाहा, निमेषाय स्वाहा, यदत्ति तस्मै स्वाहा, यत् पिबति तस्मै स्वाहा, यन्मेहति तस्मै स्वाहा,
कुर्वते स्वाहा, कृताय स्वाहा ॥ ३ ॥ ५

विभूर्मात्रा, प्रभूः पित्रा,—ऽश्वोऽसि, हयोऽसि,—त्योऽसि, मयोऽसि, नरोऽसि,—र्वासि, सप्तिरसि, वाज्यसि, वृषासि, नृमणा असि, ययुर्नामास्या,—दित्यानां पत्वान्विहि, देवा आशापाला एतं देवेभ्यो अश्वं मेधाय प्रोक्षितꣳ रक्षते,—ह धृति,—रिह स्वधृति,—रिह रम,
इह रमन्ताम् ॥ ४ ॥ ६

काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, सवित्रे स्वाहा, सवित्रे प्रसवित्रे स्वाहा, सवित्र आसवित्रे स्वाहा, ऽऽदित्यै स्वाहा, ऽऽदित्यै मह्यै स्वाहा, ऽऽदित्यै सुमृडीकायै स्वाहा; सरस्वत्यै स्वाहा, सरस्वत्यै बृहत्यै स्वाहा, सरस्वत्यै पावकायै स्वाहा, पूष्णे स्वाहा, पूष्णे प्रपथ्याय स्वाहा, पूष्णे नरंधिषाय स्वाहा, त्वष्ट्रे स्वाहा, त्वष्ट्रे तुरीपाय स्वाहा, त्वष्ट्रे पुरुरूपाय स्वाहा, विष्णवे स्वाहा, विष्णवे शिपिविष्टाय स्वाहा, विष्णवे निभूयपाय
स्वाहा ॥ ५ ॥ ७

आ ब्रह्मन् ब्राह्मणस्तेजस्वी ब्रह्मवर्चसी जायता,—मा राष्ट्रे राजन्यः शूर इषव्यो महारथो जायतां, दोग्ध्री धेनु,—र्वोढानड्वा,—नाशुः सप्तिः, सभेयो युवा, पुरंधिर्योषा, जिष्णू रथेष्ठा आस्य यजमानस्य वीरो जायतां, निकामे निकामे नः पर्जन्यो वर्षतु, फलवतीर्न
ओषधयः पच्यन्ताꣳ, योगक्षेमो नः कल्पताम् ॥ ६ ॥ ८

[ ४ ] तै. ७,१,१२। काठ. ५,१,३। वा. २२,१९। काण्व. २४,२४-२५।

[ ५ ] काठ. ५,३,५। वा. २२,२०। काण्व. २४,२६-२८। मा. श्रौ. ९,२,२।

[ ६ ] तै. ७,५,१८। काठ. ५,५,१४। वा. २२,२२। काण्व. २४,३०-३२।

अग्नये स्वाहा, सोमाय स्वाहे, न्द्राय स्वाहा, पृथिव्यै स्वाहा, ऽन्तरिक्षाय स्वाहा, दिवे
स्वाहा, दिग्भ्यः स्वाहा, ऽऽशाभ्यः स्वाहो, र्व्यै दिशे स्वाहा, प्राच्यै दिशे स्वाहा,
नक्षत्रेभ्यः स्वाहा, नक्षत्रियेभ्यः स्वाहा, ऽहोरात्रेभ्यः स्वाहा, ऽर्धमासेभ्यः स्वाहा, मासेभ्यः
स्वाहा, ऋतुभ्यः स्वाहा, ऽऽर्तवेभ्यः स्वाहा, सꣳवत्सराय स्वाहा, द्यावापृथिवीभ्याꣳ स्वाहा,
चन्द्रमसे स्वाहा, सूर्याय स्वाहा, रश्मिभ्यः स्वाहा, वसुभ्यः स्वाहा, रुद्रेभ्यः स्वाहा,
ऽऽदित्येभ्यः स्वाहा, मरुद्भ्यः स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, मूलेभ्यः स्वाहा, शाखाभ्यः
स्वाहा, वनस्पतिभ्यः स्वाहा, पुष्पेभ्यः स्वाहा, फलेभ्यः स्वाहौ, षधीभ्यः स्वाहा ॥ ७ ॥ ९

प्राच्यै दिशे स्वाहा, ऽर्वाच्यै दिशे स्वाहा, दक्षिणायै दिशे स्वाहा, ऽर्वाच्यै दिशे स्वाहा,
प्रतीच्यै दिशे स्वाहा, ऽर्वाच्यै दिशे स्वाहो, दीच्यै दिशे स्वाहा, ऽर्वाच्यै दिशे स्वाहो, र्ध्वायै
दिशे स्वाहा, ऽर्वाच्यै दिशे स्वाहा ॥ ८ ॥ १०

आयुषे स्वाहा, प्राणाय स्वाहा, ऽपानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहो,
दानाय स्वाहा, चक्षुषे स्वाहा, श्रोत्राय स्वाहा, मनसे स्वाहा, वाचे स्वाहा ॥ ९ ॥ ११

पृथिव्यै स्वाहा, ऽन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा,
नक्षत्रेभ्यः स्वाहा, ऽद्भ्यः स्वाहौ, षधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा, परिप्लवेभ्यः
स्वाहा, सरीसृपेभ्यः स्वाहा, चराचरेभ्यः स्वाहा ॥ १० ॥ १२

अꣳसवे स्वाहा, वसवे स्वाहा, विभ्वे स्वाहा, विवस्वते स्वाहा, गणश्रिये स्वाहा, गण-
पतये स्वाहा, ऽभिषाहे स्वाहा, ऽभिभ्वे स्वाहा, ऽधिपतये स्वाहा, शूषाय स्वाहा, सꣳसर्पाय
स्वाहा, चन्द्राय स्वाहा, ज्योतिषे स्वाहा, मलिम्लुचाय स्वाहा ॥ ११ ॥ १३

---

[ ७ ] तै. ७,१,१५; ७,३,१९—२० । काठ. ५,१,५—६;५,३,९—१०। वा. २२,६,२४,२७-२९;१०,५;३९,१—२; काण्व. २४,६,३४,३७-४१,४३;११,१२;३९,१। [ अग्नये स्वाहा । अथर्व. १९,४३,१। सोमाय स्वाहा। अथर्व. १९,४३,५ । इन्द्राय स्वाहा । अथर्व. १९,४३,६ । पृथिव्यै स्वाहा । अथर्व. ५,९,२;६ । अन्तरिक्षाय स्वाहा । अथर्व. ५,९,३—४ । दिवे स्वाहा । अथर्व. ५,९,१;५ । चन्द्रमसे ( चन्द्राय ) स्वाहा । अथर्व. १९,४३,४ । सूर्याय स्वाहा । अथर्व. १९,४३,३ ]

[ ८ ] तै. ७,१,१५ । काठ. ५,१,६ । वा. २२,२४ । काण्व. २४,३४ ।

[ ९ ] तै. ७,१,१९ । काठ. ५,४,१० । वा. २२,२३;२३,१८;३९,३ । काण्व. २४,३३;२५,२०;३९,२ ।

[ १० ] तै. ७,१,१७ । वा. २२,२९ । काण्व. २४,४१ । [ पृथिव्यै स्वाहा । अथर्व. ५,९,२;६ । अन्तरिक्षाय स्वाहा; दिवे स्वाहा । अथर्व. ५,९,३—४ । सूर्याय स्वाहा । अथर्व. १९,४३,३ । चन्द्रमसे (चन्द्राय०) स्वाहा । अथर्व. १९,४३,४ ]

[ ११ ] वा. २२,२८-३०;३९,२ । काण्व. २४,३९,४१,४३;३९,१ । [ चन्द्राय स्वाहा । अथर्व. १९,४३,४ ]

धर्णसाय स्वाहा, द्रविणाय स्वाहा, प्रसवाय स्वाहो,—पयामाय स्वाहा, सिन्धवे
स्वाहा, समुद्राय स्वाहा, काटाय स्वाहा, ऽर्णवाय स्वाहा, सरस्वत्यै स्वाहा, विश्वव्यचसे
स्वाहा, सुभूताय स्वाहा, ऽन्तरिक्षाय स्वाहा ॥ १२ ॥ १४

मधवे स्वाहा, माधवाय स्वाहा, शुक्राय स्वाहा, शुचये स्वाहा, नभसे स्वाहा,
नभस्याय स्वाहे,—षाय स्वाहो,—र्जाय स्वाहा, सहसे स्वाहा, सहस्याय स्वाहा, तपसे
स्वाहा, तपस्याय स्वाहा, सꣳसर्पोऽस्यꣳहस्पत्याय स्वाहा ॥ १३ ॥ १५

सवयसे स्वाहा, ऽभिवयसे स्वाहो,—र्ध्ववयसे स्वाहा, बृहद्वयसे स्वाहा, सहीयसे स्वाहा,
सहमानाय स्वाहा, सासहये स्वाहा, सहस्वते स्वाहा, ऽभीषाहे स्वाहा, ऽभि२भ्वे स्वाहा,
ऽभिमातिषाहे स्वाहा, ऽभिमातिघ्ने स्वाहा ॥ १४ ॥ १६

एकस्मै स्वाहा, द्वाभ्याꣳ स्वाहैं,—कान्नशताय स्वाहा, शताय स्वाहैं,—कशताय स्वाहा,
व्युष्टयै स्वाहा, स्वर्गाय स्वाहा ॥ १५ ॥ १७

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १८

उपयामगृहीतोऽसि, प्रजापतये त्वा जुष्टं गृह्णाम्ये,—ष ते योनिः, सूर्यस्ते महिमा ॥
॥ १६ ॥ १९

यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ २०

उपयामगृहीतोऽसि, प्रजापतये त्वा जुष्टं गृह्णाम्ये,—ष ते योनि,—श्चन्द्रमास्ते महिमा ॥
॥ १७ ॥ २१

---

[ १२ ] तै. ७,४,१३ । वा. २२,२५ । काण्व. २४,३५ ।
[ १३ ] वा. २२,३१ । काण्व. २४,४४ ।
[ १५ ] वा. २२,३४ । काण्व. २४,४७ ।
[ १६ ] तै. ७,५,१६ । काठ.५,५,११ । वा. २३,१—२; १३,४;२५,१० । काण्व. २५,१-२;१४,४;२७,१४ । मा. श्रौ. ९,२,३ । [ हिरण्यगर्भः सम०...विधेम । ऋ. १०,१२१,१; अथर्व. ४,२,७; ( ११,५,१ ) ]
[ १७ ] तै. ७,५,१६ । काठ. ५,५,१३ । वा. २३,३—४;२५,११ । काण्व. २५,३—४;२७,१५ । [ यः प्राणतो०... विधेम । ऋ. १०,१२१,३; अथर्व. ४,२,१-२ ]

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ २२
यद्वातोऽपो अगनीगन् प्रियामिन्द्रस्य तन्वम् ।
एतं स्तोतरनेन पथा पुनरश्वमावर्तयासि नः ॥ १८ ॥ २३
वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा, रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसा, ऽऽदित्यास्त्वाञ्जन्तु
जागतेन छन्दसा, भूर्भुवः ३स्व,—र्लाजी३ शाची३ यव्ये गव्य, एतदन्नमत्त देवा,
एतदन्नमद्धि प्रजापते ॥ २४
कः स्विदेकाकी चरति क उ स्विज्जायते पुनः।
किं स्विद्धिमस्य भेषजं किमवावपनं महत् ॥ २५
सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ २६
का स्विदासीत् पूर्वचित्तिः किं स्विदासीद् बृहद्वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥ २७
द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥ १९ ॥ २८
प्राणाय स्वाहा, ऽपानाय स्वाहा, व्यानाय स्वाहा ॥ २९
अम्बेम्बिके अम्बालिके न मा नयति कश्चन ।
संसस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ३०
गणानां त्वा गणपतिं हवामहे, प्रियाणां त्वा प्रियपतिं हवामहे, निधीनां त्वा निधि-
पतिं हवामहे वसो मम,—ऽऽहमजानि गर्भधम,—त्वमजासि गर्भधम् ॥ ३१
तौ सह चतुरः पदः संप्रसारयावः स्वर्गे लोके प्रोर्णुवाताम्, वृषा वामश्वो रेतोधा रेतो दधातु
॥ २० ॥ ३२
गायत्री त्रिष्टुब् जगत्यनुष्टुप्पङ्क्त्या सह ।
बृह३त्युष्णिहा ककुब् देवानां पत्नयो विशः सूचीभिः शमयन्तु त्वा ॥ ३३

---

[ १८ ] तै. ७,४,२० । वा. २३,५,७ । काण्व. २५,५,७ । मा. श्रौ. ९,२,४;३ । [ युञ्जन्ति ब्रध्नमरुषं०...दिवि । ऋ. १,६,१; साम. १४६८; अथर्व. २०,२६,४;४७,१०;६९,९; तै. सं. ७,४,२०,१ ]

[ १९ ] तै. ७,४,२०;१८ । काठ. ५,४,९;७ । वा. २३,८—१२ । काण्व. २५,८—१२ । [ कः स्विदेकाकी०... महत् । आ. सू. १०,९ । सूर्य एकाकी० ...महत् । आ. सू. १०,९, ]

[ २० ] तै. ७,४,१९ । काठ. ५,४,८ । वा. २३,१८—२० । काण्व. २५,२०-२२ । मा. श्रौ. ९,२,४ । [ गणानां त्वा गणपतिं हवामहे । ऋ. २,२३,१ ]

[ २१ ] तै. ५,२,११ । काठ. ५,१०,५ । वा. २३,३३—३८;१०,३२;१९,६। काण्व. २५,३५—४०;११,४५;२१,५।

द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा ।
विछन्दा या च सछन्दाः सूचीभिः शमयन्तु त्वा ॥ ३४
रजताः सीसा हरिणीर्युजो युञ्जन्तु कर्मभिः ।
अश्वस्य वाजिनस्त्वचि स्यूमाः कृण्वन्तु शाम्यन्तीः ॥ ३५
महानाम्नी रेवत्यो दैव्या आशाः प्रस्वरीः ।
मेध्या विद्युतो वाचः सूचीभिः शमयन्तु त्वा ॥ ३६
योपास्ते पत्न्यो लोम विचिन्वन्तु यथायथम् ।
सुपत्नीः पत्नयो वाजिन् प्रजया भुक्षीमहि ॥ ३७
कुविदङ्ग ॥ २१ ॥ ३८

[१८१९]

॥ इत्युपरिकाण्डे द्वादशः प्रपाठकः ॥ १२ ॥

---

अथ त्रयोदशः प्रपाठकः ।

ऊर्ध्वामेनामुच् श्रापय गिरौ भारꣳ हरन्निव ।
अथास्या मध्यमेधताꣳ शीते वाते पुनन्निव ॥ १
यासकौ शकुन्तिकाहलगिति वञ्चति । आहतं पसो निचल्चलीति ॥ २
माता च ते पिता च तेऽग्रꣳ वृक्षस्य रोहतः । प्रतिलामीति ते पिता ॥ ३
यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति ॥ ४
दधिक्राव्णो अकारिषम् ॥ १ ॥ ५

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः, कृष्णग्रीव आग्नेयो ललाटे पुरस्तात्, सारस्वती मेष्य-
धस्ताद्धन्वोः, श्यामः पौष्णो नाभ्या,—माश्विना अधोरामौ बाह्वो,—स्त्वाष्ट्रौ लोमसक्थौ
सक्थ्योः, सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयो,—र्वायव्यः श्वेतः पुच्छा, इन्द्राय स्वपस्याय
वेहद्, वैष्णवो वामनः ॥ २ ॥ ६

---

[ कुविदङ्ग यवमन्तो० । ऋ. १०,१३१,२; अथर्व. २०,१२५,२ ]

[ १ ] तै. ७,४,१९ । वा. २३,२२—२७,३०—३२ । काण्व. २५,२४-२९,३२—३४ । [ दधिक्राव्णो अकारिषम् । ऋ. ४,३९,६; साम. ३५८; अथर्व. २०.१३७,३ । तै. सं. १,५,११,४,७,४,१९,४; ताण्ड्य ब्रा. १,६,१७ ]

[ २ ] तै. ५,५,२२—२३ । काठ. ५,८,२ । वा. २४,१ । काण्व. २६,१—३ । मा. श्रौ. ९,२,४ ।

बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणा, रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्याः,
शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः, शितिरन्ध्रोऽन्यतः शितिरन्ध्रः
समन्तशितिरन्ध्रस्ते सावित्राः, पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥ ३ ॥ ७
शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः, श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये,
कर्णा यामा, अवलिप्ता रौद्रा, नभोरूपाः पार्जन्याः ॥ ४ ॥ ८
पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः, फल्गूर्लोहितोर्णी बलक्षी ताः सारस्वत्यः,
प्लीहाकर्णः शुण्ठाकर्णोऽधिरूढाकर्णस्ते त्वाष्ट्राः, कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः,
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥ ५ ॥ ९
शिल्पा वैश्वदेवी, रोहिणीस्त्र्यवयो वाचे, ऽविज्ञाता अदित्यै, सरूपा धात्रे, वत्सतर्यो
देवानां पत्नीभ्यः ॥ ६ ॥ १०
कृष्णग्रीवा आग्नेयाः, शितिभ्रवो वसूनां, रोहिता रुद्राणां, श्वेता अवरोकिण
आदित्यानां, नभोरूपाः पार्जन्याः ॥ ७ ॥ ११
उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्या, उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवाः,
शुकरूपा वाजिनाः कल्माषा आग्निमारुताः, श्यामाः पौष्णाः ॥ ८ ॥ १२
एता ऐन्द्राग्ना, द्विरूपा अग्नीषोमीया, वामना अनड्वाह आग्नावैष्णवा, अन्यतएनीर्मैत्री,
—र्वशा मैत्रावरुण्यः ॥ ९ ॥ १३
कृष्णग्रीवा आग्नेया, बभ्रवः सौम्याः, श्वेता वायव्या, अविज्ञाता अदित्यै,
सरूपा धात्रे, वत्सतर्यो देवानां पत्नीभ्यः ॥ १० ॥ १४
कृष्णा भौमा, धूम्रा आन्तरिक्षा, बृहन्तो दैवाः, शबला वैद्युताः, सिध्मास्तारकाः ॥
॥ ११ ॥ १५

---

[ ३ ] तै. ५,६,११—१३ । काठ. ५,९,१—३ । वा. २४,२ । काण्व. २६,३—४ । मा. श्रौ. ९,२,४ ।
[ ४ ] तै. ५,६,१३;११;१५ । काठ. ५,९,३ । वा. २४,३ । काण्व. २६,५-६ ।
[ ५ ] तै. ५,६,१२;१६ । काठ. ५,९,२,६ । वा. २४,४ । काण्व. २६,६-८ ।
[ ६ ] तै. ५,६,१३ । वा. २४,५ । काण्व. २६,९ ।
[ ७ ] वा. २४,६ । काण्व. २६,१० ।
[ ८ ] तै. ५,६,१४;३,१३,३ । वा. २४,७ । काण्व. २६,११ ।
[ ९ ] तै. ५,६,११-२३ । वा. २४,८ । काण्व. २६,१२ ।
[ १० ] तै. ५,६,११—२३ । वा. २४,९ । काण्व. २६,१३ ।
[ ११ ] तै. ५,६,११—२३ । वा. २४,१० । काण्व. २६, १४ ।

कृष्णग्रीवा आग्नेया, बभ्रवः सौम्या, उपध्वस्ताः सावित्रा, वत्सतर्यः सारस्वत्यः,
श्यामाः पौष्णाः, पृश्नयो मारुताः, पिशङ्गा वैश्वदेवा, वशा द्यावापृथिवीयाः ॥१२॥ १६

कृष्णग्रीवा आग्नेया, बभ्रवः सौम्या, उपध्वस्ताः सावित्रा, वत्सतर्यः सारस्वत्यः,
श्यामाः पौष्णा, एता ऐन्द्राग्नाः, पृश्नयो मारुताः, कृष्णा वारुणाः, कायास्तूपराः ॥
॥ १३ ॥ १७

अग्नयेऽनीकवते प्रथमजानालभते, मरुद्भ्यः सांतपनेभ्यः सवात्यान्, मरुद्भ्यो गृहमेधिभ्यो
वष्किहान्, मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्, मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥ १४ ॥ १८

कृष्णग्रीवा आग्नेया, बभ्रवः सौम्या, उपध्वस्ताः सावित्रा, वत्सतर्यः सारस्वत्यः,
श्यामाः पौष्णा, एता ऐन्द्राग्नाः, प्राशृङ्गा ऐन्द्रा, बहुरूपा वैश्वकर्मणाः ॥ १५ ॥ १९

कृष्णग्रीवा आग्नेया, बभ्रवः सौम्या, उपध्वस्ताः सावित्रा, वत्सतर्यः सारस्वत्यः,
श्यामाः पौष्णाः, श्वेता वायव्याः, प्राशृङ्गा ऐन्द्राः, सौर्याः श्वेताः ॥ १६ ॥ २०

त्र्यवयो गायत्र्यै, पञ्चावयस्त्रिष्टुभे, दित्यवाहो जगत्यै, त्रिवत्सा अनुष्टुभे, तुर्यवाह
उष्णिहे ॥ १७ ॥ २१

पष्ठवाहो विराज, उक्षाणो बृहत्या, ऋषभाः ककुभे, धेनवो जगत्या, अनड्वाहः
पङ्क्त्यै ॥ १८ ॥ २२

धूम्रा वसन्ताय, श्वेता ग्रीष्माय, कृष्णा वर्षाभ्यः ॥ १९ ॥ २३

अरुणाः शरदे, पृषन्तो हेमन्ताय, पिशङ्गाः शिशिराय ॥ २० ॥ २४

[ १८४३ ]

॥ इत्युपरिकाण्डे त्रयोदशः प्रपाठकः ॥ १३ ॥

---

[ १२ ] तै. ५,६,११—२३ । वा. २४,१४ । काण्व. २६,१८ ।
[ १३ ] तै. ५,६,११—२३ । वा. २४,१५ । काण्व. २६,१९ ।
[ १४ ] तै. ५,६,११-२३ । वा. २४,१६ काण्व. २६,२० ।
[ १५ ] तै. ५,६,११—२३ । वा. २४,१७ । काण्व. २६,२१ ।
[ १६ ] तै. ५,६,११-२३ । वा. २४,१४ । काण्व. २६,१८ ।
[ १७ ] तै. ५,६,११—२३ । वा. २४,१२ । काण्व. २६,१६ ।
[ १८ ] वा. २४,१३ । काण्व. २६,१७ ।
[ १९ ] वा. २४,११ । काण्व. २६,१५ ।
[ २० ] वा. २४,११ । काण्व. २६,१५ ।

*

अथ चतुर्दशः प्रपाठकः ।

वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कान्, वर्षाभ्यस्तित्तिरान्, शरदे वर्तिका, १
हेमन्ताय ककरान् ॥ १ ॥

समुद्राय शिशुमारानालभते, पर्जन्याय मण्डूका,—नद्भ्यो मत्स्यान्, मित्राय पुलीकयान्, २
वरुणाय नाक्रान् ॥ २ ॥

सोमाय हꣳसानालभते, वायवे बलाका, इन्द्राग्निभ्यां क्रुञ्चान्, मित्राय मद्गून्, ३
वरुणाय चक्रवाकान् ॥ ३ ॥

अग्नये कुटरूनालभते, वनस्पतया उलूका,—नग्नीषोमाभ्यां चाषा,—नश्विभ्यां मयूरान्, ४
मित्रावरुणाभ्यां कपोतान् ॥ ४ ॥

सोमाय लबानालभते, त्वष्ट्रे कौलीकान् गोषादी,—र्देवानां पत्नीभ्यः पुलीका, अग्नये ५
गृहपतये पारुष्णान् ॥ ५ ॥

अह्ने पारावतानालभते, रात्र्यै सीचापू,—रह्नः संधिभ्यां जतूः, संवत्सराय महतः सुप- ६
र्णान्, मासेभ्यो दात्यौहान् ॥ ६ ॥

भूम्या आखूनालभते, ऽन्तरिक्षाय पाङ्क्त्रान्, दिवे कशान्, दिग्भ्यो नकुलान्, ७
वभ्रुकानवान्तरदिशाभ्यः ॥ ७ ॥

प्रजापतये पुरुषान् हस्तिना आलभते, वाचे प्लुषीꣳ,—श्चक्षुषे मशकान्, श्रोत्राय भृङ्गाः ८
॥ ८ ॥

वसुभ्यो ऋष्यानालभते, रुद्रेभ्यो रुरू,—नादित्येभ्यो न्यङ्कून्, विश्वेभ्यो देवेभ्यः पृषता,— ९
न्त्साध्येभ्यः कुलङ्गान् ॥ ९ ॥

---

[ १ ] तै. ५,५,११-२४ । काठ. ५,१०,४ । वा. २४,२० । काण्व. २६,२४ । मा. श्रौ. ९,२,४ ।
[ २ ] वा. २४,२१ । काण्व. २६,२५ ।
[ ३ ] वा. २४,२२ । काण्व. २६,२६ ।
[ ४ ] वा. २४,२३ । काण्व. २६,२७ ।
[ ५ ] वा. २४,२४ । काण्व. २६,२८ ।
[ ६ ] वा. २४,२५ । काण्व. २६,२९ ।
[ ७ ] वा. २४,२६ । काण्व. २६,३० ।
[ ८ ] वा. २४,२९ । काण्व. २६,३३ ।
[ ९ ] वा. २४,२७ । काण्व. २६,३१ ।

ईशानाय परस्वत आलभते, मित्राय गौरान्, वरुणाय महिषान्, बृहस्पतये गवयां॑स्,
—स्त्वष्ट्र उष्ट्रान् ॥ १० ॥ १०

प्रजापतये च वायवे च गोमृगो, वरुणायारण्यो मेषो, यमाय कृष्णो, मनुराजाय
मर्कटः, शार्दूलाय रोहिद्, वृषभाय गवयी, क्षिप्रश्येनाय वर्तिका, नीलङ्गवे क्रिमिः,
समुद्राय शिशुमारो, हिमवते हस्ती ॥ ११ ॥ ११

मयुः प्राजापत्य, उलो हलिक्ष्णो वृषदꣳशस्ते धात्रे, दिशां कङ्को, धुङ्क्षाग्नेयी,
कुलविङ्कः पुष्करसादो लोहिताहिस्ते त्वाष्ट्रा, वाचे क्रौञ्चः ॥ १२ ॥ १२

सोमाय कुलङ्ग, आर३ण्योऽजो नकुलः शका ते पौष्णाः, क्रोष्टा मायो—रिन्द्रस्य
गौरमृगः, पिद्वो न्यङ्कुः ककुटस्तेऽनुमत्यै, प्रतिश्रुत्कायै चक्रवाकः ॥ १३ ॥ १३

सौरी बलाका, शार्गः सृजयः शयाण्डकस्ते मैत्राः, श्वाविद्भौमी, सरस्वत्यै शारिः पुरु-
षवाक्, शार्दूलो वृकः पृदाकुस्ते मन्यवे, सरस्वते शुकः पुरुषवाक् ॥ १४ ॥ १४

सुपर्णः पार्जन्य, आतिर्वाहसो दर्विदा ते वायवे, कृकवाकुः सावित्रो, हꣳसो वातस्य,
प्लवो मद्गुर्मत्स्यस्ते नदीपतये, द्यावापृथिवीयः कूर्मः ॥ १५ ॥ १५

पुरुषमृगश्चन्द्रमसो, गोधा कालका दार्वाघाटस्ते वनस्पतीनां, बृहस्पतये वाचस्पतये पैङ्ग-
राजो, ऽलज आन्तरिक्षो, नाक्रो मकरः पुलीकयस्तेऽकूपारस्य, ह्रियै शल्यकः ॥ १६ ॥ १६

एण्यह्नो, मण्डूको मूषिका तित्तिरस्ते सर्पाणां, लोपाश आश्विनः, कृष्णो रात्र्या,
ऋक्षो जतूः शुशुलूका त इतरजनानां, जहका वैष्णवी ॥ १७ ॥ १७

अन्यवापोऽर्धमासाना—मृश्यो मयूरः सुपर्णस्ते गन्धर्वाणा—मपामुद्रः, कश्यपो मासां॑स्,
रोहित्कुण्डृणाची गोलत्तिका ता अप्सरसां, मृत्यवेऽसितः ॥ १८ ॥ १८

---

[ १० ] वा. २४,२८ । काण्व. २६,३२ ।

[ ११ ] तै. ५,५,११ । काठ. ५,७,१ । वा. २४,३० । काण्व. २६,३४ ।

[ १२ ] तै. ५,५,१२ । काठ. ५,७,२ । वा. २४,३१ । काण्व. २६,३५ ।

[ १३ ] तै. ५,५,११ । काठ. ५,७,७ । वा. २४,३२। काण्व. २६,३६ ।

[ १४ ] काठ. ५,७,४—६ । वा. २४,३३ । काण्व. २६,३७ ।

[ १५ ] काठ. ५,७,३ । वा. २४,३४ । काण्व. २६,३८ ।

[ १६ ] काठ. ५,७,५ । वा. २४,३५ । काण्व. २६,३९ ।

[ १७ ] काठ. ५,७,५ । वा. २४,३६। काण्व. २६,४० ।

[ १८ ] काठ. ५,७,६ । वा. २४,३७ । काण्व. २६,४१ ।

वर्षाहूर्ऋतूना,—माखुः कशो मान्थालवस्ते पितॄणां॑, वसुभ्यः कपिञ्जलो, बलायाजगरः,
कपोता उलूकः शशस्ते निर्ऋत्यै, रात्र्यै कृष्णः ॥ १९ ॥ १९

चित्र आदित्याना,—मुष्ट्रो घृणावान् वार्ध्रानसस्ते मत्या, आरणाय सृमरो, रुरू रौद्रः,
कुवयः कुटरुर्दात्यौहस्ते वाजिनां, कामाय पिकः ॥ २० ॥ २०

खड्गो वैश्वदेव,—स्तरक्षुः श्वा कृष्णः कर्णो गर्दभस्ते रक्षसा,—मिन्द्राय सूकरः, सिंहो
मारुतः, कृकलासः पिप्पका शकुनिस्ते शरव्यायै, विश्वेभ्यो देवेभ्यः पृषतः ॥ २१ ॥ २१
[ १८६४ ]

॥ इत्युपरिकाण्डे चतुर्दशः प्रपाठकः ॥ १४ ॥

---

अथ पञ्चदशः प्रपाठकः ।

शादं दद्भि,—रवकान्दन्तमूलै,—र्मृदं बस्वै,—स्तेगान् दंष्ट्राभ्या,—मवक्रन्देन तालु, वाजं॑
हनुभ्यां॑, सरस्वत्या अग्रजिह्वं, जिह्वाया उत्साद,—मुप आस्येन, वृषणा आण्डाभ्या,-
—मादित्यान् श्मश्रुभिः, पन्थां भ्रूभ्यां, द्यावापृथिवी वर्तोभ्यां॑ विद्युतं कनीनिकाभ्यां,
कर्णाभ्यां॑ श्रोत्रे, श्रोत्राभ्यां कर्णौ, अवार्याणि पक्ष्माणि पार्या इक्षवः, पार्याणि पक्ष्माण्यवार्या
इक्षवः ॥ १ ॥ १

वातं प्राणेना,—ऽपानेन नासिका,—मुपयाममधरेणौष्ठेन, सदुत्तरेण, शुक्लाय स्वाहा,
कृष्णाय स्वाहा, स्तनयित्नुं निर्बाधेन, मूर्धानं निवेष्येणा,—ऽशनिं मस्तिष्केण, विद्युतं
कनीनिकाभ्यां, प्रकाशेनान्तर,—मनुकाशेन बाह्यं, तेदनीमधरकण्ठेनापः शुष्ककण्ठेन, चित्तं
मन्याभि,—रदितिं॑ शीर्ष्णा, निर्ऋतिं निर्जल्येन शीर्ष्णा, प्राणान्त्संक्रोशै, रेष्माणं॑ स्तूपेन॥
॥ २ ॥ २

मशकान् केशै,—रिन्द्रं॑ स्वपसा, वहेन बृहस्पतिं॑, शकुनिसादेन कूर्मान्, शफैराक्रमणं॑,
स्थूराभ्यां बलं, कुष्ठाभ्यां जवं, जङ्घाभिरध्वानं, बाहुभ्यां जाम्बिलेनारण्यमग्निमुतीरुग्भ्यां॑,
रुद्रं॑ रौराभ्यां, पूषणं दोर्भ्यां,—मश्विना अंसाभ्याम् ॥ ३ ॥ ३

---

[ १९ ] काठ. ५,७—८ । वा. २४,३८ । काण्व. २६,४२ ।
[ २० ] काठ. ५,७,९ । वा. २४,३९ । काण्व. २६,४३ ।
[ २१ ] काठ. ५,७ । वा. २४,४० । काण्व. २६,४४ ।
[ १ ] तै. ५,७,११-१२ । काठ. ५,१३,१-२ । वा. २५,१ । काण्व. २७,१-२ । मा. श्रौ. ९,२,५ ।
[ २ ] तै. ५,७,१२-१४ । काठ. ५,१३,२ । वा. २५,२ । काण्व. २७,३-४ ।
[ ३ ] तै. ५,७,११ । काठ. ५,१३,३ । वा. २५,३ । काण्व. २७,५-६ ।

अ॒ग्नेः प॑क्ष॒तिर्वा॒योर्निप॑क्षति॒ः, सोम॑स्य तृ॒तीया॒, ऽपां च॑तु॒र्थ्यो॑षधीनां पञ्च॒म्यं॑, ग्री-
षो॒मयोः ष॒ष्ठी, म॒रुतां॑ सप्त॒मी, बृह॒स्पते॑रष्ट॒मी, पू॒ष्णो न॑व॒मी, त्वष्टु॑र्दश॒मी, न्द्र॒स्यैकादु॒शी,
वरु॑णस्य द्वाद॒शी, य॒मस्य॑ त्रयोद॒शी ॥ ४ ॥ ४

इ॒न्द्रा॒ग्न्योः प॑क्ष॒तिः, सर॑स्वत्या॒ निप॑क्ष॒ति, रिन्द्र॒स्य तृ॒तीया॒, बृह॒स्पते॑श्चतु॒र्थी, निर्ऋ॑त्याः
प॒ञ्चमी, न्द्रा॒ण्याः ष॒ष्ठी, स॒र्पाणा॑ सप्त॒मी, विष्णो॑रष्ट॒म्यु, र्य॒म्णो न॑व॒मी, धा॒तुर्द॑श॒मी,
न्द्र॒स्यैकाद॒शी, वरु॑णस्य द्वाद॒शी, य॒म्यास्त्र॑योद॒शी, द्यावा॑पृथि॒व्योर्दक्षि॑णं पा॒र्श्वं॑, विश्वे॑षां
दे॒वाना॒मुत्त॑रम् ॥ ५ ॥ ५

म॒रुता॑ स्क॒न्धा, विश्वे॑षां दे॒वानां॑ प्रथ॒मा की॒कसा, रु॒द्राणां॑ द्वि॒तीया, ऽऽदि॒त्यानां॑ तृ॒तीया,
वा॒योः पु॒च्छ, म॒ग्नीषो॒मयो॒र्भास॒दौ, क्रुञ्चौ॑ श्रोणि॒भ्यां, मि॒त्रावरु॑णा ऊ॒रुभ्या॒, मिन्द्रा॒वरु॑णा
अ॒ल्गाभ्या॒, मा॒क्रम॒णं कु॒ष्ठाभ्या॒, म॒त्सरा॑भिः क॒पिञ्ज॑लान् ॥ ६ ॥ ६

इन्द्र॒स्य क्रो॒डो, ऽदि॒त्याः पा॑जस्य॒ं, दि॒शां ज॒त्रवो, ऽदि॒त्या भ॒सं, जी॒मूता॑न् हृदयौ-
प॒शाभ्या॒, म॒न्तरि॑क्षं पुली॒तता, नभ॑ उद॒र्येण, व॒ल्मीका॑न् क्लो॒म्ना, ग्लौभि॒र्गुल्मा॑, श्चक्र-
वा॒कौ मत॑स्नाभ्यां, दिवं॑ वृ॒क्काभ्यां॑, हि॒राभिः स्रव॑न्ती, गिरी॑न् प्ला॒शिभ्या॒, मु॒पला॑न्
प्ली॒ह्ना, ह्र॒दान् कु॒क्षिभ्यां, स॒मु॒द्रमु॒दरे॑ण, वैश्वान॒रं भस्म॑ना ॥ ७ ॥ ७

विधृ॑तिं ना॒भ्या, घृ॒तं रसे॑ना॒, ऽपो यू॒ष्णा, मरी॑ची॒र्विप्रु॒षा, नी॑हा॒रमू॒ष्मणा॑, शीनं॑
व॒सया, ह्रादु॑नी॒र्दूषी॑काभिः, प्रुष्वा॒ अश्रु॑भि, रक्षा॒ रक्षां॑सि, चि॒त्राण्य॒ङ्गै, र्नक्ष॑त्राणि रू॒पैः,
पृ॒थि॒वीं त्व॒चा, जु॒म्ब॒काय॒ स्वाहा॑ ॥ ८ ॥ ८

पू॒षणं॑ वनि॒ष्ठुना॑न्धाहीन्त्स्थू॒रगु॒दया॑, स॒र्पान् गुदा॑भि, र्विहु॑त आ॒न्त्रै, र॒पं आ॒स्येन॒, वृष॑णा
आ॒ण्डाभ्या॑, शे॒पो वा॒जिने॑न, प्र॒जां रेत॑सा, चाषा॑न् पि॒त्तेन॑, प्रद॒रान् पा॒युना, कू॒श्मा॑ञ्
छ॒कपि॒ण्डैः ॥ ९ ॥ ९

---

[ ४ ] तै. ५,७,२१ । वा. २५,४ । काण्व. २७,७ ।
[ ५ ] तै. ५,७,२२ । वा. २५,५ । काण्व. २७,८ ।
[ ६ ] तै ५,७,१५ । काठ. ५,१३,५ । वा. २५,६ । काण्व. २७,९ ।
[ ७ ] तै. ५,७,१६ । काठ. ५,१३,६ । वा. २५,८ । काण्व. २७,११—१२ ।
[ ८ ] तै. ५,७,२० । वा. २५,९ । काण्व. २७,१३ ।
[ ९ ] तै. ५,७,१७ । काठ. ५,१३,७ । वा. २५,७ । काण्व. २७,१० ।

अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तिकाय पुरोडाशमष्टाकपालं निर्वपती,—न्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय पुरोडाशमेकादशकपालꣳ, विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यः पुरोडाशं द्वादशकपालं, मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्याꣳ वैराजाभ्याꣳ शारदाभ्यां पयस्यां, बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुꣳ, सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय पुरोडाशं द्वादशकपाल,—मनुमत्यै चरुꣳ, वैश्वानरं द्वादशकपाल,—मदित्यै विष्णुपत्न्यै चरुं, कायमेककपालम् ॥ १० ॥ १०

अग्नयेऽꣳहोमुचे पुरोडाशमष्टाकपालं निर्वपती,—न्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं, मित्रावरुणाभ्यामागोमुग्भ्यां पयस्याꣳ, वायुसवितृभ्यामागोमुग्भ्यां पयो, ऽश्विभ्यामागोमुग्भ्यां धानां, मरुद्भ्य एनोमुग्भ्यः पुरोडाशꣳ सप्तकपालꣳ, विश्वेभ्यो देवेभ्य एनोमुग्भ्यः पुरोडाशं द्वादशकपाल,—मनुमत्यै चरुꣳ वैश्वानरं द्वादशकपालं, द्यावापृथिवीभ्यामꣳहोमुग्भ्यां पुरोडाशं द्विकपालम् ॥ ११ ॥ ११

[ १८७५ ]

॥ इत्युपरिकाण्डे पञ्चदशः प्रपाठकः ॥ १५ ॥

---

अथ षोडशः प्रपाठकः ।

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिक्शन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥ १

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूपा इन्द्रापूष्णोः प्रियमप्येतु पाथः ॥ २

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियꣳ यत् पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ॥ ३

---

[ १० ] तै. ७,५,१४ । वा. २९,६० । काण्व. ३१,४९ ।

[ ११ ] तै. ७,५,२२ ।

[ १ ] तै. ४,६,८—९ । काठ. ५,६,४—५ । वा. २५,२४—३९ । काण्व. २७,२८—४२ ।

[ मानो मित्रो०...वीर्याणि । ऋ. १,१६२,१; तै. सं. ४,६,८,१; नि. ९,३ । यन्निर्णिजा रेक्णसा०... पाथः । ऋ. १,१६२,२; तै. सं. ४,६,८,१ । एष छागः०... ( चछा० ) ... जिन्वति । ऋ. १,१६२,३; तै सं. ४,६,८,१ ]

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ ४
उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनꣳ विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ५
होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम् ॥ ६
यूपव्रस्का उत ये यूपवाहाश्चषालꣳ ये अश्वयूपाय तक्षति ।
ये चार्वते पचनꣳ संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ७
यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमा३स्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥ ८
यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच् शमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु ॥ ९
यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ १०
यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।
मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ११
ये वाजिनं परिपश्यन्ति पक्वꣳ य ईमाहुः सुरभिर्निर्हरेति ।
ये चार्वतो माꣳसभिक्षामुपासते उतो तेषामभिगूर्तिर्न इन्वतु ॥ १२
यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परिभूषन्त्यश्वम् ॥ १३

---

[ यद्धविष्यमृतुशो० । ऋ. १,१६२,४; तै. सं. ४,६,८,२ । उप प्रागात् सुमन्मे० । ऋ. १,१६२,७; तै. सं. ४,६,८,३; नि. ६,२२ । होताध्वर्युरावया० । ऋ. १,१६२,५; तै. सं. ४,६,८,२ । यूपव्रस्का उतये० । ऋ. १,१६२,६; तै. सं. ४,६,८,२ । यद्वाजिनो दाम० । ऋ. १,१६२,८; तै. सं. ४,६,८,३ । यदूवध्यमुदरस्या० । ऋ. १,१६२,१०; तै. सं. ४,६,८,४ । यदश्वस्य क्रविषो० । ऋ. १,१६२,९; तै. सं. ४,६,८,३ । यत्ते गात्रादग्निना० । ऋ. १,१६२,११; तै. सं. ४,६,८,४ । ये वाजिनं परि० । ऋ. १,१६२,१२; तै. सं. ४,६,९,१ । यन्नीक्षणं माꣳस्पचन्या० । ऋ. १,१६२,१३; तै. सं. ४,६,९,१ ]

यदश्वाय वास उपस्तृणन्त्यधिवासꣳ या हिरण्यान्यस्मै ।
संदानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति ॥ १४
निक्रमणं निषदनं विवर्तनꣳ यच्च पड्वीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ १५
मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः ।
इष्टꣳ वीतमभिगूर्तꣳ वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ १ ॥ १६

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः ।
वाजी वहन्वाजिनं जातवेदो देवानाꣳ वक्षि प्रियमा सधस्थम् ॥ १७
तनूनपात् सं पथो देवयानान् प्रजानन्वाज्यप्येतु देवान् ।
अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधां देवैर्यजमानाय धेहि ॥ १८
ईड्यश्चासि वन्द्यश्चासि वाजिन्नाशुश्चासि मेध्यश्चासि सप्ते ।
अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतꣳ वह्निꣳ वहतु जातवेदाः ॥ १९
स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् ।
देवेभिरक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥ २०
एता उ वः सुभगा विश्ववारा वि पक्षोभिः श्रयमाणा उदातैः ।
ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥ २१
अन्तरा मित्रावरुणा चरन्ती मुखꣳ यज्ञानामभि सꣳविदाने ।
उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योना इह सादयामि ॥ २२
प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥ २३
आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत् ।
इडोपहूता वसुभिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥ २४

---

[ यदश्वाय वास०। ऋ. १,१६२,१६; तै. सं ४,६,९,२ । निक्रमणं निषदनं०। ऋ. १,१६२,१४; तै. सं ४,६,९,१ । मा त्वाग्निर्ध(ध्वं०) नयी० । ऋ. १,१६२,१५; तै. सं. ४,६,९,२ ]

[ २ ] ५,१,११ । काठ. ५,६,२ । वा. २९,१—११ । काण्व. ३१,१—११ । मा. श्रौ. ९,२,५ ।

त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ।
त्वष्टेमा विश्वा भुवना जजान बहोः कर्तारमिह यक्षि होतः ॥ २५
अश्वो घृतेन त्मन्या समक्त उप देवाँ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥ २६
प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ॥ २ ॥ २७
युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ २८
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ २९
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ३०
जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥ ३१
धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोतु धन्वना सर्वाः पृतना जयेम ॥ ३२
वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ् ज्या इयं समने पारयन्ती ॥ ३३
ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान् ॥ ३४
बह्वीनां पिता बहुरस्य पुत्रः चिश्चा कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ३५

---

[ ३ ] तै. ७,४,२०;४,६,६ । काठ. ५ ६,१ । वा. २३,५—६;२९,३७—४४,५२—५४,४६—४७,४९,४८,५१,५०, ५५—५७ । काण्व. २५,५—६;३१,१२—१६,१८,२१,२०,१९.१७,२२—२३ । मा. श्रौ. ९,२,३—४ ।
[ युञ्जन्ति ब्रध्नमरुषं० । ऋ. १,६,१; सा. १४६८; अथर्व. २०,२६,४;४७,१०;६९,९; तै. सं. ७,४,२०,१ । युञ्जन्त्यस्य काम्या० । ऋ. १,६,२; सा. १४६९; अथर्व. २०,२६,५;४७,११;६९,१०; तै. सं. ७,४,२०,१ । केतुं कृण्वन्नकेतवे० । ऋ. १,६,३; सा. १४७०; अथर्व. २०,२६,६;४७,१२;६९,११; तै. सं. ७,४,२०,१; तै. ब्रा. ३,९,४,३ । जीमूतस्येव भवति० । ऋ. ६,७५,१; तै. सं, ४,६,६,१ । धन्वना गा धन्वनाजिं० । ऋ. ६,७५,२; तै. सं. ४,६,६,१; नि. ९,१७ । वक्ष्यन्तीवेदागनी० । ऋ. ६,७५,३; तै. सं. ४,६,६,१; नि. ९,१८ । ते आचरन्ती० । ६,७५,४; तै. सं. ४,६,६,२; नि. ९.४० । बह्वनां ( ०ह्वी० ) पिता० । ऋ. ६,७५,५; तै. सं. ४,६,६,२; नि. ९,१४ ]

*

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनुयच्छन्ति रश्मयः ॥ ३६

तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रून् रनपव्ययन्तः ॥ ३७

वनस्पते वीड्वङ्गो हि भूया अस्मत् सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि ॥ ३८

दिवस्पृथिव्याः पर्यन्तरिक्षाद्वनस्पतिभ्यः पर्याभृत॰ँ सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्र॰ँ हविषा रथ॰ँ यज ॥ ३९

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥ ४०

स्वादुष॰ँसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ४१

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी उभे स्ताम् ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघश॰ँस ईशत ॥ ४२

ऋजीते परिवृङ्ग्धि नोऽश्मा भवतु नस्तनूः ।
सोमो अधिब्रवीतु नोऽदितिः शर्म यच्छतु ॥ ४३

सुपर्ण॰ँ वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म य॰ँसन् ॥ ४४

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमा॰ँसं परिपातु विश्वतः ॥ ४५

---

[ रथे तिष्ठन्नयति० । ऋ. ६,७५,६; तै. सं. ४,६,६,२; नि. ९,१६ । तीव्रान्घोषान्कृण्वते० । ऋ. ६,७५, ७; तै. सं. ४,६,६,३ । वनस्पते वीड्वङ्गो० । ऋ. ६,४७,२६; अथर्व. ६,१२५,१; तै. सं ४,६,६,५; नि. २,५;९,१२ । दिवस्पृथिव्याः० । ऋ. ६,४७,२७; अथर्व. ६,१२५,२; तै. सं. ४,६,६,५ । इन्द्रस्य वज्रो० । ६,४७,२८; अथर्व. ६,१२५,३; तै. सं. ४,६,६,६ । स्वादुष॰ँसदः पितरः० । ऋ. ६,७५,९; तै. सं. ४,६,६,३ । ब्राह्मणासः पितरः० । ऋ. ६,७५,१०; तै. सं. ४,६,६,३ । ऋजीते परि० । ऋ. ६, ७५,१२; तै. सं. ४,६,६,४ । सुपर्ण॰ँ वस्ते० । ऋ. ६,७५,११; तै. सं. ४,६,६,४; नि. २,५;९,१९ । अहिरिव भोगैः० । ऋ. ६,७५,१४; तै. सं. ४,६,६,५; नि. ९,१५ ]

आजङ्घन्ति सान्वेषां जघनं उपजिघ्नतु। अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु नोदय ॥ ४६

उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्।
स दुन्दुभे सजूरिन्द्रेण देवैरारादवीयो अपसेध शत्रून् ॥ ४७

आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिता बाधमानः।
अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥ ४८
आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति।

समश्वपर्णाश्चरन्तु नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३ ॥ ४९
समिद्दिशामाशयानः स्वर्विन्मधु रेतो माधवः पात्वस्मान्।
अग्निर्देवो दुष्टरीतुरदब्ध इदं क्षत्रं रक्षतु पात्वस्मान् ॥ ५०
रथन्तरं सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा।
त्रिवृन्नो विष्ठया स्तोमो अह्ना समुद्रो वात इदमोजः पिपर्तु ॥ ५१
उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्नोजसीना।
इन्द्राधिपत्यैः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम् ॥ ५२
बृहत्साम क्षत्रभृद्वृद्धवृष्णं त्रिष्टुभौजः शुभितमुग्रवीरम्।
इन्द्रः स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्षतु ॥ ५३
प्राची दिशां सहयशा यशस्वती विश्वे देवाः प्रावृषाह्ना स्वर्वती।
वैरूपे सामन्नधि तच्छकेयं जगत्यैनं विक्ष्वावेशयामि ॥ ५४
इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टं सहस्रियं सहस्वत्।
विश्वे देवाः सप्तदशेन वर्च इदं क्षत्रं सलिलवातमुग्रम् ॥ ५५
धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः।
मित्रावरुणा शरदाह्ना चिकित्तमस्मै राष्ट्राय महि शर्म यच्छतम् ॥ ५६

---

आजङ्घन्ति सान्वेषां० । ६,७५,१३; तै. सं. ४,६,६,५; नि. ९,२० । उपश्वासय पृथिवी० । ऋ. ६,४७, २९; अथर्व. ६,१२६,१; तै. सं. ४,६,६,६; नि. ९,१३ । आक्रन्दय बलमोजो० । ऋ. ६,४७,३०; अथर्व. ६,१२६,२; तै. सं. ४,६,७,७। आमूरज प्रत्यावर्तये० । ऋ. ६,४७,३१; अथर्व. ६.१२६,३; तै. सं. ४,६,६,७ ]

[ ४ ] तै. ४,४,१२ । काठ. २२,१४ । वा. ३४,८—९;१८,७२—७३;२६,८;२७,३९;३६,४ । काण्व. ३३,३;२०, ४१—४२;२८,८;२९,४४;३६,४।

वैराजे सामन्नधि मे मनीषानुष्टुभा संभृतꣳ वीर्यꣳ सहः ।
इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः ॥ ५७
सम्राड् दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु ।
अवस्युर्वाता बृहती नं शक्वरी दिशां तेऽव्यवतु नो घृताची ॥ ५८
स्वर्वती सुदुघा नः पयस्वतीमꣳ यज्ञमवतु या घृताची ।
त्वं गोपाः पुरएतोत पश्चाद्बृहस्पते याम्याꣳ युङ्ग्धि वाचम् ॥ ५९
ऊर्ध्वा दिशाꣳ रन्तीराशौषधीनाꣳ संवत्सरेण सविता नो अह्ना ।
रेवत्सामातिछन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु ॥ ६०
स्तोमस्त्रयस्त्रिꣳशे भुवनस्य पत्नी विवस्वद्वाते अभि नो गृणीहि ।
घृतवती सवितुराधिपत्ये पयस्वती रातिराशा नो अस्तु ॥ ६१
अन्वद्य नो अनुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ६२
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ना आयूꣳषि तारिषत् ॥ ६३
वैश्वानरो न ऊत्या प्रयातु परावतः । अग्निरुक्थेन वाहसा ॥ ६४
पृष्टो दिवि ॥ ६५
ध्रुवा दिशाꣳ विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुः संध्वाना वाता अभि नो गृणन्तु ॥ ६६
विष्टम्भो दिवो धरुणा पृथिव्या अस्येशाना जगतो विष्णुपत्नी ।
व्यचस्वतीषयन्ती सुभूतिः शिवा नो अस्त्वदितेरुपस्थे ॥ ६७
कया नः ॥ ६८
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥ ४ ॥ ६९

---

[ अन्वद्य ( अनु ) नो अनु० ( ०द्यानु० )। ऋ. परि. ३,३; अथर्व. ७,२०,१। अन्विदनुमते त्वं०। ऋ. परि. ३,४; अथर्व. ७.२०,२। वैश्वानरो न ऊत्या०। अथर्व. ६,३५,१; आ. श्रौ. सू. .२,११। पृष्टो दिवि पृष्टो०। ऋ. १,९८,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६,४। विष्टम्भो दिवो धरुणा( ०णः)०। ऋ. ९,८९,६। कया नः०। ऋ. ४,३१,१; सा. १६९,६८२; अथर्व. २०,१२४,१; तै. सं. ४,२,११,२; तै. आ. ४,४२,३। को अद्य युङ्क्ते०। ऋ. १,८४,१६; सा. ३४१; अथर्व. १८,१,६; तै. सं. ४,२,११,३; नि. १४,२५]

अग्नेर्मन्वे प्रथमस्यामृतानाꣳ यं पाञ्चजन्यं बहवः समिन्धते ।
विश्वस्याꣳ विशि प्रविविशिवाꣳसमीमहे स नो मुञ्चत्वꣳहसः ॥ ७०
यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ ७१
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः ।
यो दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्वꣳहसः ॥ ७२
यः संग्रामं नयति सꣳ वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः ॥ ७३
मन्वे वां मित्रावरुणा तस्य वित्तꣳ सत्यौजसा दृꣳहणा यं नुदेथे ।
या राजाना सरथꣳ यात उग्रा ता नो मुञ्चतमागसः ॥ ७४
यो वाꣳ रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन् ।
स्तौमि मित्रावरुणौ नाथितो जोहवीमि ता नो मुञ्चतमागसः ॥ ७५
वायोः सवितुर्विदथानि मन्महे या आत्मन्वद्बिभृतो यौ च रक्षतः ।
यौ विश्वस्य परिभू बभूवथुस्ता नो मुञ्चतमागसः ॥ ७६
उप श्रेष्ठा न आशिरो देवयोर्धर्मा अस्थिरन् ।
स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि ता नो मुञ्चतमागसः ॥ ७७
रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः ।
ययोर्वां देवौ देवेष्वनिशितमोजस्ता नो मुञ्चतमागसः ॥ ७८
यदयातꣳ वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ ।
स्तौमि देवा अश्विनौ नाथितो जोहवीमि ता नो मुञ्चतमागसः ॥ ७९
मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमाꣳ वाचꣳ विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ८०

---

[ ५ ] तै. ४,७,१५। काठ. २२,१५। वा. १२,२३;३४,८—९;१८,७२;२६,८। काण्व. १३,२४;३३,८;२०,४१;२८,८। [ अग्नेर्मन्वे प्रथमस्या० । ४,२३,१ । यस्येदं प्राणन्निमि० । अथर्व. ४,२३,७ । इन्द्रस्य मन्त्रे० । अथर्व.४, २४,१। यः संग्रामं नयति० । अथर्व. ४,२४,७ । मन्वे वां मित्रावरुणा० । अथर्व. ४,२९,१—२ । यो वाꣳ ( ययोः ) रथ ऋजु० ( सत्य० ) । अथर्व. ४,२९,७ । वायोः सवितुर्विदथानि० । अथर्व. ४,२५,१ । उप श्रेष्ठा न० । अथर्व. ४,२५,७ । रथीतमौ ( प्र सुमतिं ) रथीना० । अथर्व. ४,२५,६ । स्तौमि देवा ( भवाशर्वौ ) ० । अथर्व. ४,२८,७ । मरुतां ( देवानां ) मन्त्रे० अथर्व. ४,२७,१ ]

तिग्ममायुधꣳ वीडितꣳ सहस्वद्दिव्यꣳ शर्धः पृतनासु जिष्णु ।
स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ ८१
देवानां मन्वे अधि नो ब्रुवन्तु प्रेमाꣳ वाचꣳ विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ८२
यदिदं माभिशोचति पौरुषेयेण दैव्येन ।
स्तौमि विश्वान् देवान् नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ।
अन्वद्य नो अनुमति,—रन्विदनुमते त्वꣳ, वैश्वानरो न ऊत्या ॥ ८३
त्वमग्ने शोचिषा शोशुचाना आ रोदसी अपृणा जायमानः ।
त्वं देवं अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा ॥ ८४
उर्वी रोदसी वरिवस्कृणोतं क्षेत्रस्य पत्नी अधि नो ब्रुवाथः ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥ ८५
ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवताꣳ वसूनाम् ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः ॥ ८६
यच्चिद्धि ते पुरुषत्रा युविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।
कृधी३ष्वस्मां अदितेरनागानेनाꣳसि शिश्रथो विष्वगग्ने ॥ ८७
यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो३ष्वस्मन्मुञ्चता व्यꣳहः प्रतार्यग्ने प्रतरं न आयुः ॥ ५ ॥ ८८

[ १९६३ ]

॥ इत्युपरिकाण्डे षोडशः प्रपाठकः ॥ १६ ॥

॥ इत्युपरिकाण्डं समाप्तम् ॥

---

[ तिग्ममायुधꣳ (०मनीकं)०। अथर्व. ४,२७,७। यदिदं माभिशोचति (०यन्मेदमभि०)। अथर्व. ४,२६,७। अन्वद्य नो (०अनु नो० )। ऋ. परि. ३,३; अथर्व. ७,२०,१ । अन्विदनुमते० । ऋ. परि. ३,४ । अथर्व. ७,२०,२। वैश्वानरो न ऊतय० । ६,३५,१; आ. श्रौ. सू. २,११ । त्वमग्ने शोचिषा० । ऋ. ७,१३,२; तै. सं. १,५,११,२ । स्तौमि द्यावापृथिवी० । अथर्व. ४,२६,७ । ये अप्रथेताममिते० अथर्व. ४,२६,१—२ । यच्चिद्धि ते पुरुषत्रा० । ऋ. ४,१२,४; तै. सं. ४,७,१५,६ । यथा ह त्यद्वसवो० । ऋ. ४,१२,६;१०, १२६,८; तै. सं. ४,७,१५,७ ]

# अथ चतुर्थं काण्डम् ।

अथ प्रथमः प्रपाठकः ।

## पुरोडाशब्राह्मणम् ।

वनस्पतीन्वा उग्रो देव उदैपत्, तꣳ शम्यां अध्यशमयꣳ,—स्तच्च शम्याः शमीत्वꣳ, यच्च
शमीशाखया वत्सानपाकरोति शान्त्यै, पर्णवती कार्या, पशूनाꣳ वा एतद्रूपं, पशुमान् भवति,
यदपर्णी स्याद्दण्डस्य तद्रूपꣳ, वज्रो दण्डो, वज्रेण पशूनभिप्रवर्तयेत्, तृतीयस्याꣳ वै दिवि
सोम आसीत्, तं गायत्री श्येनो भूत्वाहरत्, तस्य पर्णमछिद्यत, ततः पर्णोऽजायत, तत्
पर्णस्य पर्णत्वं, तस्मात् सर्वेऽन्ये वनस्पतयः पर्णिनो, ऽथैष पर्ण उच्यते, यत् पर्णशाखया
वत्सानपाकरोति तमेव सोममवरुन्द्धे, देवा वै ब्रह्म समवदन्त, तत् पर्ण उपाशृणोत्, सुश्रवा
वै नामैष, न बधिरो भवति य एवꣳ वेद, ब्रह्म वै पर्णो, यत् पर्णशाखया प्रार्पयति ब्रह्म-
णैवैनाः प्रार्पयती,—षे त्वे,—तीषमूर्जꣳ यज्ञे च यज्ञपतौ चाधाद्, वायवः स्थेति, वायुर्वा
अन्तरिक्षस्याध्यक्षो, ऽन्तरिक्षदेवत्याः पशवो, वायुरेवैनानन्तरिक्षाय परिददाति, प्र वा एना-
नेतदाकरोति, यद्वायवः स्थेत्याहा,—ऽरण्यस्येव हि वायु,—र्देवो वः सविता प्रार्पयत्विति,
सवितृप्रसूत एवैनाः प्रार्पयति, श्रेष्ठतमाय कर्मण इति, यज्ञो वै श्रेष्ठतमो, यज्ञायैवैनाः प्रा-
र्पयत्या,—प्यायध्वमघ्न्या देवेभ्या इति, वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्ते, ऽथै-
तर्हि देवेभ्य एवैना आप्याययति, मा वः स्तेन ईशत माघशꣳसा इत्या,—शिषमेवाशास्ते,
ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति, प्रैव जनयति ॥ १

शुद्धा अपः सुप्रपाणे पिबन्तीः ॥ २

इति पुनात्येवैनाः ॥ ३

रुद्रस्य हेतिः परि वो वृणक्तु ॥ ४

इति रुद्रादेवैनास्त्रायन्ते ॥ पूषा वः परस्पा अदितिः प्रत्वरीया इन्द्रो वोऽध्यक्षोऽनष्टाः पुनरेत ॥
इति त्रयो वा इमे लोका, एभ्य एवैना लोकेभ्यः पुनरावर्तयति, यजमानस्य पशून् पाही,—
ति यजमानस्यैव पशूनां गोपीथायाहिꣳसायै ॥ प्रतीचीꣳ शाखामुपगूहति तस्माद्ग्राम्याः पशवः
सायमरण्याद्ग्राममायन्ति, प्रत्यञ्च एनं पशवो भवन्ति य एवꣳ वेद ॥ १ ॥ ५–८

---

[ १ ] मै. १,१,१, । तै. ब्रा. ३,२,१ । काठ. ३०;१० । कपि. ४६,८ । वा. १,१;१६,५० । काण्व. १,१—३;१७,५० ।
[ मा वः स्तेन ईशत० । ४,११,७ ]

देवस्य त्वा सवितुः प्रसवे३ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति, सवितृप्रसूत एवैनां
देवताभिरादत्ते, प्रजापतिर्वा ओषधीः परुश्शो वेद, प्राजापत्योऽश्वो, यदश्वपरश्वा बर्हिर्दा-
त्योषधीनामहिꣳसायै, गोपदसी,—ति रयिꣳ यजमाने दधाति, प्रत्युष्टꣳ रक्षः, इति रक्ष-
सामपहत्यै, प्रेयमगाद्धिषणा बर्हिरच्छेति, विद्या वै धिषणा विद्ययैवैनदच्छेति, मनुना कृता
स्वधया वितष्टेति, मनुना३ह्येषा कृता स्वधया वितष्टा तया वहन्ते कवयः पुरस्तादिति, ब्राह्मणाः
कवया, ऋषयः कवयः ॥ ९
देवेभ्यो जुष्टमिह बर्हिरासदे ॥ १०

इति देवेभ्य एवैनं जुष्टं करोति, देवानां परिषूतमसीति, यद्वा इदं किंच तद्देवानां परिषूतꣳ, यथा श्रेयसे प्रोच्य कर्म कुरोत्येवꣳ वा एतद्देवेभ्यः प्रोच्य बर्हिर्दातीति, यावत् परिदिशति तत् सर्वं दाति, यत्तत्सर्वं न दाति यज्ञस्य तदतिरेचयति, यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन वर्धयत्ये,—कꣳ स्तम्बं परिदिशति, तꣳ सर्वं दाति यज्ञस्यानतिरेचाय, विष्णोः स्तुप इति, विष्णोर्वै स्तुपोऽछिद्यत, स पृथिवीं प्राविशद्, यत् प्रथमं नोत्सृजेदार्तिमार्छेद्, देवस्य त्वा सवितुः प्रसवे३ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनं दामीति, सवितृप्रसूत एवैनद्देवताभिर्दाति ॥ माधो मोपरि परुस्त ऋध्यासम् ॥ इत्योषधीनामहिꣳसायै ॥ आछेत्ता ते मारिषम् ॥ इति यावद्यावदेवमविद्वानध्वर्युर्बर्हिर्दाति तावदस्यात्मनो मीयते, नास्यात्मनो मीयते य एवꣳ वेदा,—ऽतस्त्वं बर्हिः शतवल्शꣳ विरोहे,—त्योषधीष्वेव भूमानं दधाति, सहस्रवल्शा वि वयꣳ रुहेमे,—त्याशिषमेवाशास्ते, ऽदित्या रास्नासीती,—यꣳ वा अदिति,—रस्या एवैनद्रास्नां करोती,—न्द्राण्याः संनहनमिती,—न्द्राणी वा अग्रे देवतानाꣳ समनह्यता ऋद्धिकामा, सार्ध्नोदृद्ध्या, ऋध्नोति य एवꣳ वेद, बर्हिः संनह्यति, प्रजा वै बर्हिः, प्रजानाꣳ संतत्यै प्रजानामपरावापाय, तस्मात् स्नान्ना प्रजाः संतताः, पूषा ते ग्रन्थिं ग्रथ्नात्विति, पुष्टिर्वै पूषा,
पुष्टिꣳ यजमाने दधाति, स ते मास्था,—दिति यजमानस्याहिꣳसायै ॥ ११–१५
आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे ॥ १६
इत्यश्विनौ वै देवानां भिषजौ, ता एनाद्भिषज्यता, इन्द्रस्य त्वा बाहुभ्यामुद्यच्छा इती,—न्द्र-

[ २ ] मै. १,१,२ । तै. ब्रा. ३,२,२ । काठ. ३१,१ । कपि. ४७,१ । वा. १,१०,२१,२४;२,११;५,२२,२६;६,१,९,३०;९,३०,३८;११,९,२८;१८,३७;२०,३;३७,१;३८,१;१,७,२९ । काण्व. १,१३,३६,४०;२,२२;५,२८,३३;६,१,१०,४३;१०,३९;११,४;१२,९,२८;२०,७;२१,९३;३७,१;३८,१;१,१०,४६ । [ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

स्यैवैनद्बाहुभ्यामुद्यछते, बृहस्पतेर्मूर्ध्ना हरामीति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनद्धरत्यु,—रुर्वन्तरिक्ष,—मिति समिष्ट्या एवा,—ऽऽदित्यास्त्वा पृष्ठे सादयामीती,—यं वा अदितिरस्यामेवैनदसीपदत् ॥ बर्हिरसि देवंगमम् ॥ इत्यासन्नमभिमन्त्रयते, बहु वा एतस्य पूर्वेद्युराह्रियमाणस्येह चेह च स्कन्दत्य,—स्कन्नमेनद्देवताभ्यः संप्रादाद्यजमानस्याहिंसायै ॥ २ ॥ १७-१९

पूर्वेद्युरिध्मा बर्हिः कुर्वन्ति, यज्ञमेवारभ्योपवसति, प्रजापतिः प्रजा असृजत, तस्योखे अस्रंसेतां, स एताभ्यामुखाभ्यां प्रत्यधत्त, यदेते उखे भवतः, प्रजापतेरेवोखे प्रतिदधाति, शुन्धध्वं दैव्याय कर्मणा, इति देवेभ्य एवैनानि शुन्धति, वसूनां पवित्रमसीति, वसूनां वा एतद्भागधेयं, तेभ्य एवैनत् करोति, पवित्रमपिदधात्यो,—षधीनां च पशूनां च पयः संसृजति, वाचं यछति यज्ञस्य धृत्यै, धारयन्नास्ते, धारयन्त इव हि दुहन्ति, द्यौरसि पृथिव्यसीत्या,—भ्यामेवैनां प्रवृणक्ति, मातरिश्वनो घर्म इत्य,—न्तरिक्षं वै मातरिश्वनो घर्मो, ऽन्तरिक्षस्य धृत्यै, कामधुक्षः, सा विश्वायुः, सा विश्वभूः, सा विश्वकर्मेत्य,—सौ वाव विश्वायु,—रन्तरिक्षं विश्वभू,—रियं विश्वकर्मे,—मान्वा एतल्लोकान् यथापूर्वं प्रदापयत, इमाल्लोकान् यथापूर्वं प्रत्तान् दुहे य एवं वेद, तिस्रो यजुषाभिमन्त्रयते, त्रयो वा इमे लोका, एषु वा एतं लोकेषु रसं दधाति, तस्मादिमाल्लोकान् प्रजा उपजीवन्ति, हुतः स्तोको हुतो द्रप्स, इत्यभिमन्त्रयतेऽस्कन्दाय ॥ इन्द्राय देवेभ्यो हविर्बहु दुग्धि ॥ इति त्रिरुद्वदति, त्रिषत्या हि देवा, न दारुपात्रेण दुह्या,—दग्निमद्वै दारुपात्रं, यातयामेन हविषा यजेत, तद्ध स्माहुर्दात्रेयाः पुरोडाशमुखं हवि,—र्न वा इत इतः पुरोडाशं हविषो यामोऽस्ति, दोग्धव्यमेवेति, न शूद्रो दुह्या,—दसुतो वा एष संभूतो, ऽसन्नस्याद्, यद्वै पवित्रमत्येति तद्धवि,—रग्निहोत्रमेव शूद्रो न दुह्यात्, तद्धि नोत्पुनन्ति ॥ २०-२२

संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये ॥ २३

इति प्रतिनयति शृतत्वायु, शृतकामा हि देवा, इन्द्राय त्वा भागं सोमेनातनच्मीति, सोममेवैनत् करोति, तस्य ह त्वै सोमपीथः संततो य एवं विद्वान्त्सान्नाय्यं पिबति ॥ अदस्तमसि विष्णवे त्वा ॥ इति, यज्ञो वै विष्णु,—र्यज्ञायैवैनददस्तं करोति, विष्णो हव्यं रक्षस्वेति, यथाहैष ते भागस्तं रक्षस्वेत्ये,—वं वा एतद्विष्णुमाहे,—तत्ते हव्यं, तद्रक्षस्वेति,

---

[ ३ ] मै. १,१,३ । तै. बा. ३,२,३ । क.ठ. ३१,२ । कपि. ४७,२ । वा. १,२,४ । काण्व. १,४,७ ।

*

न मृत्पात्रेणापिदध्यात्, पितृदेवत्यꣳ हविः स्याद्, दारुपात्रेणापिदध्या, —दग्निमद्वै दारुपात्रं, —म-
ग्निरेवं हव्यꣳ रक्षत्यु, —दन्वत्कार्य, —मापो वै रक्षोघ्नी, —रपो रक्षाꣳसि न तरन्ति, रक्षसा-
मपहत्यै ॥ ३ ॥ २४--२६

यो वै श्रद्धामनालभ्य यजते नास्य देवमनुष्या इष्टाय श्रद्दधत्य, —पः प्रणयत्या, —पो वै श्रद्धा,
श्रद्धामेवालभ्य यजता, आपो यज्ञो, यज्ञं तत्वा प्रचरत्या, —पो देवानां प्रियं धामु, देवानां
प्रियं धाम प्रणीय प्रचरत्या, —पः सत्यꣳ, सत्यमेवालभ्य यजता, आपो रक्षोघ्नी, रक्षसा-
मपहत्या, आपो वज्रो, वज्रं भ्रातृव्याय प्रहरति स्तृत्या, आपः श्रद्धा, श्रद्धास्य देवाः
श्रन्मनुष्या इष्टाय दधते यस्यैवꣳ विदुष एवꣳ विद्वानपः प्रणयति, दैवीरापोऽग्रेगुवा, इति
यज्ञमेवं प्रणयति, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा, इति
सवितृप्रसूत एवैनदेवताभिरादत्त उरुर्वन्तरिक्ष, —मिति समिष्टचा एवं, प्रत्युष्टꣳ रक्षा, इति रक्ष-
सामपहत्यै, धूरसि, ध्वर ध्वरन्तमिति, धुर्यो वै नामैषोऽग्निर्यदनालभ्यातीयाद्, यज-
मानꣳ शुचार्पयेद्, द्वौ वाव पुरुषस्य भ्रातृव्यौ, यं द्वेष्टि यश्चैनं द्वेष्टि, ता एवं शुचार्पयति ॥
॥ ४ ॥ २७

देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम, —मिति देवेभ्य एवैनद्वह्नितमꣳ स-
स्नितमं पप्रितमं जुष्टतमं देवहूतमं करोत्य, —हुतमसि हविर्धानं, दृꣳहस्व, मा ह्वा, —रिति
दृꣳहत्येवैनद्, विष्णोः क्रमोऽस्यु, —रु वातायेति, यद्वै किंच वातो नाभिवाति तद्वरुणस्या, —
वरुण्यमेवैनत् करोति, मित्रस्य वश्चक्षुषा प्रेक्षा, इति मित्रमेवैनान् कुरुते ॥ ऊर्जं गृह्णीत ॥
इत्यूर्जꣳ यजमाने दधाति ॥ प्रभूत्यै वः ॥ इति प्रैवैनान् भावयति, देवस्य वः सवितुः प्रसवे
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ, यच्छन्तु पञ्च, गोपीथाय वो नारातये, ऽग्नये वो जुष्टा-
न्निर्वपामी, —ति सवितृप्रसूत एवैनान् देवताभिर्निर्वपति, यच्छन्तु पञ्चेति, पञ्च वा ऋतव,
ऋतून् वा एतत् प्रीणाति, तेऽस्मै प्रीताः कल्पन्ते, गोपीथाय वो नारातया, इति रक्षसा-
मपहत्या, अग्नये वो जुष्टानित्य, —ग्नय एवैनान् जुष्टान् करोत्य, —थो यस्यै देवतायै निर्वपति
तस्या एनान् जुष्टान् करोती, —दं देवानामिदमु नः सहे, —ति व्यावृत्त्यै, दृꣳहन्तां दुर्या, इति

[ ४ ] मै. १,१,४ । तै. ब्रा. ३,२,४,१ । काठ. ३१,३ । कपि. ४७,३ । वा. १,७—८,१०,१२,२१,२४,२९,३१। काण्व. १,१०—११,१३,१७,३६,४०,४६,४९ ।

[ ५ ] मै. १,१,५ । तै. ब्रा. ३,२,४,४ । काठ. ३१,३ । कपि. ४७,३ । वा. १,७—११ । काण्व. १,१०,१२—१५ ।

हविषो गृहीतादिमे लोका उदवेपन्त, तान्देवा एतेन यजुषादृ॰हन्, यदेतद्यजुर्वदत्येषां लोकानां धृत्यै, निर्वरुणस्य पाशादमुक्षी,–ति वरुणपाशादेवं निर्मुच्यत आत्मनोऽहि॰साये, स्वरभिव्यख्य,–मिति तम इव वा एष प्रपद्यते परीणह॰, स्वरेवाभिविपश्यति, ज्योतिर्वैश्वानरमित्य,–सौ वा आदित्यो ज्योतिर्वैश्वानरम् ॥ उ३र्वन्तरिक्षमन्वेमि ॥ इति य३द्वीहीति ब्रूयाद्यायुकोऽध्वर्युः स्यात् ॥ उ३र्वन्तरिक्षमन्वेमि ॥ इत्यव्यायुकोऽध्वर्युर्भवत्य,–दित्या व उपस्थे सादयामीती,–यं॰ वा अदिति,–रस्यामेवैनानसीषदत् ॥ अग्ने हव्य॰ रक्षस्व ॥ इति पुर उपसादयत्य,–ग्निरेव हव्य॰ रक्षते ॥ ५ ॥ २८--३८

विष्णोर्मनसा पूते स्थः ॥ इति, यज्ञो वै विष्णु,–र्यज्ञायैवैने पुनाति, देवो वः सवितोत्पुनात्वि,–ति सवितृप्रसूत एवैना उत्पुनात्य,–ग्नये वो जुष्टा,–नित्यग्नय एवैनान् जुष्टान् करोत्य,–थो यस्यै देवतायै प्रोक्षति तस्या एनान् जुष्टान् करोति, यद्वोऽशुद्ध आलेभे तच्छुन्धध्व,–मिति शुन्धत्येवैनान्, यदित्यास्त्वगसीती,–यं॰ वा अदिति,–रस्या एवैनत्त्वचं करोत्य,–वधूत॰ रक्षा, इति रक्षसामपहत्यै, प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति, तस्मात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते, पृथुग्रावासि वानस्पत्य, इति ग्रावाणमेवैनत् करोत्य,–ग्नेर्जिह्वासि वाचो विसर्जनमित्य,–ग्ने३र्ह्येषा जिह्वा वाचो विसर्जन॰, यदा हि पशवा ओषधीनामश्नन्त्यथ वाच॰ विसृजन्ता, आयुषे वा, इत्यायुर्यजमाने दधाति, बृहद्ग्रावासि वानस्पत्य, इति ग्रावाणमेवैनत् करोति, देवेभ्यो हव्य॰ शमीष्वे,–ति देवेभ्य एवैनत् करोति ॥ अपहत॰ रक्षः ॥ इति रक्षसामपहत्यै ॥ हविष्कृदेहि ॥ इति यो देवाना॰ हविष्कृत्त॰ ह्वयति, त्रिर्ह्वयति, त्रिषत्या हि देवा, मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्, तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्व॰स्तावन्तस्तद्दहनीभव,–न्नेव॰ विद्वान् ब्राह्मणो भ्रातृव्याणां मध्येऽन्नसाय यजेत, यावन्त एवास्य भ्रातृव्या यज्ञायुधानामुपशृण्वन्ति तेषां तेज इन्द्रियं॰ वीर्य॰ वृङ्क्ते, कुटरुरसि मधुजिह्वस्त्वया वय॰ संघात॰ संघातं जेष्मेति, संघात॰संघात॰ ववैतेन यजमानो भ्रातृव्यं जयतीष,–मावदो,–र्जमावद, रायस्पोषमावदेत्या,–शिषमेवाशास्ते ॥६॥ ३९–४४

---

[ ६ ] मै. १,१,६ । तै. ब्रा. ३,२,५,१ । काठ. ३१,४, । कपि. ४७,४ । वा. १,१२—१६ । काण्व. १,१६,१८—२१, २३—२४,२६ ।

वर्षवृद्धमसि, प्रति त्वा वर्षवृद्धꣳ वेत्त्वि,—ति प्रतिष्ठित्या, अस्रा वै देवाः पशुभ्यो रक्षाꣳसि निरवादयन्त तुषैरोषधीभ्यो, यदाह, परापूतꣳ रक्षः, परापूतारातिं,—रित्येतावतैव यज्ञस्य रक्षाꣳसि निरवदयते ॥ देवो वः सविता विविनक्तु ॥ इति सवितृप्रसूत एवैनान् विविनक्ति ॥ सुविचा विविच्यध्वम् ॥ इत्याशिषमेवाशास्ते, सुफलीकृतान् कुर्यान्, मेध्यानेनान् यज्ञियान् करोति, त्रिः फलीकरोति, त्रिषत्या हि देवा, अदित्यास्त्वगसीती,—यꣳ वा अदिति,—रस्या एवैनत्त्वचं करोत्य,—वधूतꣳ रक्षा, इति रक्षसामपहत्यै, प्रतीचीनग्रीवं कृष्णाजिनमुपस्तृणाति, तस्मात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते, ऽदित्याः स्कम्भोऽसी,—ति शम्यामुपदधाती,—मे वै सहास्तां, ते शम्यामात्रꣳ शम्यामात्रꣳ व्यैताꣳ, यच् शम्यामुपदधात्यनयोरेव विधृत्यै, धान्यमसि, धिनुहि देवानित्ये,—तस्य वै यजुषो वीर्येण यावदेका देवता कामयते, यावदेका तावदस्या आहुतिः प्रथते, प्रथते प्रजया पशुभिर्य एवꣳ वेद, प्राणाय त्वापानाय त्वा व्यानाय त्वे,—ति प्राणमपानꣳ व्यानं तान् यजमाने दधाति, दीर्घामनु प्रसूतिꣳ सꣳस्पृशेथा,—मायुषे वा, इत्यायुरस्मिन् दधाति, मित्रस्य वश्चक्षुषावेक्षा, इति मित्रमेवैनान् कुरुते, देवो वः सविता हिरण्यपाणिरुपगृह्णात्वि,—ति सवितृप्रसूत एवैनानुपगृह्णाति ॥ ७ ॥ ४५-४९

निर्दग्धꣳ रक्षा, इति रक्षसामपहत्यै, यदधस्तादङ्गारमुपवर्तयत्यस्मिꣳस्तेन लोके ज्योतिर्धत्ते, यदुपरिष्टादन्तरिक्षे तेना,—ऽसा अस्मा आदित्योऽमुष्मिंल्लोके ज्योतिर्भवत्य,—थो दिवैवास्मा अमुष्मिंल्लोके भवति सर्वेऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति य एवꣳ वेद, त्रीणि समीचीनान्युपदधाति, त्रयो वा इमे लोका, एषां लोकानां धृत्या, अपाग्नेऽग्निमामादं जही,—ति य आमात् क्रव्यात्तमपहत्य देवयजने यज्ञिया उपदधाति, ध्रुवमसि, पृथिवीं दृꣳहे,—ति पृथिवीमेव दृꣳहति, धरुणमस्य,—न्तरिक्षं दृꣳहे,—त्यन्तरिक्षमेव दृꣳहति, धर्त्रमसि, दिवं दृꣳहे,—ति दिवमेव दृꣳहति, धर्मासि, विश्वा विश्वानि दृꣳहे,—ति दिश एव दृꣳहति, प्रजापतिर्वै यत् समभवत् स एतावच् श एव समभव,—देकꣳ वा अग्रे शीर्ष्णः कपालꣳ सम्भवत्य,—थ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमꣳ, यदष्टा उपदधात्यात्मानꣳ वा एतद्यजमानः सꣳस्कुरुते, तꣳ सꣳस्कृतममुष्मिंल्लोकेऽनुपरैति, यदष्टा उपदधाति

[७] मै. १,१,७। तै. ब्रा. ३,२,५,१०। काठ. ३१,४—५। कपि. ४७,४—५। वा. १,१६,१९—२०। काण्व. १,२५,३१—३४।

[८] मै. १,१,८। तै. ब्रा. ३,२,६—७। काठ. ३१,६। कपि. ४७,६। वा. १,१७—१८। काण्व. १,२७—३०।

गायत्रीं तेन छन्द आप्नोति, यदेकादश त्रिष्टुभं तेन, यद् द्वादश जगतीं तेना,—ऽथो सर्वाण्येव छन्दःसंमितान्युपदधाति ॥ चितः स्थ, परिचितः स्थ ॥ इति यजुष्मन्ति करोति, वसूनाꣳ रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्व,—मित्येतासामेनानि देवतानां तपसा तपति ॥ ५०–५२

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ५३

इति यजुषैव युज्यन्ते, यजुषा विमुच्यन्ते ॥ ८ ॥ ५४

देवस्य वः सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ संवपामी,—ति सवितृप्रसूत एवैनां देवताभिः संवपति, पवित्रवत्संवपति, हविः करोति, देवो वः सवितोत्पुनात्वि,—ति सवितृप्रसूत एवैना उत्पुनात्य,—प उपसृजत्य,—मृतꣳ वा आपो, ऽमृतमेव हविः करोति, समाप ओषधीभिर्गच्छन्ताꣳ, समोषधयो रसेन, सꣳ रेवतीर्जगतीरित्य,—न्या वा एतासामन्या जिन्वन्त्या,—प ओषधीर्जिन्वन्त्यो,—षधीरपः, शिवाः शिवाभिः समसृक्षतापा इत्या,—पो वै रेवती,—रोषधयो मधुमतीः, पशवो जगती,—रप ओषधीः पशूꣳस्तानस्मै सꣳसृज्यैकधा मधुमतः करोति ॥ मखस्य शिरोऽसि ॥ इत्याह यज्ञो वै मख,—स्तस्य वा एतच्छिरः क्रीयते, सीदन्तु विशो, जनयत्यै त्वे,—ति मिथुनमेव करोति, घर्मोऽसि विश्वायु,—र्घर्मं घर्मं श्रयस्वो,—रु प्रथस्वो,—रु ते यज्ञपतिः प्रथतामिति, प्रथयत्येवैनं ॥ प्रति प्रथस्व पृथिवीमुत द्याम् ॥ इतीमे एव प्रथयति, घर्मो वा एषोऽर्धमासेऽर्धमासे प्रवृज्यते, स ईश्वरोऽशान्तस्तेजसा यजमानस्य पशून्निर्दहो यत् पर्यग्निं करोति पशुमेव करोति शान्त्या अनिर्दाहाय, त्रिः पर्यग्निं करोति, त्रयो वा इमे लोका, एभ्य एवैनं लोकेभ्यः शमयति, पुरोडाशꣳ वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳस,—न्त्स नाको नाम दिवि रक्षोहाग्निः, सोऽस्माद्रक्षाꣳस्यपाहरन्, यदाह, देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाके पृथिव्या, इति रक्षसामपहत्यै, शिरो वा एतद्यज्ञस्य यत् पुरोडाशः, केशा वेदो, यथा शीर्ष्णः कपालान्येवं कपालानि, यथा मस्तिष्क एवं पुरोडाशः, सुशृतः कार्यो मेध्यत्वाय, यत् पुरोडाशं नाभिवासयेदाविर्मस्तिष्कः स्याद्, यदभिवासयति तस्माद्गुहा मस्तिष्कस्त्वचं ग्राहयति, तस्मान्मस्तिष्कः परितो भस्मनाभ्यूहति, तस्मान्माꣳसेनास्थि छिन्नं ज्वालैरभिवासयति, तस्मात् केशैः शिरश्छिन्नꣳ, यत्त्वचमग्राहयित्वा

[ ९ ] मै. १,१,९ । तै. ब्रा. ३,२,३ । काठ. ३१,७ । कपि. ४७,७ । वा. १,२१—२२;११,५७;३७,८ । काण्व. १, ३६—३८;१२,५९;३७,८ ।

भस्मनाभिवासयेत् पलितंभावुकोऽध्वर्युः स्या,—ज्ज्वालैरभिवासयत्यपलितंभावुकोऽध्वर्युर्भवति,
ते वै देवास्तं नाविन्दन् यस्मिन् यज्ञस्य क्रूरमाक्ष्यामहा इति, ३सोऽग्निरब्रवी,—दहं वस्तं जन-
यिष्यामि यस्मिन् यज्ञस्य क्रूरमाक्षध्वा इति, ३सोऽपोऽङ्गारेणाभ्युपातयत्, तत एकतोऽजायत,
द्वितीयं, ततो द्वित,—स्तृतीयं, ततस्त्रितो, यदद्भ्योऽधिनिरमिमीत तदाप्येयानामाप्येयत्वं,
यदात्मनोऽधिनिरमिमीत तदात्मेयानामात्मेयत्वं,—मन्तर्वेदि जुहोति, तद्देवानवरुन्द्ध, उपरिष्टाद-
भिघारयति शृतत्वाय, शृतकामा हि देवा,—स्ते देवा अतिमृजाना आय,—न्त्सूर्याभ्युदिते ते
ऽमृजत, यं सुप्तं सूर्योऽभ्युदेति सूर्याभ्युदितः, सूर्याभिनिम्रुक्ते सूर्याभिनिम्रुक्तः,
श्यावदति श्यावदन्, कुनखिनि कुनख्य,—ग्रेदधुष्यग्रेदधुः, परिवित्ते परिवित्तः, परिविवि-
दाने परिविविदानो, वीरहणि वीरहा, भ्रूणहनि भ्रूणहनमेनो नात्येति ॥ ९ ॥ ५५-५९

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददा इति, सवितृप्रसूत एवैनं
देवताभिरादत्ते, सहस्रभृष्टिः शततेजा इति, वज्रं वा एतत् संश्युति भ्रातृव्याय प्रहरिष्यन्,
पृथिवि देवयजनि मा हिंसिषं ता ओषधीनां मूल,—मित्योषधीनामहिंसायै, व्रजं गच्छ गो-
स्थानमिति, छन्दांसि वै व्रजो गोस्थान,—श्छन्दांस्येवास्मै व्रजं गोस्थानं करोति, वर्षतु
ते पर्जन्या इति, पर्जन्यादेव वृष्टिं वनुते, बधान देव सवितः शतेन पाशैः परमस्यां पराव-
तीति, द्वौ वाव पुरुषस्य भ्रातृव्यौ यं द्वेष्टि यश्चैनं द्वेष्टि, तावेव बध्नाति परमस्यां परावति,
योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमत्र बधान्, सोऽतो मा मोची,—त्याशिषमेवाशास्ते,
द्रप्सस्ते दिवं मा स्कानिति, यो वा अस्या रसः स द्रप्स,—स्तमिमं प्रजा उपजीवन्ति, तम-
स्यां यच्छत्यस्कन्दाय ॥ अररुस्ते द्यां मा पप्तत् ॥ इत्यररुर्वै नामासुर आसीत्, स पृथिवीमुप-
मुच्याशयत्, तमिन्द्रोऽजायत्, त,—मपाररुं पृथिव्या अदेवयजन,—मित्यपाह,—न्त्स दिवम-
पिपातिपत्, तम् ॥ अररुस्ते द्यां मा पप्तत् ॥ इति दिवः प्रत्यनुदत, य एवं विद्वांस्तम्बयजुर्ह-
रत्ये,—भ्यो वा एतल्लोकेभ्यो यजमानो भ्रातृव्यं निर्भजति, त्रिः कृत्वो हरति, त्रयो वा इमे
लोका, एभ्य एव लोकेभ्यो भ्रातृव्यं निर्भजति, तूष्णीं चतुर्थं हरति, यो लोकोऽनिरुक्तोऽ
परिमितस्तस्माद् भ्रातृव्यं निर्भजत्य,—सुराणां वा इयं पृथिव्यासीत्, ते देवा अब्रुवन्, दत्त
नोऽस्याः पृथिव्या इति, ते वै स्वयमेव ब्रूध्वमिति, ततो वै वसवः प्राचीं दिशमुदजयन्,

---

[ १० ] मै. १,१,१० । तै. ब्रा. ३,२,९ । काठ. ३१,८ । कपि. ४७,८ । वा. १,२४—२६ । काण्व. १,४०—४३ ।

रुद्रा दक्षिणा,—मादित्याः प्रतीचीं, मरुता उदीचीं, ततो वै देवा इमामसुराणामविन्दन्त, ततो देवा असुरानेभ्यो लोकेभ्यो निरभजꣳ,—स्ततो देवा अभुवन्, परासुरा, यदेवमेताभिर्देवताभिर्वेदिं परिगृह्णातीमाꣳ वा एतद्यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽस्या भ्रातृव्यं निर्भजति, भवत्यात्मना, परास्य भ्रातृव्यो भवति, पृथिव्या वै मेध्यं चामेध्यं च व्युदक्रामत्, प्राचीनमुदीचीनं मेध्यमुदक्रामद्, दक्षिणा प्रतीचीनममेध्यं, प्राचीमुदीचीꣳ वेदिं प्रवणां कुर्या,—न्मेध्यानेनान् यज्ञियान् करो,—त्यथो यदेवास्या उद्घ्नन्तः क्रूरमक्रꣳस्तदक्रूरमक,—स्तच्छमयत्य,—थो मेध्यस्य चैवामेध्यस्य च व्यावृत्त्यै, प्राञ्चौ वाहू नयत्या,—हवनीयं तेन परिगृह्णाति, प्रतीची श्रोणी, गार्हपत्यं परिगृह्णाति, मूलꣳ वै रक्षाꣳस्यनूत्पिबन्ति, यन्नखेन छिन्द्यात् कुनखी स्यात्, स्फ्येन छिनत्ति, वज्रो वै स्फ्यो, वज्रेणैव रक्षाꣳसि हन्ति ॥१०॥ ६०-६४

यो वै स्रुचाꣳ योगमविद्वानध्वर्या इति हूतः प्रतिशृणोत्या देवताभ्यो वृश्चते, ऽपशुर्भवत्य,—थ यः स्रुचाꣳ योगꣳ विद्वानध्वर्या इति हूतः प्रतिशृणोति न देवताभ्या आवृश्चते, पशुमान् भवति, द्यौर्जुहू,—रन्तरिक्षमुपभृत्, पृथिवी ध्रुवा, दिश आज्यधान्य,—सा आदित्यः स्रुवः, स यत् ॥ ओं श्रावय ॥ इत्याहु जुꣳह्वं तेन युनक्ति ॥ अस्तु श्रौषट् ॥ इत्युपभृतम् ॥ यजेति ध्रुवाम् ॥ ये यजामहे ॥ इत्याज्यधानीꣳ, वषट्कारेण स्रुवं, जुꣳह्वा अधि ध्रुवामभिघारयति, ध्रुवाया अधि जुह्व,—मसौ ꣳह्यस्यै प्रयच्छती,—यममुष्यै, संततमस्मा अन्नाद्यमव्यवछिन्नं प्रदीयतेऽस्मिꣳश्च लोꣳकेऽमुष्मिꣳश्च, पूर्वास्य जनतामायतः कीर्तिरागछति य एवꣳ वेद ॥ ११ ॥ ६५-७२

घृतं च वै मधु च प्रजापतिरासीद्, यतो मध्वासीत् ततः प्रजा असृजत, तस्मान्मधोः प्रजननमस्ति, तस्मान्मधुना न प्रचरन्ति, यातयामꣳ हि तदाज्येन प्रचरन्त्य,—यातयामꣳ वा एतत् प्राजापत्यं घृतं,—मयातयामा देवानां प्रजापतिर्गार्हपत्येऽधिश्रयति, पत्न्यवेक्षते, ऽन्वारम्भो वा एष यज्ञस्य यत् पत्न्या, यज्ञमेनामन्वारम्भयत्य,—थो यत् पत्नी यज्ञे करोति मिथुनꣳ वा एतत् क्रियते प्रजात्या, अमेध्यꣳ वा एतदयज्ञियꣳ यत् पत्न्यवेक्षत, आहवनीयेऽधिश्रयति, पुनात्येवैनान्, मेध्यमेनद्यज्ञियं करोति, स्फ्यस्य वर्त्म सादयति रक्षसामपहत्यै,

---

[ ११ ] तै. ब्रा. ३,२,१ । कपि. ४७,९ ।

[ १२ ] मै. १,१,११ । तै. ब्रा. ३,३,४ । काठ. ३१,९ । कपि. ४७,९ । वा. ५,१५;१,२९ । काण्व. ५,२०;१,४६ ।

देवस्त्वा सवितोत्पुनात्विति, सवितृप्रसूत एवैनदुत्पुनाति, हविरसि वैश्वानरमिति, द्वादशैता व्याहृतयो, द्वादश मासाः संवत्सरः, संवत्सरेण वा एतच्चेज इन्द्रियं वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त, उभयतो वैश्वानरं भवत्यु, भयतो वैश्वानरं ह्येत, न्निष्टेजा अस्य निर्वीर्यो भ्रातृव्यो जायते, ऽथो मृध्रतर एव भवति, देवाश्च वा असुराश्च संयत्ता आस, न्तस इन्द्र एतमवकाशमपश्यत्, तेनासुरानभ्युभव, दुभि भ्रातृव्यं यज्ञेन भवति य एवं विद्वान् यजता, आज्येनान्यानि हवींष्यभिघारयन्ति केनाज्य, मिति ब्रह्मवादिनो वदन्ति सत्येन वा आज्यमभिघृतं, यदाह, सत्येन त्वाभिघारयामीति, चक्षुर्वै सत्यं, चक्षुर्यजमानः प्रदधाति, संमील्यैतद्यजुर्वदति, न चक्षुः प्रदधात्या, ज्यं वै यज्ञो, यज्ञो विष्णुः ॥ ७३

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदा । समूढमस्य पांसुरे ॥ ७४

इति यदोदनपचनेऽधिश्रित्याथ गार्हपत्येऽथाहवनीयेऽधिश्रयत्येतद्वाव तत् त्रिर्विष्णुर्विक्रमते, प्रत्युष्टं रक्षा, इति रक्षसामपहत्यै, स्रुचः संमार्ष्टि, पुनात्येवैना, मेध्या एना यज्ञियाः करोति ॥ अनिशिताः सपत्नक्षयणीः ॥ इत्यनिशिता ह्येताः सपत्नक्षयणीः, स्रुवं संमार्ष्टि, पुमांसं वा आसां तदग्रे संश्यत्य, थ जुह्व, मथोपभृत, मथ ध्रुवा, मसा आदित्यः स्रुवो, द्यौर्जुहू, रन्तरिक्षमुपभृत्, पृथिवी ध्रुवे, मान्वा एतल्लोकान् यथापूर्वं संमाष्टर्ये, भ्यो लोकेभ्य आत्मानं परिदत्तेऽहिंसायै, जुह्वमग्रे संमाष्टर्या, त्मा वै जुहू, रात्मानमेवोपैत्य, थोपभृतं, प्रजा वा उपभृत्, प्रजामेवोपैति, परेव ह्यात्मनः प्रजा, ऽथ ध्रुवां, पशवो वै ध्रुवा, पशूनेवोपैति, पर इव हि प्रजायाः पशवो, यदुत्तानाः संमृज्यादप्रतिष्ठायुकं रेतः स्याद्, यन्नीचीरप्रतिष्ठायुकं रेतः स्यात्, तिरश्चीः संमार्ष्टि, तिर्यग्वै रेतः सिच्यते, प्रतिष्ठायुकं रेतो भवति, यदग्रेण मुखं दण्डं च संमृज्याद्रक्षोभ्यश्चाभुवेभ्यश्च समदं दध्या, दग्रेण मुखं संमार्ष्टि, जघनेन दण्डं, न रक्षोभ्यश्चाभुवेभ्यश्च समदं दधात्य, न्तरतो जुह्वं प्राचीं संमार्ष्टि बहिष्टात् प्रतीचीं, बहिष्टादुपभृतं प्राचीमन्तरतः प्रतीचीं, सर्वतः समाहाय ध्रुवां प्राणानेवास्य यथापूर्वं कल्पयति, यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृ, च्चतुर्गृह्णञ्जुह्वां भूय आज्यं गृह्णात्य, ष्टौ गृह्णन्नुपभृति कनीय, उपस्तित भ्रातृव्यमकृत ॥ १२ ॥

७५—७७

[ इदं विष्णुर्वि चक्रमे० । ऋ. १,२२,१७; सा. २२२,१६६९; अथर्व. ७,२६,४; तै. सं. १,२,१३,१; नि. १२,१९ ]

बर्हीरासादयेद्, यावतीर्वै प्रोक्षणीरासादयति तावतीरस्याममुष्मिंल्लोक आप,—स्तस्माद्बर्हीरा-
साद्या, अग्नेर्मेधोऽपाक्रामत्, स कृष्णो भूत्वा वनस्पतीन् प्राविशद्, यदाह, कृष्णोऽस्या-
खरेष्ठो, अग्नये घृतं भवेति, तमेव मेधमवरुन्द्धे, वेदिरसि, बर्हिषे त्वा जुष्टं प्रोक्षामीति,
प्रजा वै बर्हिः, पृथिवी वेदि,—रस्याꣳ वा एतत् प्रजा स्वगाकरोति, यदुपरिष्टात् प्रोक्ष्याध-
स्तात् प्रोक्षति तस्मादुपरिष्टाद्वृष्टादधस्तादोषधयो जायन्ते ॥ ऊर्जां पृथिवीꣳ यछत ॥ इत्यस्यामू-
र्जमदधात्, तस्मादिमां प्रजा उपजीवन्ति, विष्णोः स्तु३पोऽसी,—ति मुखतः प्रस्तरं गृह्णाति
मुख्यमेनं तेन शीर्षण्यं करोति, यावद्वस्तेन पर्याभुयात्तावन्तं गृह्णीया,—दक्षोधुको यजमानो
भवति, नोर्ध्वमुन्मृज्याद्, यदस्य वित्तꣳ वेद्यं तत् प्रमृज्या,—न्नावाचीनमवमृज्याद्,
यदेनमागमिष्यत् तत् प्रतिनुदेत्, न विधूनुयात्, प्रजां पशून् विधूनुयाद्, यदुपतिष्ठेत्तदुपसं-
गृह्णीयाद्, यथाशितायोपचिनोत्येवमेव तद्दक्षिणतः शुल्बꣳ स्तृणाति, तस्माद्दक्षिणतो नीवी,—
रुरु प्रथस्वोर्णम्रदुमिति, प्रथयत्येवैनत्, स्वासस्थं देवेभ्या इति, देवेभ्य एवैनत् करोति,
प्रस्तरं धारयन् परिधीन् परिदधाति, स्वयꣳ वा एतद्यजमान आत्मानं परिधत्तेऽहिꣳसायै,
न पुरस्तात् परिदधात्य,—द्यन्वा असा आदित्यो रक्षाꣳस्यपाहतो,—द्यन्नेवास्मा असा आदित्यो
रक्षाꣳस्यपहन्त्यू,—र्ध्वे समिधा आदधात्यु,—परिष्टादस्मात्तेन रक्षाꣳस्यपहन्ति, द्वे आदधाति
मिथुनत्वाय, विधृती स्था इति, विधृती एवैने करोति ॥ अदित्यास्त्वोपस्थे सादयामि ॥
इती,—यꣳ वा अदिति,—रस्यामेवैनमसीषदद्, वसूनाꣳ रुद्राणामादित्यानाꣳ सदोऽसीत्ये,—ता
वा एतामग्रे देवतामभ्युजयꣳ,—स्ताभ्य एवैनत्सदः करोति, द्यौरसि जन्मना जुहूर्नाम प्रिया
देवानां प्रियेण नाम्ना ध्रुवे सदसि सीदेत्ये,—तद्वा आसां प्रियं नाम यद् घृतवत्, सदेवा-
वरुन्द्धे, ता विष्णो पाहि, पाहि यज्ञं, पाहि यज्ञपतिं, पाहि माꣳ यज्ञ३न्यमिति,
यथा हैष ते भागस्तꣳ रक्षस्वेत्ये,—वꣳ वा एतद्विष्णुमाहै,—तत्ता आज्यं, तद्रक्षस्वेति,
वेदिर्देवेभ्योऽपाक्रामत्, तां देवा वेदेनाविन्दꣳ,—स्तद्वेदस्य वेदत्वꣳ, स्त्री वेदिः, पुमान्
वेदो, यद्वेदेन वेदिꣳ संमार्ष्टि मिथुनत्वाय, संततमाहवनीयात् स्तृणन्नेति यज्ञस्य संतत्यै,
तꣳ संततमुत्तरेऽर्धमा३सेऽभियजते, वनस्पतीनाꣳ वा एष परिवेष्टा यदुपवेष, ऋद्धा अस्य
वेशा भवन्ति य एवꣳ वेद, पुरस्तात् प्रत्यञ्चमुपहन्ति, तस्मात् प्रतीचीनावसिता वेशाः,

[१३] मै. १,१,११—१२ । तै. ब्रा. ३,३,६ । काठ. ३१,१० । कपि. ४७,१० । वा. २,१—३,६ । काण्व. २,१–२, ४,७–९ ।

*

स्थविमत उपहन्त्य,—नतिवादिन एनं वेशा भवन्ति, सर्वस्मै वै यज्ञो क्रीयते, सर्पा वा उपवेषा, वल्मीकि उत्करो, यदुपवेषमुत्करं उपहन्ति तस्मात् सर्पाणां वल्मीको गृहाः ॥

॥ १३ ॥ ७८–८२

भुवनमसि ॥ इति भूतिमाशास्ते ॥ विप्रथस्व ॥ इति प्रथयत्येवैनु,—दितं इन्द्रस्तिष्ठन् वीर्यमकृणोदेवताभिः समारभ्येत्य,—तो हीन्द्रस्तिष्ठन् वी३र्यमकृणोदेवताभिः समारभ्य ॥ जुह्वे,—ह्यग्निष्ट्वा ह्वयति, देवान् यक्ष्यावो देवयज्याया, उपभृदेहि, देवस्त्वा सविता ह्वयति, देवान् यक्ष्यावो देवयज्यायै ॥ इति, न वा एतं अविदुपा स्वादाने इव वरुणपाशा३न् ह्याक्रामत्येताभिरेने देवताभिरादत्ते वरुणपाशानामनाक्रमाय, विष्णोः क्रमोऽसीत्य,—तिक्रामति यज्ञस्यानवक्रामायो,—ध्वो अध्वरो दिविस्पृगहुतो यज्ञो यज्ञपते,—रित्यृजुमूर्ध्वमाघारमाघारयति यज्ञस्याहूर्छायै,—न्द्रवान्त्स्वत्रा,—निति सेन्द्रं यज्ञमकृता,—ऽथो इन्द्रियं तेनावरुन्द्धे ॥ वसुमतस्ते छायामुपस्थेषम् ॥ इत्यग्निर्वै वसुमा,—नग्नेरेव छायामुपतिष्ठत, ऋजुमूर्ध्वमाघारमाघारयेत्, प्राणो वा आघारः, सर्वमायुर्यजमान एति, यं द्विष्यात्तस्याघार्यं कुधुं छिन्द्यात्, प्राणमस्य छिनत्ति, ताजक् प्रमीयते, शिरो वा एतद्यज्ञस्य यदाघार, आत्माज्यं, यदाघारमाघार्योपभृता समञ्ज्याच्छिरो, यज्ञस्य प्रछिन्द्या,—दाज्यधान्या समनक्ति ॥ ८३–९०

समक्तमग्निना हविः समक्तं हविषा घृतम् ॥ इत्यात्मन् यज्ञस्य शिरः प्रत्युधा,—दथो मनु एवं यज्ञे प्रतिदधाति, स्तनं स्तनिनीः प्रजा उपजीवन्ति, किमस्तना, इति ब्रह्मवादिनो वदन्त्य,—सुभी रिहाणा व्यन्तु वया इत्ये,—तद्वाव ता उपजीवन्ति, वशा पृश्निर्भूत्वा मरुतो गछंति, मरुतो वै वृष्ट्या ईशते, तेऽस्मै वृष्टिं निनयन्ति, ततो नो वृष्ट्यावर्तेति, मरुद्भ्य एव वृष्टिं वनुते, चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाहीति, चक्षुरेवास्य पाति, श्रोत्रपा अग्नेऽसि, श्रोत्रं मे पाहीति, श्रोत्रमेवास्य पाति, तनूपा अग्नेऽसि, तन्वं मे पाहीति, तन्वमेवास्य पाति, यन्मे अग्न ऊनं त३न्वस्तन्मा आपृणेत्या,—शिषमेवाशास्ते ॥ ९१–९२

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः ।
तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै ॥ ९३

---

[ १४ ] मै. १,१,१३ । तै. ब्रा. ३,३,७,५—११ । काठ. ३१,११ । कपि. ४७,११ । वा. २२,३;५,४२;१२,५,२,८, १६–१८,२१;१४,१७;३,१७ । काण्व. २४,३;५,५३;१३,६;२,१२,३२–३५,३९;१५,१७;३,२३—२४ ।
[ विष्णोः क्रमोऽसि । अथर्व. १०,५,२५–३५ ]

इति यजुषैव युज्यन्ते, यजुषा विमुच्यन्ते, सꣳस्रावभागाः स्थेषा बृहन्ता, इति परिधीन् प्रहृत्याभिजुहोत्य,—ग्नयो वा एते तान् प्रीणाति, ताञ्शमयति भागधेयेन, ब्रह्मवादिनो वदन्ति, स त्वा अध्वर्युः स्याद्, यो यतो यज्ञं प्रयुङ्क्ते तत् प्रतिष्ठापयतीति, देवा गातुविदो गातुꣳ वित्वा गातुमित, मनसस्पते सुधात्विमꣳ यज्ञं दिवि देवेषु वाते धाः स्वाहेत्य,—तो वा अध्वर्यु-र्यज्ञं प्रयुङ्क्ते, तदेवैनं प्रतिष्ठापयति ॥ १४ ॥ ९४

[ २०५७ ]

॥ इति खिलकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

अथ द्वितीयः प्रपाठकः ।

## गोनामिकः ।

प्रजापतिर्वा एक आसीत्, सोऽकामयत, बहुः स्यां, प्रजायेयेति, स मनुसात्मानम-ध्यायꣳत्, सोऽन्तर्वाणभवत्, स विजायमानो गर्भेणाताम्यत्, स तान्तः कृष्णः श्यावोऽभवत्, तस्मात्तान्तः कृष्णः श्याव इव भवति, तस्य वा असुरेवाजीवत्, तेनासुनासुरानसृजत, तदसुराणामसुरत्वꣳ, स यस्तदसुराणामसुरत्वꣳ वेदासुमान् ह भवति, नैनमसुर्जहाति, सोऽसुरान्त्सृष्ट्वा पितेवामन्यत, तेनु पितॄनसृजत, तत् पितॄणां पितृत्वꣳ, स यस्तत् पितॄणां पितृत्वꣳ वेद पितेव ह समानानां भवति, यन्त्यस्य पितरो हवं, तस्मै पितॄन्त्ससृजानाय दिवाभवत्, तेनु देवानसृजत, तद्देवानां देवत्वꣳ, स यस्तद्देवानां देवत्वꣳ वेद दिवा ह वा अस्मै देवत्रा भवति, यन्त्यस्य देवा देवहूतिꣳ, स देवान्त्सृष्ट्वामनस्यतेव, तेन मनुष्यानसृजत, तन्मनुष्याणां मनुष्यत्वꣳ, स यस्तन्मनुष्याणां मनुष्यत्वꣳ वेद मनस्वान् ह भवति, नैनं मनो जहात्यु,—त यदतीव वदत्यति वा चरति तिष्ठन्तेऽस्य मनुष्या मनुषे ततो या योनिरुदशिष्यत सा गौरभवद्, योनिर्वै नामैषे,—तद्वा अस्याः प्रत्यक्षं नामा,—ऽथो आहुः, परोक्षमिति, प्र सहस्रं पशूनाप्नोति य एवꣳ वेद, तस्याꣳ वै पयः पर्यपश्यꣳ,—स्तां देवा अदुह्र हरितेन पात्रेणामृतं, दुꣳहेऽमृतꣳ य एवꣳ वेदा,—ऽथ पितरोऽदुह्र रजतेन पात्रेण स्वधां, दुहे स्वधाꣳ य एवꣳ वेदा,—ऽथ मनुष्या अदुह्र दारुपात्रेणान्नꣳ वत्रं, दुहेऽन्नꣳ वत्रं य एवꣳ वेदा,—ऽथासुरा अदुह्रायस्पात्रेण स्ववृता सुरां, तेऽस्रत्र,—न्त्सवत्यस्य भ्रातृव्यो य एवꣳ वेद, तस्मात् स्ववृता न हस्ता अवनेनिजीत, न पिबे,—देते वा अस्या दोहाः, सर्वैरेवास्या दोहैः सर्वैः

कामैर्भुङ्क्ते य एवं वेद चत्वारि वै नभांसि, देवाः पितरो मनुष्या असुराः, सर्वेषु ह वा एतेष्वेभ्यो नभ इव भवति य एवं वेद, तां वा अकामयन्त, मयि स्यान्मयि स्यादिति, तां देवाः काम्ये ॥ इत्याह्वयन्त्सा वा एनानभ्यकामयतो,—भये ह वा एनं देवमनुष्या अभिक्रामयन्ते वारुका एनमार्त्विज्ये भवन्ति य एवं वेद ॥ श्रव्ये ॥ इति मनुष्याः, सा वा एनानशुश्रूषतो,—भये ह वा एनं देवमनुष्याः शुश्रूषन्ते पूर्वास्य जनतामायतः कीर्तिरागच्छति य एवं वेद ॥ इलान्दे ॥ इति पितर,—स्तेभ्यो वा अतिष्ठत, तिष्ठन्त्यस्मिन् पशवो य एवं वेदा,—ऽथ यथासुरा आह्वयंस्तेभ्यो वा अत्रसद्, यं द्विष्यात्तस्य तथा गोष्ठ आह्वयेद्रसन्त्यस्मात् पशव, एतैरेव जुहुयात् ॥ गोनामैः संशृङ्ग्यां गोर्मूर्धन् पशुकामः ॥ काम्यायै स्वाहा श्रव्यायै स्वाहेलान्दायै स्वाहा ॥ इति गोष्ठो वै नामैषा लक्ष्मीः, स्वे वा एतद्गोष्ठे यजमानो भ्रातृव्यस्य पशून् वृङ्क्त, एतैर्वै ते तां अवृञ्जत, तैरेवैना वृङ्क्ते, संशृङ्गी भवति पशूनां परिगृहीत्यै, यो वै चक्षुषो विभक्तिं वेद चक्षुष्मान् ह भवति, नैनं चक्षुर्जहाति, यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामो, ऽसौ वा आदित्यो देवानां चक्षुः, पश्यन् ह वै देवत्रा करोति, प्र देवयानं पन्थां जानाति य एवं वेद, यज्ज्योत्स्नायां पश्यामस्तत् पितॄणां चक्षुषा पश्याम,—श्चन्द्रमा वै पितॄणां चक्षु,—र्न ह वा एनममुष्मिंल्लोके चक्षुर्जहाति प्र पितृयाणं पन्थां जानाति य एवं वेद, यत्तमिस्रायां पश्यामस्तन्मनुष्याणां चक्षुषा पश्याम, एतावद्धावे नः स्वं चक्षु,—र्न ह वा एनमस्मिंल्लोके चक्षुर्जहाति, सर्वमायुरेति य एवं वेद, यदग्नेरन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामा, उच्च वा एष दीप्यते नि च रिष्यति, दीप्यमानं भ्रातृव्यस्य गृहाद्धरेद्, रयिमेवास्य पुष्टिं हर,—त्यां तु सूर्यस्योदेतोर्जागृयाद्, यत्सत्यादार्तिमार्छेत्तज्जागरितव्यं, रयिमेव पुष्टिमनुजागर्ति ॥ १ ॥ १–९

यो वा इडां धेनुं वेद सर्वा ह वा अस्मै दिशो धेनवो भवन्ति, सर्वे प्रतिजना दानकामा,—स्तामिष्वाशनीरामित्रशोचनिर्विदांचकार, तस्मै सर्वा दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तस्मात् स सर्वैः प्रतिजनैर्व्यवहतोपजनन्त्संन्त्सर्वा ह्यस्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तद्य एवं वेद सर्वा एवास्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामा,—स्तस्या वा इयमेव पादो, ऽन्तरिक्षं पादो, द्यौः पादः, समा पादो, ऽथो आहुः, कृषिः पादा इति, तेन प्रति त्वदानीं तिष्ठति न त्वदानी, यदा

सुसस्यं भवत्यथ प्रतितिष्ठति, यदा न सस्यं भवत्यथ न प्रतितिष्ठति, भवति ह वा अस्य सस्यं नास्य सस्यꣳ व्यृध्यते य एवꣳ वेद, तस्या वा अद एव पृष्ठ—मन्तरिक्षमात्मे,—यमुरो, दिशः पार्श्वे, समुद्रौ कुक्षी, असा आदित्यः शिरो, ऽग्निरा३स्यꣳ, वातः प्राणो, गायत्र्युभिधानी, सर्वमायुरेति य एवꣳ वेदो,—धरुत्तरवेदिः, पवमानो वत्सं, एष वा एनां प्रस्तौति, प्रत्तान् ह वा इमाँल्लोकान् दुहे य एवꣳ वेद, बृहद्रथन्तरे द्वौ स्तनौ, वामदेव्यं च यज्ञायज्ञियं च द्वा, ओषधीरेव देवेभ्यो रथन्तरेणादुह, पशून् बृहता,—ऽऽपो वामदेव्येन, यज्ञꣳ यज्ञायज्ञियेन, तद्य एवꣳ वेदौषधीरेवास्मै रथन्तरेण दुहे, पशून् बृहता,—ऽऽपो वामदेव्येन, यज्ञꣳ यज्ञायज्ञियेने,—डा वा इदꣳ सर्वꣳ, स सहस्रं पशून् प्राप, प्र सहस्रं पशूनाप्नोति य एवꣳ वेद ॥ २ ॥ १०

यत्र प्राचीनप्रवणꣳ समूलं भूम्या स्यात् तदुपोदये सूर्यस्य हस्ता अवनिज्य दर्भस्तम्बं उदशरावं निनयेत्, कामंकामं मा आवर्तय ॥ इति कामेनैवास्मै काममावर्तयति यत्कामो भवति, यो वै कामꣳ साक्षाद्विद्द ताजग्घ वा एनꣳ स कामा आगच्छति यत्कामो भवति, पशुषु वा अस्माकं कामः, पशूनामोषधीष्वो,—षधीनामप्स्वो,—षधीरेव कामेन समस्राट्, ता अस्मै कामꣳ समर्धयन्ति यत्कामो भवत्या,—प एवा,—ऽस्या वा एष वत्रिरुत्सृष्टश्चरति लोमशो लोमशाया,—स्तस्मादेषा शाश्वसत्यैत्य,—ग्निर्ह्यस्या आ३स्यꣳ, वातः प्राणो, यत्र गोभिः संगच्छेत तद्ब्रूयात् ॥ प्रशस्ताः स्थ कल्याण्यः ॥ इतीयꣳ वा एषे,—माꣳ वा एतत् सभागयत्, यत्रासुका अस्मात् पशवो भवन्ति य एवꣳ वेद, देवाश्च वा असुराश्चास्पर्धन्ता,—ऽदितिर्देवेष्वासीत्कुस्तासुरेषु, ते देवा अमन्यन्त, यद्यभिजेष्यामः कुस्तायाः शिर आहनिष्यामा इति, यद्यभिजेष्यामा, इत्यसुरा अमन्यन्ता,—ऽदित्याः शिर आहनिष्यामा इति, तां देवा अभिजित्याघ्नत, यस्य वै जितꣳ यस्य विजितं तस्यैषा गृहे हन्यत, एषा वै क्षुत्, क्षुधꣳ वा एतद्धते, तद्य एवꣳ विद्वानेकाष्टकायां गाꣳ हते संवत्सरायैव क्षुधꣳ हते, प्रजापतिर्वा एक आसीत्, सोऽकामयत, बहु मनु स्यां प्रजायेयेति, स आत्मानमैक्षत, स मनोऽसृजत, तन्मन एकधासीत्, तदात्मानमैक्षत, तद्वाचमसृजत, सा वागेकधासीत्, सात्मानमैक्षत, सा विराजमसृजत, सा विराडेकधासीत्,

---

[३] मा. श्रौ. ९,५,१।

सात्मानमैट्ट, सा गामसृजत, सा गौरेकधासीत्, सात्मानमैट्ट, सेडामसृजत, सेडैकधासीत्, सात्मानमैट्ट, सेमान् भोगानसृजत, यैरस्या इदं मनुष्या भुञ्जत एते वा अस्या भोगाः, सर्वैरेवास्या भोगैः सर्वैः कामैर्भुङ्क्ते य एवं वेद, गौर्वै वाग्, गौर्विराड्, गौरिडा, गौः खल्वेव गौ,—गौरिदं सर्वं, सर्वा ह वा एनमेताः श्रयन्ते य एवं वेद, यद्वै तदात्मानमैट्ट सेडाभवत्, तदिडाया इडात्वं, स यस्तदिडाया इडात्वं वेदेद्धे ह वै स्वमात्मानं भूत्यै ॥ ३ ॥ ११-१४

या रोहिणी तामरुणा, तां गौरी, तां बभ्रूः ॥ तदिन्द्रा उदाजत वसुर्नाम रूपं पशूनाम् ॥ विन्दते वसु, न वसु रुणद्धि य एवं वेद, या शितिपृष्ठा तां मन्दि,—स्तां मैनी, तां शबली, तां शितिबाहु,—स्तां शुद्धवाला ॥ तद्बृहस्पतिरुदाजतेडा नाम रूपं पशूनाम् ॥ बह्वीर्ह वा एनमिडाः श्रयन्ते य एवं वेद, या पृषती तां पिशङ्गी, तां सारङ्गी, तां कल्माषीं, तां पृश्नि,—स्तां श्वेता ॥ तन्मरुता उदाजन्त ज्योतिर्नाम रूपं पशूनाम् ॥ ज्योतिष्मान् भवति य एवं वेद, या सुरूपा तां श्यामा, तां श्यैनी, तां कृष्णा ॥ तत् प्रजापतिरुदाजतायुर्नाम रूपं पशूनाम् ॥ आयुष्मान् भवति य एवं वेद, चतस्रः प्रथमा,—श्चतस्र उत्तमा, द्विः षण्मध्यतं,—स्ता द्विर्दश, दशाक्षरा विराड्, वैराजाः पशवः, पशूनेवावरुन्द्धे॥ वस्व्यै हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्ताद्बहिः पवमानस्य वदेत् ॥ इडायै हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तादाज्यानां वदेत् ॥ ज्योतिषे हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तान्माध्यंदिनस्य पवमानस्य वदेत् ॥ आयुषे हिंकुरु, तस्यै प्रस्तुहि, तस्यै मेऽवरुद्धयै ॥ इति पुरस्तादार्भवस्य पवमानस्य वदेत् ॥ यज्ञो वै पशूनामायतनं, स्वे वा एतदायतने यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, ऽनपक्रामुका अस्मात् पशवो भवन्ति ॥ ४ ॥ १५-३२

वसीयस्येहि, श्रेयस्येहि, भूयस्येहि, चित्ता एहि, दधृष्येही,—डा एहि, सूनृता एहि, चिदासि, मनासि, धीरसि वस्वी रन्तिः सुमनाः ॥ सूनरि विश्वा त्वा भूतान्युप्राणन्तु, विश्वा त्वं भूतानुप्राण, भूयस्यायुरसी,—ष्टिरसि, संरूपवर्षा एहि ॥ ३३-३४

एमासन्तु सर्पतेमौ भद्रौ धुर्या अभि । नीव शीर्षाणि मृढ्वम् ॥ ३५

[ ५ ] वा. ४,१९ । काण्व. ४,२५ । मा. श्रौ. ९,५,१ ।

सा नः सुप्रतूर्तिः प्रिया नः सुहार्णः प्रियवनिर्मघवनिरन्ता एहि, जुष्टा एही,—डा एह्य,-
—दिता एह्यु,—पहूत उपहवं तेऽशीय, सुहवा ना एह्हि सह रायस्पोषेण, देवीर्देवीरभि मा
निवर्तध्वम् ॥ ३६
स्योना स्योनेनु घृतेन मा समुक्षत ॥ ३७
नमे तदुपदम्भिषर्धृषिर्ब्रह्मा यद्ददौ । समुद्रादुदजनि वः स्रुचा ॥ ३८
वारग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशम् ॥ ५ ॥ ३९

वसीयस्येहीति, ब्रह्म वै वसीयो, ब्रह्म वा एतदुत्याह्वयति, श्रेयस्येहीति, क्षत्रं वै श्रेयः, क्षत्रं वा एतदुत्याह्वयति, भूयस्येहीति, विड्वै भूयसी, विशं वा एतदुत्याह्वयति, चित्ता एहीति, मनो वै चित्तं, मनो वा एतदुत्याह्वयति, दधृष्येहीति, वाग्वै दधृषि, वाचं वा एतदुत्याह्वयती,—डा एहीति, पशवो वा इडा, पशून् वा एतदुत्याह्वयति, सूनृता एहीत्य,—न्नं वै सूनृता,—न्नं वा एतदुत्याह्वयत्ये,—ता वै सप्त देवगव्य,—स्ताः क्रीतो वैतहोत्रो विदांचकार, ताभिरदः कुरूणां कौन्ते पशूनत्याह्वयत्, ताः कुरवो ब्राह्मणेष्वन्वैच्छं,—स्ताः कुमारवत्याश्वदक्षिणा अविन्द,—न्त्सोऽब्रवी,—न्मा स्वक्ष्युते,—ताभिर्वा अहमेता अत्याह्वयिष्यामी,-—तराभिरितरा, यानि खलु वा एतासां प्रियाणि धामानि तानि क्रीतो न वेदेति, स संयत्ते संग्रामे छदिर्दर्शे, एताभिरेवैता अत्याह्वयिष्यामी,—तराभिरितरा, यतरत्र खलु वा एता अत्याह्वयन्ते तत् पशवोऽभिसंक्रामन्ति, यत्र पशवस्तद्देवा, यत्र देवास्तदिन्द्रो, यतरान्वा एतेऽभिसंक्रामन्ति ते जयन्ति, जयति संग्रामम् ॥ ६ ॥ ४०

सा वै सृष्टोभयान् देवमनुष्यानत्यमन्यत, तां देवा दर्शपूर्णमासाभ्यामुपप्रास्तृणत, तां वा एतदाप्नुवन् यदिडां, तां वा एतदाप्त्वा हरन्तो मन्यन्ते यदिडामुपह्वयन्ते, यर्हि तूष्णीमुपह्वयेत तर्ह्येताः सप्त वुदेद्, यर्ह्युच्चैस्तर्ह्युत्तराः सप्त, धाम धामासां वर्णं वर्णमुपगछ,-—त्या ह वा एनमप्रतिकशातं गछति य एवं वेद, यत्र स मूला औषधीरुपगछेत् पशून् वा तदेता एव सप्त वुदेद्, धाम धामासां वर्णं वर्णमुपगछ,—त्या ह वा एनमप्रतिकशातं गछति य एवं वेद, सप्त स्थुवीर्येण याजयेद्, यस्यु सप्त स्थविराश्वरमामन्तमा स्यु,—र्वसीयस्येहि, श्रेयस्येही,—त्येतंदेतदेवास्मा अत्याह्वयति, यो वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां साण्डं

---

[ ६ ] मा. श्रौ. ९,५,१ ।

[ ७ ] वा. ३७,१२;२,२६;१०,२५ । काण्व. ३७,१२;२,४८;११,३५ । मा. श्रौ. ९,५,१ ।

वत्सतरमपप्रमयेत ॥ इलान्दाः स्थ ॥ इतीलान्दा हि पशवः पूष्णो नक्षत्रं पोषयिष्णु ॥ इति विश्येषु वा एतच्चरति पूष्णो नक्षत्रं पोषयिष्णु, तदेवापधापयते, तमपाकुर्वीत ॥ आयुर्मे दा, वर्चो मे दा, रयिं मे दाः, पुष्टिं मे दाः ॥ इति रयिमेवास्य पुष्टिं हरति, तमितोऽभिसृज्याथे-ऽतोऽत्याह्वयेद्, वसीयस्येहि, श्रेयस्येही,—त्येतदेतदेवास्या अत्याह्वयति, नास्य किंचनो-दशिषद्, ग्रामकामं याजयेत् सारस्वत ऋग्भ्यां, संवत्सरो वै सरस्वा,—न्त्संवत्सरेणैवास्मै ग्रामं च्यावयति, वसीयस्येहि, श्रेयस्येही,—त्येतदेतदेवास्या अत्याह्वयति, पशुकामं याज-येत् सारस्वत ऋग्भ्यां, संवत्सरो वै सरस्वा,—न्त्संवत्सरेणैवास्मै पशूंश्च्यावयति, वसी-यस्येहि, श्रेयस्येही,—त्येतदेतदेवास्मा अत्याह्वयति, सर्वासां दुग्धे चतुःशरावमोदनं पचेद् ब्राह्मणेभ्यः पशुकामो, यच्चतुःशरावो दिग्भ्य एवास्मै तेनु पशूनवरुन्द्धे, यद् ब्राह्मणेभ्यो ब्रह्म-णस्तेन, न छिन्नं देयं, पशुकाम इव ऽह्येषं, वासो हिरण्यं वा देय,—मीजानस्यास्य पशवो भूयांसो भवन्ति ॥ ७ ॥　४१-४६

प्रजापतिर्वै न व्याहरत्, स आत्मन्येव पुण्यमायच्छ,—दात्मनः पुण्यं न निरवद,—देतद्वै तद्य-जुर्वेदुन्नान्यथा ब्रूयात् ॥ पुण्यं प्रशस्तम् ॥ इति ब्रूया,—दात्मन्येव पुण्यं यच्छत्या,—त्मनः पुण्यं न निर्वदति, यामदानीयाय ददाति तामस्य पशवोऽन्वपक्रामन्ति, यदि मन्येता,—दानीया-यादामित्येतदेव यजुर्वदे,—न्नमे तदुपदम्भिषधृपित्रिह्मा यददा इति, तदेवैतेनापूरयति, तदाप्या-ययति, समुद्र इव ह वा अस्य व्यच्यमानो न क्षीयते य एवं वेद ॥ वीरवतीर्भूयास्त या नो वीरवतोऽकर्त ॥ इति पुंसांसं जातमभिमन्त्रयेत ॥ भूयसीर्भूयास्त या नो भूयसोऽकर्त ॥ इति स्त्रियं जाताम् ॥ अन्नादा भूयास्त ये नोऽन्नादानकर्त ॥ इति बलिहृतोऽभिमन्त्रयेत ॥ भूयांसो भूयास्त ये नो भूयसोऽकर्त ॥ इति सभासदः, पादौ प्रत्यवहरे,—देते वै पशवा, उपोप ह वा एनं पशवो यन्ति नापयन्ति य एवं वेद ॥ पुण्या पुण्यमसूं,—चित्रा चित्रमसूं,—हैडो मे भगवोऽजनिष्ठा मैत्रावरुण, ऊर्जा मे भगवः सह जनिष्ठाः, संविदं मे विन्द ॥ इति पुंसांसं जातमभिमन्त्रयेतो,—र्जैवास्मै सह जायते, गच्छति पशूनां संविदम् ॥ पुण्या पुण्यामसूं,—चित्रा चित्रामसूं,—हैडी मे भगवत्यजनिष्ठा मैत्रावरुणी, रायस्पोषेण मे भगवती सह जनिष्ठा, ज्ञात्रं मे विन्द ॥ इति स्त्रियं जातां, रायस्पोषेणैवास्मै सह जायते, गच्छति पशूनां ज्ञात्रं,

---

[ आयुर्मे दा० । अथर्व. २,१७,४ ]

[ ८ ] मा. श्रौ. ९,५,२ ।

ये प्राचीनमेकाष्टकाया जायन्ते पूर्वस्य ते सस्यस्योत्तमा, ये प्रतीचीनमपरस्य ते सस्यस्य प्रथ-
मा,—स्तानुभयान्त्सहाभिमन्त्रयेतो,—भयानेनान्त्सहावरुन्द्धे ॥ ८ ॥ ४७-६१

यो वै शक्तिं वेद स तच्च शक्नोति यच्च शिक्षती,—यं वै शक्ति,—यो वा अस्या भूयिष्ठ-
भाग्भवति स तच्च शक्नोति यच्च शिक्षति, भूयिष्ठभाग्घ वा अस्या भवति य एवं वेद, पशवो
वै शक्ति,—यो वै पशूनां भूयिष्ठभाग्भवति स तच्च शक्नोति यच्च शिक्षति, भूयिष्ठभाग्घ वै पशुमान्
भवति य एवं वेद, तस्या व्रतं न हते,—ति ब्रूयात् ॥ कुरुत, इति ब्रूया,—न्नान्तर्वत्नी,-
—ति ब्रूया,—द्विजन्या, इति ब्रूयाद्, भुवनमसि सहस्रमिन्द्राय त्वा सृमोऽददात् ॥ इति
सृमो वै नामासुर आसीत्, तस्येयं पृथिवी पशुभिः पूर्णासीत्, तानिन्द्रोऽवृङ्क्त, तस्मा-
दाहु,—रैन्द्राः पशवा इति, यावतीनामिदं करोमि भूयसीनामुत्तरां समां क्रियासम् ॥ इति
गवां लक्ष्म कुर्याद्, भूयसीनामेवोत्तरां समां करोति, पशवो वै सृष्टा एकैकं नक्षत्रमुपाति-
ष्ठन्त, तेन प्राजायन्त, न भूमानमगछं,—स्ते रेवतीमुपातिष्ठन्त, रेवत्यां प्राजायन्त,
रेवत्यां भूमानमगछं,—स्तस्माद्यत्किंच पशूनां कुर्वीत तद्रेवत्यां कुर्वीतो,—प ह्येनं पशवस्तिष्ठन्ति,
प्रास्य पशवो भवन्ति य एवं वेद, यस्य दक्षिणतः प्रतिभिन्नं दक्षिणत उपाश्वरत्तच्चत्वष्टुर्लक्ष्म
देवलक्ष्मं यज्ञियं यज्ञकामः कुर्वीतो,—प ह्येनं यज्ञो नमति, यस्योभयतः प्रतिभिन्नमुभयत
उपाश्वरत् तद्वायत्रं लक्ष्म पशव्यं पशुकामः कुर्वीत, पशुमान् भवति, यस्योभयतः प्रतिभि-
न्नमुभयत उपाश्वरत् तत् त्रैष्टुभं लक्ष्म प्रतस्य रूपं प्रतिष्ठाकामः कुर्वीत, गछति प्रतिष्ठां,
वसिष्ठस्य स्थूणाकर्ण्यो, वसिष्ठो वै रयिमपश्यत्, तामात्मन्नधत्त, यत्स्थूणाकर्णीः कुरुते
पशुष्वेव रयिं धत्ते, जमदग्नेः कर्करिकर्ण्यो, जमदग्निर्वै पुष्टिमपश्यत्, तामात्मन्नधत्त,
यत्कर्करिकर्णीः कुरुते पशुष्वेव पुष्टिं धत्ते, ऽसुराणां सास्नाकृतयः, क्षिप्रं वद्धीर्भवन्ति क्षिप्रं
पराभवन्त्य,—मेध्याः कर्णाः, क्षिप्रं वद्धीर्भवन्ति, यज्ञस्त्वेनानन्नूपनमतीव, निर्ऋत्याः
छिद्रकर्ण्यो, यच्छिद्रकर्णीः कुर्वीत निर्ऋतिरस्य पशोर्निगृह्णीया,—न्न प्रछिन्द्या कर्ण्यः कार्या
न दात्राकर्ण्यः, पराचीनमिव हि तन्निवृत्त,—मगस्त्यस्य विष्टयकर्ण्यः, कश्यपस्य कम्बुन्युद्ध-
स्ता, इन्द्रस्याक्लस्ता, अथो आहुः, प्रजापते,—रित्युभयं ज्येष्ठलक्ष्मं ज्यैष्ठ्यकामः कुर्वीत,
प्र समानानां ज्यैष्ठ्यमाप्नोति, प्रजापतिः पशूनसृजत, स वा असृगेव नासृजता,—ऽसृष्टं वा
एतत्, तदस्रोऽसृक्त्वं, क्रूरं पशूनां कृण्या, इति वै सोऽसृग्रास्रजत, क्रूरं वा एषं पशूनां
कुरुते योऽक्ष्णुते, यदक्षितास्तेनाक्षिता, अथ यदनाक्षिता इति श्रूयन्ते तेनाक्षिता,—स्तदाहु,-

[ ९ ] मा. श्रौ. ९,५,३ ।

*

—न वा एतमेता अमुत्रागच्छन्ति या अनक्षिता इति, तस्मादक्षित३व्या, न तेजनेनाक्ष्णुयाद्,
वज्रो वै तेजनं, यत्तेजनेनाक्ष्णुयाद्वज्रेण पशूनर्पये,—न्न श्यामेनायसा क्रूरं, तदशान्त,—मि-
क्षुकाण्डमप्सु वासयित्वा तेनाक्षित३व्या,—स्तद्धि शिवं, तच्छान्त,—मथो आहु,—र्लोहितेना-
यसेति, तद्धि शिवं, तच्छान्तम् ॥ ९ ॥ ६२–६५

इह प्रजा विश्वरूपा रमन्तामस्मिन् गोष्ठे विश्वभृतो जनित्रीः ।
अग्निं कुलायमभि संविशन्तीः समासृजन्तु पयसा घृतेन ॥ ६६

इति गाः सायमायतीरभिमन्त्रयेता,—ऽग्निर्वा एतासां योनि,—रग्निः कुलायं, स्व एवैना
योनौ स्वे कुलाये संवेशयति, नास्य पशवो नक्तमार्तिमार्छन्ति य एवं वेद ॥ ६७

सं वः सृजत्वर्यमा सं पोषा सं बृहस्पतिः । समिन्द्रो यो धनंजयः ॥ ६८
संजग्माना अविह्रुता अस्मिन् गोष्ठे पुरीषिणीः । स्वावेशा ना आगत ॥ ६९

इति गाः संसृजेद्या अस्य पुरा स्युर्याश्चान्यतो विन्देत्, पशवो वै घृत,—मग्नी रुद्रो,
यज्जुहुयाद्रुद्रायास्य पशूनपिदध्यात्, तत्संसृज्या एवो,—भयीर्हि, भूयसीर्भवन्ति, सं वः
सृजत्वर्यमेति, यज्ञो वा अर्यमा, यज्ञेनैवैनाः संसृजति, सं पूषेति, पुष्टिर्वै पूषा,
पुष्ट्यैवैनाः संसृजति, सं बृहस्पतिरिति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणैवैनाः संसृजति,
समिन्द्रो यो धनंजय इती,—न्द्रियं वा इन्द्र, इन्द्रियेणैवैनाः संसृजति, रेवती तन्तिः
पृथिवी माता, रेवतीरापा ओषधयः ॥ ता नो हिन्वन्तु सातये धिये जुषे ॥ इति तन्तिं वित-
नुयात्, तामनुमृज्यात् ॥ रय्या त्वा पुष्ट्यानुमार्ज्मि ॥ इति रय्यैवैनां पुष्ट्यानुमार्ष्टि, तस्या
व्रतं न रिक्ता स्या,—न्नोपर्युपरि संचरेयु,—र्नाभिवर्षेन्नाभितपे,—देतद्ध वस्तो रामकायनो विदां-
चकार तन्त्या वितनुनं, स सहस्रं पशून् प्राप, प्र सहस्रं पशूनाप्नोति य एवं वेद ॥
७०–७४

पिता वत्सानां पतिरघ्न्यानामुतायं पिता महतां गर्गराणाम् ।
रेतोधां त्वा यशोधां रायस्पोषायोत्सृजेत् ॥ ७५

इत्यृषभस्य कर्ण उत्सृजमानो वदेद्, रेतोधामेवैनं यशोधां रायस्पोषायोत्सृजते, यो

[ १० ] मा. श्रौ. ९,५,३ ।

[ सं वः सृजत्वर्यमा०। अथर्व. ३,१४,२ । संजग्माना अविह्रुता०। अथर्व. ३,१४,३ । पिता वत्सानां०। अथर्व. ९,४,२ ( प्र. पा. ) ९,४,४ ( पूर्वार्धः ) ]

वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां गोष्ठादेकविꣳशतिꣳ शकान्याहृत्यैकविꣳशतिमाहुतीर्जुहुया,-
-देकविꣳशतिर्वै मनुष्यलोका, मनुष्यलोकेभ्य एवास्मै पशूनवरुन्द्ध, एतैरेव जुहुयाद्गोनामैरग्रे-
त्वर्या गोर्भसदि पशुकामो, मुखꣳ वा एष पशूनां, मुखत एवास्मै पशून्निनयति ॥ १० ॥
७६

यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुपसं धाम पश्यमानः ॥ तासामयꣳ योनिरयं
गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात् ॥ यासां बृहस्पतिरुदाजतेडा नाम रूपं पशूनाꣳ
संगवं धाम पश्यमानः ॥ तासामयꣳ योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात्॥
यासां मरुत उदाजन्त ज्योतिर्नाम रूपं पशूनां मध्यंदिनं धाम पश्यमानाः ॥ तासामयꣳ योनि-
रयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुयात् ॥ यासां प्रजापतिरुदाजतायुर्नाम रूपं पशूना-
मपराह्णं धाम पश्यमानः ॥ तासामयꣳ योनिरयं गोष्ठ इह रयिः पुष्टिः । स्वाहा ॥ इति जुहुया,-
-देतानि वा अह्नो रूपाण्ये,-तेषु वा अह्नो रूपेषु देवाः पशूनाꣳ रूपाण्यवृञ्जत, तदेतेष्वेवाह्नो
रूपेषु यजमानो भ्रातृव्यस्य पशून् वृङ्क्ते, घृतेन जुहोति, पशवो वै घृतं, पशुभिरेव पशून्
वृङ्क्ते, तन्न संक्षर्यं, प्रातरेवान्तर्गोष्ठासु गोषु होतव्यꣳ, सर्वा एनाः सहावरुन्द्ध, एतैरेव
जुहुयाद्गोष्वाकृतासु, योनितो वा एतत् पशूनग्रही,-दपिहीनाः परिपरिणस्कृण्वन्त्ये,-तैरेव
जुहुयात्संग्रामे, ऽथाश्वानभिमन्त्रयेत ॥ मित्रभृतः क्षत्रभृता ओजोभृतो बलभृतो वयं जयेम वयꣳ
सहेम, वयं भवेम, वयं पुषेम ॥ इति जयति संग्रामम् ॥ रोहिणीर्वो वृञ्जे गायत्रेण छन्दसा,
ऽरुणा वो वृञ्जे त्रैष्टुभेन छन्दसा, गौरीर्वो वृञ्जे जागतेन छन्दसा, बभ्रुवो वो वृञ्जा आनुष्टु-
भेन छन्दसा गर्भान्वो वृञ्जे पाङ्क्तेन छन्दसा, रूपाणि वो वृञ्जे शाक्वरेण छन्दसा, सर्वान्
वो वृञ्जेऽनाप्तेन छन्दसा, तत् सप्त, सप्तपदा शक्करी, शाक्वराः पशवः, पशूनेवावरुन्द्धे,
गायत्री प्रथमा, गायत्र्युत्तमा, तेजो वै गायत्री ब्रह्मवर्चसं, तेजसा च वावास्मा एतद्
ब्रह्मवर्चसेन चोभयतः पशून् परिगृह्णाति ॥ ११ ॥ ७७-९१

प्रजापतिर्वै त्रीन्महिम्नोऽसृजताग्निꣳ वायुꣳ सूर्यं, ते चत्वारः पितापुत्राः सत्रमासत, ते
स्वेदꣳ समतौक्षꣳ,-स्तदभवत्, तद्वा अस्यैतन्नामाभूदिति, सत्रमभूदिति, तद्वा अस्यैते
नामनी क्रूरे अशान्ते, तस्मादेते न ग्रहीतव्ये, क्रूरे ह्येते अशान्ते, प्रजापतिर्वै स्वां
दुहितरमभ्यकामयतोषसꣳ, सा रोहिदभवत्, तामृश्यो भूत्वाध्यैत्, तस्मा अपु-

व्रतमछदयत्, तमायतयाभिपर्यावर्तत, तस्माद्वा अबिभेत्, सोऽब्रवीत्, पशूनां त्वा
पतिं करोम्य,—थ मे मा स्था इति, तद्वा अस्यैतन्नाम पशुपतिरिति, तमभ्यायत्यावि-
ध्यत्, सोऽरोदीत्, तद्वा अस्यैतन्नाम रुद्र इति, ते वा अस्यैते नामनी शिवे शान्ते,
तस्मादेते कामं ग्रहीतव्ये, शिवे ३ह्येते शान्ते, ततो यत् प्रथमꣳ रेतः परापतत् तदग्निना पर्यैन्द्ध,
तदासामघ्न्यात्वं, ततो यदत्यस्रवत्तद् बृहस्पतिरुपागृह्णात्, तदासामुस्रियात्वं,—मशकामेति,
तदासाꣳ शक्करीत्वं, गातुमविदामेति, तदासां गोत्वं,—मेतानि वा आसां नामानि,
सर्वैरेवासां नामभिः सर्वैः कामैर्भुङ्क्ते य एवं वेद, पशवो वै सृष्टा एतानि नक्षत्राण्यन्वपाक्रा-
मन् पौर्णमासीमष्टकाममावास्यां चित्रामश्वत्थं, तस्मात्तेषु गौर्नापाकृत्या, यामपाकुर्यात्तामस्य १२
पशवोऽन्वपक्रामेयुः ॥ १२ ॥

देवा वै सर्वे सहान्तर्वन्तोऽभवꣳ,—स्ते सर्वे सह व्यजायन्त, तदेकवृदशयत् सꣳवृत्तं,
तद्देवा इत्थं चेत्थं च व्यत्यचरꣳस्तन्मित्रावरुणा अचायताꣳ, स्याद्वै य एनद्विकुर्यादिति,
तद्वा द्विपदीमकुरुताꣳ, सा न प्रत्यतिष्ठत्, तस्या अन्यत आहृत्येमौ प्रत्यधत्तां, तस्मादेतौ
अवद्धा अस्थं,—न्त्सा चतुष्पदी भूत्वा प्रत्यतिष्ठत्, प्रति प्रजया च पशुभिश्च तिष्ठति य एवं
वेद, तस्याꣳ वै पयः पर्यपश्यꣳ,—स्तां देवा अदुह्र हरितेन पात्रेण यज्ञं चामृतं च,
दुहे यज्ञं चामृतं च य एवं वेदा,—ऽथ पितरोऽदुह्र रजतेन पात्रेणोर्जं च स्वधां च, दुह ऊर्जं च
स्वधां च य एवं वेदा,—ऽथ मनुष्या अदुह्र दारुपात्रेणान्नं च प्रजां च, दुहेऽन्नं च प्रजां च य
एवं वेदा,—था ऋषयोऽदुह्र चमसेन छन्दाꣳसि च पशूꣳश्च, दुहे छन्दाꣳसि च पशूꣳश्च य
एवं वेदा,—ऽथ गन्धर्वाप्सरसोऽदुह्र पुष्करपर्णेन पुण्यं गन्धं, दुहे पुण्यं गन्धं य एवं वेदा,-
—ऽथ सर्पा अदुह्रालाबुना विषं, दुहे भ्रातृव्याय विषं य एवं वेदा,—ऽथासुरा अदुह्रायसपात्रेण
स्रवता भूतिं च पराभूतिं च, दुहे भ्रातृव्यायाभूतिं च पराभूतिं च य एवं वेद, ताꣳ वा
इन्द्रोऽनयैवोपासीदते,—दꣳ सर्वमदुहद्यदिदं किंच, तां दुग्ध्वा प्रत्यनुदत, सा प्रतिनुत्ता
कुमना अतिष्ठद् ध्यायन्ती, . तां प्रजापतिरचायद्, ध्यायति वा इति, सोऽब्रवीत्, किं
ध्यायसीति, साब्रवीद्, ये माधुक्षत ते मा प्रत्यनुदन्तेति, सोऽब्रवी,—न्मा स्वक्षे,—स्तथा वै
त्वा कर्ष्यामि यथोभयेषां देवमनुष्याणां प्रिया भविष्यसीति, तस्या घृतं पद्भ्योऽक्षरत्, तस्य
घृतस्यादाय मुखꣳ व्यमार्ष्ट् ॥ उभयेषां त्वा देवमनुष्याणां प्रियां करोमि ॥ इति तस्मादेषोभयेषां
देवमनुष्याणां प्रियं,—तेनैव श्रोत्रियस्य मुखꣳ विमृज्या,—दुभये ३ह्येते देवमनुष्या विदु,—रेतेन

कुमार्या, एतेन पतिकामाया, एतद्वै गोवर्चसं न सर्वस्मा इव कुर्याद्, यस्मै तु कुर्यात्
तेजस्वी स्यात् ॥ १३ ॥ ९३-९५

यो ललामः शितिपात् शितिककुत् शितिभसत् शितिवालः, साशारिः सामक्ताष्टयूथा, प्राष्टौ यूथान्याप्नोति यस्यै तादृङ्ङृषभो भवति, यस्य वालतुषः प्रतिष्ठितः सा प्रतिष्ठिता, प्रति प्रजया च पशुभिश्च तिष्ठति यस्यै तादृङ्ङृषभो भवति, यः समन्तः शितिबाहुः सा समन्ता, समन्तः प्रजया च पशुभिश्च भवति यस्यै तादृङ्ङृषभो भवति, यः शितिपृष्ठः सा तन्तिः, पशुमान् भवति यस्यै तादृङ्ङृषभो भवत्य,—थ यस्यैकरूपस्य सतो लक्ष्म भवति सादारस्,—न्नास्यामित्रो गा विंधावति यस्यै तादृङ्ङृषभो भवति, याजलोम्नी सा पोषयिष्णु,—रजा इव प्रजायन्ते यस्यै तादृङ्ङृषभो भवति, या श्यामा सा पोषयिष्णुः, क्षिप्रं बह्वीर्भवन्त्यपनिपादुकास्तु, यारुणा सा पोषयिष्णुः, क्षिप्रं बह्वीर्भवन्ति हिंसेरवस्तु, या श्वेता सा पोषयिष्णुः, क्षिप्रं बह्वीर्भवन्ति दुश्चर्माणस्तु, नाञ्जिः का२र्यो न पृश्नि,—रमिथुनं तं,—दथो व्याघ्ररूपं२ वै पृश्नि,—र्बिभ्यत्यस्मात् पशवः, कनीयाऽ२सोऽस्य पशवो भवन्ति यस्यै तादृङ्ङृषभो भवति, तदाहु,—र्बीजमेवोत्सृज्यमित्ये,—तद्वा आसां बीजं२ यद्रोहितं२ रूपं, पशुमान् भवति यस्यै तादृङ्ङृषभो भवति, यो धूम्रस्ताम्रधूम्रः स प्रजापतिः, प्र प्रजया च पशुभिश्च जायते यस्यै तादृङ्ङृषभो भवति, यस्य लोमशौ ककुत्सं स्तम्बी, स्तम्बीव प्रजया च पशुभिश्च भवति यस्यै तादृङ्ङृषभो भवति, यस्योर्ध्वा ककुत्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्यै तादृङ्ङृषभो भवति, यस्य दक्षिणतः पन्नं२ सा पापी सा स्रवन्त्य,—थ यस्य सव्यत उन्नतं२ सा पुण्या सोपाहरन्ती, या उत्पृष्टिस्ता ऊर्ध्वा आप्यायन्त, ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्यै तादृङ्ङृषभो भवति, यस्य सव्यतः पन्नं२ सा पापी सा स्रवन्त्य,—थ यस्य दक्षिणत उन्नतं२ सा पुण्या सोपाहरन्ती, या सव्यसाचिनी सा पुण्या सोपाहरन्ती, या सं२शृङ्गी सा गोष्ठ,—स्तां न प्रछिन्द्यादनुसृष्टस्य गोषु स्याता,—मेतौ वै पशूनामस्कन्नं२ हवि,—रस्कन्नमस्य हविर्भवति यस्यानुसृष्टिर्गोषु भवत्यु,—क्षा चास्य वेहच्च गोषु स्याता,—मेतौ वै पशूनामूर्जं बिभृतो, ऽक्षोधुका अस्य पशवो भवन्ति यस्योक्षा चु वेहच्च गोषु भवतः ॥ १४ ॥ ९६ [ २१५३ ]

॥ इति खिलकाण्डे गोनामिको द्वितीयः प्रपाठकः ॥ २ ॥

अथ तृतीयः प्रपाठकः ।

## राजसूयब्राह्मणम् ।

अरातीयन्ति वा अन्ये पुरुषाय नान्ये, येऽरातीयन्ति सा निर्ऋति,—र्ये नारातीयन्ति सानुमति,—स्तेभ्य उभयेभ्यः सह निर्वपन्त्यु,—भौ सह शृतौ कुर्वन्ति, नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृता इरिण, एतद्वै निर्ऋतिगृहीतं पृथिव्या, निर्ऋतिगृहीत एव निर्ऋतिं निरवदयत, एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां जुहोति, जुषाणा निर्ऋतिर्वेतु, स्वाहा, वासः कृष्णं भिन्नान्तं दक्षिणेत्ये,—तद्धि निर्ऋत्या रूप,—मर्धं वै पुरुषस्य निर्ऋतिगृहीत,—मर्धमनिर्ऋतिगृहीतं, यन्निर्ऋतिगृहीतं तदेवास्मात्तेन निरवदयते, पुनरेत्यानुमत्याष्टाकपालेन प्रचरन्ति निर्ऋतिमेव निरवदाये,—यं वा अनुमतिर्वाग्वा, ऽनुमतमेवैनं सर्वमाक्रमयत्य,—ष्टाकपालो भवति, गायत्रीं ३हीयं, गायत्री वाग्, धेनुर्दक्षिणै,—तद्ध्यनुमत्या रूप,—मथ य उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्धृत्य जुहुया,—दिदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजा इति, तत् पुनरपिदधाती,—दमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति, क्षेत्रियं वा एतं गृह्णाति, य चैनमन्वियं क्षेत्रस्य पत्न्य,—स्यामेव क्षेत्रियमुवयज्याथैनं सर्वमाक्रमयति, श्वो भूत आदित्येभ्यो भुवद्वद्भ्यो घृते चरुरित्या,—दित्या वा इत उत्तमाः स्वर्गं लोकमाय,—स्तेभ्य एव प्रोच्य स्वर्गं लोकमेत्या,—दित्या वा अस्मिल्लोक ऋद्धा, आदित्या अमुष्मि,—न्नुभयोरेव लोकयोर्ऋध्नोति, वरो दक्षिणा, वरेणैव स्वर्गं लोकमभ्यारोहति, श्वो भूत आग्नावैष्णव एकादशकपाला इत्य,—ग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालब्धा,—ऽग्निर्वै यज्ञस्यान्तोऽवस्ता,—द्विष्णुः परस्ता,—दुभयत एव यज्ञस्यान्ता उदग्रही,—दुभयत एव यज्ञस्यान्ता उद्गृह्य यथोत्सङ्ग आवपेतै,—वं वा एतद्यज्ञमावपते, तस्य यथाकामं निर्वपमाण एत्य,—नड्वान् वामनो दक्षिणा, यद्वही तेनाग्नेयो, यद्वामनस्तेन वैष्णवो, रूपेणैवैनं समर्धयति, श्वो भूतेऽग्नीषोमीया एकादशकपाला इत्य,—ग्नीषोमाभ्यां वै वी३र्येणेन्द्रो वृत्रमहन्, वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते, तद्वार्त्रघ्नमेवैतद्धिरण्यं दक्षिणा, सत्यं वै हिरण्यं, सत्येनैव हन्ति, श्वो भूत ऐन्द्राग्न एकादशकपाला इत्य,—ग्नीषोमाभ्यां वै वी३र्येणेन्द्रो वृत्रमह,—न्तस ओजसा वीर्येण व्यार्ध्यत, स एतमैन्द्राग्नमपश्यत्, तेनौजो वीर्यमात्मन्नधत्तौ,—जसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चता, ओजो

[ १ ] मै. २,६,१ । तै. ब्रा. १,६,१,१—९ ।

वीर्युमिन्द्राग्नी, ओजुसैवैनं॒ वीर्येण सम॑र्धयतो, ऽनड्वानृ॑षभो दक्षिणा, यद्वही तेनाग्नेयो, यन्मुष्करस्तेनैन्द्रो, रूपेणैवैनं॒ सम॑र्धयति, श्वो भूते आग्ने३यो॒ऽष्टाकपालो माहेन्द्रं दधी,—त्यृद्ध्या एवाग्नेयं, इन्द्रो वै वृत्रमुह२,—न्त्सोऽन्यान् देवानत्यमन्यत, स मुहेन्द्रोऽभवत्, स एतमुद्धारमुदहरद् वृत्रं॒ हत्वा, तदुद्धार एवा,—ऽस्यैष भाग एव, तस्माद्राजा संग्रामं जित्वोदाजमुदजयत्, पयुसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते, यत् पयः, पयुसैवैनं॒ सम॑र्धयती,—न्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते, यदैन्द्र,—मि-न्द्रियेणैवैनं॒ वीर्येण सम॑र्धयति, देवताभिर्वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते, सर्व-देव३त्यं॒ वै वासो, यद्वासः क्षौमं दक्षिणा देवताभिरेवैनं॒ सम॑र्धयति॥ १ ॥ १

देवा ओषधीषु पक्वास्वाजिमुयुः, स इन्द्रोऽवे,—दुग्निर्वावेमाः प्रथम उज्जेष्यतीति, सोऽब्रवीद्, यतरो नौ पूर्व उज्जयेत्तन्नौ सहेति, ता अग्निरुदजयत्, तदिन्द्रोऽनूदजयत्, तस्मादैन्द्राग्न,—मथो आहु,—राग्नेन्द्रं का३र्यमित्य,—ग्निर्हि ता अग्र उदजुयत्, तदुज्जित्या एवा,—ऽऽग्रायणो द्वादशक-पालो भवति, द्वादुश मासाः स॑ंवत्सुरः, सं॒वत्सराद्धि तदध्यभवत्, सप्तदश सामिधेनीः का३र्याः, पञ्च ऋतवो द्वादुश मासा एष सं॒वत्सुरः, सं॒वत्सराद्धि तदधि भवत्यै,—का वै तर्हि यवस्य मुष्टिरासी,—देका व्रीहे,—रेका माषस्यै,—का तिलस्य, तद्विश्वे देवा अब्रुवन्, वयं॒ व एतत् प्रथयिष्यामो, भागो नोऽस्त्विति, तद्विश्वे देवा अप्रथयं॒,—स्तद्भूम्न एव वैश्वदेवो, ऽथो प्रथयत्येवै,—तेन पयसि स्याद्वैश्वदेवो, वैश्वदेवं॒ हि पयो, ऽथ वा इयमब्रवीन्मयि वा एतद-ध्यसौ वृष्ट्या पचति, नैतदितोऽध्युज्जेष्यथ, भागो ना अस्त्विति, तदाभ्यां॒ वावैष भागः क्रियता उज्जित्या, अथो प्रतिष्ठित्या एव, यद् द्यावापृथिवीयः, सौमीर्वा ओषधयः, सोमा ओषधीनामधिराजं,—स्तस्य वा एष भागो यदकृष्टपच्यं, तदुद्धार एवा,—ऽस्यैष भाग एव, तस्माद्राजा संग्रामं जित्वोदाजमुदजते, ग्राम्या वा अन्या ओषधय आरण्या अन्या,—स्ता एवा-स्यैतेनोभयीरवेष्टा भवन्ति, याः फालकृष्टास्तासामेतेनाग्रायणं करोति, या आरण्यास्तासामु-त्तरेणा,—ऽऽनीतो वा एष देवानां॒ य आहिताग्नि,—र्यदकृत्वाग्रायणं नवस्याश्नीयाद् देवानां भागं प्रतिक्लृप्तमश्नीया,—दार्तिमार्छेत्, सर्वेभ्यो वा एषोऽन्येभ्योऽभिषिच्यते यो राजसूय, आग्राय-३णोऽन्नाद्यस्यावरुद्ध्यै, वत्सः प्रथमजो दक्षिणा, रेत इव ३ह्येषोऽप्रजातः, प्रजात्यै ॥२॥ २

अथैतानि चातुर्मास्यानि, सं॒वत्सरं॒ वै चातुर्मास्यानि परीज्यन्ते, सं॒वत्सरादेवैनान्य-

[ २ ] मै. २,६,२। तै. ब्रा. १,६,१,१०।

[ ३ ] तै. ब्रा. १,७,१,२।

ध्याप्त्वावरुन्द्ध, उत्सन्नयज्ञो वा एष, संवत्सराद्वा अध्युत्सन्नयज्ञोऽवरुध्यते, संवत्सरा-
ध्याप्त्वावरुन्द्धे, पशवो वा एते चातुर्मास्येभ्योऽध्यतिरिच्यन्ते, यच्च शुनासी३र्यं ताने-
वैनमध्याप्त्वावरुन्द्धे, पशवो वा एते चातुर्मास्येभ्योऽध्यतिरिच्यन्ते, यच्च शुनासीर्यं ताने-
वाप्नोति, वृष्ट्यै उदकं यजेतै,—तद्धि पशूनां नेदिष्ठं,—मथैतानि पञ्च हवींषि संतत्यै ग्रामकामो
यजेत, वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते, यद्वायवे, वायुरेवास्मै नस्यो-
तां विशं निनयत्य,—न्नकामो यजेत, संवत्सरो वा इन्द्रः शुनासीरः, संवत्स३रोऽन्ना-
द्यस्य प्रदाता, तमेव भागधेयेनोपासरत्, सोऽस्मा अन्नाद्यं प्रयच्छति, वृष्ट्यै उदकं यजेतै,—
त३द्ध्यन्नाद्यस्य नेदिष्ठं वृष्टिकामो यजेत, वायुर्वा इमे समीरयति, स आप्याययति, ततो
वर्षति, संवत्सरो वा इन्द्रः शुनासीरः, संवत्सरमनुवर्षति ॥३॥ ३

देवाश्च वा असुराश्चास्पर्धन्त, स वृत्र इन्द्रमब्रवीत्, त्वं देवानां श्रेष्ठो, ऽस्यहमसुराणां,
संशक्नवाव, मा ना अ३न्योऽन्यं ऽवधीदिति, तौ वै समामेतामनभिद्रोहाय, तं देवा वृत्र-
ममन्यन्ता,—ऽयं वावेदं भविष्यतीति, त इन्द्र ऐछन्, हनामेममिति, सोऽब्रवीत्, संधा वै
मे संहितानभिद्रोहायेति, तमग्निरब्रवी,—दहमेव त्वेतः पास्यामीति पृथिव्या, अहमन्तरिक्षा-
दिति वरुणो, ऽहं दिव इति रुद्र,—स्ततो वै देवा वृत्रमघ्नन्, वृत्रं खलु वा एष हन्ति यो राज-
सूयेनाभिषिच्यते, तद्वात्रिघ्नमेवैतद्, देवाश्च वा असुराश्च समयतन्त, तानग्निस्त्रेधात्मानं कृत्वा
प्रत्ययतता,—ऽग्निरेवास्मिँल्लोके भूत्वा, वरुणोऽन्तरिक्षे रुद्रो दिवि, स इन्द्रोऽमन्यता,—ऽयं
वावेदं भविष्यतीति, सोऽब्रवी,—दहं विश्वाभ्या आशाभ्या इति, ततो वा अजयं,—स्तज्जि-
त्या एवैत,—देतेनैव याजयेत् संग्रामे, जयति संग्राम,—मेतेनैव याजयेद्, भ्रातृव्यवन्तं,
यो वास्य प्रियः स्यात्तं, भवत्यात्मना, परास्य भ्रातृव्यो भवति, यद्वै तदिन्द्रस्तुरीय उप-
समपद्यत तस्मादिन्द्रतुरीयं, धेनुरनड्वाही दक्षिणा, यद्वहिनी तेनाग्नेयी, यद्धेनुः सती
दान्ता तेन वारुणी, यद्गौस्तेन रौद्री, यत् पयस्तेनैन्द्री, रूपैरेवैनां समर्धयती,—न्द्रो वै
नमुचिं नालभत, स रश्मीन् कुलायं कृत्वान्वारोहदमुमादित्यं, तं वा अन्वमन्त्रयत, सखाया
असावेति, सोऽब्रवी,—न्नाहं हनिष्यामीति, सोऽब्रवीत्, संधां ते संदधै यथा त्वा न दिवा
हनानि न नक्तं न शुष्केण नार्द्रेणेति, तस्य वा उपोदये सूर्यस्य नीहारं, संतत्यापां फेनेन

[ ४ ] मै. २,६,३ । तै. ब्रा. १,७,१,२ । वा. ९,३६;१९,७१;४,११ । काण्व. ११,२;२१,७१;४,१६ । [ अपां फेनेन नमुचेः । ऋ. ८,१४,१३; सा. २११; अथर्व. २०,२९,३ ]

शिरोऽछिनत्, तद्वा एनमन्ववर्तत, मित्रद्रुगसीति, पाप्मा वै नमुचेः शिरः, पाप्मा वा एनं तदन्ववर्तत, पाप्मानं वै स तेनापाहत, तत् पाप्मानमेवैतेनापहते, ऽपां न्ययनादपामार्गैनाहुरन्त्या,—पो वै रक्षोघ्नी,—रपो रक्षाᳪसि न तरन्ति रक्षसामपहत्यै, वरो दक्षिणा, वरेणैव वरᳪ स्पृणोत्या,—त्मा हि वर, आत्मानᳪ हि तस्य तदन्ववर्तत, ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नोऽवन्तु, ते नः पान्तु, तेभ्यः स्वाहेत्ये,—तदेव३त्या वा इमा दिशो, यथादेवतᳪ वा एतदाभ्यो दिग्भ्योऽधि रक्षाᳪस्यपहन्त्य,—नुपरिक्रामं जुहोति, सर्वाभ्य एव दिग्भ्योऽधि रक्षाᳪस्यपहन्ती,—दमहᳪ रक्षोभिः समूहाम्य,—ग्ने सदह रक्षः, संदग्धᳪ रक्षा, इत्याह रक्षसां ध्वरायै रक्षसामन्तरित्या, अथ यत् पुनः समूह्य जुहोति याम्य एव दिग्भ्योऽधि रक्षाᳪस्यपावधीत्ता भागिनीः करोत्यहिᳪसायै, रथः पञ्चवाही दक्षिणा, पञ्च दिशः पञ्च देवताः समृद्ध्यै ॥ ४ ॥ ४

सौमेनेजानᳪ याजयेत्, सᳪवत्सरᳪ वा एतस्य छन्दाᳪसि यातयामानि भवन्ति यः सौमेन यजते, छन्दाᳪसि वै देविका,—श्छन्दाᳪसि वावास्मा एतदयातयामानि पुनर्यामाणि करोति, राजसूयेनाभिषिषिचानᳪ याजयेत्, पष्ठौही दक्षिणा, ऽऽशाᳪ वा एष उपाभिषिश्चत, आशा पष्ठौ३ह्या,—शामेवास्मा अकः, पशुकामᳪ याजयेच्, छन्दाᳪसि वै देविकाः, पशव-श्छन्दाᳪसि, गायत्र्यनुमति,—स्त्रिष्टुब्राका, जगती सिनीवाली, कुहूरनुष्टुब्, धाता वषट्कारो, या पूर्वा पौर्णमासी सानुमति,—र्योत्तरा सा राका, या पूर्वामावा३स्या सा सिनीवाली, योत्तरा सा कुहू,—श्चन्द्रमा एव धाता, यद् द्वे अवरे द्वे परे तन्मिथुनᳪ, यत् पूर्यतेऽन्यां नान्यां तन्मिथुनᳪ, यत् पश्यन्त्यन्यां नान्यां तन्मिथुनᳪ, यदमावास्याया अधि चन्द्रमाः प्रजायते तन्मिथुनं, तस्मादेवास्मै मिथुनात् पशून् प्रजनयति, प्रजाकामᳪ याजयेद्, धातारमुत्तमं कुर्यात्, स्त्रियो वै देविकाः, पुमान् धाता, पराचीर्वै प्रजा रेतो दधते, पराचीष्वेवासु रेतो दधाति, तदाहु,—र्न वै तेन पराधत्ते यदन्तरा प्रवीयेता, इति व्यवदध्याद्धातारं मध्यतः, सर्वा एवैना वृषमोदिनीः करोति, तदाहु,—र्जायेत एवं, पश्चाचर इव तु भवति, स्त्रीभ्यो ह्येनं पश्चात् परिणयन्तीति, स यदा जायेताथ धात्रे पुरस्तान्निर्वपे,—दग्रᳪ वै धाता, ऽग्रमेवैनं परिणयति ॥ ५ ॥ ५

[ ५ ] मै. २,६,४ । तै. ब्रा. १,७,२ ।

*

आमयाविनं॰ याजयेद्, धातारं मध्यतः कुर्यात्, संवत्सरो वै धाता, संवत्सरो हि वा एतस्य मुग्धो, ऽथैतस्यामयति, संवत्सरं॰ वावास्मा एतन्मध्यतोऽचीक्लृप, दथैनमेतस्मान्मिथुनात् प्रजनयती,—श्वराणि वा एतमेतानि छन्दांसि सृते पशोरशान्तानि निर्मृजः, पशुरप्यालभ्यः शान्त्या अनिर्मार्गाय,—तं वै पशवो यद्व्रीहयश्च यवाश्च, यद्व्रीहिमयः पुरोडाशो भवति तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय, वीरस्था वा अन्ये पशवोऽवीरस्था अन्ये, ये पुरस्तात् पुरोडाशास्ते वीरस्था, ये पश्चात् पुरोडाशास्तेऽवीरस्था, ये पुरस्तात् पुरोडाशा भुञ्जतस्त उपतिष्ठन्ते, प्रजापतिं॰ ह्येते प्रतिष्ठामभ्यसृज्यन्त, ये पश्चात् पुरोडाशाः परा ते भवन्ति, यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः, सोमो वै रेतोधाः प्रजननाय, सर्ववेदसेनेजानं॰ याजयेत्, पशुभिर्वा एष व्यृध्यते यः सर्वं ददात्य,—त्र वा एष जघन्यं पशून् पश्यति यत्रैनान् विभजति, यत्रैवैनान् विभजति तत एनान् पुनरवरुन्द्धे, य एव कश्च सोमेन यजेत तं॰ याजयेत्, संवत्सरं॰ वा एतस्य छन्दांसि यातयामानि भवन्ति यः सोमेन यजते, छन्दांसि वै देविका,—श्छन्दांसि वावास्मा एतदयातयामानि पुनर्यामाणि करोति ॥ ६ ॥ ६

अथैतत् त्रिषंयुक्तं॰, यत् पूर्वं त्रिषंयुक्तमित एवास्मै तेनोर्ध्वानिमांल्लोकान् दाधार, यदुत्तरं त्रिषंयुक्तममुत एवास्मै तेनार्वाच इमांल्लोकान् दाधार, तदेषां॰ वावैते लोकानां॰ विधृत्यै, यत् पूर्वं त्रिषंयुक्तं॰ वीरजननं तद्, यदुत्तरं पशुजननं तद्, यत् पूर्वं त्रिषंयुक्तं॰ वीरानेवास्मै तेन जनयति, यदुत्तरं पशूंस्तेन, यत् पूर्वं त्रिषंयुक्तं॰ रेत एव तेन दधाति, यदुत्तरं प्र तेन जनयति, यत् पूर्वं त्रिषंयुक्तं तेन यज्ञकामो यजेता,—ऽग्निर्वै सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैव यज्ञं चालब्धै,—न्द्रो वै यज्ञो, विष्णुर्यज्ञ,—स्तद्यज्ञस्यैवैष आरम्भो, ऽथ यद्वैष्णवो, विष्णुर्वै यज्ञो, यज्ञ एव प्रतितिष्ठति, यदुत्तरं त्रिषंयुक्तं तेन पशुकामो यजेत, सोमो वै रेतोधाः, पूषा पशूनां प्रजनयिता, सोम एवास्मै रेतो दधाति, पूषा पशून् प्रजनयती,—न्द्रियेण वै पशवः प्रजायन्ते, पूषा प्रजनयती,—न्द्रियेणैवास्मै पूषा पशून् प्रजनयत्य,—थ यत् पौष्णः, पशवो वै पूषा, पशुष्वेव प्रतितिष्ठत्य,—थैतद्वैश्वानरवारुणं॰, संवत्सरो वा अग्निर्वैश्वानरं,—स्तस्य वा एते स्वा यदृतव,—स्तेषां॰ वा एषोऽभिषिक्तो राजा, ऽभिषिक्तो वै देवानां॰ वरुण, एतौ वै देवानां॰ सूतौ, एतौ सर्वपती, एतौ सर्वस्येशाते, ता एनं॰

सुवाते, यावन्तो वा एतस्य स्वा अनुका वै त एते, मनुका देवा वरुण्ँ, यावन्त एवास्य स्वास्तानस्मा अनुकानविवादिनः करोती, याँश्चरुर्भवत्ये, तावान्वा आत्मा, यावानेवास्यात्मा तँ वरुणान्मुक्त्वा, सँवत्सरो वा अग्निर्वैश्वानरः, सँवत्सर एवैनं प्रतिष्ठापयति, सँवत्सरायुपमेनं करोति, तस्माद्राजसूययाभिषिक्तस्य जरसा दन्ता अवशीयन्ते, सँवत्सरे ह्येनं प्रतिष्ठापयति, सँवत्सरायुपमेनं करोति, यो ज्योगामयावी स्यात्तमेतेन याजयेद्, वरुणेन हि वा एष पाप्मना गृहीतो, ऽथैतस्य ज्योगामयति, यद्वारुणो, वरुणादेवैनं तेन मुञ्चती, याँश्चरुर्भवत्ये, तावान्वा आत्मा, यावानेवास्यात्मा तँ वरुणान्मुक्त्वा, सँवत्सरो वा अग्निर्वैश्वानरः, सँवत्सर एवैनं प्रतिष्ठापयति, सँवत्सरायुपमेनं करोति ॥ ७ ॥ ७

अथैते रत्निनः, क्षत्रस्य वा एतान्यङ्गानि, यस्य वा एतान्योजस्वीनि भवान्ति तद्राष्ट्रमोजस्वी भवति, तान्येवास्यौजस्वीनि करोति, क्षत्रस्य वा एतान्यङ्गानि, यस्य वा एतानि तेजस्वीनि भवान्ति तद्राष्ट्रं तेजस्वी भवति, तान्येवास्य ब्रह्मणा तेजस्वीनि करोति, बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति, ब्रह्म वै बृहस्पति, र्बृहस्पतिपुरोहित खलु वै राष्ट्रमृध्नोति, ब्रह्म वा एतत् पुरस्ताद्राष्ट्रस्यात्यौहीं, दथो ब्रह्मण एव राष्ट्रमनुकं करोत्यै, न्द्र एकादशकपालो राज्ञो गृह इती, न्द्रियँ वा इन्द्र, इन्द्रियं एव प्रतितिष्ठत्या, दित्यश्चरुर्महिष्या गृह इती, यँ वा अदिति, रस्या एवैनं मात्रां गमयती, मामेवैनं प्रजाभ्य उपजीवनीयं करोति, धेनुर्दक्षिणै, तद्ध्यदित्या रूपं, नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्या गृह इति, निर्ऋतिगृहीता हि वा एषा, ऽथैतां परिवृञ्जन्ति निर्ऋतिमेव निरवदाये, यँ वा अनुमति, रस्या एवैनं मात्रां गमयती, मामेवैनं प्रजाभ्य उपजीवनीयं करोति, श्येनी वण्डापस्फुरा दक्षिणै, तद्धि निर्ऋत्या रूपं, माग्ने३यो ऽष्टाकपालः सेनान्यो गृह इत्य, ग्निर्वै सर्वा देवता, देवताभिरेवास्य सेनामुखं जित्यै सँश्युति, हिरण्यं दक्षिणा, सत्यँ वै हिरण्यँ, सत्येनैव जयत्या, श्विनो द्विकपालः संग्रहीतुर्गृह इति, रथरेषमेवास्मात्तेनु निरवदयते, सव३त्यौ दक्षिणेति, सवत्या इव हि सव्यष्ठसारथी रथमभि, सावि३त्रोऽष्टाकपालः क्षत्तुर्गृहे प्रसूत्या, अथो सवितेव ३ह्येष प्रजाभ्यः प्रसुवति, वारुणो यवमयो दशकपालः सूतस्य गृहे, मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृह इति, सूतमुखा वै विट् क्षत्रमुपतिष्ठते, सूतमुखाँ वावास्मा एतद्विशं मुख३तोऽन्नाद्यायोपदधाति, पौष्णश्चरुर्भागदुघस्य गृह इति, पुष्टिर्वै पूषा, पुष्टिमेवास्य भागे दधाति, वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृह इति,

[ ८ ] मै. २,६,५ । तै. ब्रा. १,७,३,१—७ ।

विष्णुर्वै यज्ञो, यज्ञ एव प्रतितिष्ठति, रौद्री गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य चैत्य,—
न्तत एवास्माच्चेनु रुद्रं निरवदयते, ऽथो रुद्र इव ३ह्येतौ पशू अभिमन्येते, एकादश वा एतानि
हवीꣳष्ये,—कादशाक्षरा त्रिष्टुब्, वीर्यं त्रिष्टुब्, वीर्य एव प्रतितिष्ठति, नाना वा एत एतेषा-
माशिषोऽवरुन्धते, यत्सह निर्वपेयुररत्निनः स्यु,—रैन्द्र एकादशकपालो राज्ञो गृह इती,—न्द्रि-
यꣳ वा इन्द्र, एकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठत्यै,—न्द्रो हि यजमानः ॥८॥ ८

इन्द्रायाꣳहोमुचा एकादशकपालं निर्वपेद्, यदेव किंचार्वाचीनं जनितोरेनः करोति तत एन-
मꣳहोमुङ् मुञ्चती,—न्द्राय सुत्राम्णा एकादशकपालꣳ, य एवोपवादी योऽभिदासति तत एनꣳ
सुत्रामा त्रायते, ऽथैतन्मैत्राबार्हस्पत्यꣳ, सत्यꣳ वै मित्रो, ब्रह्म बृहस्पतिः, सत्यं चैव ब्रह्म
चालभ्य दीक्षते, क्षत्रꣳ वै मित्रो, ब्रह्म बृहस्पतिः, क्षत्रं चैव ब्रह्म चालभ्य दीक्षते, यस्य
राष्ट्रꣳ शिथिरमिव स्याच्चमेतेन याजयेन्मैत्राबार्हस्पत्येन, क्षत्रꣳ वै मित्रो, ब्रह्म बृहस्पति,—र्ब्र-
ह्मणि वा एतत् क्षत्रं प्रतिष्ठापयति द्रढिम्नेऽशिथिरत्वाया,—ऽथैते देवस्व, एते वै देवानाꣳ सुता,
एते सवपतय, एते सवस्येशते, त एनꣳ सुवते, तस्माद्वा एतमाहुः, पूर्वेद्युर्वा एष सूयते-
ऽभितश्च सिच्यता इत्य,—थैष मारुत एकविꣳशतिकपाल,—स्त्रिर्वै सप्त सप्त मरुतो, विण्मरुतो,
विशो वा एतन्मध्यतः सूयते, तस्माद्वा एष विशः प्रियो, विशो हि मध्यतः सूयते, वरुणस्य
वा अभिषिच्यमानस्येन्द्रियꣳ वी३र्यमपाक्रामत्, तत् त्रेधाभवद्, भृगुस्तृतीयमभवच्, श्रायन्तीयं
तृतीयꣳ, सरस्वतीं तृतीयं प्राविशद्, यद्भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामꣳ सारस्वती-
रापस्तदेवेन्द्रियꣳ वी३र्यं तेज आप्नोति, वाचा वा एतमभिषिञ्चन्ति यमभिषिञ्चन्ति, वाक्
सरस्वती, सारस्वतीरापो, यत्सारस्वतीभिः सूयते यावत्येव वाक् तया सूयते ॥९॥ ९

अपाꣳ वा एतानि चित्राण्य,—पाꣳ वा एतच्चित्राणि संभरन्त्य,—पामेनं चित्रैरभिषिञ्चन्ति,
चित्रमस्मिन् दधति, तस्माद्वा ए३षोऽभिषिक्तश्चित्रꣳ राजेति श्रूयते, ऽपाꣳ ह्येनं चित्रैरभि-
षिञ्चन्ति, चित्रमस्मिन् दधति, यथा वा इदं मधुकृतो मधु संभरन्त्येवꣳ वा एतदपामोषधीनाꣳ
रसꣳ संभरन्त्य,—पामेनमोषधीनाꣳ रसेनाभिषिञ्चन्ति, रसमस्मिन् दधति, तस्माद्वा एतमाहु,—
रसी राजा पुण्या इत्य,—पाꣳ ह्येनमोषधीनाꣳ रसेनाभिषिञ्चन्ति, रसमस्मिन् दधति, वरुणसवो
वा एष, वारुणीरापो, यदद्भिरभिषिञ्चति वरुणमेवैनमक,—र्विषुवान्वै सरस्वती, सारस्वती-

[९] मै. २,६,६। तै. ब्रा. १,७,३,७। [१०] तै. ब्रा. १,७,५,५,।

रापो, यत्सारस्वतीभिः सूयते विषुवान् भवति, षोडश ग्रहा गृह्यन्ते, षोडश होमा हूयन्ते, तद् द्वात्रिंशद्, द्वात्रिंशदक्षरानुष्टुब्, वागनुष्टुब्, यावत्येव वाक् तया सूयते ॥१०॥ १०

[ २१६३ ]

॥ इति खिलकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

---

अथ चतुर्थः प्रपाठकः ।

प्रतीपमन्य ऊर्मिर्युध्यत्यन्वीपमन्यो मिथुनत्वाय, यत्तस्य गृह्णाति यः प्रतीपं युध्यत्योजसा वा एष वीर्येण प्रतीपं युध्यत्यो,—जसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्य,—थ यत्तस्य गृह्णाति योऽन्वीपमीरयति माहिषं तेन तोकं प्रजनयत्य,—थ यन्नदीपतेरपां वा एतन्मिथुन,—मपां वा एतन्मिथुनेन राष्ट्रे मिथुनं दधात्य,—थ यदग्रहावरीणां मध्यमेष्ठेयं तेनावरुन्द्धे, ऽथ यत् परिवाहिणीनां पारेवस्यन्त्यास्तेन तोकं प्रजनयत्य,—थ या आपोऽन्शैरा, ओजसा वा एता वीर्येणापोऽन्शैरा, ओजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्य,—थ यत् कूप्यानामुभयीस्तेनापोऽवरुन्द्धे, याश्च समुद्रिया याश्चासमुद्रिया ईश्वरा वा एतमेता स्रोतस्या आपोऽशान्ता निर्मृजो, यत्स्थावराणां गृह्णाति, शान्त्या अनिर्मार्गाय, या आतपति वर्षति याश्च परिदहशे ता आपो ब्रह्मवर्चस्या,—स्ताभी राष्ट्रे ब्रह्मवर्चसं दधात्य,—थ यद्ध्रादुनीनां विशस्तेन वीर्यमवरुन्द्धे, ऽथ यत् पुष्पाणामारण्यं तेनाथ यदुल्ब्यानां, वज्रो वै पशवो, वज्रा उल्ब्या, वज्रेण वा एतद्राष्ट्रे वज्रं दधात्य,—थ यत् पयसः, पयसा वा एतद्राष्ट्रे पयो दधात्य,—थ यद् घृतस्यै,—ता वा आपोऽनाधृष्या,—स्ताभी राष्ट्रमनाधृष्यं कुरोत्य,—थ यन्मधो,—रपां वा एष ओषधीनां रसो, ऽपां वा एतदोषधीनां रसेन राष्ट्रे रसं दधाति, षोडश वा एते ग्रहाः प्राजापत्याः, समानीतः सप्तदशः, प्रजापतिः सप्तदशः, प्रजापतिमेवाप्नोति ॥ १ ॥ १

देवीरापो मधुमतीः संसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वाना इत्ये,—ता हि क्षत्रस्य वन्त्री,—रनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्ये,—ता हि क्षत्रस्य धात्री,—रनिभृष्टमसीत्य,—निभृष्टं ह्येव राष्ट्रमक,—स्तपोजा इति, तपोजा हि राष्ट्रं, सोमस्य दात्रमिति, सोमस्य

---

[ १ ] मै. २,६,७, । तै. ब्रा. १,७,५ ।

[ २ ] मै. २,६,८ । तै. ब्रा. १,७,६,१-४ । वा. १०,४,६-७;१,१२,३१;४,४ । काण्व. ११,८,१३-१४;१,३५, ४८;४,५ ।

३ह्येतद्दात्रं, शुक्रा वः शुक्रेण पुनामि, चन्द्रा वश्चन्द्रेण पुनामीत्या,—युर्वै हिरण्य,—मायुष्या
एवैना अक्र,—र्वर्चो वै हिरण्यं, वर्चस्या एवैना अक्र,—र्देवो वः सविता पुनात्वच्छिद्रेण पवित्रे-
णेत्ये,—तद्वा अच्छिद्रं पवित्रं यत्सूर्यस्य रश्मयो, ऽच्छिद्रेणैवैनाः पवित्रेण पुनाति, स्वाहा राजसूया
इति, राजसूया ३ह्येताः सधमादो द्यु३म्न्या ऊर्जा एका, इति व्यानयति वारुण्या, वारुणी-
र्ह्यापः, स्वयैव देवतया, रुद्र यत्ते गिरिपरं नामेति, रुद्रमेवास्मात्तेन निरवदयते, तस्मिन्
हुतमसि, यमेष्टमसि, स्वाहेति, मृत्युर्वै यमो, मृत्युमेवास्मात्तेन निरवदयते, सोमा
इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्त्वित्ये,—ते वै देवा धर्मधृतो यदिमे प्राणा,
यदेनमेतेभ्योऽप्रोच्याभिषिञ्चेयुरपरोधुका एनं स्यु,—रथ यदेनमेतेभ्यः प्रोच्याभिषिञ्चन्ति तथा
हैनमनपरोधुका भवन्ति, पर्णस्य वा अग्रेऽन्ते ब्रह्म समवदन्त, तद्वाव सुश्रवा यत्तदशृणोत्,
पर्णमयेनाभिषिञ्चति, ब्रह्माभिषिञ्चति, ब्रह्मवर्चसेनैवैनमभिषिञ्चत्य,—थो ब्रह्म वै ब्रह्मा,
ब्रह्मणैवैनं ब्रह्माभिषिञ्चत्याश्वत्थेन वैश्यो, विशो वी३र्यमपाक्रामत्, तदश्वत्थं प्राविशत्,
स तेन वीर्येण भर्मराभवत्, तद्विश एवैतेन वी३र्यमवरुन्द्धा, - औदुम्बरेण भ्रातृव्या, ऊर्ग्वा
उदुम्बरा, ऊर्जं वा एतदन्नाद्यं यजमानो भ्रातृव्यस्य वृङ्क्ते, यो जन्यो मित्रं स नैय्यग्रो-
धेन, मित्रेण वै क्षत्रं व्यवतत,—मवरोधैर्न्यग्रोधो, मित्रेण वा एतत् क्षत्रं व्यवतनोति
द्रढिम्नेऽशिथिरत्वाय ॥ २ ॥ २

क्षत्रस्य योनिरसि, क्षत्रस्योल्बमसि, क्षत्रस्य नाभिरसीती,—न्द्रो वै यदजायत तस्य वा
एष योनिरासीद्यत्तार्प्यमुल्बं पाण्डरं, नाभिरुष्णीषः, सूतवशाया अध्यजायत, सूना चतुः-
पद्यूधरासी,—न्नीवाराः पीयूष,—स्तस्मान्नैवारः पुरोडाशः, पञ्चाशतमन्यस्मिन्नक्षण्यानक्त्यैकप-
ञ्चाशतमन्यस्मिन्, शतायुर्वै पुरुषः शतवीर्या, आयुरेव वीर्यमाप्नोत्य,—प उपस्पृशत्य,—
मृतं वा आपो, ऽमृतेनैवैनं संरम्भयत्या,—वित्तो अग्निर्गृहपतिरिति, गार्हपत्यायै-
वैनमावेदयत्या,—वित्ता इन्द्रो वृद्धश्रवा इती,—न्द्रियं वा इन्द्र, इन्द्रियायैवैनमावेदयत्या,—
वित्तौ मित्रावरुणौ धृतव्रता इत्य,—होरात्रे वै मित्रावरुणा, अहोरात्राभ्यामेवैनमावेदयत्या,—
वित्ते द्यावापृथिवी ऋतावृधा इति, द्यावापृथिवीभ्यामेवैनमावेदयत्या,—वित्तः पूषा विश्ववेदा
इति, पशवो वै पूषा, पशुभ्य एवैनमावेदयत्या,—वित्ता देव्यदितिरित्या,—दित्या
वा इमाः प्रजा,—स्ताभ्य एवैनमावेदयत्या,—वित्तोऽयमसा आमुष्याय३णोऽमुष्याः पु३त्रो-

[३] मै. २,६,९। तै. ब्रा. १,७,६,४। वा. १०,८-९। काण्व. ११,५,१७।

ऽमुष्याꣳ विशीति, विश एवैनमावेदयति, तस्माद्वा एष विशः प्रियो, विशे ह्येनमा-
वेदयत्ये—ष ते जनते राजेति, जनताया एवैनमावेदयति, सोमोऽस्माकं ब्राह्मणानाꣳ
राजे—ति, ब्रह्मोद्धरति, सर्वेभ्य एवैनमन्येभ्यो भूतेभ्य आवेदयति, ब्रह्मोद्धरति,
तस्मादाहु—र्ब्रह्मोद्धृतमिति, ब्रह्म ३ह्युद्धरती—न्द्रस्य वज्रोऽसि वार्त्रघ्न—स्त्वयायꣳ वृत्रꣳ
वध्या—दिति धनुः प्रयछति, वज्रो वै धनु—र्वज्रो राज३न्यो, वज्रेणैव वज्रꣳ
समर्धयति, शत्रुबाधनाः स्थे—ति बाणवतो, ऽन्तो वै बाणवन्तो, ऽन्तो राजन्यो,
ऽन्तेनैवान्तꣳ समर्धयति, त्रीन् प्रयछति, तिस्रो वै शरव्या, दिव्या पार्थिवा समुद्रिया,
ता अस्माद्योयाव, पात प्राञ्चं, पात प्रत्यञ्चं, पात तिर्यञ्चं, पातान्वञ्चं, पातोऽर्ध्वं,
दिग्भ्य एनं पातेति, दिग्भ्य एनं पान्ति, मि३त्रोऽसी—तीममभिमन्त्रयते, मित्रस्य ३ह्येत-
द्रूपꣳ, वरुणोऽसी—तीमꣳ, वरुणस्य ३ह्येतद्रूपꣳ, हिरण्यवर्णमुषसो व्युष्टा, इत्युद्यता
अभिमन्त्रयेतो—र्ध्वबाहुस्तिष्ठन्तमभिषिञ्चति, बृहत्साम भवति, स्वर्गमेवैनं लोकमभिसंतनोति ॥
॥ ३ ॥ ३

दिश एनꣳ व्यास्थापयति, वज्रेण वा एतदिमा दिशोऽभिजयति, तस्माद्वा एतस्य सर्वा दिशो-
ऽभिजिता याꣳयामभिपर्यावर्तते, दिशो वै स्वर्गो लोक, एतदेव३त्या वा इमा दिशो, यथा-
देवतꣳ वा एतदाभ्यो दिग्भ्योऽधि स्वर्गं लोकमेति, सोमस्य त्विषिरसि त्विषिमत्, तवेव मे त्विषि-
र्भूया—दिति व्याघ्रचर्मꣳ विवेष्टयति, सोमे वा एका त्विषि—र्व्याघ्र एका, सर्प एका, ता
एवावरुन्द्धे, प्रत्यस्तं नमुचेः शिरा, इति सीसं पण्डगाय प्रत्यस्यति, पाप्मा वै नमुचेः शिरः,
पाप्मानꣳ वावास्मा एतत् प्रत्यस्यति स्वर्गं लोकमभ्यारोह—न्नवेष्टा दन्दशूका, इति लोहितायसं
केशवापाय, दन्दशूकानेवास्मात्तेन निरवदयते, तस्माद्वा एतस्य नाभिचारोऽस्ति, यावन्तो हि
मृत्यवस्तानस्मान्निरवदयते, मृत्योः पाही—ति रजतꣳ रुक्ममधस्तादुपोहते, मृत्योर्वा एतद्रूपꣳ
यद् व्या३घ्रो, ऽमृतꣳ हिरण्य—ममृतेनैव मृत्युमन्तर्धत्ते, दिदिवः पाही—ति हरितꣳ रुक्म-
मुपरिष्टादभ्यूहते, दिव्याया एवैनमशन्या योयावे—यꣳ वै रजता—ऽसौ हरिण्या—भ्यामे-
वैनं परिगृह्णा—ऽऽयुर्वै हिरण्य—मायुष्या एवैनमभ्यतिक्षरन्ति, वर्चो वै हिरण्यꣳ, वर्चस्या
एवैनमभ्यतिक्षरन्ति, वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियꣳ वी३र्यं निरघ्नन्, यद्रुक्ममन्त-
र्दधातीन्द्रियस्य वी३र्यस्यानिर्घाताय, शतमानो भवति शताक्षरः, शतायुर्वै पुरुषः शतवीर्यो,

[ ४ ] मै. २,६,१० । तै. ब्रा. १,७,७,१-२;१,७,८ । वा. १०,१०,१४-१५ । काण्व. ११,१८,२२—२३ ।

आयुरेव वीर्यमाप्नोति ॥ ४ ॥ ४

अथैतानि पार्थानि, सꣳवत्सरो वै पार्थानि, सꣳवत्सरꣳ वा एतन्मध्यतः प्रविशति, तस्माद्वा एष दुःपराणोदः, सꣳवत्सरꣳ हि मध्यतः प्रविशति, गिरो वा एतौ राजसूयस्य, बार्हस्पत्यमन्येषामुत्तमं भवत्यैन्द्रमन्येषां प्रथमꣳ, वी३र्यꣳ वै बृहस्पति,—र्वी३र्यमिन्द्रो, वीर्य एवैनमभिसंधत्त, आदित्यनामानि वा एतान्या,—दित्या वा इमाः प्रजा,—स्ताभ्य एव सूयते, सोमस्य त्वा द्युम्नेनाग्नेस्तेजसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामीत्ये,—तैरेवैनमिन्द्रियैरेताभिर्देवताभिरभिषिञ्चती,—न्द्रस्य योनिरसि, जनयेत्य,—तो वा अधीन्द्रोऽजायत, स्वादेवैनꣳ योनेर्जनयत्य,—ति धून् पाहीत्या,—ह स्वर्गस्य लोकस्य समष्टचै, समाववृत्रन्नधरागुदक्ता, इति समुन्मार्ष्टी,—न्द्रियꣳ वा एतद्वीर्यमभिषिच्यमानस्य व्यवैति, तदेव समुन्मार्ष्टि, तेनैनꣳ समर्धयत्यै,—न्द्रया त्रिष्टुभा ब्रह्मान्वेत्यै,—न्द्रो वै राजन्यस्त्रिष्टुप्छन्दाः, स्वेनैवैनं छन्दसान्वेत्य,—थो प्रजापतिर्वै ब्रह्मा यज्ञस्य, प्रजापतेरधीन्द्रोऽसूयत, प्रजापतेरेवाधि सूयता, इन्द्रस्य वज्रोऽसि वाजसनि,—स्त्वयायꣳ वाजꣳ से,—दिति रथमुपावहरति, स्वयैव देवतया, मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मी,—ति युनक्ति, स्वयैव देवतया, विष्णोः क्रमोऽसि सपत्नहे,—ति रथमभ्यातिष्ठत्य,—तो वै विष्णुरिमाँल्लोकानुदजयद्, विष्णो रेवोज्जितिमान्विमाँल्लोकानुज्जयति, एभ्यो लोकेभ्यो भ्रातृव्यं नुदते, मरुतां प्रसवे जयेति, मारुत एव गणो भूत्वोज्जयति, राजन्यं जिनात्य,—न्तमेवाक्रमीत्, तदस्य न कश्चनाज्येयं उच्छिष्यते, तस्मै तामिषुमस्यति, तदस्यामोघायास्तमभू,—दाम मनः समिन्द्रियेणेत्यु,—क्त्वा वर्तते, ऽन्तमेव गत्वावर्तत आत्मनोऽहिꣳसाया, एष वज्रो वाजसातम,—स्तेन नौ पुत्रो वाजꣳ से,—दिति पत्न्यै धन्वार्तिं प्रयच्छत्ये,—ष वै पत्न्या यज्ञस्यान्वारम्भः, सह स्वर्गे लोके भवतः ॥ ५ ॥ ५

इयदस्या,—युरस्या,—युर्मे धेहीत्या,—युरेवास्मिन् दधाति, युङ्ङसि, वर्चोऽसि, वर्चो मे धेही,—ति वर्च एवास्मिन् दधात्यू,—र्गस्यू,—र्जं मयि धेहीती,—यꣳ वै रजता,—ऽसौ हरिणी,—मे एवालभ्यो,—र्ग्वा उदुम्बरा, ऊर्जꣳ वा एतन्मध्यत आत्मनो धत्ते, प्रजानां च मित्रो

[ ५ ] मै. २,६,११ । तै. ब्रा. १,७,७,४;१,७,८,९ । वा. ९,५;१०,१७,१९—२१;१२,५;(२३,६५)। काण्व. १,७;११,२५,२८—२९,३१;१३,६;(२५,६७) ।

[ विष्णोः क्रमोऽसि सपत्नहा० । अथर्व. १०,५,२५-३५ ]

[ ६ ] मै. २,६,१२ । तै. ब्रा. १,७,९,५—६;१,७,१०। वा. ९,२२;१०,५,२३-२८;२२,६,२७;३९,१;२०,२;१२,१४। काण्व. १०,३१;११,१२,२३-४०;१३,१५; २१,९३;२४,६,३७;३९, १ ।

[ आयुरस्यायुर्मयि ( ०मे ) धेहि ( दाः )। अथर्व. २,१७,४ । ]

ऽसी,—तीममुपावहरति, मित्रस्य ह्येतद्रूपꣳ वरुणोऽसी,—तीमꣳ, वरुणस्य ह्येतद्रूपꣳ,
संदृसि, समहꣳ विश्वैर्देवै,—रिति हस्ता आमिक्षामभ्यवहरति, सद्वा आमिक्षा, सदेवाभ्यव-
हरति, तत्र ते हिरण्ये ददाति, सा दक्षिणा, हिनस्ति खलु वा एष पशून् पृथिवीमभ्यव-
रोह,—न्नमो मात्रे पृथिव्या इति, वाराही उपानहा अभ्यवरोहत्या,—रण्यानेव पशूनभ्यवरोहति,
वराह३स्त्वेवैतꣳ संधुमर्हति, तद्वराह एवैनꣳ सङ्गोति, प्रति त्यन्नाम राज्यमधायि स्वां
त३न्वꣳ वरुणोऽसुषोदिति, वरुणसवो वा एष, वरुणायैवैनं प्राह, नि त्रितो
जरिमाणं न आनडिति, जरिमाणमेवास्मिन् युनक्ति, स्योनासि सुषदेति, स्योना ह्येषा
सुषदा, स्योनामासीद, सुषदामासीदेति, सुषदैवैनꣳ सादयति ॥ ६
निषसाद धृतव्रतो वरुणः प३स्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ७
इति, वरुणसवो वा एष, वरुणमेवैनमक,—रग्नये स्वाहा, सोमाय स्वाहे,—न्द्रस्यौजसे
स्वाहा, मरुतां बलाय स्वाहे,—ति रथविमोचनीयं जुहोति, यजुषैव युज्यन्ते, यजुषा विमु-
च्यन्ते, हꣳसः शुचिषद्वसुरन्तरिक्षसदिति, रथꣳ वा एतत् परिवदति, सह सारथिना रथ-
वाहने रथमादधाति, सर्वत्वायैव प्रसवाय, ब्रह्मा३ꣳस्त्वं ब्रह्मासीति, किमुभूकिमुभू,—मिति
वा एतदाह, सवितासि सत्यसवा इती,—दमसीदमसी,—ति वावैनमेतदाह यद्यद्व्रत्ये,—षं
वज्र,—स्तेन मे रध्ये,—ति स्फ्यं प्रयच्छति, वज्रो वै स्फ्यो, वज्रेण वा एतद्राष्ट्रꣳ रन्धयते,
तमवरस्परं प्रयच्छति, तेनावरस्परꣳ राष्ट्रꣳ रन्धयमाण एति, तस्माद्वा एत एतस्मा अवरस्परꣳ
रद्वा, बलिꣳ हरन्ति, तेन स्फ्येनाधिदेवनं कुर्वन्ति, तत्र पष्ठौहीꣳ विदीव्यन्त, आशाꣳ वा
एष उपाभिषिञ्चत, आशा पष्ठौ३ह्या,—शामेवास्मा अक,—स्ततश्चतुःशतमक्षाणवोह्याह ॥
उद्भिन्नꣳ राज्ञः ॥ इति, चत्वारो वै पुरुषा, ब्राह्मणो राज३न्यो वैश्यः शूद्र,—स्तेषामेवैनमुद्-
भेदयति, ततः पञ्चाक्षान् प्रयच्छन्नाह, दिशो अभ्युभूदयमिती,—मा एवास्मै पञ्च दिशो-
ऽन्नाद्याय प्रयच्छति, क्षेत्रं ददाति, तेन क्षेत्रे धृतो भवति, वरꣳ वृणीते, सोऽस्मै कामः
संमृध्यते यत् कामो भवति, मङ्गल्यनाम्नो ह्वयति, यत् पूर्वꣳ व्याहार्षं तन्मेऽमोघमसदित्य,-

---

[ निषसाद धृतव्रतो० । ऋ. १,२५,१०; तै. सं. १,८,१६,१; तै. ब्रा. १,७,१०,२;२,६,५,१ । अग्नये स्वाहा । अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । हꣳसः शुचिषद्वसु० । ऋ. ४,४०,५; तै. सं. १,८,१५,२;४,२,१,५; तै. आ. १०,१०,२ ]

*.

—सा अमुष्य पु३त्रोऽमुष्यासौ पुत्र, इति नामनी व्यतिषजति स्वर्गस्य लोकस्य समष्ट्यै ॥
॥ ६ ॥ ८–१०

समानो वा एष यज्ञक्रतुः सꣳवत्सरं भवति, वि वा एतद्दशपेयश्छिद्यते यदवभृथमवयन्ति,
यदपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहे,—ति जुह्वत आयन्ति यज्ञस्य संतत्या अवि-
छेदाय, यज्ञो वै देवेभ्यस्तिरोऽभवत्, तं देवाः सꣳसृप्स्वन्वैछन्, यत् सावित्रः,
सवितृप्रसूता एवान्वैछन्, यत् सारस्वतो, वाग्वै सरस्वती, वा३च्येवान्वैछन्, यत्
पौष्णः, पशवो वै पूषा, पशुष्वेवान्वैछन्, यद्बार्हस्पत्यो, ब्रह्म वै बृहस्पति,—र्ब्रह्म-
ण्येवान्वैछन्, यदैन्द्रं, इन्द्रियꣳ वा इन्द्र, इन्द्रियं एवान्वैछन्, यद्वारुणो, वरुण एवा-
न्वैछन्, यत्त्वाष्ट्रः, सꣳवत्सरो वै त्वष्टा, सꣳवत्सरं एवान्वैछन्, यदाग्ने३यो, ऽग्निर्वै
सर्वा देवता, देवतास्वेवान्वैछन्, यत् सौम्यः, सौमीर्वा ओषधया, ओषधीष्वेवान्वैछन्,
यद्वैष्णवो, विष्णुर्वै यज्ञो, यज्ञ एवान्वैछꣳ,—स्तꣳ विष्णा अविन्दन् दशमे, तस्मादेष
दशमो, दशमे ह्यविन्दन्, दश चमसा, दश चमसाध्वर्यवो, दश दश चमसानभिता आ
दशमात् पुरुषादन्वाचष्टे समृद्ध्यै, दशसमृद्धो ३ह्येष यज्ञ, एतꣳ वै ते तद्यज्ञमन्वैछꣳ,—स्तं
आर्ध्नुवꣳ,—स्तद्य एतेन यजत ऋध्नोति, सप्तदशः सर्वो भवति, प्रजापतिर्वै सप्तदशः,
प्रजापतिमेवाप्नोत्यु,—त्सन्नयज्ञो वा एष, सꣳवत्सराद्वा अध्युत्सन्नयज्ञोऽवरुध्यते, सꣳवत्सरादे-
वैनमध्याप्त्वावरुन्द्धा, इन्द्रो वै वृत्रमहꣳ,—स्तस्येमे रूपाण्युपैता, चित्राणीयं नक्षत्राण्यसौ,
नक्षत्राणाꣳ वा अवकाशे पुण्डरीकं जायते, क्षत्रस्य वा एतद्रूपं, क्षत्रस्यैव रूपं प्रतिमुञ्चते,
द्वादशपुण्डरीका भवन्ति, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमेवाप्त्वावरुन्द्धे ॥ ७ ॥ ११

रुक्मो होतु,—राग्नेयो वै होता, न वा एतस्मै व्युछति, ३व्येवास्मै वासयति, स्रगु-
द्गातुः, सौर्यो वा उद्गाता,—ऽथो अमुमेवास्मा आदित्यमाप्त्वोन्नयति, प्रावेपा अध्वर्योऽर्यमा
इव ह्यध्वर्युः ॥ अश्वः प्रस्तोतुः, प्राजापत्यो वा अश्वः, प्राजापत्यः प्रस्तोता,—ऽथो प्रेव ३ह्येष
प्रोथति, प्रेव प्रस्तोता, धेनुः प्रतिहर्तुः, प्रतीव ३ह्येषा हरति, प्रतीव प्रतिहर्ता, वशा
मैत्रावरुणस्य, वशं मा नयादित्यृ,—षभो ब्राह्मणाच्छꣳसिनः सेन्द्रियत्वाय, वासः पोतुः पवि-
त्रत्वाया,—ऽनड्वान्नेष्टु,—रग्नीधोऽन्यो, युक्त्या एव, स्थूरि यवाचितमछावाकस्य, स्थूरीरिव

---

[ ७ ] मै. २,६,१३ । तै. ब्रा. १,७,१०,६; १,८,१ । वा. १०,२३,३० । काण्व. ११,२३,४३ ।
[ ८ ] तै. ब्रा. १,८,२ ।

ऽह्येषा होत्रा स्वऽग्र्या यदच्छावाक्या, ऽथो निर्वरुणत्वायैव यत्रा, न वा अस्यै तर्हि सदस्येभ्यो
दक्षिणा दीयन्ते, त एवास्यै तेनाभीष्टाः प्रीता भवन्ति, द्वादश पष्ठौहीर्गर्भिणीर्ब्रह्मणो, वाग्
वै धेनु,—र्गर्भो मन्त्रो, वाऽच्येवास्य मन्त्रं दधात्या,—मन्त्रणीयो ह भवति, धेनुर्भव्या भ-
वन्ति, द्वादश वै पयाꣳसि, तान्यस्मिन् दधाति, तस्माद्वा एतमाहुः, पयस्वी राजा
पुण्या इति, यावद्धि पयस्तदस्मिन् धीयते ॥ ८ ॥ १२-१३

आयन्तीयं ब्रह्मसामं भवत्य,—नुष्टुप्सु यज्ञायज्ञियं प्रोहन्ति, वारवन्तीयमग्निष्टोमसाम,—मिन्द्रो वै वृत्रमह,—न्तस ओजसा वीर्येण व्यार्ध्यत, स एतत् सामापश्यत्, तेनात्मानꣳ समश्रयतो,—जसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते, तदेतेनैवात्मानꣳ सꣳश्रयते, ब्रह्म वै यदग्रे व्यभुवद्वक्साम यजु,—स्तस्य वा एष रसो यद्यज्ञायज्ञियꣳ, यद्यज्ञायज्ञियं गायते ब्रह्मण्येव रसं दधाति, वाचा वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते, वागनुष्टुब्, यदनुष्टुप्सु यज्ञायज्ञियं भवति वाऽच्येवास्य रसं दधाती,—न्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चत, इन्द्रियꣳ वीर्यꣳ वारवन्तीयꣳ, यद्वारवन्तीयमग्निष्टोमसामं भवतीन्द्रियस्यैव वीऽर्यस्यावरुद्ध्या, अश्रयन्वाव आयन्तीयेना,—ऽवारयन्त वारवन्तीयेन, तदिन्द्रियस्यैवैतै वीर्यस्य परिगृहीत्यै, यत्र वा एनमदो दिशो व्यास्थापयति तत् स्वर्गं लोकमभ्यारोहति, यदिमं लोकं पुनर्नापावरोहेदतिजनꣳ वा गच्छेदुद्वा माद्येद्, यदेता दिशामवेष्टय, इमꣳ वा एतं लोकं पुनरुपावरोहत्य,—न्नकामो यजेतै,—तद्देवऽत्या वा इमा दिशो, यथादेवतꣳ वा एतदाभ्यो दिग्भ्योऽध्यन्नाद्यमवरुन्द्धे, यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिꣳ हुत्वाभिघारयेद्, यदि वैश्यो वैश्वदेवꣳ, यदि राजन्य ऐन्द्रं,—मेकधैवास्मिन्नन्नाद्यं प्रतिष्ठापयति, समानो वा एष यज्ञक्रतुः सꣳवत्सरं भवति, वि वा एतद्यज्ञꣳश्छिद्यते यत्संतिष्ठते, यदेताः प्रयुज उपैति सायमन्याः प्रातरन्या, द्वौ वा ऋतू अहश्च रात्रिश्च, ता एव प्रयुङ्क्ते, षडन्याः षडन्याः, षड्वा ऋतव, ऋतूनेव प्रयुङ्क्ते, ता उभयीर्द्वादश, द्वादश मासाः सꣳवत्सरः, सꣳवत्सरमेव प्रयुङ्क्ते, ऽनड्वाहौ दक्षिणा, युक्त्या एव, मारुती पृश्निः पष्ठौही गर्भिणीति, विड्वै मरुतो, विशो वा एनमेतद्गर्भं करोति, तस्माद्वा एष विशः प्रियः, प्रियो हि गर्भ, आदित्याजा मलिहा गर्भिणीती,—यꣳ वा अदिति,—रस्या वा एनमेतद्गर्भं करोति, तस्माद्वा एष दुःपराणोदो, ऽस्या हि गर्भो, ऽथैतै सत्यदूताः,

[९] तै. ब्रा. १,८,२.५; १,८,३ ।

प्रसवाय सावित्रो, देवा असुरैर्विजयमुपयन्तोऽश्विनोः पूषणि सत्यं न्यदधत, वाग्वै सरस्वती, वाचा सत्यं प्रहिणोति ॥ अभ्युषिक्षि राजाभूम् ॥ इति, श्रद्धास्मै सुपुत्राणाय दधाति, संवत्सरमग्निहोत्रं जुहोत्यनुसंतत्यै ॥ ९ ॥ १४-१६

अग्निष्टोममग्रे ज्योतिष्टोममाहरति, यज्ञमुखं वा अग्निष्टोमो, यज्ञमुखमेवालभ्यु सर्वमाक्रमते, ऽथैष त्रिष्टोम,—स्तस्य त्रिवृत् प्रातःसवनं पञ्चदशं माध्यंदिनं सवनं, तेजो वै त्रिवृत्, क्षत्रं पञ्चदशं,—स्तेज एवास्य क्षत्रे दधाति, न वा अत्रापि सप्तदशस्तायते, प्रजापतिर्वै सप्तदशो, यज्ञः प्रजापति,—र्यद्यज्ञस्तायते तेन सप्तदशोऽनन्तरितः, पञ्चदशं माध्यंदिनं सवन,—मेकविंशं तृतीयसवनमिति, विड्वा एकविंशः, क्षत्रं पञ्चदशो, विशि वावास्यैतत् क्षत्रं प्रतिष्ठापयामुकः, सर्वे चतुस्त्रिंशाः पवमाना अभिषेचनीयस्य, त्रयस्त्रिंशद्देवता,—स्ता एवास्यैतेनाभीष्टाः प्रीता भवन्त्य,—थ य एष चतुस्त्रिंशः, प्रजापतिर्वै चतुस्त्रिंशः, प्रजापतिमेवाप्नोति, संशरो वा एष स्तोमानामयथापूर्वं, यद्विषमाः स्तोमा यत्समाः पवमानास्तेनैवासंशरस्तेन यथापूर्व,—मात्मना वा अग्निष्टोमेन ऋध्नोत्या,—त्मना पुण्यो भवति, प्रजा वा उक्थानि, पशव उक्थानि, यदुक्थ्योऽनुसंतत्ये, यो वै सर्वादेति नैनं सव उपनमति, यः सामभ्या एति पापीयान्त्सुपुत्राणो भवति, यानि देवराजानां सामानि यत्तेभ्यो नैति तेनैव सर्वान्नैत्ये,—तानि वै सामानि यत् पृष्ठानि, यत् पृष्ठान्युपयन्ति तेनैव सामभ्यो नैति, यानि देवराजानां सामानि तैरस्मिंल्लोके ऋध्नोति, यानि मनुष्यराजानांस्तैरमुष्मिं,—स्तदुभयोरेवैतैर्लोकयोर्ऋध्नोत्यस्मिंश्चामुष्मिंश्चो,—द्वतीषु स्तुवता, उद्वद्वा अनुष्टुभो रूपं,—मानुष्टुभो राजन्य,—स्तस्मादुद्वतीषु स्तुवते, ऽनुष्टुप् प्रथमा भवत्य,—नुष्टुबुत्तमा, वाग्वा अनुष्टुब्, वाचा वा एतत् प्रयन्ति, वाचोद्यन्ति, सौर्यनुष्टुबुत्तमा भवति स्वर्गस्य लोकस्य समष्ट्या, एकविंशं केशवपनीयस्य बहिष्पवमानमेकविंशमभिषेचनीयस्योत्तममिति, विड्वा एकविंशः, क्षत्रं सप्तदशो, विशो वा एतन्मध्यतः सूयते, तस्माद्वा एष विशः प्रियो, विशो हि मध्यतः सूयते यत्र वा एनमदो दिशो व्यास्थापयति तत्स्वर्गं लोकमभ्यारोहति, यदिमं लोकं पुनर्नोपावरोहेदतिजनं वा गच्छेदुद्वा माद्येद्, यदेष प्रतीचीनस्तोम, इमं वा एतं लोकं पुनरुपावरोहति॥ १०॥

१७ [ २१८० ]

॥ इति खिलकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

[ १० ] तै. ब्रा. १,८,७—८ ।

अथ पञ्चमः प्रपाठकः ।

## अध्वरादीनां त्रयाणां विधिः ।

अपो वै वृत्रः पर्यशयत्, ततो या अत्यमुच्यन्त ता जीवा यज्ञिया, गिरिर्वै वृत्रो या अतिमुमुचाना धावन्ति ता जीवा यज्ञिया, यद्वहन्तीनां गृह्णाति या एव जीवा यज्ञियास्तासामेव गृह्णाति, प्रतीपमुपमारयत्यछम्बट्काराय, सूर्यस्यावकाशे गृह्णाति, सैन्द्रा एव गृह्णाति, हविष्मतीरिमा आप इति, हविष्मतीरेव गृह्णात्या,—विःसूर्ये गृह्वा, उत्तरमेव यज्ञक्रतुमभिगृह्णात्य,—नुष्टुभा गृह्णात्य,—नुष्टुब् वै सर्वाणि छन्दांसि, सर्वैरेवैना३छन्दोभिर्गृह्णाति, वर्ष्म वा एषा छन्दसां, वर्ष्मैनं समानानां गमयति, चतुर्भिर्गृह्णाति, त्रिभिः सादयति, तत् सप्त, सप्तपदा शक्करी, शाक्कराः पशवः, पशूनेवावरुन्द्धे, ऽपो वै रात्रिर्दिवा भूते प्रविशति, तस्मादापो दिवा कृष्णा, अपोऽहर्नक्तं, तस्मादापो नक्तं शुक्ला, यद्दिवा गृह्णात्युभे एवाहोरात्रे गृह्णाति, दिवा वै मनुष्या यज्ञेन चरन्ति, नक्तं देवा,—स्तस्माद्रात्रिभिः श्रवस्यते, संस्थाप्य वै मनुष्या यज्ञं निःपद्यन्ता, आपः खलु वै विश्वे देवा, यदपः परिहरन्त्यद्धर्यो वा एतद्यज्ञं संप्रादा,—दन्यस्तेऽस्य यज्ञे क्रियते, यद्वै यज्ञस्यान्तर्यन्ति तच्छिद्रं, तदनु रक्षांसि यज्ञमन्ववयन्त्यापो वै रक्षोघ्नी,—रपो रक्षांसि न तरन्ति, यदपः परिहरन्ति रक्षसामनन्ववायाय, या दिवा गृह्णाति या अत्रीः प्रजास्तासामेता योनि,—स्ता एता अनुप्रजायन्ते, या नक्तं गृह्णाति या आद्याः प्रजास्तासामेता योनि,—स्ता एता अनुप्रजायन्त, उभयीरेव प्रजाः प्रजनयत्यग्नीध्रा३ग्नाश्वा,—ऽग्नीध्रे सादयत्ये,—तद्वा अनभिजित,—मथो अत्र हि तां रात्रिं देवता उपवसन्ति, देवा वै यज्ञस्य श्वस्तनं नापश्यं,—स्ते वा एतदेव यज्ञस्य श्वस्तनमपश्यन् यद्वसतीवरी,—र्यद्वसतीवरीर्गृहीत्वोपवसन्ति श्वस्तनं वा एतद्यज्ञस्यालभ्योपवसन्त्य,—थो आपो वै विश्वे देवाः, सर्वा वा एतद्देवता आलभ्योपवसन्ति यस्यागृहीताः सूर्योऽभिनिम्रोचेद्, य आहिताग्निः सोमयाजी तस्य कुम्भाद्गृह्या,—स्तस्य हि गृहीता अग्निमुपरिष्टाद्धारयेयु,—रथ गृह्णीया,—ज्ज्योतिष्मतीरेवैना गृह्णाति, हिरण्यं हस्ते भवत्य,—थ गृह्णाति, सत्यं वै हिरण्यं, सत्येनैवैना गृह्णाति, वरो दक्षिणा, वरेणैवैना गृह्णाति, यत्तत्र धनमदास्यन्त्स्यात्तद्देयम् ॥१॥ १

प्रचरण्यामग्रे गृह्णात्ये,—षा ह्यग्रे प्रचरत्य,—पो वै सोमस्य रसः प्रविष्टो, ऽग्निः सर्वा देवता, वैश्वदेवीरापो, यज्ञमुखं ग्रावाणः, सवितृप्रसूतो वा एतत् सर्वाभिर्देवताभिरपां सोमस्य

[ १ ] मै. १,३,१ । तै. ब्रा. ६,४,२ । श. ब्रा. ३,९,२ । वा. ६,२३ । काण्व. ६,३३ ।
[ २ ] मै. १,३,१ । तै. सं. ६,४,३ । श. ब्रा. ३,९,३,१४ । वा. ६,२६—२८ । काण्व. ६,३८—३९,४१ ।

रसमच्छैति, शृणोत्वग्निः समिधा हवं मा इति, यस्मिन्नेवाग्नौ जुहोति तमेवदाह, शृण्वन्त्वापा
इति, या एवापोऽच्छैति ता एतदाह, धिषणा च देवीति, वाग्वै धिषणा देवी, वाचं वा
एतदाह, शृणोत ग्रावाणो विदुषो नु यज्ञमिति यज्ञमुखं हि ग्रावाणः, शृणोतु देवः सविता
हवं मा, इत्याह, प्रसूत्या एव ॥ अप इष्य होतः ॥ इति यज्ञं प्रेष्ये,—ति वा एतदाह॥ प्र
ब्रह्मणा इति, ब्रह्मणैव यज्ञमच्छैति, मैत्रावरुणस्य चमसेनाच्छैत्ये,—ष ह्यग्रे प्रचरत्य,—थो मित्रावं-
रुणौ ह्यपामीशाते, यज्ञमुखं वै मित्रावरुणौ, यज्ञमुखमापो, यज्ञमुखेनैव यज्ञमुखमच्छैति, यत्र
होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्गृह्णीयाद्, यन्नोपशृणुयाद्बधिरः स्याद्, वाचो
हि छिद्यते, ऽथ यज्जुहोति हविर्भूता एवैना गृह्णात्य,—थो अभिघृता एव तृणं प्रास्य जुहोत्य,-
—ग्निमत्येव जुहोत्या,—यतनवत्यन्धोऽध्वर्युः स्याद्, यदनायतने जुहुयाद्, घृतं वै देवा वज्रं
कृत्वा सोममघ्न,—न्नभि खलु वा एता घारयन्ति, तस्मादाहुतिमपप्लावयत्य,—थो आहुतिं नें-
द्दूराणीति, कार्ष्यसीत्या,—हुतिमपप्लावयति, समुद्रस्य वोऽक्षित्या उन्नया, इत्युपमारयत्य,-
—पामेवाक्षित्या, अपो वै सोमस्य रसः प्रविष्टः, सोममपां रसो, ऽपांच खलु वै नपाच्चा-
पां सोमस्य रसस्येशाते, तौ वा एतदाहुत्या भागधेयेनापां सोमस्य रसं निरयाचिष्टो,—भे
अहोरात्रे वसतीवरीषु ग्रहीत३व्ये, इत्याहुः, पूर्वेद्युरन्या गृह्णाति, पुरान्याः सूर्यस्योदेतो,—
स्तथास्योभे अहोरात्रे वसतीवरीषु गृहीते भवतः, पूर्वेद्युरन्या गृह्णाति, पुरान्याः सूर्यस्योदेतो,—
रुभयीरेवैनाः सद्योगृहीता अक,—र्भ्रातृव्या वा एता गृह्यन्ते या मैत्रावरुणस्य चमसे याश्च निग्रा३-
भ्या,—स्ता उभयीरुपरिष्टाच्चात्वालस्य समनक्ति, संज्ञानमाभ्यः करोति, मित्रमाभ्यो ददाति,
चात्वालान्निर्गृह्यन्त, एष वा अपां योनिः, स्वादेव योनेर्निर्गृह्यन्तेऽस्कन्नत्वाय॥ अवेरपोऽध्व-
र्यो३ ओम् ॥ इत्य,—विदो यज्ञा३,—मिति वा एतदाह ॥ उतमेनन्नमु,—रुतेमं पश्य ॥ अयं मे
रुद्ध, इति वा एतदाह, यद्यग्निष्टोमो जुहोति, न वा अग्निमग्निष्टोमस्य स्तोत्रेण न शस्त्रेणा-
तियन्त्य,—ग्निष्टोममेव यज्ञक्रतुमनुसंतनोति, यद्युक्थ्युः, परिधिमनक्ति, परे वा अग्नेः परि-
धयः, पराणि परिधिभ्य उक्थान्यु,—क्थान्येव यज्ञक्रतुमनुसंतनोति, यद्यतिरात्रं, एतदेव
यजुर्वदन् हविर्धानं प्रपद्येत, परं वै परिधिभ्यो हविर्धानं, परोक्थेभ्यो रात्री,
रात्रीमेव यज्ञक्रतुमनुसंतनोति, स्तेनं मनो, ऽनृतवादिनी वा,—गथ केन सोमा गृह्यन्ते केन
हूयन्ता, इति पृच्छे,—द्दृतं वै सत्यं हिरण्य,—मृतेनैव सत्येन गृह्यन्त, ऋतेन हूयन्ते ॥२॥

देवेभ्यो वै मनुष्येभ्यः स्वर्गाय लोकाय यज्ञ आह्रियते, यद्वदे त्वेति, तेन देवेभ्यो, यन्मनसे त्वेति, तेन मनुष्येभ्यो, यदाह, दिवे त्वा सूर्याय त्वेति, तदनु यज्ञꣳ स्वर्गं लोकꣳ समारोहयति, वि वा एतद्यज्ञश्छिद्यते यस्मै कमाह्रियते, तद्धयेनमनु स्वर्गं लोकꣳ समारोहयति, यदाह, दिवि देवेषु होत्रा यच्छेति, होत्राभिर्वै यज्ञः संततो, होत्राभिरेव यज्ञꣳ संतनोति ॥ देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ॥ इति, छन्दाꣳसि वै देवाः प्रातर्यावाण,—श्छन्दोभ्यो वा एतदनुवाच आह, पुरा वाचः प्रवदितोः प्रातरनुवाकमन्वाह, यजमानायैव वाचं गृह्णाति, न वा एतर्हि यजमानो हस्ता अवनेनिक्ते, यदप्सुमतीं प्रथमामन्वाह, प्रातरवनेगो वा एष यजमानस्य, यत्र वा अ३दोऽपः परिहरन्त्य,—न्नो वा एतद्यज्ञꣳ संप्रादा,—द्यदप्सुमतीं प्रथमामन्वाहान्नो वा एतद्यज्ञं पुनरालभते, सर्वेषाꣳ वै देवानां प्रातरनुवाक, आपः खलु वै विश्वे देवा, यदप्सुमतीं प्रथमामन्वाह सर्वा वा एतद्देवता आप्नोति, सर्वा व्यश्नोति, यथा वै सामिधेनीरेवं प्रातरनुवाक, आसाद्य वै हविः सामिधेनीरन्वाहु,—रेतद् खलु वा एतर्हि हविर्यत्सोम,—स्तस्मात् सोममुपावहृत्यान्वाह, गायत्रीं च संपादयति जगतीं च, तद् द्वे छन्दसी, एकं छन्दोऽभिसंपादयति बृहतीं, त्रिष्टुभं च ककुभं च, तद् द्वे छन्दसी, एकं छन्दोऽभिसंपादयति बृहतीं,—मनुष्टुभं च पङ्क्तिं च, तत् षट् छन्दाꣳस्ये,—कं छन्दोऽभिसंपादयति बृहतीं,—मनुष्टुप्प्रतिपत्कानि छन्दाꣳसि कुर्याद्यज्ञावकीर्णस्य, वाग्वा अनुष्टुब्, वाचैवैनं भिषज्यति, समया त्रिष्टुभं च जगतीं चानुब्रूयात् पशुकामस्य, पशवो वै जगती, पशुमान् भवति, सर्वाणि छन्दाꣳस्यन्वाह, प्रजापतिर्वै छन्दाꣳसि, प्रजापतिमेवाप्नोति, प्रजापतेर्वा एतदुक्थं यत् प्रातरनुवाको, व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूया,—देष हि प्रजापतेर्लोकः, पवित्रꣳ वै प्रातरनुवाको, यजमानमेवैतेन पुनाति, शतमनुब्रूयादायुःकामस्य, शतायुर्वै पुरुषः शतवीर्या, आयुरेव वीर्यमाप्नोति, सप्त च शतानि विꣳशतिं चानुब्रूयात् पशुकामस्यै,—तावन्ति वै सꣳवत्सरस्याहोरात्राणि, सꣳवत्सरेणैवास्मै पशूनवरुन्द्धे, सहस्रमनुब्रूयात् स्वर्गकामस्य, यावद्वै सहस्रं तावदि३तोऽसौ लोकः, स्वर्गस्य लोकस्य समष्ट्या, अपरिमिता अन्वाहा,—परिमितस्यावरुद्ध्यै, पङ्क्त्या परिदधात्यु,—त्तरमेव यज्ञक्रतुमभिगृह्णाति ॥ ३ ॥ १०–१२

---

[ ३ ] मै. १,३,१ । तै. सं. ६,४,३,१—२ । श. ब्रा. ३,९,३,४ । वा. ६,२५ । काण्व. ६,२६ ।

यज्ञस्य वा एताः पत्नीजनीः, पुंसामन्नीत्, स्त्रीणां नेष्टा, यदग्नीन्नेष्टुरुपस्थमासीदति, मिथुनं वा एतत् संभवतो, यत्तर्ह्येप उपप्रवर्तयति तस्मिन्नेव मिथुने रेतो दधाति, पत्न्युपप्रवर्तयति, पत्न्या हि प्रजाः प्रजायन्त, ऊरुणोपप्रवर्तयत्यू,—रुं ह्यनु प्रजाः प्रजायन्ते, दक्षिणेनोरुणोपप्रवर्तयति, दक्षिणं ह्यूरुमनु प्रजाः प्रजायन्ते, ऽन्तरत उपप्रवर्तयत्य,—न्तरतो हि प्रजाः प्रजायन्ते, यद्दक्षिणा प्रवर्तयेत् पितृलोक एना निधुवे,—दथ यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना उपप्रजनयति, प्राजापत्यो वा उद्गाता, संक्शाप्यमानो वा उद्गाता पत्न्या रेता आदत्ते, यदाह, वामी ते संदृशि विश्वं रेतो धेषीयेति, तथा ह नादत्ते, द्वादशे स्तोत्र उपप्रवर्तयति, द्वादश मासाः संवत्सरो, द्वादशाग्निष्टोमे स्तोत्राण्या,—पः शान्ति,—र्यत्तर्ह्येप उपप्रवर्तयति, शमयत्येव, देवस्य त्वा सवितुः प्रसव इति, सवितृप्रसूत एवैनमादत्ते, ऽश्विनोर्बाहुभ्यामित्य,—श्विनौ वै देवानामध्वर्यू, पूष्णो हस्ताभ्यामिति, देवताभिरेव, ग्रावासीति, रातें ह्येप देवेभ्यः सोम,—मध्वरकृद्देवेभ्यो इत्य,—ध्वरं ह्येप देवेभ्यः करोती,—न्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तमित्यै,—न्द्रो हि यज्ञ, इन्द्रं खलु वा एतर्ह्यन्या देवता अन्वि,—न्द्राय त्वा वसुमते रुद्रवत इति, वसवश्च ह्येनमेतर्हि रुद्राश्चान्वि,—न्द्राय त्वादित्यवत इत्या,—दित्या ह्येनमेतर्ह्यन्व,—ग्नये त्वा रायस्पोषद इत्य,—ग्निर्वै सर्वा देवता, एता ह्येनमेतर्हि देवता अनु, विष्णवे त्वेति, विष्णुर्हि यज्ञो, व्यानो वा उपांशुसवनः, प्रजा अंशवो, व्यानं वा एतत् प्रजासु दधाति, श्वात्राः स्थ वृत्रतुरा इत्ये,—ष वा अपां वै सोमपीथ, एतं वै विश्वामित्रोऽपां सोमपीथं विदांचकार, तस्मै सिन्धवो घोक्षमनमन्ता,—ऽपां वा एष सोमपीथो, ऽपो वा एतत् सोमपीथेन समर्धयति, यो वा अपां सोमपीथं वेद न ह वा आस्वार्तिमार्छति, करोत्यासु वीर्यं, यत्ते सोम दिवि ज्योतिरिति, सोमो वै वाज,—स्तस्य चन्द्रमास्तृतीय,—मयं यः पवते स तृतीयं, येन यजन्ते स तृतीयं, गर्भानमुना दाधार, प्राणाननेन यछत्य,—यं यः पवतेऽन्नमनेन दाधार, येन यजन्ते तस्य वै वाजस्य सत्यं वाजिन,—मन्नं वाजिनं, दक्षिणा वाजिनं, ता वा अस्यैतत्तन्वः संभृत्य तं सर्वं संतनुं भूतमाप्याययन्ति, वज्रो वै ग्रावा, हनू अधिषवणे, क्रूरमिव वा एतद्यज्ञे क्रियते, यदाह, धिषणे ईडिते ईडेथामिति, शमयत्येव ॥ ४ ॥ १३

• [ ४ ] मै. १,३,१—२ । तै. सं. ६,४,४ । श. ब्रा. ३,९,४ । वा. ६,३०,३२—३४ । काण्व. ६,४३,४५—४७ ।
[ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२ ]

वसतीवरीभिः सोममाप्याययन्ति, न हि सोमेन सोम आप्यायते, ऽद्भिर्हि सोम आप्यायते,
निग्राभ्याभिरुपाꣳशुं,—मतो हीतरे सोमा गृह्यन्ते, प्राणो वा उपाꣳशु,—रङ्गानीतरे ग्रहा, यदन्यत
आप्याययेयुः प्राणेन यज्ञꣳ विछिन्द्यु,—रष्टौ कृत्वः प्रातरभिषुणोत्य,—ष्टाक्षरा गायत्री, गायत्रीꣳ
वा एतत् प्रातःसवने व्यायातयन्ति, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा उपाꣳशौ यज्ञꣳ
सꣳस्थाप्यमपश्यꣳ,—स्तमुपाꣳशौ समस्थापयꣳ,—स्तदुपाꣳशा एव यज्ञः सꣳस्थाप्यो, ऽष्टौ
कृत्वः प्रातरभिषुणोत्य,—ष्टाक्षरा गायत्री, गायत्रीमेवाप्नोति, यदेकादश, त्रिष्टुभं तेन,
यद् द्वादश, जगतीं तेन, त्रिर्विगृह्णाति, त्रीणि वै सवनानि, सवनान्येवाप्नोत्ये,—तद्वा
उपाꣳशौ यज्ञꣳ समतिष्ठिपꣳ,—स्तेन सꣳस्थितेनारिष्टेन भूतेन प्रचरन्ति, त्रिर्विगृह्णाति, त्रयो
३हीमे प्राणाः, प्राणोऽपानो व्यानो, ऽथो त्रयो वा इमे लोका, इमानेव लोकानाप्नोत्य,—
सौ वा उपाꣳशुरन्तरिक्षमन्तर्याम, इयमुपयामो, यदुपयामगृहीता गृह्यन्तेऽनया वा एतं-
द्गृह्यन्ते, तदस्कन्ना वा ए३ते, ऽनया हि गृह्यन्ते, यत्स्थाल्या गृह्यन्ते, ऽनया वा एतद्गृ-
ह्यन्ते, ऽस्या वा एषाधिक्रियते, तदस्कन्ना वा ए३ते, ऽनया हि गृह्यन्ते, यद्दारुमयेण गृ-
ह्यन्तेऽनया वा एतद्गृह्यन्त, इयꣳ हि वनस्पतीनाꣳ योनि,—स्तदस्कन्ना वा ए३ते, ऽनया हि
गृह्यन्त, एष ते योनि,—रिति सादयती,—यꣳ वै सोमस्य योनि,—रस्याः सोमोऽधि जायते,
स्व एवैनꣳ योनौ दधाती,—यꣳ वै देवपात्रं, तद्य एवꣳ वेद प्र वसीयसः पात्रमाप्नोति,
ब्राह्मणं तु पात्रे न मीमाꣳसेत यः पात्रिय इव स्या,—दनुपयामगृहीतो गृह्यते, ऽनुपयामगृहीतꣳ
हि प्रजाः प्राणमुपजीवन्त्य,—पवित्रपूतो गृह्यते, ऽपवित्रपूतꣳ हि प्रजाः प्राणमुपजीवन्त्य,—सन्नो
हूयते, ऽसन्नꣳ हि प्रजाः प्राणमुपजीवन्ति, पवित्रपूता वा अन्ये सोमा, अथ वा एष वा-
क्पूतो यदुपाꣳशुं,—स्तस्माद्वाचस्पतये पवस्वे,—त्याह, वाक्पूतो ३ह्ये३षो, ऽꣳशुभिः पावयति,
प्राणा वा अꣳशवः, प्राणैरेवैनं पावयति, द्वाभ्यां द्वाभ्यां पावयति, द्वौ द्वौ ३हीमे प्राणा,
देवो देवानां पवित्रमसीति, यत्स्वित्सोमꣳ सोमेन पुनाति, स्वाङ्कृतोऽसीति, प्राणमेव स्वम-
कृत, मनस्त्वाष्ट्विति, मनसैव प्राणमाप्नोति, स्वाहा त्वा सुभव सूर्यायेति, सूर्यदेव३त्या हि

[ ५ ] मै. १,३,४। तै. सं. ६,४,५। श. ब्रा. ४,१,१;४,१,२,२१। कपि. ४१,९;४२,१—२। वा. ७,१,३,६। काण्व. ७,
१—३,५।

*

सर्वे सोमा हूयन्ते, ऽथो अत्र वै देवानां प्रियास्तन्व,—स्ता एवावरुन्द्धे, देवेभ्यस्त्वा मरीचिपेभ्य इति, रश्मयो वै देवा मरीचिपाः, परिधयो रश्मयो, ऽसा आदित्य आहवनीय,—स्तानेव प्रीणात्यू,—र्ध्वस्तिष्ठन् जुहोत्यू,—र्ध्वो हि तिष्ठन् वीर्यवत्तरो, यं द्विष्यात्तस्य जिह्मस्तिष्ठन् जुहुयात्, प्राणानस्य व्लिनाति, जिह्मारुको भवति, यद्यभिचरेदा तमितोस्तिष्ठे,—दग्निराहुतिमभित्वरमाणस्ताजगनुगछति, यदि कामयेत, वर्षेत् पर्जन्य, इति परिमृज्योर्ध्वमुन्मृज्या,—दोषधीभ्यो वा एषोऽमुतो वर्षत्यो,—षधीरेव नेदीयो वृष्ट्या अक,—र्यदि कामयेत, वर्षेत् पर्जन्य, इति परिमृज्यावाचीनमवमृज्याद्, वैश्वानरेणैव वृष्टिमपि हन्ति, नापिधेयो, यदपिदध्यात् प्राणमस्यापिदध्यात्, प्रमायुकः स्याद्, यं द्विष्यात्तस्यापिदध्यात्, प्राणमेवास्यापिदधाति, यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्य प्राणमपिदधामि ॥ इत्यपिदध्यात्, प्राणमेवास्यापिदधाति॥ इदमहममुष्यामुष्यायणस्य प्राणे सादयामि॥ इत्यभिचरन्त्सादयेत्, प्राण एवास्य सादयति, प्रमायुको भवति, प्राणाय त्वेत्य,—नभिचरन्त्सादयेत् ॥ ५ ॥ १४-१८

पवित्रं वितन्वन्ति प्राणापानयोर्विधृत्या, उपयामगृहीतो गृह्यते, ऽपानेन वै प्राणो धृतः, प्राणस्य धृत्या, अन्तरिक्षं वा अन्तर्यामो, ऽन्तरिक्षमिमाः प्रजा, यदेतत् पात्रं सदवत्सादयति प्रजास्वेव रसं दधाति, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा उपांशुमपश्यं,—स्तमगृह्णत, तं पुरा स्तोत्रात् पुरा शस्त्राद्धोतुमुपोदतिष्ठं,—स्तेऽसुरा अचिकयु,—र्जुह्वति वा इति, ते वज्रमादायाभ्युपतं,—स्ते देवा अन्तर्याममपश्यं,—स्तमगृह्णत, तेनासुरानेभ्यो लोकेभ्यो ऽन्तरदधत, ततो देवा अभवन्, परासुरा,—र्य एवं विद्वानन्तर्यामं गृह्णीते, ऽन्तर्यामेणैव भ्रातृव्य,—मेभ्यो लोकेभ्योऽन्तर्धत्ते, भवत्यात्मना, परास्य भ्रातृव्यो भवति, प्राणापानौ वा उपांश्वन्तर्यामौ, व्यान उपांशुसवनो, यदेष ग्रावान्तरेते पात्रे साद्यते, प्राणापानयोर्विधृत्यै, यो वा एता ईजुते, येनैतौ विधृता एष वाव स उपांशुसवनो ग्रावा, प्राणापानौ वा उपांश्वन्तर्यामौ, व्यान उपांशुसवनो, यदेते पात्रे एतं ग्रावाणमा तृतीयात् सवनान्न जुहीतस्तस्मात् सुप्तस्य सर्वाण्यन्यानि श्रोत्राण्यपक्रामन्ति प्राणापानौ त्वेनं न जहीतो, ऽथ यत् पुनरुदयति, तस्मात् सुप्त्वा पुनः प्रबुध्यन्ते, प्राणापानौ वा उपांश्वन्तर्यामौ, व्यान उपांशुसवनो, यदेते पात्रे एतं ग्रावाणमा तृतीयात् सवनान्न जहीतस्तस्मात् पक्षिणो वियत्य पक्षा-

[६] मै. १,३,५ । तै. सं. ६,४,६ । श. ब्रा. ४,१,२ । कपि ४१,९; ४२,२ ।

नीरयन्तो नावपद्यन्ते, ऽथ यत् पुनुरदंयुति तस्मात् पुनुरभ्यायुवते, प्राणापानौ वा उपांश्व-न्तर्यामौ, व्यान उपांशुसवनो, यदेते पात्रे पुनः प्रयुज्येते तस्मादिमौ द्वा अधस्तात् प्राणौ, घ्नन्ति वा एतत् सोमं यदभिषुण्वन्त्य,—ध्वर्युः ग्रुथ३मोऽभिषुणोति, व्यर्धुको भवति, यत्र मूलं तद्भिषुत्य, एतद्वा अस्य विदेवतमं, तथा हाव्यर्धुको ह भवति, यो वै देवक्षेत्रं विद्वांस-मर्पयत्यार्तिमार्छति, पात्राणि वाव देवक्षेत्रं, यत्र वा अग्रेऽध्वर्युः सोमं जुहोति तदेनं देवताः प्रत्यासत, इहं नो पुरमा ह रिष्यतीति, यत्ततोऽन्यत्र जुहुयाद्यदस्य स्वं तदन्येभ्यः प्रयच्छे,—दस्वो ह भवत्ये,—तद्वा अध्वर्योः स्वं यदाश्रावयुति, यदाश्राव्याहुत्वा प्रच्यवेत यदस्य स्वं तस्मात् प्रच्यवेता,—स्वो ह भवत्ये,—तद्वा अध्वर्योः स्वं यद्वाय३व्यं, यद्वाय३व्यमनालभ्याश्रावये-द्यदस्य स्वं तस्माच्छिद्येता,—स्वो ह भवति, तद्य एवं विद्वानाश्राव्यु हुत्वा वाहुत्वा वा प्रच्य-वते बह्वस्य स्वं भवुति, न स्वाच्छिद्यते, वायव्यमालभ्याश्रावयति, स्ववानेव भवति ॥ ॥ ६ ॥ १९

ब्रह्मवादिनो वदन्ति, किं तद्यज्ञे क्रियते यस्माद्धस्तादाना अन्ये पशवो मुखादाना अन्य इति, यदुपांशुं हस्तेन गृह्यते तस्मान्मर्कटः पुरुषो हस्ती ते हस्तादाना, मुखं वै वाय३व्यं यद्वाय३व्ये नेतुरे ग्रहा गृह्यन्ते तस्मादितरे पशवो मुखादाना, ब्रह्मवादिनो वदन्ति, किं तद्यज्ञे क्रियते यस्मात् सद्यो जाताः पशवः प्रतितिष्ठन्ति सं॑वत्सरे पुरुषा इत्यु,—पांश्वन्तर्यामौ वा अन्वन्ये पशवः, पुरुषस्त्वै यज्ञेन संमितः, प्राणापानौ वा उपांश्वन्तर्यामौ, यदेतौ ग्रहा असन्नौ हूयेते तस्मात् सद्यो जाताः पशवः प्रतितिष्ठन्ति, सं॑वत्सरो वा अग्निष्टोमो, द्वादश मासाः सं॑वत्सरो, यदेत इतुरे ग्रहाः साद्यन्ते तस्मात् पुरुषो जातः सं॑वत्सरे प्रतितिष्ठति, यत्ते सोमादाभ्यं नाम जागृवीत्ये,—ष वै सोमस्य सोमपीथः, सोमं वा एतत् सोमपीथेन समर्धयति, यो वै सोमस्य सोमपीथं वेद न सोमपीथाच्छिद्यते, सोमो वा इमा दि३शोऽभ्युकामयत, प्रागपागधरागुदगित्या,—भिरेनं दिग्भिः समूहत्या,—भिः समर्धयति, काममेनं गमयति, कामं ह गच्छति, कामुका एनं स्त्रियो भवन्ति, यां कामयेत तां तर्हि मनसा ध्यायेत्, सा हैनं कामयते, ऽम्ब्र निस्मरेति, स्मरे,—ति वा एतदाह, संमरिविद्वामिति, संमनैनु वित्स्वे,—ति वा एतदाह, चत्वारो वै पृश्नेः स्तना आसं,—स्ततस्त्रिभिर्देवेभ्यो-

[ ७ ] मै. १,३,४ । तै. सं. ६,४,४—६ । कपि. ४२,२—३ । वा. ७,२;६,३६ । काण्व. ७,१-२;६,४९ ।
[ प्रागपागधरा ( गुदगध० ) गुदग० । अथर्व. २०,१३४,१—६ ]

ऽदुहत्, कुशीभिरेकोऽनुनद्ध आसीत्, तꣳ वा इन्द्र एवापश्यत्, तेनैन्द्रायैवादुहत्, तद्वा अस्य कौशिकत्वꣳ, यदाह ॥ ब्राह्मण कौशिका इव ॥ इति चतुर्निग्राभमुपैति, चत्वारि वै पयाꣳसि, यावदेव पयस्तदाप्नोति, त्रिः संभरति, तस्मादेतस्यां त्रयो भागाः प्रातर्मध्यंदिने सायं, चतुर्निग्राभमुपैति, त्रिः संभरति, तत् सप्त, सप्तपदा शक्वरी, शाक्वराः पशवः, पशूनेवावरुन्द्धे, नव कृत्वो निग्राभमुपैति, त्रिः संभरति, तद् द्वादश, द्वादश मासाः संवत्सरो, द्वादशाग्निष्टोमे स्तोत्राण्ये,—षा यज्ञस्य मात्रा, स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्, तस्य देवास्तमोऽपाघ्नन्, यत् प्रथमं तमोऽपाघ्नन्त्साविः कृष्णाभवद्, यद् द्वितीयꣳ सा लोहिनी, यत्तृतीयꣳ सा बलक्षी, स स्वेन रूपेण निरमुच्यत, यद्बलक्षः पवित्रं भवति ततः शुक्रो गृह्यते, यजमानस्य वा एतत् पवित्रꣳ, यजमानमेवैतेन पुनात्य,—ोतꣳ स्या,—द्वात्मन एवैनदकृत, यदन्यत्रोतमपवित्रं तद्यजमानस्य ॥ ७ ॥ २०-२२

वाग्वा ऐन्द्रवायवः, सा वै वागेकधावदद्याव्यावृत्तासीत्, स इन्द्रोऽब्रवी,—न्मह्यमत्रापि सोमं गृह्णीता,—ऽहꣳ व एतां वाचꣳ व्यावर्तयिष्यामीति, स वै वाचैव वाचꣳ व्यावर्तयद्, यदैन्द्रवायवो गृह्यते, वाचो व्यावृत्त्यै, वायवे प्रथमं गृह्णाति, वायव उत्तमं, मध्यत इन्द्राये,—न्द्रियेण वा इयꣳ वाङ् मध्यतो विधृते,—न्द्रियवतीꣳ वाचꣳ वदति य एवꣳ वेद, देवा वै सोममजिघाꣳसꣳ,—स्तं नाशक्नुवन् हन्तुꣳ, वायुर्ह्यस्मिन्नन्तरासीत् प्राण,—स्तं देवा अपाशासु,—रप ना आवर्तस्वेति, सोऽब्रवीद्, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवी,—न्मदेवत्यान्येव पात्राण्यासन्निति, तस्मादपतुरीयꣳ वायोः पात्र,—मथ वायव्यान्युच्यन्ते, ततो वै देवाः सोममघ्न,—न्त्स हतोऽपूयत, तस्माद्देवा उदबीभत्सन्त, स वायुरब्रवी,—दहꣳ व एतꣳ सोमꣳ स्वदयिष्यामि, भागो मेऽस्त्विति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवी,—न्मदग्रा एव ग्रहा गृह्यान्ता इति, तꣳ वायुर्मध्यतो व्यवाट्, तमस्वदयत्, तस्माद्वाय्वग्रा ग्रहा गृह्यन्ते, तस्मादु शुक्तं प्रवाते विषजन्ति, देवा वै प्रातःसवनमुद्यमं नाशक्नुवꣳ,—स्तृतीयसवने तर्हि वायुरासीत्, तं देवाः प्रातःसवनमभिपर्यौहꣳ,—स्तेन प्रातःसवनमुदयछन्त, यदैन्द्रवायवः प्रातःसवने गृह्यते, प्राणो वै वायुः, प्राणेन वा एतन्मुखतो यज्ञमुद्यछन्ते, देवा वै वृत्रमजिघाꣳसꣳ,—न्त्स मित्रोऽब्रवी,—न्मित्रो ऽहमस्मि, नाहꣳ हनिष्यामीति,

---

[ ८ ] मै. १,३,६—७। तै. सं. ६,४,७-८। श. ब्रा. ४,७,३—४। कपि. ४२,३-४।

तेऽब्रुवन्, जरह्मेवेति, सोऽब्रवीद्, भागो मेऽस्त्विवति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीत्, पयसैव मे सोमꣳ श्रीणानिति, तस्मात् पशवोऽपाक्राम,—न्मित्रः सन्क्रुहा इति, पशूनाꣳ हि पयो यन्मैत्रावरुणं पयसा श्रीणाति, पशुभिरेवैनꣳ सम्यञ्चं दधाति यन्मैत्रावरुणं पयसा श्रीणाति, द्विदेवत्यत्वाय, यच्च शीतं तेन मैत्रꣳ, यत्तप्तं तेन वारुणं, ब्रह्म वै मित्रः, क्षत्रꣳ वरुणो, ब्रह्मणि च वा एतत् क्षत्रे च पयो दधाति, तस्माद्ब्रह्म च क्षत्रं च पयस्वितुमे, पश्च वै ब्राह्मणस्य देवता, अग्निः सोमः सविता बृहस्पतिः सरस्वती, तस्माद्ब्राह्मणमन्ये मनुष्या उपधावन्त्ये,—तस्य हि भूयिष्ठा देवता,—स्तासां तिस्रोऽवान्तरꣳ श्रोत्रियस्या,—ऽग्निर्बृहस्पतिः सरस्वती, तस्माच्च श्रोत्रियमश्रोत्रिया उपधावन्त्ये,—तस्य ह्यवान्तरं भूयिष्ठा देवता,—स्ता मैत्रावरुणं प्रति न्यागच्छन्ति, यन्मैत्रावरुणं पयसा श्रीणाति तास्वेव पयो दधाति, नाना वै पुरा मित्रावरुणाभ्याꣳ सोमा अगृह्यꣳ,—स्ताः प्रजा अन्यान्यस्याः परिहायमाददत, ततो मित्रावरुणाभ्याꣳ सह सोममगृह्णꣳ,—स्ततो वा अकल्पत, यन्मैत्रावरुणं पयसा श्रीणाति, मित्रेण वा एतद्वरुणं कल्पयति, वरुणेन मित्रं, मित्रꣳ वै वृत्रं जघ्निवाꣳसꣳ वरुणोऽगृह्णात्, स देवेष्वनाथत, तेऽब्रुवन्; वरुणे नाथस्वेति, स वरुणेऽनाथत, सोऽब्रवीद्, भागो मेऽस्त्विवति, वृणीष्वे,—त्यब्रुव,—न्त्सोऽब्रवीत्, सहैव नौ पयसा सोमꣳ श्रीणानिति, यन्मैत्रावरुणं पयसा श्रीणाति, यजमानस्य निर्वरुणत्वाय, यद्येनं भ्रातृव्योऽतीव स्यादङ्गुल्याङ्गुष्ठमवगृह्णीयाद्, यद्यन्वङ्गुष्ठेनाङ्गुलिम् ॥ २३

यो नो मित्रावरुणा अभिदासात् सपत्नो भ्रातृव्य उत्पिपीते बृहस्पते ।

इदमहं तमधरं पादयामि यथाहमुत्तमश्चेतयानि ॥ २४

इत्युत्तमो ह चेतयति ॥ ८ ॥ २५

देवा वै सत्त्रमासत कुरुक्षेत्रे, ऽग्निर्मखो वायुरिन्द्र,—स्तेऽब्रुवन्, यतमो नः प्रथमं ऋध्नवत् तं नः सहेति, तेषाꣳ वै मखं आर्धोत्, तं न्यकामयत, तं न समसृजत, तदस्य ग्रासं हादित्सन्त, स इत एव तिस्रोऽजनयते,—तो धनु,—स्तत्तिसृणां च धन्वनश्च जन्म, स प्रतिधायापाक्रामत् तं नाभ्यधृष्णुवत्, स धन्वार्ति प्रतिष्कभ्यातिष्ठत, स इन्द्रो वम्रीरब्रवी,—देवाज्यामप्यत्येति, ता अब्रुव,—न्नभिमृतायाꣳ वा अस्यां न शक्ष्यामो जीवितुं, भागो नोऽस्त्विवति, सोऽब्रवीद्, रसमेवास्या उपजीवाथेति, तस्मादेताः शुष्कादार्द्रमुद्दिहन्ति, रसꣳ ह्यस्या

---

[ ९ ] तै. आ. ५,१ ।

उपजीवन्ति, ता वै ज्यामप्याद२,—स्तस्य धन्वार्तिरुदग्य शिरोऽछिनत्, स सम्राडभव,— दथेतरं त्रेधा व्यगृह्णता,—ऽग्निः पूर्वार्धं,—मिन्द्रो मध्य२, वायुर्जघनार्धं, तस्मादाग्नेयं प्रातः-सवनं,—मैन्द्रं माध्यंदिन२ सवन२, वैश्वदेवं तृतीयसवनं२, वायुर्हि विश्वे देवाः, प्राणापानौ वा उपा२श्वन्तर्यामौ, व्यानं उपा२शुसवनो, वागैन्द्रवायवो, दक्षक्रतू मैत्रावरुणं, आश्विनः श्रोत्रं, चक्षुषी शुक्रामन्थिना, आत्माग्रायणो, ऽङ्गान्यु३क्थ्या, आयुर्ध्रुवः, स्तना ऋतु-पात्रे, मूर्धा द्रोणकलशः, कुक्षी कलशौ, हनू अधिषवणे, जिह्वाधिषवणं, ग्रावाणो दन्ता, अक्षाः परिधयो, नासिकोत्तरवेदिः, शिखा यूपः, शिरो हविर्धानं, पृष्ठमाग्नीध्र,—मुदर२ सदो, यदन्तरुदरे तद्धिष्ण्याः पाणी, आग्नीध्रश्च मार्जालीयश्च पार्ष्णी, गार्हपत्यः प्रतिष्ठा वेदि,—रेष वै प्रजापतिः पात्रीयः, स ह त्वा एन२ वेद य एव२ वेद ॥ ९ ॥ २६

[ २२०६ ]

॥ इति खिलकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

अथ षष्ठः प्रपाठकः ।

नवैते प्रातर्ग्रहा गृह्यन्त, इमे वा एते गृह्यन्ते नव प्राणा, आश्विनो दशमो गृह्यते, व्यानो वा एष गृह्यते, नाभिरेव दशमो गृह्यते, तृतीयो हूयते, तृतीयो ३ह्ययं प्राणः, प्राणाना२ संतत्यै, सर्वे वा एते ग्रहाः स्तोत्रवन्तः शस्त्रवन्तो निदानवन्तो, निदानवान् भवति य एव२ वेद, होता वा अग्र प्रातरुपा२शुमयजत, तेनैत उक्थवन्तो, ऽथ य२ होता तूष्णी२श२स२ श२सति तेनैवैत उक्थवन्तो, नवैते प्रातर्ग्रहा गृह्यन्ते, नवभिर्बहिष्पवमाने स्तुवते, तैरेते सामन्वन्तो, हिंकारेणाश्विनः सामन्वा,—नैन्द्रवायवेणैन्द्रवायवो, मैत्रावरुणेन मैत्रावरुणं, ऐन्द्रेण शुक्रामन्थिनौ, वैश्वदेवेनाग्रायणं, उक्थायोक्थ्यो गृह्यत, उक्थाय ध्रुवः, संतत्या ऐन्द्राग्नः, संतत्यै मरुत्वतीया, अध्वर्युर्जुहोति, होता वषट्करोति, प्राणान्वा एतत् प्रधत्तो, येन मन्त्रेणाध्वर्युः प्रयच्छति तेन होता प्रतिगृह्णाति, प्राणानां गोपी-थाय, प्रजापतिर्वै स्वय२ होतासीत्, सोऽताम्यत, तं देवा द्विदेवत्यैरभ्यधावन्, प्राणा वै द्विदेव३त्या, यदध्वर्युर्द्विदेवत्यान् हुत्वा क्षिप्र२ होतारमभ्याद्रवति प्राणैर्वा एतद्धोतारमभिधिनोति,

---

[ १ ] मै. १,३,८ । तै. सं. ६,४,९ । काठ. २७,५ । कपि. ४२,५ ।

वषट्कारे वषट्कारे वै होता प्राणस्यान्तं गच्छति, प्राणा वै द्विदेवत्या, यदध्वर्युर्द्विदेवत्यान् हुत्वा क्षिप्रꣳ होतारमभ्याद्रवति, प्राणैर्वा एतद्धोतारमभिधिनोति, प्राणा वै द्विदेवत्याः, पशव इडा, यद् द्विदेवत्यानभक्षयित्वेडामुपह्वयेत पशुभिः प्राणानन्तरिया,—दथ यद् द्विदेवत्यान् भक्षयित्वेडामुपह्वयते प्राणान्वा एतदात्मन्धित्वाथ पशूनुपह्वयत, इन्द्रियꣳ वै सोमः, पशव इन्द्रियꣳ, यत् सोमं भक्षयतीन्द्रियमेवात्मन् धत्ते, सर्वत आश्विनं परिहारं भक्षयति,
तस्मात् सर्वा दिशः शृणोति ॥ १ ॥ 1

यद्वै पात्रꣳ रिक्तमनुन्मुक्तं तदनु रक्षाꣳसि यज्ञमवयन्ति, यदैन्द्रवायवे पुरोडाशमवदधाति मैत्रावरुणे पयस्यामाश्विने धाना,—मरिक्तत्वाय, वि वा एतद्यज्ञꣳ छिद्यते यत् सवनानि संतिष्ठन्ते, यदेतानि पात्राण्या तृतीयात् सवनात् परिशेरे, यज्ञस्य संतत्या अविच्छेदाय, वायव्यायाꣳ शस्यमानायां पात्राणि विमुञ्चति, प्राणो वै वायुः, प्राणेन यज्ञः संततः, प्राणेनैव यज्ञꣳ संतनोति ॥ एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशत्या च तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वाय इह ता विमुञ्च ॥ इत्याह, विमुक्त्या एवा,—ऽवगतꣳ अध्वर्युपात्रं, निरुद्धं प्रतिप्रस्थानꣳ, यदि कामयेत, यो बहिस्तं ग्रामे कुर्याꣳ, यो ग्रामे तं बहिरिति ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशो निरूहामि ॥ इत्यध्वर्युपात्रं निरुह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्याꣳ विशि सादयामि ॥ इति प्रतिप्रस्थानꣳ सादयेद्, यो बहिस्तं ग्रामे करोति, यो ग्रामे तं बहिं,—रध्वर्युपात्रꣳ वै यजमानस्य पात्रं, प्रतिप्रस्थानं भ्रातृव्यस्य, यदि कामयेत, समावद्वीर्यमेनं भ्रातृव्येण कुर्यामिति, प्रवाहुग्गृह्णीयातां, प्रवाहुक् सादयेतां, प्रवाहुग्जुहुयाताꣳ, समावद्वीर्यमेवैनं भ्रातृव्येण करोत्य,—ध्वर्युपात्रꣳ वै पात्रं, पापीयः प्रतिप्रस्थानꣳ, यदि कामयेत, पापवसीयसꣳ स्यादिति, पूर्वो गृह्णीयात्, पूर्वः सादयेत्, पूर्वो जुहुया,—देतेन वै विपूजनः सौराकिः पापवसीयसं चकार, तत् पापवसीयसमेवैतेन करोति, यज्ञस्य वै सृष्टस्य शिरोऽछिद्यत, तस्मै देवाः प्रायश्चित्तिमैछ,—न्नथ वा एतौ तर्हि देवानां भिषजा आस्तामश्विना असोमपौ, ता उपाधावन्, यथा भिषजमुपधावन्त्येवमिदꣳ यज्ञस्य शिरः प्रतिधत्तमिति, ता अब्रूतां, भागो ना अस्त्विति, वृणाथामित्य,—ब्रुवꣳ,—स्ता अब्रूतां, ग्रहं नौ गृह्णन्तु, सोमपीथमश्नवावहा इति, तद्वा अश्विनौ प्रत्यधत्तां, तस्मादाश्विनीभिरभिष्टुवन्त्य,-

---

[ २ ] तै. सं. ६,४,९। काठ. २७,५-६। कपि. ४२,४—५। वा. २७,३३;९,४०;१०,१८। काण्व. २९,२८;१०,१०,२६। मै० ४८

—श्विनौ हि प्रत्यधत्तां, तौ वै बहिष्पवमानेनैव पावयित्वा ताभ्यां पूताभ्याꣳ यज्ञियाभ्यां भूताभ्यां ग्रहमगृह्णꣳ,—स्तस्माद्बहिष्पवमाने स्तुत आश्विनौ गृह्येते, तस्माद्ब्राह्मणेन बहिष्पवमान-मभिसृप्यं, पवित्रꣳ हि तत्, तस्माद्यं द्विष्यात् तं परिबाधेत, तद्धै भेषजं त्रेधा व्यन्युदधु,—रग्नौ तृतीयं, ब्राह्मणे तृतीय,—मप्सु तृतीयं, तद्य एवꣳ विद्वानग्नेरन्ते ब्राह्मणाय प्रोच्याप्सु भेषजं करोति समर्धुकꣳ ह भवति, यावद्धि भेषजं तत् क्रियते वास्तुहानि वा एतत् पात्राणि भवन्ति, यद् ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति वैष्णव्य ऋचा पुनरेत्य संमृशति, विष्णुर्वै यज्ञो, विष्णु-नैवैनानि यज्ञेन स्वर्गं लोकꣳ समारोहयति ॥ २ ॥ २-८

प्रजापतेर्वा एते चक्षुषी यच्च शुक्रामन्थिना, असा आदित्यः शुक्र,—श्चन्द्रमा मन्थी, तस्य वै प्रजापतेः सव्यं चक्षुरश्वयत्, ततो ये स्तोका अवापद्यन्त तैरिदꣳ वर्षत्ये,—कविꣳशतिर्वै ते ऽवपेदु,—स्तान्वायुरमुतो विसृजति, प्रजानां क्लृप्त्यै, तस्य या कनीनिका परापतत् स यवो-ऽभवद्, यन्मन्थिनꣳ सक्तुभिः श्रीणाति चक्षुरेवास्य संभावयति, मिथुनꣳ वै सोमश्च सक्तवश्च, यन्मन्थिनꣳ सक्तुभिः श्रीणाति, मिथुनत्वाया,—ऽऽर्तꣳ वा एतत् पात्रꣳ यन्मन्थिपात्रꣳ, यं द्विष्याद्दृत्विजां तस्मै हरे,—दार्तिमार्छति, षण्डामर्कौ वा असुराणां पुरोहिता आस्तां, तान् देवा नाशक्नुवन् हन्तुं, ब्राह्मणवन्तो ह्यासꣳ,—स्तौ देवा अपाशासु,—रुप ना आवर्तेथामिति, ता अब्रूतां, भागो ना अस्त्विवति, वृणाथामित्य,—ब्रुवꣳ,—स्ता एतौ शुक्रामन्थिना अवृणातां, ते देवा अमन्यन्त, यदिमा असु३र्यौ सोमौ होष्याम,—स्तदन्वसुरा आभविष्यन्ति, यन्न होष्या-मस्तदन्वाभविष्यन्तीति, ता अपनुद्याथेन्द्रायाजुहवु,—स्तस्मादेता अन्यदेवत्यौ गृह्येते, अथे-न्द्राय हूयेते, अपनुत्तौ षण्डामर्कौ सह तेन यं द्विष्म इति, षण्डामर्कयोरेवैनꣳ सहापनोदेना-पनुदते ॥ आयुः पाहि, प्रजां पाह्य,—मुष्य वीरतां पाहि ॥ इति सादयेद्, योऽस्य प्रियः स्यात्तस्य, शुक्रꣳ वै प्रति राष्ट्रं मन्थिनं निरुद्धं मथ्यता, इति ३ह्येतद्राष्ट्रमाहुर्यन्निरुद्धं भवति, यदि कामयेत, यो बहिस्तं ग्रामे कुर्याꣳ, यो ग्रामे तं बहिरिति ॥ इदमहममुमामुष्यायणममु-ष्याः पुत्रममुष्या विशो निरूहामि ॥ इति शुक्रपात्रं निरुह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्र-ममुष्याꣳ विशि सादयामि ॥ इति मन्थिपात्रꣳ सादयेद्, यो बहिस्तं ग्रामे करोति, यो ग्रामे

[ ३ ] मै. १,३,१०,११—१२ । तै. सं. ६,४,१० । काठ. २७,७-८ । कपि. ४३,१ । वा. ७,१२-१३,१७—१८ । काण्व. ७,१२,१७ ।

तं बर्हि,—रार्तँ वा एतत् पात्रँ यन्मन्थिपात्रँ, यच्च शुक्रपात्रं पुनः प्रयुज्यते तस्मादिमे समावद्वीर्ये, तस्मादाभ्यां समावत् पश्यत्य,—सौ वा आदित्यः शुक्र,—श्चन्द्रमा मन्थी, यदुपिधाय प्राञ्चा इतस्तस्मादेतौ प्राञ्चौ यन्तौ न पश्यन्त्य,—थ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति, यदुपिधाय प्राञ्चा इतस्तस्मात् पराङ् प्राणो, ऽथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात् पुनरपानो, यदुपिधाय प्राञ्चा इतस्तस्मात् पराञ्चो गर्भा धीयन्ते, ऽथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात् प्रत्यञ्चः प्रजायन्ते, चक्षुषी वै शुक्रामन्थिनौ, नासिकोत्तरवेदि,—र्यदङ्गुष्ठाभ्यामाक्रमेते, चक्षुषी वा एतत् प्रधत्तो, ऽथ यदुपरिष्टादाक्रमेते तस्मादिमे उपरिष्टाच्चक्षुषी, तुथोऽसि जनधाया, देवास्त्वा शुक्रपाः प्रणयन्त्विवति, या अत्रीः प्रजास्तासामेष योनि,—स्ता एतमनुप्रजायन्ते, तुथोऽसि जनधाया, देवास्त्वा मन्थिपाः प्रणयन्त्विवति, या आद्याः प्रजास्तासामेष योनि,—स्ता एतमनुप्रजायन्त, उभयीरेव प्रजाः प्रजनयत्यत्रीश्चाद्याश्च, शुक्रमन्वारभन्ते, तेजो वै शुक्रो ब्रह्मवर्चसं, तेज एव ब्रह्मवर्चसमन्वारभन्ता, इन्द्रेण मन्युना युजे,—ति शुक्रेण परियन्ति, मन्युना वै युजेन्द्रोऽसुरानबाधाधत, मन्युना वा एतद्युजा यजमानो भ्रातृव्यमवबाधते, संजग्मानौ दिवा पृथिव्यै,—त्युरत्नी संधत्त, इमानि वा एतत् संधत्तो यत् पात्रे संदध्यातां, नेदमन्तरा स्या,—दथ यदुरत्नी संधत्तस्तस्मादिदमन्तरा चक्षुषोर्विधृत्यै, पुमांसं गर्भमाधत्तं गवी३न्योरिति, तदनु स्त्री३ग्वो यजमानस्य गावो भवन्ति, वीरं पत्नी जनयति, शुक्रस्याधिष्ठानमसि, मन्थिनोऽधिष्ठानमसी,—ति शकुलौ प्रास्यतः, समिद्धा एषैतयो,—रथो आहुतीनां प्रतिष्ठित्यै, निरस्तः षण्डो, निरस्तो मर्कः सह तेन यं द्विष्म, इति शकुलौ निरस्यत, एतावांल्लोको यावदुद्धृतँ, यावानेव लोकस्तस्माद्यजमानो भ्रातृव्यं निर्भजति, श्रीणन्त्यन्यान्त्सोमा,—न्नान्याँ,—स्तत् सोमानां मिथुनँ, यांञ्छ्रीणन्ति ताननुवर्षति, यान्न श्रीणन्ति ताननुवीध्रति, दारुमयान्यन्यानि पात्राणि, मृन्मयान्यन्यानि, तत् पात्राणां मिथुनँ, यो वै सोमस्य च पात्राणां च मिथुनँ वेद मिथुना एनं पशवा उपतिष्ठन्ते ॥ ३ ॥ ९-१५

प्रजापतिर्वा आग्रायणो, ये देवा दिव्येकादश स्थेत्य,—तावन्तो वै देवा, यावन्त एव देवा-

---

[४] मै. १,३,१३ । तै. आ. ६,४,११ । क.ठ. २७,९ । वा. ७,१९-२०;३३,५९ । काण्व. ७,२०—२१;३२,५९ ।
[ ये देवा ( ०सो ) दिव्येकादशस्थ० । ऋ. १,१३९,११; तै. सं. १,४,१०,१ ]

*

स्तेभ्यो गृह्यत, आग्रायणं वै गृहीत्वा देवाः स्वर्गं लोकमायन्, नेपासुरा अभ्रंशन्त, ततो देवा अभवन्, परासुरा, स्तेय एवं विद्वानाग्रायणं गृह्णीते, भवत्यात्मना, परास्य भ्रातृव्यो भवति, य आनुजावरः स्यात् स आग्रायणाग्रान् ग्रहान् गृह्णीता, ऽग्रं ह्याग्रायणो, यद्यभिचरेत्॥ १६

विदद्यदि सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ १७

इति पुरोरुचं कुर्याद्, रुजति ह्येवा, ऽथो वाग्वै सरमा, वाचमेवैषां वृङ्क्ते, त्सरा वा एषा यज्ञस्य, तस्माद्यत्किंच प्राचीनमाग्रायणात्तदुपांशु चरन्त्य, थ वा एतदाग्रायणं प्रति वाचं विसृजन्ते, यज्ञमेवाप्त्वा वाचं विसृजन्ते, वाग्वै देवेभ्योऽपाक्रामत्, ते देवास्तूष्णीं यज्ञमतन्वत, सा वागमन्यता, ऽन्तर्यं मा यज्ञाद्यन्तीति, साग्रायणं प्रति न्यद्रवत्, तस्मादाग्रायणं प्रति वाचं विसृजन्ते, हिंकृत्य वाचं विसृजन्ते, प्राणो वै हिंकारो, वाक् प्राण, स्तद्वाच एवैषा युक्ति, स्त्रिर्हिंकरोति, त्रेधा ह्यीयं वाग्वदति, शनैरुच्चैरथ सूच्चै, र्यावत्येव वाक् सास्य युज्यते, त्रयो वै प्राजापत्या ऋत्विज, उद्गाता प्रस्तोता प्रतिहर्ता, ते वा अस्यैतर्ह्यवृत्ता अयुक्ता, यद्धिंकरोति तेनैवास्य ते वृत्ता युक्ता भवन्ति, वाक् च मनश्चावदेता, महं श्रेयानस्म्यहं श्रेयानस्मीति, तौ प्रजापतिं प्रश्नमैतां, सा वागब्रवी, न्नैवं मया किं चनानभ्युदितं क्रियता इत्य, थ मनोऽब्रवी, न्नैवं मया किं चनानभिगतं क्रियता इति, स मनसैऽन्वब्रवीत्, सावागब्रवी, द्दहव्यवाडेवाहं तुभ्यमसानीति, तस्मादेषा प्रजापतयेऽहव्यवाट्, तस्माद्यत्किंचोपांशु क्रियते तदाहुः कृतमेतत् क्रियता इति, प्रजापतये हिं क्रियते, द्वाभ्यां धाराभ्यां प्रातःसवने गृह्णाति, तिसृभ्यो माध्यंदिने सवने, चतसृभ्यस्तृतीयसवने, तन्नव, नव प्राणा, आत्माग्रायणः, प्राणानेवात्मन् धत्ते, वि वा एतद्यज्ञश्छिद्यते यत् सवनानि संतिष्ठन्ते, ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुक्षितो महिनैकादश स्थेति, देवताभिर्वै यज्ञः संततो, देवताभिरेव यज्ञं संतनोति, प्रजापतिर्वा आग्रायणो, यत् सर्वेषु सवनेष्वभिप्रस्कन्दयति प्रजापतिर्वा एतत् प्रजा अभिजिघ्रति, प्रजापतिर्वा आग्रायणो, यत् सर्वेषु सवनेषु गृह्णात्यात्मनैव यज्ञं संतनोति, प्रजापतिर्वा आग्रायणो, यदेषोऽतिरिच्यते तस्मात् पुरुषः पशूनां दत्रिष्ठमेत्या, ग्रायणो वै गायत्र्या वत्स, स्तं वा एतदा तृतीयात् सवनादभिप्रतिधावति, गायत्र्या वा एते लोके सर्वे सोमा गृह्यन्ते, तां वा एतत् सर्वाणि सवनान्यभिप्रति-

---

[विदद्यदि सरमा० । ऋ. ३,३१,६; तै. ब्रा. २,५,८,१०]

धावन्त्य,—थ यत् स्थाल्या गृहीतो विज्ञातस्थाल्या होष्यन्ती३ दारुमयेणा३ इति, तस्मादविज्ञातेन गर्भेण भ्रूणहा,—ऽथ यत् स्थालीꣳ रिञ्चन्ति न दारुमयं तस्मात् पुमान्दायादः स्त्र्यदाया,-—दथ यत् स्थालीं परास्यन्ति न दारुमयं तस्मात् स्त्रियं जातां परास्यन्ति न पुमाꣳस,—मथ स्त्रिय एवातिरिच्यन्ते ॥ ४ ॥ १८

इन्द्रो वै वृत्राय वज्रमुदयछत्, स वज्रमुद्यतं दृष्ट्वाबिभेत्, सोऽब्रवी,—दस्ति वा इदं त्वयस्मिन्नन्तर्वीर्यꣳ, तत्ते प्रदास्यामि, मा मा वधीरिति, तद्वा अस्मै प्रायछद्, यज्ञꣳ वा अस्मै तन् प्रायछत् पशूनुक्थ्यमेवं, यदुक्थ्यो गृह्यते यज्ञस्य च पशूनां चावरुद्ध्या, एतावान्वै यज्ञो यावानुक्थ्यो, ऽन्तः श्लेषणमेवान्ये ग्रहाः, छवो वा एष यज्ञस्य यदु३क्थ्यो, यथा वा इदं छवꣳ संनह्य प्रस्नात्येवꣳ वा एतदुक्थ्यमालभ्य प्रस्नाति, स एनमा यज्ञस्योदृचः संपारयत्य,—ङ्गानि वा उक्थ्यो, यज्ञस्य संतत्यै गृह्यते, तस्मै त्वा विष्णवे त्वेति, विष्णुर्वै यज्ञो, विष्णुना यज्ञः संततो, विष्णुनैव यज्ञेनु यज्ञꣳ संतनोत्य,—तेन वा इदमुक्थानि संततानि, तस्मात् पुरुषः स्नावभिरनुसंततः, सद आलभ्यावनयति, यज्ञꣳ वा एतत् संतत्य संप्राप्यावनयति, चक्षुर्वै शुक्र,—श्चक्षुरु३क्थ्य,—श्चक्षुर्वा एतत् पुरस्ताद् ध्रियते, ऽथो यथेदं पुरस्तात् पश्चात् पश्यन्नन्वेत्येवं त,—दथ यदेकः सꣳस्त्रेधा क्रियते तस्मादेकः श्रेष्ठः पूर्वार्धेऽवस्यति, यदेतौ ग्रहौ भूयिष्ठाः सोमा अनु हूयन्ते, पापवसीयसस्य व्यावृत्त्यै, यदेतत् पात्रं भूयिष्ठाः सोमा अन्वायन्ति, तस्मादेकꣳ श्रेष्ठꣳ यन्तं बहवः पश्चादनुयन्ति, पात्राणि वा अध्वर्यु पुरो विदुह्, उक्थामदानि पश्चै,—न्द्र्या सदा उपचरत्या,—ग्नेय्याग्नीध्रꣳ, वैष्णव्या हविर्धानꣳ, यथादेवतमेवैनान्युपचरति, तथा हैनं न विदुह्, ऽन्तराहवनीयं च हविर्धानं चाध्वर्योर्लोको,-ऽन्तरा हविर्धानं च सदश्च यजमानस्य, सदः सदस्यानाꣳ, यदि कामयेता,—ऽध्वर्युꣳ यश ऋछेदित्य,—न्तराहवनीयं च हविर्धानं चावनयेत्, सोमो वै यश, एषोऽध्वर्योर्लोको, ऽध्वर्युमेव यशसार्पयति, यदि कामयेत, यजमानꣳ यश ऋछेदित्य,—न्तरा हविर्धानं च सदश्चावनयेत्, सोमो वै यश, एष यजमानस्य लोको, यजमानमेव यशसार्पयति, यदि कामयेत, सद३स्यान् यश ऋछेदित्य,—न्तः सदस्यावनयेत्, सोमो वै यश, एष सदस्यानां लोकः, सदस्यानेव यशसार्पयति, सद आलभ्यावनयत्यै,—न्द्रꣳ वै सद, ऐन्द्राण्युक्थान्यु,—क्थानाꣳ

---

[ ५ ] मै. १,३,१४ । तै. सं. ६,५,१ । काठ. २७,१० । वा. ७,९,२२,३५—४०;८,३३—३५,३९,४४—४६ । काण्व ७,८,२४,३५—३६,३८—४०; ८,१४-१६,२१,२५—२८।

संतत्या, उक्थानामनपच्छेदाय ॥ उपयामगृहीतोऽसि, मित्रावरुणाभ्यां त्वा ॥ इति गृह्णाति प्रातःसवने मैत्रावरुणाय ॥ इन्द्राय त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राग्निभ्यां त्वा ॥ इत्यच्छावाकाय ॥ उपयामगृहीतोऽसी,—न्द्राय त्वेन्द्राय त्वा ॥ इति गृह्णाति सर्वेभ्यो माध्यंदिने सवने ॥ उपयामगृहीतोऽसीन्द्रावरुणाभ्यां त्वा॥ इति गृह्णाति तृतीयसवने मैत्रावरुणाय ॥ इन्द्राबृहस्पतिभ्यां त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राविष्णुभ्यां त्वा इत्यच्छावाकाये,—वमस्य यथोक्थं यथादेवतं गृहीता भवन्ति ॥ ५ ॥ १९-३२

आयुर्वै ध्रुव,—स्तमुत्तमं गृह्णात्यु,—त्तमं ह्यायुः, स्थाल्या गृह्णात्या,—युषो धृत्यै, पूर्णं गृह्णाति, सर्वमायुरेति, प्राणो वै गायत्र्या,—युर्ध्रुवो, यदेषं आ तृतीयात् सवनात् परिशेषयेत् तस्माद्यावदायुस्तावान् प्राणं, आयुर्वै ध्रुवो , यदग्निष्टोममास्ता आयुरेवाप्त्वा निः सर्पत्या,—युर्वै ध्रुवो, यत् केवलं जुहुयादायुः प्रजानां प्रदध्यात्, परिधानीयायां शस्यमानायामवनयति, स ह्यन्तो, होतुश्चमसेऽवनयति, वैश्वदेवो वै होता, वैश्वदेवीरिमाः प्रजाः, सर्वासु वा एतत् प्रजास्वायुर्दधाति, जनानामित्या,—हुः, सर्वासां वा एतत् प्रजानामायुः सर्वाभ्य एवं प्रजाभ्यो गृह्यत, उभयतो वैश्वानरो गृह्यत, उभयतो वैश्वानरो ३ह्ययं प्रा३णो, ऽयं वाव वैश्वानरो ३योऽयमवाङ् प्राणो, यदेषं केवला उत्तरे हविर्धाने साद्यते तस्मादेषोऽर्धभाक् प्राणाना,—मर्धभाजा इतरे, हिरण्येऽधि सादयेदायुःकामस्या,—ऽमृतं वै हिरण्य,—मायुर्ध्रु३वो, ऽमृत एवास्यायुर्दधात्यु,—पोप्तेऽन्ये ग्रहाः साद्यन्ते, ऽनुपोप्ते ध्रुव,—स्तस्मादुस्थनान्ये पशवः प्रतितिष्ठन्ति, मांसेन पुरुषः, प्राणा वा उपरवा, यदेत उपोप्ते ग्रहाः साद्यन्ते स्वे वा एतद्योनौ साद्यन्ते, पूर्वार्धे वा इमे मुखस्य प्राणा, एतत् खलु वै हविर्धानस्य पूर्वार्धं यद्दक्षिणं हविर्धानं, तस्माद्दक्षिणे हविर्धाने, प्राणा वा एते इतरे ग्रहा, आयुर्ध्रुवो, नव वै प्राणा, आयुर्दशमं, तस्मादेषं दशमो गृह्यते, दशमं ह्यायू, राजपुत्रो ध्रुवं गोपायति, सर्वासां वा एतत् प्रजानामायुर्गोपायति, तस्माद्राजपुत्रो वीर्यवत्तमो, यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामि ॥ इति ध्रुवं प्रवर्तये,—दायुरेवास्य प्रवर्तयति, यत् प्रवर्तयेत् सर्वासां प्रजानामायुः प्रवर्तयेच्, शुक् प्रजा ऋच्छे,—द्वर्तिर्यजमानं गृह्णीयात्, क्षोधुकोऽध्वर्युः स्यात्, तन्न्यङ्ग्य एवं॥ ध्रुवं त्वा ध्रुवक्षितिममुमास्थानाच्च्यावयामि॥ इत्यास्थानादेवैनं च्यावयति, प्रमायुको

[ ६ ] मै. १,३,१५ । तै. सं. ६,५,२ । काठ. २८,१ । कपि. ४४,१ । वा. २,२६;३,१७;१०,२५ । काण्व. ३,२३;११,३५;२,४८ ।

भवति, ध्रुवं॑ वै प्रच्यवमानं॑ विश्वा भूतान्यनु प्रच्यवन्ते, प्र यजमान आस्थानाच्च्यवते, तदभिमृश्यो, दिवि दिव्यान् दृंहान्तरिक्षे अन्तरिक्ष्यान् पृथिव्यां पार्थिवानिति, यथास्थामं वा एतत् प्रजा दृंहति, स्व आयतने यजमान,—मायुषा वा एष वीर्येण व्यृध्यते यस्य ध्रुवः स्कन्दत्या,—युर्वीर्यं ध्रुव,—स्तदभिमृश्यः॥ आयुर्धा असि ध्रुवा,—ऽऽयुर्मे धेहि॥ इत्यायुरेवास्मिन् दधाति, वरो दक्षिणा, वरेणैव वरं॑ स्पृणोत्या,—त्मा हि वरः, पुत्रसेनस्य ह वै भैमसेने ध्रुव उपददास, तं॑ शृण्वानः स्थैरब्रह्मणं ऋतेनैभ्यो लोकेभ्य आप्याययांचकार ॥ स्वाहा दिव आप्यायस्व ॥ इति स तृतीयं बभूव ॥ स्वाहान्तरिक्षादाप्यायस्व ॥ इति स द्विभागं बभूव ॥ स्वाहा पृथिव्या आप्यायस्व॥ इति स पुपूरे, तद्वेतैनैवैभ्यो लोकेभ्यो ध्रुव आप्याययितव्यो, द्वादशे स्तोत्रेऽवनयति ॥ द्वादश मासाः संवत्सरः, संवत्सरो यज्ञो, यज्ञः प्रजापतिः, प्राजापत्यः पुरुषो, यावानेव पुरुषस्तस्मिन्नायुर्दधाति, यत् स्तूयमानेऽवनयेद्गर्भाः प्रपादुकाः स्यु,—र्यच् शस्यमाने युवानः प्रमीयेरन्, यच् शस्ते बर्हिः प्राणान् दध्यात्, सकृच् शस्तायां मध्यतोऽवनीयो, मध्यतो वा एतत् प्रजानामायुर्दधाति ॥ स्वयंभूरसि श्रेष्ठो रश्मिः प्रियो देवाना॑ संसदनीयः॥ तं त्वा सुभव देवा अभिसंविशन्तु॥ आयुर्धा असि ध्रुवा,—ऽऽयुर्मे धेहि॥ इत्यायुरेवास्मिन् दधाति ॥ वर्चोधा असि ध्रुव, वर्चो मे धेहि ॥ इति वर्च एवास्मिन् दधाति ॥ इषोऽसि, त्वेषोऽसि, नृम्णोऽसि, व्रतोऽसि, दक्षोऽसि, तस्य त इषस्य त्वेषस्य नृम्णस्य व्रतस्य दक्षस्य भक्षीय, स्वस्य चारणस्य च शूद्रस्य चार्यस्य च, यथा त्वं॑ सूर्यासि विश्वदर्शत एवमहं॑ विश्वदर्शतो भूयासम् ॥ इति विश्वदर्शतो ह भवत्य,—सौ वा आदित्यः स्वयंभूः श्रेष्ठो रश्मि,—र्यथैष स्वयमभवदेवं॑ स्वयं भवति य एवं॑ वेद ॥ ६ ॥

३३-५४

अथैत ऋतुग्रहाः, संवत्सरस्य वा एते विधृत्यै गृह्यन्ते, द्वादश मासाः संवत्सर,—स्तस्माद् द्वादश ऋतुग्रहा, मधुश्च माधवश्च वासन्तिका ऋतू, असन्ना हूयन्ते, ऽसन्ना ३हीम ऋतवो, नान्योऽन्यमभिप्रपद्यते, यद३न्योऽन्यमभिप्रपद्यत ऋता ऋतुरभीया,—दथ यदन्योऽन्यः प्रपद्यते तस्मादिदमृता ऋतुरनुनिहिताः परिप्लवन्त, उभयतोमुखमृतुपात्र,—मुभयतोमुखा ३हीम

---

[ आयुर्धा असि (आयुरस्या०) ध्रुवायुर्मे धेहि ( दाः )। अथर्व. २,१७,४ ]

[ ७ ] मै. १,३,१६ । तै. सं. ६,५,३ । काठ. २८,२ । कपि. ४४,२ । वा. १३,२५ । काण्व. १४,२६ ।

ऋतवो, न वै तद्विद्म यत् ऋतूनां मुखꣳ, सह प्रथमं गृह्णाते, सहोत्तमꣳ, सह युज्येते, सह विमुच्येते, चतुर्दश वा एतत् कुरुतो, ऽति वा एतद्रेचयतो, ऽस्ति मासस्त्रयोदश,—स्तमेवैतेनाप्त्वावरुन्द्ध, ऋतुभ्यो वै प्रजाः प्रजायन्ते, यत् षड्ऋतुना चतुर्ऋतुभिः,—ऋतुभ्यो वावास्मा एतच्चतुष्पदः पशून् प्रजनयतो, ऽथ यच्चतुर्ऋतुभिर्द्विर्ऋतुना, ऋतुभ्यो वावास्मा एतद् द्विपदः पशून् प्रजनयतो, यद् द्विर्ऋतुना, द्वौ ३हीमा ऋतू, अथ यद् द्वे ऋतुपात्रे, द्वौ द्वौ ३हीमे ऋतवो, नानुयजति, वैश्वानरो वषट्कारो, यदनुयजेद्वैश्वानरमृतुष्वन्ववसृजे,—दन्धो वा इदमासीदव्यावृत्त,—महरासीन्न रात्रि,—स्तद्देवा ऋतुग्रहैर्व्यावर्तयन्, यदृतुग्रहा गृह्यन्ते, ऽहोरात्रयोर्व्यावृत्त्यै, सꣳवत्सरो वै स्वर्गो लोक,—स्तस्य वा एत आक्रमा यदृतुग्रहा, यदृतुग्रहा गृह्य-
न्ते, स्वर्गस्य लोकस्याक्रान्त्यै ॥ ७ ॥ ५५

आदित्या वा इत उत्तमाः स्वर्गं लोकमायꣳ,—स्ते वा इतः प्रतिसꣳहिताः पुरस्तादेवान् यत् सर्वꣳ, सꣳवत्सरो वै स्वर्गो लोकः, सꣳवत्सरमेतौ कल्पयितुं प्लायेते यदध्वर्यू, यदैन्द्राग्नमृतुपात्रेण गृह्णाति, सꣳवत्सरꣳ वा एतदन्वारभते स्वर्गाय लोकाया,—ऽथो ज्योतिरुपरिष्टाद्दधाति स्वर्गस्य लोकस्य समष्ट्या, असौ वा आदित्यः शुक्रः, पुरुषो वैश्वदेवो, यच्च शुक्रपात्रेण वैश्वदेवं गृह्णाति तस्मात् पुरुष एवामुं प्रत्यक्, सर्वेऽन्ये न्यञ्चः पशवो, देवाश्च वा असुराश्चास्पर्धन्त, ते देवाः प्रातःसवने वैश्वदेवे यज्ञꣳ सꣳस्थाप्यमपश्यꣳ,—स्तं प्रातःसवने समस्थापयन्, यद्वैश्वदेवः प्रातःसवने गृह्यते, प्रातःसवने वा एतद्वैश्वदेवे यज्ञꣳ सꣳस्थापयति, तेन सꣳस्थितेनारिष्टेन भूतेन प्रचरन्ति, देवा वै सर्वे प्रातःसवनमभ्यायच्छ,—न्नोत्तराभ्याꣳ सवनाभ्यामतिष्ठन्त, यद्वैश्वदेवः प्रातःसवने हूयते, प्रातःसवने वा एतद्वैश्वदेवे देवतास्तर्पयन्ति, तास्तृप्ता उत्तरे सवने अभिसृज्यमाना यन्ति, वज्रो वै मरुत्वतीया, वज्र एव प्रथमो, ऽपगूर्तिर्द्वितीयः, स्तृतिरुत्तमो, वज्रो वै धनु,—र्धनुरेव प्रथमः, प्रतिहितिर्द्वितीयो, विसृष्टस्तृतीय,—श्चक्रियौ वा एते यज्ञस्य यन्मरुत्वतीया, अक्षो मध्यमः, पक्षसी अभितो, मरुद्भिर्वै वी३र्येणेन्द्रो वृत्रमहन्, न ऋते मरुद्भ्योऽशक्नोद्वी३र्यं कर्तुꣳ, यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयꣳ शस्यते तेन माध्यंदिनꣳ सवनꣳ वीर्यवत् कथꣳ सवनान्यृतुमन्ति वेद्मे,—ति पृच्छेद्, ऋतुग्रहैः प्रातःसवनमृतुमं,—न्मरुत्वतीयैर्माध्यंदिनꣳ सवनꣳ, सावित्रेण तृतीयसवनं, मरुत्वतीययोः सन्नयोर्दक्षिणा दीयन्ते,

[८] मै. १,३,१७—२५ । तै. सं. ६,५,४—५ । काठ. २८,२—३ । कपि. ४४,२—३ ।

स्वे वा एतद्योनौ दक्षिणा दीयन्ते, परिधयो वा एते यज्ञस्य यन्मरुत्वतीया,—स्तस्मान्मरुत्वतीयान् दक्षिणा नातिदीयन्ते, यदतिदुद्याद्, यथा बहिष्परिधि स्कन्नमेवꣳ स्याद्, यदि कामयेत, विडोजीयसी स्याद्बलीयः क्षत्रमिति, यस्या मरुत्वतीयः पूर्वोऽर्धर्चस्तां पुरोरुचं कुर्याद्, विशꣳ वा एतदोजीयसीमकर्बलीयः क्षत्रꣳ, यदि कामयेत, क्षत्रमोजीयः स्याद्बलीयसी विडिति, यस्या ऐन्द्रः पूर्वोऽर्धर्चस्तां पुरोरुचं कुर्यात्, क्षत्रꣳ वा एतदोजीयोऽकर्बलीयसीꣳ विशं, जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयꣳ शस्यते, पशवो वै मरुतो, ऽजामि पशव,—स्तेन तदजाम्यृतुपात्रमालभ्य प्रतिगृह्णात्यृ,—तवो वै मरुतः, सꣳवत्सरं ऋतवा, आयुः सꣳवत्सरं, आयुषि वा एतदध्वर्युः श्रयते, वृत्रꣳ वा एष हन्ति यो मरुत्वतीयान् ग्रहान् गृह्णीते, माहेन्द्रे सर्वे कामाः, सर्वान् वा एतत् कामानाप्नोति, सर्वान् व्यश्नोती,—न्द्रो वै वृत्रमहꣳ,—न्त्सोऽन्यान् देवानत्यमन्यत, स महेन्द्रोऽभवत्, स एतमुद्धारमुदहरत वृत्रꣳ हत्वा, तदुद्धार एवा,—ऽस्यैष भाग एव, तस्माद्राजा संग्रामे जित्वोदाजमुदजते, शुक्रपात्रेण माहेन्द्रं गृह्णाति, वदन्ति ग्रावाणो, वदन्त्यौलूखला, मन्थन्त्याशिर,—मिन्द्रे वा एतदग्रा आगुते घोषमकुर्वता,—ऽथो यजमान एव तेजो दधति ॥ ८ ॥ ५६

एतद्वा एषाभ्यनूक्ता ॥ ५७

अष्टौ पुत्रासो अदितेर्ये जातास्तꣳन्वस्परि । देवꣳ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत् ॥५८॥

इत्येष वाव स उपाꣳशुसवनो ग्रावा, तस्य वा एष सोमपीथो यदादित्यं मेक्षयन्ति ॥ विवस्वन्नादित्यैष ते सोमपीथः ॥ इति सोमपीथेनैवैनꣳ समर्धयति, व्यानो वा उपाꣳशुसवनः, प्रजा आदित्यो, व्यानꣳ वा एतत् प्रजासु दधाति, पशवो वा आदित्यो, यद्दध्ना मध्यतः श्रीणाति, मध्यतो वा एतत् पशूनां पयो दधात्य,—थ यत्तपातꣳङ्क्यं तस्मादामा सती पक्वं दुहे, यदि कामयेत, वर्षेत् पर्जन्या इति ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ इति दध्नोपरिष्टादादित्यꣳ श्रीणीयात्, पशवो वा आदित्यः, पशुभ्य एꣳषोऽमुतो वर्षति, पशूनेव वृष्ट्याभिजिघर्ति, यदि कामयेत, गर्भाः श्रीव्येयुरित्यु,—द्धृत्यादित्यमवेक्षेत, गर्भा ह श्रेवुका भवन्ति, शुक्रवतीवै पूर्वे सवने, अशुक्रं तृतीयꣳ सवनꣳ, यद् द्विदेवत्यानाꣳ सꣳस्रवानवनयत्याग्रायणमभिप्रस्कन्दयति, तेन तृतीयसवनꣳ शुक्रवद्, देवा असुरान् हत्वा मृत्योरबिभ-

[ ९ ] मै. १,३,२६ । तै. सं. ६,५,६ । काठ. २८,६ ।
मै. ४९

यु,—स्तेनार्थैर्विणो न्यश्चनैर्षिण एता देवता भूयिष्ठाः प्राविशन्, यद् द्विदेव३त्या॑स्तस्माद् द्विदेवत्येभ्य आदित्यो निर्गृह्यते, बृहतीभ्यां गृह्णाति, पशवो वै बृहतीः, प्रजा आदित्य, एतावांल्लोको यावदुद्भूत॑, यत् संप्रसारयित्वा गृह्णाति लोकं॑ वा एतदन्नाद्यं यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽथो इमा एव प्रजा अन्नाद्यायावरुन्द्धे, यद्यस्य भ्रातृव्यो यजेत बहिर्वेदि तिष्ठेत्, तथा हैनं नावरुन्द्धे, पशवो वा आदि३त्यो, ऽग्नी रु३द्रो, ऽग्नेरेतास्त३न्वो यद्धिष्ण्या, यत् संप्रसारयित्वा गृह्णाति रुद्राद्वा एतत् पशूनन्तर्दधात्यपिधायोप निष्क्रामति, पशूनां गोपीथाय, —ऽऽदित्यो वै द्विदेवत्यानामनुयाजं,—स्तस्मात्तान्नानुयजति, द्विदेव३त्या वा आदित्यस्य प्रयाजा,—स्तस्मात्तान्नानुयजति, पशवो वा आदि३त्यो, ऽग्नी रुद्रो, ब्राह्मणं उपद्रष्टा, यदीक्षमाणो जुहुयात् प्रधीयमानानामेषामुपद्रष्टा स्या,—दन्यत्रेक्षमाणेन होत३व्य,—मनूपद्रष्टैषां भवति ॥ ९ ॥ ५९-६३ [ २२६१ ]

॥ इति खिलकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

अथ सप्तमः प्रपाठकः ।

गायत्रो वै देवाना॑ सविता, गायत्र्या एष लोके सोमो गृह्यते, यदाग्रायणं,—स्तस्मादाग्रायणात् सावित्रो निर्गृह्यते, ३सोऽदं आ तृतीयात् सवनात् परिशियेत् क्रियमाणस्य क्रियमाणस्य प्रसवाय,—ऽन्तरिक्ष॑ वा अन्तर्या३मो, ऽन्तरिक्षमिमाः प्रजा, यदन्तर्यामपात्रेण सावित्रं गृह्णाति, सविता वा एतत् प्रजाः प्रसुवति प्रजननाया,—ऽसन्नो हूयते, ऽसन्ना३हीमाः प्रजा नैलयन्ति, नानुयजति, यदनुयजेत् सृष्टिं प्रजाना॑ विछिन्द्या,—दथो समानपात्रौ ३ह्येतौ सोमौ गृह्येते तस्मान्नानुयजति, देवा वै तृतीयसवनमुद्यमं नाशक्नुवन्, प्रातःसवने तर्हि सवितासीत्, तं देवास्तृतीयसवनमभिपर्यौह॑,—स्तेन तृतीयसवनमुदयछन्त, यत् सावित्रस्तृतीयसवने गृह्यते सवितृप्रसूता वा एतत् तृतीय॑ सवनमुद्यछन्ते, सावित्रस्य स॑स्रवे वैश्वदेवमभिगृह्णाति, वैश्वदेवीरिमाः प्रजाः, सवितृप्रसूताः खलु वै प्रजाः प्रजायन्ते, मनो वै सविता, वैश्वदेवीरिमाः प्रजाः, सर्वासु वा एतत् प्रजासु मनो दधात्या,—शीर्मतः सवनस्य गृह्णाति, वैश्वदेवत्वायु,

[ १ ] मै. १,३,२७—२८ । तै. सं. ६,५,७ । काठ. २८,७ । कपि. ४४,७ ।

सुशर्मासि सुप्रतिष्ठान इति, यत्स्वित्सोमः सोमे प्रतितिष्ठति, बृहदुक्षे नमा इति, यद्बृहदिति तेनु देवेभ्यो, यन्नमा इति तेनु पितृभ्य, उक्थभाजो वै पितरोऽस्तोमभाज, उक्थायैष गृह्यते न स्तोत्राय, यत्रु गृह्यते तच् शस्यते स्वे आयतने ॥ १ ॥ १

घृतस्य यजत्ये,—ष वै प्रथमो धिष्ण्यानां यदाहवनीय,—स्तं वा एतदग्रे व्याघारयत्या,—ग्नावैष्णव्या व्याघारयति, पराङ् वा एतर्हि य३ज्ञो, ऽग्निः सर्वा देवता, विष्णुर्यज्ञो, देवताश्चैवं यज्ञं चालब्ध, घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति, यत् सौम्यः, सोमं वा एतत् संभावयन्ति, सोममाप्याययन्त्य,—वधिपुर्वा एतत् सोमं यदभ्यसुपुवु,—रनुस्तरणी वा एषा सोमस्य, यत् सौम्यः पितृणामनुस्तरणी, तस्मात् पितृमत्या यजति, दक्षिणा तिष्ठन् जुहोति, दक्षिणा हि पितृणा,—मुपसदां वा एतेऽनुयाजा, आग्नावैष्णव्या घृतस्य यजति, सौम्या सोमस्य, या एवाद उपसत्सु देवता अयाक्षीत्ता एत,—दमुत्र वा एष भूताय क्रियते, यद्वा एतस्य व्याधि यत् प्रामायि तदस्यामुं लोकं गछत्य,—थु पूत एवोच्छिष्यते, पवित्रं वै सौम्यो, यजमानमेवैतेन पुनाति, सामदेव३त्यो वै सोमः, सोमस्य खलु वै सौम्यः, साम्ने वा एतद् ध्रियते॥ सत्रा त एतद्यदु त इह ॥ इति परिपश्यति, योऽगतासुः स परिपश्यति, यो गतासुर्न स परिपश्यति, यदि न पुरिपश्येदथ वदेत् ॥ २-४

यन्मे मनो यमं गतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥ ५

हृदिस्पृक् क्रतुस्पृग्वर्चोधा असि, वर्चो मे धेहि ॥ इत्याशिषमेवाशास्ते ॥ २ ॥ ६-७

अथैतेऽतिग्राह्या, देवा वै सोममगृह्णता,—ऽथ वा एतानिन्द्रोऽगृह्णीत, सोऽब्र,—व्वं वा अहमिमानृते ब्रह्मणः सविष्यामीति, स ब्रह्मोपाधावत, तान् ब्रह्मणासह्नोद्, ब्रह्म वै गायत्री, तस्माद्गायत्रीभिर्गृह्यन्ते, यदेवादः परमन्नाद्यमनवरुद्धं तस्यैतेऽवरुद्ध्यै गृह्यन्ते, ये वा अमी वैराजस्य स्तोभा अतिरिक्तास्तैरेते सामन्वन्तः, सर्वे वा एत ऐन्द्रा, य ऐन्द्र ऐन्द्रः ३सो, ऽसा आदित्य इन्द्रः, समानमग्निश्चासौ चादित्यो, विराजो वै तेज आग्नेयः, शक्वरीणामैन्द्रो, रेवतीनां सौर्यो, यत्रु पृष्ठानि युज्येरंस्तदेतान् जुहुयात्, साम्नां सतेजस्त्वाय, सं वा एतद्यज्ञः पश्चात् स्तोत्रेण च शस्त्रेण चाधीयते, यदतिग्राह्याः, प्रत्युत्तब्ध्यै, चक्रियौ वा एते यज्ञस्य यद्

[ २ ] तै. सं. ६,६,७ । कपि. ४५,३ । वा. २,२६; ३,१७; ४,३ । काण्व. २,४८; ३,२३; ४,४।

[ ३ ] मै. १,३,३१—३३ । तै. सं. ६,६,८ । कपि. ४६,२—३ । वा. ८,३८—४० । काण्व. ८,१९—२४ ।

❀

पृष्ठान्यु,—पस्तम्भनमतिग्रा३ह्या,—स्तस्मात् प्रातःसवने गृह्याः, प्रत्युत्तब्ध्यै, यदाग्नेयस्तेज-स्तेनावरुन्द्धे, यदैन्द्र इन्द्रियं तेन, यत् सौर्यो रुचं तेन, त्रिवृद्वावास्मा एतत् संमृद्धं ब्रह्म-वर्चसं दधाति, तेजो वा अग्नि,—रिन्द्रियमिन्द्रो, ब्रह्मवर्चसमसा आदित्य,—स्तेजसा च वावा-स्मा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णाति ॥ अग्नेश्च त्वा ब्रह्मणश्च तेजसा जुहोमि तेजोदा, तेजो मा मा हासी,—न्माहं तेजो हासिषं, स्वाहे,—न्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोम्यो-जोदा,—मोजो मा मा हासी,—न्माहमोजो हासिषं, स्वाहा, सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमि वर्चोदां, वर्चो मा मा हासी,—न्माहं वर्चो हासिषं, स्वाहा,—ऽग्न आयुःकारायु-ष्मांस्त्वं तेजस्वान् देवेष्वेध्या,—युष्मन्तं मा तेजस्वन्तं मनुष्येषु कुर्वि,—न्द्रौजस्कारौजस्वांस्त्वं संहस्वान् देवेष्वेध्यो,—जस्वन्तं मां संहस्वन्तं मनुष्येषु कुरु, सूर्य भ्राजस्कार भ्राजस्वांस्त्वं वर्चस्वान् देवेष्वेधि, भ्राजस्वन्तं मां वर्चस्वन्तं मनुष्येषु कुरु ॥ एते होमा भक्षकाराश्च भव-न्त्ये,—तेषां वै त्रीर्येण बभ्रुविश्ववयसा इमांल्लोकानर्वाचश्च पराचश्च प्राजानीतां, सं ह वा अस्मा इमे लोका अर्वाञ्चश्च पराञ्चश्च भान्ति य एवं वेद, सुप्रज्ञाना वा इत इत्थं लोका, अमुतस्त्वा अर्वाञ्चो दुःप्रज्ञाना, एष ह ३त्वेवामुतोऽर्वाच इमांल्लोकान् प्रजानाति यस्यैते हूयन्ते ॥ ३ ॥ ८-१०

उपांशुपात्रेण पात्नीवतं गृह्णाति, प्राणो वा उपांशुः, प्राणेन वा एतत् प्रयन्ति, प्राणेनोद्यन्त्य,—थो प्राणानां प्रतिप्रज्ञात्या, अथो यत् प्रथमं पात्रं युज्यते तदुत्तमं विमु-च्यते, प्राणानां गोपीथाय, होता वा अद्य प्रातरुपांशुमयजद्, यदेतं होता वषट्कुर्या-द्यत् पुरोऽक्रस्तत् पश्चात् परिहरेत्, प्रमायुकः स्यात्, तस्मादेतमग्नीद्वषट्करोति, पुरो ३ह्यग्नीत्, प्राणो वा उपांशुः, प्राणादधि प्रजाः प्रजायन्ते, यदुपांशुपात्रेण पात्नीवतं गृह्णाति, प्रजननाया,—ऽसन्नो हूयते, ऽसन्ना हि प्रजाः प्रजायन्ते, नानुयजति, यदनुयजेत् प्रजननमपिहन्या,—दथो समानपात्रौ ३ह्येतौ सोमौ गृह्येते, तस्मान्नानुयजति, मिथुनं वै घृतं च सोमश्च, यत् पात्नीवतं घृतेन श्रीणाति, मिथुनत्वाय, बृहस्पतिसुतस्य ता इति, ब्रह्म वै बृहस्पति,—र्ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत, ब्रह्मणो वा एतद्योनेर्यजमानः

[ ४ ] मै. १,३,२९-३० । तै. सं. ६,५,८-९ । क.ठ. २८,८-९ । कपि. ४४,८-९; ४६,४ । वा. ८,९-११;९,२२ । काण्व. ८,८—१०,१२;१०,३१ ।

प्रजायत, इन्द्र इन्द्रियावता इती,—न्द्रियꣳ हि गर्भो, ऽग्ना३इ पत्नीवा३निति, मिथुनꣳ वा अग्नीच्च पत्नीश्च, सजूस्त्वष्ट्रा सोमं पिबेति, त्वष्टा हि रूपाणि विकरोति, घृतꣳ वै देवा वज्रं कृत्वा सोममघ्न,—न्नभि खलु वा एतं धारयन्ति, यत् पात्नीवतं घृतेन श्रीणाती,—न्द्रियेण वा एतत् पत्नी व्युर्धयति, तस्मान्निरिन्द्रिया स्त्री, पुमानिन्द्रियवाꣳ,—स्तस्मात् पुमाꣳसः सभाꣳ यन्ति, न स्त्रियो, यदितरान्त्सोमाच् श्रीणीयुर्न पात्नीवतꣳ, स्त्रियः सभामीयु,-—र्न पुमाꣳसा, इन्द्रो वै वृत्रमहꣳ,—स्तस्य यन्मूर्धानमुदरुजत् स द्रोणकलशोऽभवत्, ततो यः सोमः समस्रवत् स हारियोजनं,—स्तस्मादेतं द्रोणकलशेन जुहोति, योनिर्ह्यस्यैष, इन्द्रो वृत्रꣳ हत्वा तस्य यत् क्लोम्नो हृदयात् सोमꣳ समासिश्नत् स हारियोजनोऽभवत्, स इन्द्रोऽमन्यत, यदिममसु३र्यꣳ सोमꣳ होष्यामि तदन्वसुरा आभविष्यन्ति, यन्न होष्यामि तदन्वभविष्यन्तीति, तꣳ सꣳस्थिते प्रहृतेषु परिधिष्वजुहोद्यत् सꣳस्थिते प्रहृतेषु परिधिषु जुहोति तत्स्विदुभयमक,—जुहोत्यह, सꣳस्थिते जुहोत्य,—तिरिक्तो वा एष ऋत्विजाꣳ य उन्नेता, तस्मादेतं न वृणते, न वषट्करोत्य,—त्येष सोमोऽरेचि, स वा उन्नेतारमेवाभ्यतिरिच्यन्ते, ऽध्वर्युर्वै पूर्वान्त्सोमान् जुहोति, यदेतमध्वर्युर्जुहुयादाहुतीः सꣳसृजेत्, समदं कुर्यात्, तस्मादेतमुन्नेता जुहोति, प्रजापतिर्वा एतममन्यत सोमꣳ होष्यꣳ,—स्तमग्निरब्रवी,—न्न मयि त्वमेतमसु३र्यꣳ सोमꣳ होष्यस्यश्रृतमद्वितीयं, द्वितीयमस्त्विवति, यद्धानाभिः श्रीणाति, श्रृतत्वाया,—ऽथो द्वितीयत्वाया,—ऽथैता धाना, यत्र वा अदो देवेभ्यः कामदुघाः काममदुह्र तदेता अपिदुदुह्रे, तत् पुष्टिमेवैताभिरवरुन्द्धे, प्रजापतिर्वा आग्रायणो, यदेषोऽतिरिच्यते तस्मादयमतिरिक्तोऽपरिमित इमाः प्रजा अभिप्रवत, ऋक्सामे वा इन्द्रस्य हरी, तयोः परिधय आधानं, निराधानाय खलु वा अश्वाय घासमपिदधाति, यत् सꣳस्थिते प्रहृतेषु परिधिष्वजुहोद्, यत् सꣳस्थिते प्रहृतेषु परिधिषु जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति, पशवो वै धाना, यत् संखादेत् पशून् हिꣳस्याद्, यन्न संखादेदयताः स्युः, संदश्यु, रय्यै त्वा पोषाय त्वेत्यु,—पवपति, तत्स्विदुभयमकः, पशूनाꣳ यत्यै, भुञ्जन्त एनं पशवा उपतिष्ठन्ते ॥ ४ ॥ ११

यज्ञेन वै देवाः स्वर्गं लोकमायꣳ,—स्तेऽमन्यन्ता,—ऽनेन वै नोऽन्ये लोकमन्वारोक्ष्यन्तीति, ते छन्दाꣳस्यपश्यꣳ,—स्तानि व्यत्यषजन्त्स्वर्गस्य लोकस्यानुनुकशात्यै, यच्छन्दाꣳसि व्यतिषजति,

[ ५ ] तै. सं. ६,६,११,५—६।

लोकं॑ वा एतच्छन्दां॑सि यज॑मानो भ्रातृ॑व्यस्य मोहयति स्वर्गस्य॒ लोक॑स्यान॑नुख्यात्यै, दे॒वेषु॒ वा अ॒न्यानि॒ छन्दां॑स्यास॒न्न॑सु॒रेष्व॒न्यानि॒, कनीयां॑सि दे॒वेष्वा॑सन्, ज्यायां॑स्यसु॒रेषु, ते दे॒वाः कनी॑योभि॒श्छन्दो॑भि॒र्ज्यायां॑सि॒ छन्दां॑स्यसु॒राणा॑मवृञ्जत, यत् कनी॑योभि॒श्छन्दो॑भि॒र्ज्यायां॑सि छन्दां॑सि वि॒शं॑सति लोकं॑ वा एतच्छन्दां॑सि यज॑मानो भ्रातृ॑व्यस्य वृङ्क्ते, लोक॑मेनमछन्द॑स्कृ॒मकर॒नुष्टु॒भं॑ सर्वा॑णि छन्दां॑स्यभि॒सं॑शं॑सति, वाग्वा अ॒नुष्टु॒ब्वा॑नुष्टु॒भः पुरु॑ष॒स्तस्मा॒त् पुरु॑षः सर्वा॒ वाचो॑ वदति, पश॑वो वै छन्दां॑सि॒, वाग॒नुष्टु॒ब्वा॑नुष्टु॒भः पुरु॑षो, यत् सर्वा॑णि॒ छन्दां॑सि सं॑शस्यानु॒ष्टु॒भ॑मुत्त॒मां॑ शं॑सति॒ तस्मा॒त् पुरु॑ष उ॒परि॑ष्टाद्वा॒चः प॒शूनत्ति, सर्वा॑णि छन्दां॑सि सं॑शं॑सति, प्र॒जाप॑ति॒र्वै छन्दां॑सि, प्र॒जाप॑तिमे॒वाप्नोति॒, षड॒क्षरा॑णि स्तोत्रा॑दतिरिच्यन्ते, षड्वा ऋ॒तव॒, ऋ॒तुष्वे॒व प्रति॑तिष्ठति, तत॒श्चत्वा॑रि श॒स्त्रे पुन॑रुपा॒वर्तन्ते, चतु॑ष्पदस्ते॒न प॒शून॑वरुन्द्धे, ऽथ द्वे ए॒वाति॑रिच्येते, द्वे वि॒राज॑मत्ति स॒त्यं चानृ॑तं च, वि॒राज॑मे॒वाप्नोति ॥ ५ ॥ १२

प्र॒जाप॑ति॒र्वै दे॒वेभ्यो॑ य॒ज्ञान् व्य॑कल्पय॒त्, सो॑ऽमन्यता॒ऽऽत्मान॑म॒न्तर॑गा॒मिति॒, तेषा॑ं वा इ॒न्द्रिया॑णि वी॒र्या॑णि पुन॑ः सम॑वृहत्, स षो॑ड॒श्य॑भव॒द॑थ वै तर्हीन्द्रो॑ दे॒वाना॑मासीदव॒मत॑मः शिथि॒रत॑म॒स्तस्मै॒ वा ए॒तं॑ षो॑ड॒शिनं॒ प्राय॑च्छत्, तेनेन्द्रो॑ऽभवत्, ततो॑ दे॒वा अभ॑वन्, परा॑सु॒रा॒स्तथ्य॑ ए॒वं॑ वि॒द्वाने॒तं॑ षो॑ड॒शिनं॒ गृह्णीते॑, भव॑त्यात्म॒ना॒, परा॑स्य॒ भ्रातृ॑व्यो भवति, प्र॒जाप॑ति॒र्वै दे॒वेभ्य॑स्त॒नूर्व्य॑कल्पय॒त्, तासां॑ या हरि॑वत्यासी॒त् ताम॒ात्मन्न॒शिं॑षत् प्रे॒णा, यद्ध॑रि॑वती पुरो॒रुग्ग्रह॑स्य॒ भव॑ति, यैवा॒स्य हरि॑वती प्रि॒या त॒नूस्ता॒मे॒वाप्नोति॒, न षो॑ड॒शी ना॑म॒ य॒ज्ञो॑ऽस्तीत्या॒हु॒रथ कस्मा॒त् षो॑ड॒शीति॒, यत् स्तो॒त्रेण च श॒स्त्रेण च संप॑द्य॒ते तस्मा॒त् षो॑ड॒शी, य॒ज्ञेन वै दे॒वाः स्व॒र्गं लोक॑माय॒न्त्स ए॒षां न प्राभ॑व॒त्, तस्मि॑न्वा ए॒तं॑ षो॑ड॒शिनं॒ प्रत्य॑ग्रथ्न॒ं॑, स्तेना॒मुं लोकं॑ व्याप्नु॒वं॒स्तदमु॒ष्य॒ वाव लोक॑स्य व्याप्त्यै षो॑ड॒शी गृह्यते, ऽमुष्य॒ लोक॑स्य सम॑ष्ट्या, अ॒ग्नि॒ष्टो॒मे रा॒ज॒न्य॑स्य गृह्णीया॒द्द॑शान्त ए॒नं॑ वज्रो॑ भूत्वा इन्द्धे, ऽतिरात्रे ब्रा॒ह्मण॑स्य, वज्रो वै षो॑ड॒शीश्व॒रो॑ऽशान्तो॒ यज॑मानं॑ हिं॑सि॒तो॒, रात्रि॑रे॒व वज्रं॑ शमयति, प्रातः॑सव॒ने गृ॒ह्य॒स्तेजो॑ वै प्रा॒तःसव॒नं, तेज॑स ए॒व वज्रं॒ नि॒र्मि॒मी॒ते॒, माध्यं॑दिने॒ सव॑ने गृह्य॒, ओजो॑ वै माध्यं॑दिनं॑ सव॑न॒मोज॑स ए॒व वज्रं॒ निर्मि॑मीते, तृतीयसव॒ने गृह्यः, पश॑वो वै

[ ६ ] मै. १,३,३४ । तै. सं. ६.६,११,१।

तृतीयसवनं, पशुभ्य एव वज्रं निर्मिमीते, यत् प्रातःसवने गृह्णीयाद्वज्रा उत्तरे सवने अभ्यतिरिच्यते, यन्माध्यंदिने सवने, मध्यतो वज्रो निहन्यात्, तृतीयसवने गृह्य,—स्तत् सर्वेषु सवनेषु गृह्णाति, न पूर्वे सवने आर्तिं नीतः, पञ्चदशः का३र्यो, वज्रो वै पञ्चदशो, वज्रमेवास्मा आधात्, तेन विजितिं भूतिं गछति, षोडशी का३र्यो, यजमानो वै पञ्चदशो, वज्रः षोडशी, वज्रमेवास्मा आधात्, स एनं भूत्यै श्रेम्णं इन्द्धे, सप्तदशः कार्यः, प्रजापतिर्वै सप्तदशः, प्राजापत्यः षोडशी, स्व एवैन२ँ योनौ दधात्ये,—कवि२ँशः का३र्या, एकवि२ँशतिधाम्नी वा अनुष्टु,—बानुष्टुभः षोड३श्ये,—तद्वा अस्यायतनतमं, तस्मादेकवि२ँशः कार्यो, मध्यमेऽह२ँस्त्रिरात्रस्य गृह्यो, मध्यम२ँ वा अहस्त्रिरात्रस्य शिथिरं,—मह्यो द्रढिम्नेऽशिथिरत्वाय, चतुर्थेऽह२ँश्चतूरात्रस्य गृह्य,—श्चतुर्थ२ँ वा अहश्चतूरात्रस्य शिथिरं,—मह्यो द्रढिम्नेऽशिथिरत्वाय, चतुर्थे चतुर्थेऽहन्नहीनस्य गृह्य,—श्चतुर्थे चतुर्थ२ँ वा अहरहीनस्य शिथिरं,—मह्यो द्रढिम्नेऽशिथिरत्वाय, न द्विरात्रेऽवकल्पते, द्वे वा एते छन्दसी गायत्रं च त्रैष्टुभं चा,—ऽऽछन्दस्कमनायतनं गृह्णीते, ऽनायतनो यजमानो भवत्यु,—त्तरेऽहन् द्विरात्रस्य गृह्यो, रात्रिमेवायतनमभ्यतिरिच्यते ॥ ६ ॥ १२

अथैषोऽदाभ्यो, देवाश्च वा असुराश्चास्पर्धन्त, ते देवा एतमपश्य२ँ,—स्तमगृह्णत, तानसुरा नादभ्नुव२ँ,—स्तददाभ्यस्यादाभ्यत्वं, नैनं भ्रातृव्यो दभ्नोति य एवं गृह्णीते, घ्नन्ति वा एतत् सोम२ँ यदभिषुण्वन्त्ये,—षा वै सोमस्यातिमोक्षिणी तनू,—र्यनितान२ँशून् प्रवृहन्त्ये,—वं२ँ वा एतं लोक२ँ यजमानोऽन्वतिमुच्यते, वि वा एतद्यज्ञश्छिद्यते यत् सवनानि संतिष्ठन्ते, यदेतान२ँशून् पुनरप्यस्यति, यज्ञस्य संतत्या अविछेदाय, वृष्ट्यै वा एष गृह्यते, मरुन्नामानि हि, वर्षति पर्जन्यो यत्रैष गृह्यते, ऽग्निः प्रातः सवनात् पात्वस्मानिति, सवनानि वा एतेनु देवा असुराणामवृञ्जत, सवनान्येवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते, ऽग्नये त्वा प्रवृहामि गायत्रेण छन्दसेति, छन्दा२ँसि च वा एतेनु देवताश्च देवा असुराणामवृञ्जत, छन्दा२ँसि चैवैतेनु देवताश्च यजमानो भ्रातृव्यस्य वृङ्क्ते, चतुराधूनोति, दिशो वा एतेनु देवा असुराणामवृञ्जत, दिश एवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते, जीवग्रहो वा एष सोमस्या,—हुतस्य ह्यनभिषुतस्य गृह्यते, यजुषा च वा आहुत्या च यज्ञः संततो, यद्यजुर्वदन्नाहुतिं जुहोति यजुषा

[ ७ ] मै. १,३,३६ । तै. सं. ६,६,९-१० ।

चैवाहुत्या च यज्ञꣳ संतनोति, देवा वै सोममगृह्णत, स प्रजापतिरवेद्, यो वा इह प्रथमः सोमं ग्रहीष्यते स इदं भविष्यतीति, स एतमगृह्णीत सोऽभवद्, यो भूतिकामः स्यात् स एतं गृह्णीते, भवति, यदि शक्नोति ग्रहीतुमुभौ भवतो, यदि न शक्नोति ग्रहीतुमुभौ न भवतः, पराचीनेन प्राणता ग्रहीत३व्यः, पराङ् हि स प्राणैः श्रियोऽन्तमगच्छ,—दपानता ग्रहीत३व्यो, ऽपानꣳ हि स तमगृह्णीत, प्राण्यापान्याव्यवानता ग्रहीतव्यो, ऽव्यवानꣳ हि स तमगृह्णीत, यद्व्यवानेत् प्राणान्विच्छिन्द्याद्, यदि व्यवानेद्धिरण्येनापिदध्या,—दमृतꣳ वै हिरण्य,—ममृतेनैव प्राणान्त्संदधाति, सकृदभिषुणोति, सकृद्गृह्णात्ये,—को वै प्रजापतिः, प्रजापतिमेवाप्नोति, चतुःस्रक्तिना ग्रहीत३व्य,—श्चतुःस्रक्तिना वा एतं प्रजापतिरगृह्णीत, स सर्वासु दिक्ष्वाध्नोत्, स सर्वासु दिक्ष्वृध्नोति य एवꣳ विद्वानेतं चतुःस्रक्तिना गृह्णी३ते, ऽपो वै सोमस्य रसः प्रविष्टः, सोममपाꣳ रसो, यथा वा इदं गावौ संजग्माने अन्योन्याꣳ हत एवꣳ वा एतौ संजग्माना अ३न्योऽन्यस्येन्द्रियꣳ वीर्यꣳ विनिर्हत,—स्तयोर्वा एष रसो यदाधि, यद्दध्ना जुहोति स्वेनैवैनौ रसेन शमयति ॥ ७ ॥ १४

कृष्णशीर्षाग्नेयो, मेषी सारस्वती, बभ्रुः सौम्यः, श्यामः पौष्णः, शितिपृष्ठो बार्हस्पत्यः, पिशङ्गो वैश्वदेवो, वृष्णिरैन्द्रः, कल्माषो मारुतः, सꣳहित ऐन्द्रा३ग्नो, ऽधोरामः सावित्रः, पेत्वो वारुणः, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एतामेकादशिनीमपश्यत्, तयात्मानमाप्रीणीत, यज्ञो वै प्रजापति,—स्तद्य एवꣳ विद्वानेतामेकादशिनीꣳ विवध्नीते यदेवास्यात्मन ऊनं तदाप्रीणीते, प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, स एतानीन्द्रियाणि वीर्याण्यपश्यत्, तानि द्वन्द्वमात्मानमभिसमबध्नीता,—ऽऽत्माग्नेयो, वाक्सरस्वती,—न्द्रियꣳ सोमो वाचं चैवेन्द्रियं चात्मानमभिसमबध्नीत, पुष्टिः पौष्णो, ब्रह्म बृहस्पतिः, पुष्टिं चैव ब्रह्म चात्मानमभिसमबध्नीत, बलꣳ विश्वे देवा, वी३र्यमिन्द्रो, बलं चैव वीर्यं चात्मानमभिसमबध्नीतौ,—जो मरुतः, सह इन्द्राग्नी, ओजश्चैव सहश्चात्मानमभिसमबध्नीत, प्रसवाय सावित्रो, निर्वरुणत्वाय वारुण, आग्नेयाय सर्वा उपबध्यन्ते, ऽग्निर्वै सर्वा देवताः, सर्वाभ्य एव देवताभ्या उपबध्यन्ते, मिथुनत्वायैव सारस्वत्य,—थ यत् सौम्यः, सोमो वै रेतोधा रेतोऽस्मिन् दधात्य,—थ यत् पौष्णः, प्रजननꣳ वै पूषा, प्रजननाय, ब्रह्म बृहस्पति,—वैश्वदेवीरिमाः प्रजा, ब्रह्म वा एतत् पुरस्तादासां प्रजानामत्यौही,—दथो ब्रह्मण एवैमाः

[ ८ ] तै. सं. ६,६,५।

प्रजा अनुकाः करोति, क्षत्रमिन्द्रो, विण्मरुतो, विशं वा एतत् क्षत्राय नियुनक्त्यथो विशमेव क्षत्रायानुकां करोत्यग्न इन्द्राग्नी, ओजसा वा एतद्विशं क्षत्राय परिगृह्णात्यालभ्य आग्नेयं, आलभ्य ऐन्द्रो, ऽथैष ऐन्द्राग्न आलभ्यते, ब्रह्म चैव क्षत्रं च सयुजा अकर्यदग्निश्चेन्द्रश्च भूयिष्ठभाजौ देवतानां तस्माद्ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणां, प्रसवाय सावित्रो, निर्वरुणत्वाय वारुणः, समुद्रो वै वरुणो, दक्षिणा समुद्रो, यद्वारुणो दक्षिणार्ध आलभ्यते, यजमानस्य निर्वरुणत्वायै,—तद्वा एषाऽभ्यनूक्ता ॥ १५

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥
इति ॥ ८ ॥ १६

ये देवानां बलपतयस्तेभ्यो दक्षिणार्ध आलभ्यन्ते, तस्मात् प्रजा दक्षिणाभिजयन्तीर्यन्ति, यदाग्नेयः सौम्यो बार्हस्पत्यस्ते सार्धमालभ्यन्ता ओज एवैतत् संधीयते, यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितस्तेजसा च वावास्मा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णात्येकादश वा एतेषां पशूनां देवता, मेषी सारस्वती देवतानां द्वादशी, यदेषातिरिच्यते तस्मात् स्त्रियः पुंसोऽतिरिच्यन्ते, ऽथ द्वे एकस्य रशने, द्वे एकस्य, तस्मात् स्त्रियं जातां परास्यन्ति, न पुमांसमथ स्त्रिय एवातिरिच्यन्ते, यं वा अमुमिन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधाभवद्, यदग्रं तेजा आसीत् स स्फ्योऽभवद्, यन्मध्यं स रथो, यज्जघनं स यूपः, स्फ्येन परिलिखति, रथाक्षेण विमिमीते, यूपो भवति, वज्र एवैष संश्रियत, एतावती वा इयं पृथिवी यावती वेदिर्वज्र एकादशिनी, तिरश्चीं मिनोति, वज्रेण वा एतदिमां जयति, दक्षिणत उन्नता मेतव्या, देवयजनस्य रूपमथो वज्रं वा एतद्यजमानो भ्रातृव्यायोच्छ्रयति, त्रयो मध्यतः समा मेतव्याः, समत्वाय, समं हि पशवोऽनूपतिष्ठन्ते, पशुभिरेवैनं सम्यञ्चं दधाति, यं कामयेत, पितृलोक ऋध्नुयादिति, तस्योपरसंमितां मिनुयात्, पितृलोक एव ऋध्नोत्यथ यं कामयेत, मनुष्यलोक ऋध्नुयादिति, तस्य मध्यसंमितां मिनुयान्मनुष्यलोक एव ऋध्नोत्यथ यं कामयेत, देवलोक ऋध्नुयादिति, तस्य चषालसंमितां मिनुयाद्, देवलोक एव ऋध्नोति, तासां वा एषा समृद्धतमा या चषालसंमिता, तस्माच्चषालसंमिता मेतव्या, समृद्धत्वाय, यस्य पश्चादुपस्थः पुरस्तान्निर्णतं तं मिनुयाद्, यं कामयेत, भ्रातृ-

[ सुदेवो असि वरुण० । ऋ. ८,६९,१२; अथर्व. २०,९२,९; नि. ५,२७ ]

[ ९ ] तै. सं. ६,६,४ ।

व्याय लोकं कुर्याद्, यजमानं निर्बाधेतेति, भ्रातृव्यायैव लोकं करोति, यजमानं निर्बाधते,
ऽथ यस्य पुरस्तादुपस्थः पश्चान्निर्णुतं तं मिनुयाद्, यँ कामयेत, यजमानाय लोकं कुर्याद्
भ्रातृव्यं निर्बाधेतेति, यजमानायैव लोकं करोति, भ्रातृव्यं निर्बाधते, सर्वेऽग्निष्ठाः का३र्या,
या अग्निष्ठा अश्वयस्ता अग्निष्ठाः का३र्या,—स्तेन सर्वेऽग्निष्ठा, अथ यदग्निष्ठादधि रशना विह्रि-
यन्ते तेन सर्वेऽग्निष्ठा, नाना वा एतेषां पशवो, नाना देवता, अथ य एष द्वादशो यज-
मान एवैतस्य पशु,—र्यदस्मै पशुं न निर्दिशेत् तत् प्रमायुको यजमानः स्याद्, यँ द्विष्यात् वै
ब्रूयात् ॥ असौ ते पशुः ॥ इति, तमेवास्मै पशुं निर्दिशति, प्रमायुको भवति, यद्यभिचरेत् ॥
इदमहममुमामुष्यायणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामि ॥ इत्यभिनिदध्या,—दिन्द्रवज्रेणैवैनम-
भिनिदधाति, प्रमायुको भवत्य,—थो द्वादशस्यैवैष मासोऽवरुद्धयै ॥ ९ ॥ १७-२१

[ २२९० ]

॥ इति खिलकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

अथाष्टमः प्रपाठकः ।

मनोर्वै पात्राण्यासꣳ,—स्तेषाꣳ समाहन्यमानानाꣳ यावन्तोऽसुरा उपाशृण्वꣳस्तावन्तस्तदहनी-
भुव,—न्नथ वा एतौ तर्ह्यसुराणां ब्राह्मणा आस्तां तृष्टावरुत्री, ता अब्रुवꣳ,—श्चिकित्सतं ना
इति, ता अब्रूतां, मनो यज्वा वै श्रद्धादेवोऽसी,—मानि नौ पात्राणि देहीति, तानि वा
आभ्यामददात्, तान्यग्निना समक्षापयतां, तान् ज्वालानृषभः समलेट्, तꣳ सा मेनिरन्व-
पद्यत, तस्य रुवतो यावन्तोऽसुरा उपाशृण्वꣳस्तावन्तस्तदहनीभुवꣳ,—स्ता अब्रूतां, मनो
यज्वा वै श्रद्धादेवोऽस्य,—नेन त्व ऋषभेण याजयावेति, तेन वा एनमयाजयतां, तस्य श्रोणि-
मनुवत्ताꣳ सुपर्णी उदमथ्नात्, सा मनाय्या उपस्थमापद्यत, ताꣳ सा मेनिरन्वपद्यत, तस्या
वदन्त्या यावन्तोऽसुरा उपाशृण्वꣳस्तावन्तस्तदहनीभुवꣳ,—स्ता अब्रूतां, मनो यज्वा वै श्रद्धा-
देवोऽस्य,—नया त्वा पत्न्या याजयावेति, तां प्रोक्ष्य पर्यग्निं कृत्वेध्माबर्हिरच्छैताꣳ, स इन्द्रो-
ऽवे,—दिमे वै ते असुरमाये मनुं पत्न्या व्यर्धयता इति, तमिन्द्रो ब्राह्मणो ब्रुवाण उपैत्, सो
ऽब्रवी,—न्मनो यज्वा वै श्रद्धादेवोऽसि, याजयानि त्वा, कतमस्त्वमसि ब्राह्मणः ॥ १

[ १ ] तै. सं. ६,६,६ । कपि. ४६,४ ।

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्। श्रुतं चेदस्मिन् वेद्य॑ स पिता स पितामहः॥

२

केनेत्या,—भ्यां ब्राह्मणाभ्या,—मितीशेऽहं ब्राह्मणयो,—रितीशिषे हीत्य,—ब्रवी,—दतिथिपति-
र्वावातिथीनामीष्टा इति, स द्वितीया॑ वेदिमुद्धन्तुमुपापद्यत, ताविध्मावर्हिर्बिभ्रता एतां, ता
अब्रूतां, किमिदं कुरोषी,—तीमं मनु॑ याजयिष्यामीति, केनेति, युवाभ्यामिति, ता
अविता,—मिन्द्रो वावेति, तौ न्यस्येध्माबर्हिः फलायेतां, तौ यदधावतां परस्तादेवेन्द्रः प्रत्यैत्॥
तौ वृशश्चैवापश्चाभवतां, तद्वृशस्य चैवापस्य च जन्म, स मनुरिन्द्रमब्रवीत्, सं मे यज्ञं॑
स्थापय, मा मे यज्ञो विकृष्टोऽभूदिति, सोऽब्रवीद्यत्काम एतामालब्धाः स ते कामः समृध्यता,-
—मथोत्सृजेति, तां॑ वा उदसृजत, तद्व्ध्या एव, पात्नीवतस्त्वाष्ट्रः स्यात्, त्वाष्ट्रा हि
पशवो, ऽवाचीनं नाभ्याः कार्यो, ऽवाचीन॑ हि नाभ्याः स्त्रिया वीर्यवद्, व्यवब्लिनाति वा
एकादशिनी यज्ञं॑, यत् पात्नीवतः, प्रत्युत्तब्ध्यै ॥ १ ॥ ३-४

अमुष्मिन्वै लोके यजमानो बुभूषत्य,—मुष्य खलु वा आदित्यस्यासौ लोको, यत् सौरीभ्यां
जुहोत्यमुष्मिन् वा एतल्लोके यजमानो भवति, द्वाभ्यां जुहोति, द्विपाद्यजमानः, प्रतिष्ठित्यै,
हिरण्यमवधाय जुहोति, हिरण्यज्योतिषमेवैन॑ स्वर्गं लोकं गमयति, बद्धेन जुहोति, दक्षि-
णाना॑ वा एषोऽन्वारम्भो, द्यां गच्छ स्वर्गच्छेत्यु,—द्रवति, स्वर्गस्य लोकस्य समष्ट्यै, रूपं॑
वो रूपेणा३भ्येमीति, रूपं॑ हिरण्य॑, रूपं पशव,—स्तुथो वो विश्ववेदा विभजत्वित्ये,—ष
वै तुथो विश्ववेदा यदग्नि,—रेष वै त॑ वेद यो दक्षिणीयो, योऽदक्षिणीय, एतत्ते अग्ने राध
एति सोमच्युतमित्य,—ग्नीधे वा एतद्दीयते, तत् सोमश्च्यावयति, तन्मित्रस्य पथा नयेत्ये,—ष
वै मित्रस्य पन्था यद्यज्ञ, आग्नेय्याग्नीध्रे जुहोत्या,—ग्नेयं॑ ह्याग्नीध्र॑, वारुण्या द्वितीयथा,
यद्यनो वा रथो वा दीयते वारुण॑ हि तद्, ऋतस्य पथा प्रेतेत्ये,—ष वा ऋतस्य पन्था यद्यज्ञ-
श्चन्द्रदक्षिणा इति, चन्द्र॑ हि दीयते, ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमित्ये,—ष वै
ब्राह्मणः पितृमान् पैतृमत्यो य आर्षेयः शुश्रुवा,—न्त्सुधातुदक्षिणमिति, सुधात्वेवास्य यज्ञं दधाति,
वि स्वः पश्य, ३व्यन्तरिक्षमित्य,—द एवं प्राप्य वदति, यतस्व सद३स्यैरित्य,—रातीयन्ति
वा एत एतस्मै ददत, ईश्वरा ब्राह्मणाः सोमपाश्चक्षुषापहन्तो,—स्तानेव शमयत्य,—स्मद्राता
मधुमतीर्देवत्रा गच्छत, प्रदातारमाविशतेति, तथा हैनममुत्रागच्छन्ति, वहुमया यज्ञकुणपी,—

[ १ ] मै. १,३,३७। तै. सं. ६,६,१। कपि. ४४,४। वा. ७,४५-४६। काण्व. ९,१०—११।

*

ति ह स्माह यज्ञवचा राजस्तम्बायनः, प्र वा इतो मनु३ष्या दक्षिणाश्च्यावयन्ति, नामुत्र गछन्तीति, यदाहा,—ऽनवहायास्मान् देवयानेन पथा सुकृतां लोके सीदत, तन्नः सꣳस्कृतमिति, तथा हैनमिह चामुत्र चागछन्ति ॥ २ ॥

घ्नन्ति वा एतत्सोमꣳ यदभिषुण्वन्ति, यज्ञꣳ वा एतद् घ्नन्ति, यद्दक्षिणा दीयन्ते यज्ञꣳ वा एतद्दक्षयन्ति, तद्दक्षिणानां दक्षिणात्वꣳ, यत्तद्दक्षयन्ति, स्वर्गो वै लोको माध्यंदिनꣳ सवनꣳ, यन्माध्यंदिने सवने दक्षिणा दीयन्ते, स्वर्गस्य लोकस्याक्रान्त्यै, बहु देयꣳ, सेतुꣳ वा एतत् कुरुते, स्वर्गस्य लोकस्य समष्ट्यै, हिरण्यꣳ हस्ते भवत्य,—थ नयति, सत्यꣳ वै हिरण्यꣳ, सत्येनैवैना नयत्य,—ग्रेण गार्हपत्यं, जघनेन सद,—स्ता उदीचीरुत्सृजन्त्यन्तरा चात्वालं चाग्नीध्रं चै,—तेन वा अङ्गिरसः स्वर्गं लोकमायꣳ,—स्तमेवैनाः पन्थामपिनयति, द्वाभ्यां गार्हपत्ये जुहोती,—मां तेनाक्रमत, आग्नेय्याग्नीध्रे, ऽन्तरिक्षं तेना,—ऽथ यद्दक्षिणा दीयन्ते स्वर्गं तेन लोकं,—मग्नीधेऽग्रे ददाति, यज्ञमुखꣳ वा अग्नीद्, यज्ञमुखमेव नापारा,—ऽथो अग्निर्वै सर्वा देवता, देवता एवास्य तयाभीष्टाः प्रीता भवन्ति, ब्रह्मणे ददाति, प्राजापत्यो वै ब्रह्मा, प्रजापतिमेव तया प्रीणात्यृ,—त्विग्भ्यो ददाति, होत्रा एव तया प्रीणाति, याꣳ सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते, यामार्षेयाय शुश्रुवुषे ददाति छन्दाꣳसि तया प्रीणाति, न हि तस्मादर्हन्ति सोमपीथं निष्क्रीयꣳ, यामार्षेयाय शुश्रुवुषे ददाति देवलोके तया ऋध्नोति, यामनार्षेयाय शुश्रुवुषे मनुष्यलोके तया, यामप्रसृप्ताय ददाति वनस्पतयस्तया प्रथन्ते, याꣳ याचमानाय ददाति भ्रातृव्यं तया जिन्वति, यां भीषा क्षत्रं तया ब्रह्माति, यां प्रतिनुदते सा व्याघ्री दक्षिणा, यत्तां पुनः प्रतिगृह्णीयाद् व्याघ्र्येनं भूता प्रक्लिनीया,—दन्यया सह प्रतिगृह्या, तथा हैनं न प्रक्लिनाति, यदजं ददात्या,—ग्नेयो वा अ३जो, ऽग्नेरेव तेन प्रियं धामोपैति, यदविं ददात्य३ग्न्यन्तेनापजयति, यद्गां ददाति, वैश्वदेवी गौ,—र्विश्वेषां देवानां तया प्रियं धामोपैति, यद्वासो ददाति, सर्वदेव३त्यꣳ वै वासो, देवता एवास्य तेनाभीष्टाः प्रीता भवन्ति, यत् कृतान्नं ददाति माꣳसं तेन निष्क्रीणीते, यदनो वा रथꣳ वा शरीरं तेन, यद्धिरण्यं ददात्यायुस्तेन वर्षीयः कुरुते, यदश्वं ददाति, प्राजापत्यो वा अश्वः, प्रजापतेरेव तेन प्रियं धामोपैत्य,—थो अमुष्यादित्यस्य लोकं जयत्य,—न्ततः प्रतिहर्त्रे देयꣳ, रौद्रो वै प्रतिहर्ता, यन्मध्यतः प्रतिहर्त्रे दद्यान्मध्यतो रुद्रमन्ववनयेत्, तस्मादन्ततः, प्रतिहर्त्रे

[ ३ ] मै. १,३,३७। तै. सं. ६,६,१। कपि. ४४,४—५।

देयꣳ, स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्, तमत्रिरन्वपश्यद्, यदात्रेयाय हिरण्यं
ददाति तम एवापहते, ऽथो ज्योतिरुपरिष्टाद्धाति, स्वर्गस्य लोकस्यानुख्यात्यै ॥ ३ ॥ ६

विश्वरूपो वा एतत्त्वाष्ट्रो यज्ञस्य व्यृद्धममन्यत, यदृक्सामे व्युद्धेते स एतान्यपश्यद्, यज्ञस्य निष्कृत्यै, यदेवात्र यज्ञस्य व्यृद्धं तस्यैतानि निष्कृत्यै हूयन्ते, षड्ऋग्म्याणि भवन्ति, षड्वा ऋतव, ऋतुष्वेव प्रतितिष्ठति, त्रीणि यजूꣳषि, त्रीणि वै सवनानि, सवनान्येवाप्नोति, नवैतानि समिष्टयजूꣳषि जुहोति, नवभिर्बहिष्पवमाने स्तुवते, तन्नव, नव प्राणाः, प्राणानेवात्मन् धत्त, ऊर्ध्वस्तिष्ठन् जुहोत्यू,—र्ध्वो हि तिष्ठन् वीर्यवत्तरो, यं द्विष्यात् तस्य तूष्णीं तिष्ठन् जुहुयात्, प्राणानस्यान्तरेति, संततं जुहोति, प्राणानाꣳ संतत्या, अविछिन्दन् जुहोति, प्राणानामविछेदाय, यद्विछिन्द्यात् प्राणान् विछिन्द्याद्, यं द्विष्यात्तस्य विछिन्द्यात्, प्राणानस्य विछिनत्ति, समानेन विग्राहं जुहोति, समाना ऽहीमे प्राणा, यज्ञस्य वा एता आणी, एतौ वै विश्वामित्रो यज्ञस्याणी अपश्यत्, तद् यज्ञस्यैवैता आणी क्रियेते, यतो यज्ञ आदीयते तत् पुनर्निधेया, इति ह स्माह भरद्वाजो, यतो वा एतद्यज्ञ आदीयते
तत् पुनर्निधीयते ॥ ४ ॥ ७

पञ्चसवनो वै यज्ञ,—स्त्रीणि सवनान्यवभृथो, ऽनूवऽन्ध्या सवनानां पञ्चमी, पाङ्क्तो यज्ञो, यावानेव यज्ञस्तमालभ्य, यद्वै यज्ञस्यातिरिच्यते तद्वरुणो गृह्णात्य,—तिरिक्तꣳ वा एतद्यज्ञस्य यद्वजीषो, ऽधिषवणमाधिषवणे, तस्मात्तेनावभृथमभ्यवयन्त्य,—ऽपोऽभ्यवयन्त्या,—पो हि वरुणः, स्थावरा अभ्यवयन्ति, ता हि साक्षाद्वरुणो, यद्वहन्तीरभ्यवेयुः पशूनिर्वहेयु,—रथ यत् स्थावरा अभ्यवयन्ति, पशूनामनिर्वाहाया,—ऽपो वै वरुणो, वातो वरुणो, यदुदश्वोऽवभृथमभ्यवेयुरभीपतः प्रजा वरुणो गृह्णीया,—दथ यद्दक्षिणावभृथमभ्यववयन्ति यजमानस्य निर्वरुणत्वायो,—रुꣳ हि राजा वरुणश्चकारे,—ति चात्वालात् प्रयन्तो वदन्त्ये,—ष वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एत्य,—मुष्य वा एतदादित्यस्य पथ इति, शतं ते राजन् भिषजः सहस्रमित्य,—पः पुरादश्य वदन्त्य,—पो वा एतद्भूषन्ति, पूताभिराभिः पूताश्चरन्त्ये,—ककपाला भवन्ति, न वै पुरुषः कपालैराप्य, एकधैवैनमाप्नोत्य,—थो एका वा इयं,—

---

[ ४ ] मै. १,३,३८। तै. सं. ६,६,२।

[ ५ ] मै. १,३,३९। तै. सं. ६,६,३। कपि. ४५,५। था. ८,२३,२५,२७; १०,१९,२२; ३८,२१। काण्व. ९,२३, २५—२६; २२,४,७; ३८,२४।

[ उरुꣳ हि राजा०। ऋ. १,२४,८; तै. सं. १,४,४५,१ ]

मस्यामेव प्रतितिष्ठति, तृणं प्रास्य जुहोत्य,—ग्निमत्येव जुहोत्यायतनवत्य,—न्धोऽध्वर्युः स्याद्, यदनायतने जुहुया,—दपबर्हिषः प्रयाजान् यजति, प्रजा वै बर्हिः, प्रजा एव मृत्योरुत्सृजत्या,-—ज्यभागौ यजति, यज्ञतायै, वरुणꣳ यजति, निर्वरुणताया, अग्नीवरुणौ यजत्यु,—भयत एवैनꣳ वरुणान् मुञ्चति, नानुयाजान् यजति, न सꣳस्थापयन्त्य,—तिरिक्तमिव हि तन्मन्यन्ते, समुद्रे ते हृदयम३प्स्वन्त,—रिति स्रुचोपमारयति, यदेवात्र क्रूरं क्रियते तच् शमयत्य,—वभृथ निचुङ्कुणेत्य,—वभृथ एवास्यैष, ततो य ऋजीष उत्प्लवते तं भक्षयन्ति, सोमपीथमिव हि तन्मन्यन्ते, वरुणो वा ऋजीषो, यद्भक्षयेद्वरुणमात्मन्यञ्जीत, तदाहु,—र्भक्षयितव्यमेव, पशवो वा ऋजीषः, पशूनेवात्मन्यङ्क्त इति, विचृत्तो वरुणस्य पाश इति, वरुणपाशमेव विष्यति, प्रत्यस्तो वरुणस्य पाश इति, वरुणपाशमेव प्रत्यस्यति, नमो वरुणस्य पाशायेति, वरुणपाशायैव नमोऽक,—रङ्गिरसो वा उत्तिष्ठतो रक्षाꣳस्यनूदतिष्ठꣳ,—स्तान्वा एतेन बृहस्पतिरन्ववैत्, तेनैभ्यो रक्षाꣳस्यपाहन्, यदेतेनान्ववैति, रक्षसामपहत्यै, यदूर्ध्वस्तोभं तेन बार्हस्पत्य,—मथ यत् त्रिस्तोभं, त्रयो वा इमे लोका, एभ्यो वा एतल्लोकेभ्यो यज्ञाद्रक्षाꣳस्यपहन्ति, यदतिछन्दसा, सर्वाणि वै छन्दाꣳस्यतिछन्दाः, सर्वैर्वा एतच्छन्दोभिर्यज्ञाद्रक्षाꣳस्यपहन्ति, यदाग्नेय्या,—ग्निर्वै सर्वा देवताः, सर्वाभिर्वा एतद्देवताभिर्यज्ञाद्रक्षाꣳस्यपहन्त्य,—३पोऽभ्यवयन्त्या,—पो वै रक्षोघ्नी,—रपो रक्षाꣳसि न तरन्ति, रक्षसामपहत्या, अनपेक्षमाणा आयन्ति, वरुणस्यानन्ववायाय, परोगोष्ठं मार्जयन्ते, परोगोष्ठमेव वरुणं निरवदयन्ता, एधोऽस्येधिषीमहीति, निर्वरुणा एव भूत्वैधितुमुपयन्ति, समिदसि, समेधिषीमहीति, समिद्ध्या एव ॥ ५ ॥ ८

यः कामयेत, सर्वो मे यज्ञः स्यात् सरसा इति, स एतास्तिस्रो वशा आलभेत, यज्ञस्य सर्वत्वाया,—ऽथो सरसत्वाय, वैश्वदेवीं मध्यत आलभेत, रेतो वा एतन्मध्यतो दधाति, मध्यतो हि रेतोऽनिरुक्तया प्रचरन्त्य,—निरुक्तमिव हि रेतो, यातयामꣳ वा एतस्य देवताश्च ब्रह्म च, यद्वैश्वदेवी च बार्हस्पत्या च वशे भवतो, देवतानां च ब्रह्मणश्चायातयामत्वाय, दुग्धानि वा एतस्य छन्दाꣳसि यातयामानि भवन्ति, छन्दस्येव रसं दधाति, बार्हस्पत्यामन्तत आलभेत, ब्रह्म वै बृहस्पति,—र्ब्रह्मणि वा एतदन्ततो यज्ञस्य यजमानः प्रतितिष्ठति, यद्वै यज्ञः संतिष्ठते मित्रोऽस्य स्विष्टꣳ युवते, वरुणो दुरिष्टꣳ, यन्मैत्रावरुण्यनूब३न्ध्या भवति मित्रेण वा

[ ६ ] कपि. ४५, ६।

एतन्मित्राद्यज्ञस्य स्विष्टं मुञ्चति, वरुणेन वरुणाद्दुरिष्ट,—मुभयत एनं मुक्त्वा यजमानाय प्रयच्छति,
यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमुक्थामदानि यज्ञं प्रभिन्दन्ति, यथा मत्यमन्ववास्यत्येवमेषां
यज्ञस्य, यद्दुष्टुतꣳ यद्दुःशस्तꣳ यद्विलोमं यदेतया कल्पयति, विदेवो वा ईजानः, सदेवोऽनी-
जाना, आ ह्यनीजाने देवताः शꣳसन्ते, यथा वा अनड्वान् विमुक्तोऽपक्रामत्येवमीजानाद्देवता
अपक्रामन्ति, यदाग्नेय उदवसानीयो भवत्य,—ग्निर्वै सर्वा देवता, देवता एव पुनरालभते,-
ऽष्टाकपालो भवति, गायत्रो ३ह्यग्निर्गायत्रच्छन्दाः, पञ्चकपालः का३र्यः, पाङ्क्तो यज्ञो,
यावानेव यज्ञस्तमालभ्य, यत्र वा अ३दोऽग्नौ पुरुषं प्रमीतमादधति तदेनमभि सत्यꣳ, सर्वा
एनमन्या देवता जहत्य,—ग्निरेनं देवतानां न जहाति ॥ ६ ॥ ९

प्र वा ऋचा ह प्रयच्छति, यजुषा गमयति ग्रहेण, स्तोत्राय वा ऋक्, शस्त्राय यजुः,
संबद्धे वै स्तोत्रं च शस्त्रं च, संबद्धे ऋक् च यजुश्चो,—च्चैर्ऋचा क्रियत, उच्चैः साम्नो,—पाꣳशु
यजुषा, ते देवा अमन्यन्त,—दꣳ यज्ञस्य शिथिरमिति, तत् पुरोरुचमुपादधु,—रशिथिरत्वाय,
देवता वै सर्वा आशꣳसन्ते ग्रहे गृह्यमाणे, मह्यं गृह्णाति मह्यं गृह्णातीति, यत् पुरोरुग्, देव-
तानाꣳ व्यावृत्त्यै ॥ जीवा नाम स्थ, ता इमं जीवयत, जीविका नाम स्थ, ता इमं
जीवयत, संजीवा नाम स्थ, ता इमꣳ संजीवयत ॥ इति यवानेकविꣳशतिं दर्भपिञ्जूलानि
चावधाय परिप्लूया,—दथाभिमन्त्रयेत ॥ प्राणापानौ त उपाꣳश्वन्तर्यामौ पाताꣳ, व्यानं
त उपाꣳशुसवनः पातु, वाचं त ऐन्द्रवायवः पातु, दक्षक्रतु ते मैत्रावरुणः पातु, श्रोत्रं त
आश्विनः पातु, चक्षुषी ते शुक्रामन्थिनौ पाता,—मात्मानं त आग्रायणः पात्व,—ङ्गानि त
उक्थ्यः पात्वा,—युस्ते ध्रुवः पातु, स्तनौ त ऋतुपात्रे पातां, मूर्धानं ते द्रोणकलशः पातु,
कुक्षी ते कलशौ पातां, पुष्टपते चक्षुषे चक्षुः सं ने सानꣳ वाचे वाचं प्राणाय प्राणं पुनर्देह्यस्मै
स्वाहा ॥ इति जुहुया,—देतद्ध स्म वा आह वासिष्ठः सात्यहव्यः, पात्रेषु वा अहं तद्ब्राह्मणꣳ
वेद, यथा पुरुषः सकृदाहुतिमाहुयते सकृ३च्चेव कुर्यान्न ततः पुरो, यत् पुनः कुर्यात् प्रमीयेत,
यद्यभिचरे देतदेव यजुरुदित्वाथाभिमन्त्रयेत ॥ पुनरितरथा ॥ ७ ॥ १०–१५

पुनरन्यानि पात्राणि प्रयुज्यन्ते, नान्यानि, यानि पुनः प्रयुज्यन्ते तान्यस्मै लोकाय,
यानि न पुनः प्रयुज्यन्ते तान्यमुष्मै क्षयाया,—ऽथैतदुक्थ्यपात्रं पुनः प्रयुज्यत, आरण्यान्वा

---

[८] तै. सं. ६,५,११ ।

एतत् पशून् प्रत्या,—रण्यानेवैतेन पशून् दाधार, यदेतत् पुनः प्रयुज्यते तस्मादेतान् पश्यतः परीत्य घ्नन्त्य,—थैतदृतुपात्रं पुनः प्रयुज्यते, ऽश्वꣳ वा एतत् प्रत्य,—श्वमेवैतेन दाधार, यदेतत् पुनः प्रयुज्यते तस्मादेतस्याश्वस्येवाधस्ताच् शफौ; ऽथैतदादित्यपात्रं पुनः प्रयुज्यते, गाꣳ वा एतत् प्रति, गामेवैतेन दाधार, यद्भूयिष्ठाभिर्ऋग्भिर्भूयिष्ठः सोमो गृह्यते तस्माद्गौर्हन्यमानाद्यमाना पशूनां भूयिष्ठा,—ऽथैतच् शुक्रपात्रं पुनः प्रयुज्यते, पुरुषꣳ वा एतत् प्रति, पुरुषमेवैतेन दाधारा,—ऽसौ वा आदित्यः शुक्रो, रश्मय ऋतवो, ऽन्तरमृतुपात्रꣳ, शुक्रपात्रं पुनः प्रयुज्यते, ऽन्तरे ३ह्यमुष्मादादित्याद्रश्मयो, ऽथैतदुपाꣳशुपात्रं पुनः प्रयुज्यते, ऽविꣳ वा एतत् प्रत्य,—विमेवैतेन दाधारा,—ऽथैतदन्तर्यामपात्रं पुनः प्रयुज्यते, ऽजाꣳ वा एतत् प्रत्य,—जामेवैतेन दाधार, प्रजापतिर्वा आग्रायणो, यदेष पुनः प्रयुज्यते तस्मात् प्रजापतिः प्रजा वेद, प्रजापतेर्वा एतत् पात्रꣳ यद् द्रोणकलशो, यदेष पुनः प्रयुज्यते तस्मादयं क्षयोऽस्ति, सप्त वै पात्राणि पुनः प्रयोगमर्हन्ति, तानि हि बन्धुमन्ति सप्त छन्दाꣳसि, छन्दाꣳसि वाग्, यावत्येव वाक्तामाप्नोति, सप्त छन्दाꣳसि, सप्त होत्राः, सप्त ग्राम्याः पशव,—स्तानेवावरुन्द्धे, त्रीणि वै पात्राणि प्रत्यक्षबन्धूनि, परोक्षबन्ध्वेवान्यत् सर्वं, गायत्र्यैन्द्रवायवं,—स्त्रिष्टुप् शुक्रो, जगत्याग्रायणो, ऽछिन्नꣳ स्रावयित३व्यः, कामो हास्य समर्धुको भवत्य,—थो अजीमूतवर्षी पर्जन्यो भवति, न चमसमभ्युपाकुर्याद्, यच्चमसमभ्युपाकुर्याद्गर्भस्रुतः प्रजाः स्यु,—र्येनैवाग्रे सर्पन्ति तेन पुनः सर्पेयु,—र्यदन्येन सर्पेयुर्गर्भा वेष्टुकाः स्यु,—र्यूपेन वा आहुतयः स्वर्गं लोकꣳ यन्त्य,—ध्वर्युणा दक्षिणा, ऊर्ध्वो यूपो मीयत, ऊर्ध्वस्तिष्ठन् प्रतिगृणाति, स्वर्गस्य लोकस्य समष्ट्यै ॥ ८ ॥ १६

यो ज्येष्ठबन्धुः स्यात् स ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीता,—ऽग्रꣳ ह्यैन्द्रवायवो, य आमयावी स मैत्रावरुणाग्रान्, प्राणापानौ हि मित्रावरुणौ, यः पश्चात् सोमपीथः स आश्विनाग्रान्, पश्चैव३ह्येतौ सोमपीथमाश्नुवाताꣳ, यो ब्रह्मवर्चसकामः स शुक्राग्राꣳ,—स्तेजो वै शुक्रो ब्रह्मवर्चसꣳ, योऽभिचरेत् स मन्थ्यग्रा,—नार्तꣳ वा एतत् पात्रꣳ यन्मन्थिपात्रꣳ, य आनुजावरः स आग्रायणाग्रा,—नग्रꣳ ह्याग्रायणं, एति वा एष यज्ञमुखाद्य ऐन्द्रवायवाग्रेभ्यो ग्रहेभ्योऽन्याग्रान् ग्रहान् गृह्णीते, धारयेयुस्तꣳ यं कामाय गृह्णीया,—दथैन्द्रवायवꣳ सादयेद्, यथापूर्वꣳ वा एतत्

[ ९ ] कपि. ४६,६ । वा. २,१३;१३,५;१०,३२;१९,६;२३,३८ । काण्व. २,२९;१४,५;११,४५;२१,५;२५,४० ।

क्रियते, न यज्ञमुखादिति, यद्याग्रायणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो निर्गृह्णीयाद्, यथा पिता पुत्रान् क्षित उपधावत्येवं तद्, यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुराग्रायणान्निर्गृह्णीयाद्, यथा पुत्राः पितरं क्षित उपधावन्त्येवं तद् द्रोणकलशान्निर्गृह्णन्त, एष वा एतेषाꣳ योनिः, स्वादेव योनेर्निर्गृह्णन्ते, ऽस्कन्नत्वाय, सोमः स्कन्त्स्यति, तमितो ग्रहीष्यामीति, तस्य वा एष परिशये, यदा वा एतमुवनयत्यथैष उभयतःशुक्रो, ऽथो सर्वतःशुक्रः, पशुभिर्वा एष व्यृध्यते यस्य सोमः स्कन्दति, व्यस्य यज्ञश्छिद्यते, पशवो वै पृषदाज्यꣳ, यत् पृषदाज्यं जुहोति, पशुभिरेवैनꣳ सम्यञ्चं दधाति, मनो ज्योतिर्जुषतामाज्यस्य विछिन्नꣳ यज्ञꣳ समिमं दधात्विति, यज्ञमेव संदधाति ॥ वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञꣳ यज्ञपतिमꣳहसः। स्वाहा॥ इति जुहुया,—दियꣳ वा एतद्यज्ञस्य गृह्णाति यदाछैती,—यं भूति,—रस्यां एवैनदधि मुञ्चति, द्रप्सश्चस्कन्द पृथिवीमनु द्यामित्य,—भिमृशति, होत्रास्वेवैनत् प्रतिष्ठापयति, त्रयस्त्रिꣳशद३पो ऽन्वतिपिश्चत्या,—पो हि यज्ञो, यज्ञꣳ वा एतस्य विमथ्नते यस्य पशुꣳ विमथ्नते, व्यस्य यज्ञश्छिद्यते, यदवदानं न विन्देत्तदाज्यस्यावद्येत्, सर्वा वा अन्या देवता यातयाम्नीः, प्रजापतिरेवायातयामा, प्राजापत्यमाज्यं, प्राजापत्या देवाः, प्रजापतिहुतमेवास्य भवति, यदि कामयेत, ये पशुꣳ व्यमाथिषत त आर्तिमाछेयुरिति, कुविदङ्ग यवमन्तो यवं चिदिति, नमउक्तिमत्य ऋचाग्नीध्रे जुहुया,—न्नमउक्तीरेवैषाꣳ वृङ्क्ते, ताजगार्तिमाछेन्त्य,—थैषाष्टापदी, यद्गर्भस्यावद्येदवदानान्यतिरेचयेद्, यन्नावद्येत् प्रोक्षितस्य हविषो नावद्येद्, रसेन जुहोत्य,—व प्रोक्षितस्य हविषो द्यति, नावदानान्यतिरेचयति॥९॥१७-१९

यथा वै शालैवꣳ सꣳवत्सरं,—स्तस्य यथा पक्षसी एवं पक्षसी, यथा मध्यमो वꣳश एवं दिवाकी३र्त्यꣳ, यथा वा इदꣳ शालायाः पक्षसी मध्यमꣳ वꣳशमभिसमागछन्त्येवꣳ वा एतत् सꣳवत्सरस्य पक्षसी, दिवाकी३र्त्यमभिसंतनोति, यथा मध्यमो वꣳश एवं दिवाकी३र्त्यꣳ, यदेष शिथिरः स्यादवशीर्येत, यदेतस्मिन्नहन्येते ग्रहा गृह्णन्ते, ऽह्नो दृढिम्ने ऽशिथिरत्वाय, शुक्राग्रा एतदहर्ग्रहा भवन्ति, त्रैष्टुभो वै शुक्र,—स्त्रैष्टुभमेतदहः प्रत्युत्तब्ध्यै सयत्त्वाय, सौर्यो ग्रहो गृह्यते, सौर्यः पशुरालभ्यते, ऽसा आदित्य एतदह,—स्तꣳ साक्षादृध्नोति, षड् ग्रहा गृह्णन्ते,

[ द्रप्सश्चस्कन्द पृथिवी० । ऋ. १०,१७,११; अथर्व. १८,४,२८; तै. सं. ३,१,८,३; ४,२,८,२; ९,५; तै. आ. ६,६,१ । कुविदङ्ग यवमन्तो० । ऋ. १०,१३१,२; अथर्व. २०,१२५,२; तै. सं. १,८,२१,१;५,२,११,२; तै. ब्रा. २,६,१,३ ]

पशुः सप्तम आलभ्यते, सप्त वै शीर्षन् प्राणा, असा आदित्यः शिरः, शीर्षन् वा एतत् प्राणान् दधाती,—न्द्रो वै वृत्रमहन्,—त्स इमं लोकमभ्यजय,—दमुं तु लोकं नाभ्यजयत्, तं॑ विश्वकर्मा भूत्वाभ्यजयद्, यद्वैश्वकर्मणो ग्रहो गृह्यते, ऽमुष्य लोकस्याभिजित्यै, यन्ति वा एउ३तेऽस्मा-ल्लोकाद्ये वैश्वकर्मणं ग्रहं गृह्णते, पराञ्चो हि यन्तीश्वराः प्रमेतोः, श्वो भूत आदित्यं गृह्णीर,—न्नि-यं॑ वा अदितिरियं प्रतिष्ठा, यदादि३त्यो, ऽस्यामेव प्रतितिष्ठन्ति, तयोरन्यमन्यमा पुरा-धीत् पक्षसो गृह्णीरन्, विश्वमन्येन कर्म कुर्वाणा यन्ती,—यं॑ वा अदिति,—रस्यामन्येन प्रति-तिष्ठन्ति, ता उभौ सहार्के गृह्णीरन्नन्तं गत्वा, ऽन्तमेव गत्वोभयोर्लोकयोः प्रतितिष्ठन्त्या,—दि-त्येनास्मिंल्लोके, वैश्वकर्मणेनामुष्मिन् ॥१०॥ २०

[ २३१० ]

॥ इति खिलकाण्डे अष्टमः प्रपाठकः ॥ ८ ॥

---

अथ नवम प्रपाठकः

## प्रवर्ग्यः ।

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।

वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ १

देवस्य त्वा सवितुः प्रस३वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ अभ्रिरसि नारिरसि ॥

२-३

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ ४

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः॥५

देवी द्यावापृथिवी अनु मेऽमं॑साथा,—मृध्यासमद्य मखस्य शिरः ॥ मखाय त्वा ॥ मखस्य त्वा शीर्ष्णे, देवीर्वम्रीरस्य भुवनस्य प्रथमजा ऋतावरी,—ऋध्यासमद्य मखस्य शिरः ॥ मखाय त्वा ॥ मखस्य त्वा शीर्ष्णे ॥ इयत्यग्र आसीदतो देव्यू,—ध्यासमद्य मखस्य शिरः॥ मखाय त्वा॥

---

[ १ ] तै. आ. ४,२-३ । वा. ५,१४;११,४;३७,२;१,१०,२१,२४;२,११;५,२२,२६;६,१,९,३०;९,३०,३८— ४०;११, ९,२८;१८,३७;२०,३;३७,१;३८,१;११,१०;३४,५६;३३,८९;३७,३—१९;११,६०—६३,५७,६५;३८,१७ । काण्व. ५,१९;१२,४;३७,२;१.१३,३६,४०;२,२२;५,२८,३३;६,१,१०,४३;१०,३९;११,४;१२,९,२८;२०,७; २१,९३;३७,१;३८,१;१२,१०;३३,४४;३७,३-१०; ११,५९,६१-६६;३८,१७ । [ युञ्जते मन उत० । ऋ. ५, ८१,१; तै. सं. १,२,१३,१; ४,१,१,१; तै. आ. ४,२,१ । देवस्य त्वा सवितुः०। अथर्व. १९.५१,२ । उत्तिष्ठ ब्रह्मणस्पते०। ऋ. १,४०,१; तै. आ. ४,२,२ । प्रैतु ब्रह्मणस्पतिः०। ऋ. १,४०,३; सा. ५६; तै. आ. ४,२,१ ]

मखस्य त्वा शीर्ष्णे ॥ इन्द्रस्यौजोऽसि प्रजापते रेतः ॥ ऋध्यासमद्य मखस्य शिरः ॥ मखाय त्वा ॥ मखस्य त्वा शीर्ष्णे ॥ मधु त्वा मधुला कृणोतु ॥ मखस्य शिरोऽसि ॥ यज्ञस्य पदे स्थः ॥ गायत्रोऽसि ॥ त्रैष्टुभोऽसि ॥ जागतोऽसि ॥ मखस्य रास्नासि ॥ सूर्यस्य रसा आश्रयस्व ॥ वृष्णो अश्वस्य निष्पदासि, वृष्णस्त्वाश्वस्य निष्पदा धूपयामसि ॥ वरुणस्त्वा धृतव्रतो धूपयतु मित्रावरुणौ ध्रुवेण धर्मणा ॥ अदितिष्ट्वा देवी विश्वदेव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत्खनत्ववट, देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतु महावीरान् ॥ ६-२८

अर्चिषे त्वा शोचिषे त्वा ज्योतिषे त्वा हरसे त्वा ।
अभीमान्महिना दिवो मित्रो बभूव सप्रथाः ॥ २९

उत श्रवसा पृथिवीम् ॥ ३०

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ३१

देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या ॥ ३२

ऋजवे त्वा, साधवे त्वा, सुक्षित्यै त्वा ॥ इदमहममुमामुष्यायणं तेजसा ब्रह्मवर्चसेन पर्यूहामि ॥ इदमहममुमामुष्यायणं विशा क्षत्रेण पर्यूहामि ॥ इदमहममुमामुष्यायणं प्रजया पशुभिः पर्यूहामि ॥ छृणत्तु त्वा वाक्, छृणत्तु त्वोर्क्, छृणत्तु त्वा हविः ॥ देवपुरश्चरस, ऋध्यासं त्वा ॥ १ ॥ ३३-३८

नमो वाचे, नमो वाचस्पतये, या चोदिता या च नोदिता तस्यै वाचे नमो, नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मन्त्रपतिभ्यो, मा मामृषयो मन्त्रकृतो मन्त्रविदः प्रादु,—र्दैवीं वाचमुद्यासं जुष्टां देवेभ्यः स्वधावरीं पितृभ्योऽनुमतान्मनुष्येभ्य,—स्तन्मा देवा अवन्तु शोभायै, पितरोऽनुमदन्तु ॥ गायत्रीं छन्दः प्रपद्ये, त्रिष्टुभं छन्दः प्रपद्ये, जगतीं छन्दः प्रपद्ये, ऽनुष्टुभं छन्दः प्रपद्ये, पङ्क्तिं छन्दः प्रपद्ये, छन्दांसि छन्दः प्रपद्ये ॥ तानि नोऽवन्तु, तानि नः पालयन्तु, तानि स ऋच्छतु यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो, होतर्घर्ममभिष्टु,—ह्यग्नीद्रौहिणौ पुरोडाशावधिश्रय, प्रतिप्रस्थातर्विहर, प्रस्तोतः सामानि गाय ॥ ३९-४२

---

[ मित्रस्य चर्षणीधृतः० । ऋ. ३,५९,६; तै. सं. ३,४,११,५;४,१,६,३; तै. आ. ४,३,२ ]

[ २ ] तै. आ. ४,१-४ । वा. ६,२२;२०,१९;३५,१२;३६,२३;३८,२३ । काण्व. ६,३१;२२,४;३५,४५;३६,२३;३८,२३।

[ यो अस्मान् (ऽस्मान्) द्वेष्टि० । अथर्व. १०,५,१५—२१,२५—३५;१६,७,५ ]

❀

यजुर्युक्तꣳ सामभिराक्तखं त्वा विश्वाभिर्धीभिः संभृतं दक्षिणाभिः ।

प्रततं पारयिष्णुꣳ स्तुभो वहन्तु सुमनस्यमानाः ॥ ४३

भूर्भुवः स्व,—र्देवस्य सवितुः प्रसवे, बृहस्पतिप्रसूता ॥ ४४

ओमिन्द्रवन्तः प्रचरत ॥ २ ॥ ४५

यमाय त्वा ॥ मखाय त्वा ॥ सूर्यस्य हरसे त्वा ॥ देवस्त्वा सविता मध्वानक्तु ॥ पृथिव्याः संपृचस्पाहि ॥ अर्चिषे त्वा, शोचिषे त्वा, ज्योतिषे त्वा, तपसे त्वा ॥ अर्चिरसि, शोचिरसि, ज्योतिरसि, तपोऽसि, सूर्यस्य तपस्तप ॥ ४६–५२

संꣳसीदस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मेध्य सृज प्रशस्त दर्शतम् ॥ ५३

अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तो नाग्निना तपन्तः ।

पितुर्न पुत्र उपसि प्रेष्ठा आ घर्मो अग्निरमृतो न सादि ॥ ५४

अनाधृष्टासि पुरस्ता,—दग्नेराधिपत्या, आयुर्मे दाः, पुत्रवती दक्षिणत, इन्द्रस्याधिपत्ये, प्रजां मे दाः॥ सुषदा पश्चात्, सवितुराधिपत्ये, चक्षुर्मे दाः ॥ आश्रुतिरुत्तरतो, मित्रावरुणयोराधिपत्ये, श्रोत्रं मे दाः ॥ विधृतिरुपरिष्टाद्, बृहस्पतेराधिपत्ये, वाचं मे दाः ॥ ब्रह्म मे दाः, क्षत्रं मे दाः, पयो मे दाः ॥ मनोरश्वासि भूरिपुत्रा सूपसदना, विश्वाभ्यो मा दुꣳष्ट्राभ्यस्पाहि ॥ ३ ॥ ५५–६०

चिदसि ॥ स्वाहा मरुद्भ्यः परिश्रयस्व ॥ मासि ॥ प्रमासि ॥ प्रतिमासि ॥ विमासि ॥ संमासि ॥ उन्मासि ॥ अन्तरिक्षस्यान्तर्धिरसि ॥ दिवः संपृचस्पाहि ॥ ६१–७०

अर्हन् बिभर्षि सायकानि धन्वा । अर्हन्निष्कꣳ यजतꣳ विश्वरूपम् ।

अर्हन्निदं दयसे विश्वमा धन्वा । ओजीयो रुद्रस्तदस्ति ॥ ७१

गायत्रोऽसि ॥ त्रैष्टुभोऽसि ॥ जागतमसि ॥ मधु । मधु । मधु ॥ रुचितो घर्मः ॥४॥ ७२–७६

---

[ ३ ] तै. आ. ४,५,१—५। वा. ७,४७;३—१२;३८,९,१७;११,३७ । काण्व. ९,१३;३७,३–१३;३८,९.१७;१२,३७। [ सꣳसीदस्व महं ( महाँ ) असि० । ऋ. १,३६,९; तै. सं. ४,१,३,३; तै. आ. ४,५.२, । अञ्जन्ति यं प्रथयन्तो० । ऋ. ५,४३,७; तै. आ. ४,५,२ । आयुर्मे दाः । अथर्व. २,१७,४ । चक्षुर्मे दाः । अथर्व. २,१७, ६ । श्रोत्रं मे दाः । अथर्व. २,१७,५ ]

[ ४ ] तै. आ. ४,५,५—७ । वा. ४,१९;१२,५३;३७,१३ । काण्व. ४,२५;१३,५४;३७,१३ । [ अर्हन् बिभर्षि सायकानि० । ऋ. २,३३,१०; तै. आ. ४,५,७ ]

दश प्राचीर्दश भासि दक्षिणा, दश प्रतीचीर्दश भास्युदीची,—र्दशोर्ध्वा भासि सुमनस्यमानः ॥ सा नः प्रजां पशून् पाह्यरणीयमानः ॥ अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु, स मा रुचितो रोचय ॥ पितरस्त्वा यमराजानः पितृभिर्दक्षिणतो रोचयन्तु, स मा रुचितो रोचय ॥ सविता त्वादित्यैः पश्चाद्रोचयतु, स मा रुचितो रोचय ॥ मित्रावरुणौ त्वोत्तरतो मरुद्भी रोचयेताꣳ, स मा रुचितो रोचय ॥ बृहस्पतिष्ट्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु, स मा रुचितो रोचय ॥ देव घर्म रुचितस्त्वं देवेष्वा, सुरुचितं मां देवमनुष्येषु कुरु, रुचं मयि धेहि, रुचिरसि, रुचोऽसि, स यथा त्वꣳ रुच्या रोचस एवमहꣳ रुच्या रोचिषीय, तवेव मे रोचमानस्य रोचो भूयासु,—र्भ्राजिरसि, भ्राजोऽसि, स यथा त्वं भ्राज्या भ्राजस एवमहं भ्राज्या भ्राजिषीय, तवेव मे भ्राजमानस्य भ्राजो भूयासु,—र्भ्राजिरसि, भ्राजोऽसि, स यथा त्वं भ्राज्या भ्राजस एवमहं भ्राज्या भ्राजिषीय, तवेव मे भ्राजमानस्य भ्राजो भूयासुः ॥ ५ ॥ ७७–८४

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ॥ ८५

गर्भो देवानां जनिता मतीनां मतिः कवीनां पतिः प्रजानां धर्ता क्षत्रस्य ॥ सं देवो देवेन सवित्रा यजत्र सꣳ सूर्येण रोचते ॥ हृदे त्वा, मनसे त्वा, दिवे त्वा, सूर्याय त्वा ॥ ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥ धर्ता दिवो रजसो विभाति धर्ता, पृथिव्या धर्तोरोरन्तरिक्षस्य धर्ता ॥ देवो देवानाममर्त्यस्तपोजा अप्सु प्रावीः ॥ विश्वासां भुवां पते विश्वस्य भुवनस्पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते विश्वस्य ब्रह्मणस्पते ॥ देवश्रुत्त्वं देव घर्म देवान् पाहि तपोजान् ॥ वाजमस्मिन्निधेहि देवायुवम्॥ मधु माध्वीभ्यां, मधु माधूचीभ्यां, मधुमान् देववीतये ॥ सम्ग्निरग्निनागत, सं देवो देवेन सवित्रा यजत्र, सꣳ सूर्येणारोचिष्ट स्वाहा ॥ सम्ग्निस्तपसागत, सं देवो देवेन सवित्रा यजत्र, सꣳ सूर्येणायुक्ता,—ऽऽयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि, पितासि पिता नो बोधिषीमहि त्वा, नमस्ते अस्तु, मा मा हिꣳसीः ॥ त्वष्टृमन्तस्त्वा सपेम ॥ ६ ॥
८६–९८

[ ५ ] तै. आ. ४,६ । वा. १६,६४—६६ । काण्व. १७,६४ ।
[ ६ ] तै.आ. ४,७,१—५ । वा. ३७,१४—२०;३,६३;१८,५३;१०,१;३८,१६ । काण्व. ३७,१४—१९;२०;२३;२१,९३;३८,१६ । [ अपश्यं गोपामनिपद्यमानमा० । ऋ. १,१६४,३१; १०,१७७,३; अथर्व. ९,१०,११; ऐ. आ. २,६; तै. आ. ४,७,१; नि. १४,३ ]

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ अदित्या रास्नासि ॥ इडा एह्य,—सावेह्य,—दिता एह्य,—सावेहि, सरस्वत्येह्यु,—सावेहि ॥ ९९-१०१

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ॥ १०२

अदित्या उष्णीषमसि ॥ पूषा त्वोपावसीदतु ॥ वायुरस्य,—श्विभ्यां प्रधापय ॥ घर्माय शंक्ष्व॥ बृहस्पतिष्ट्वोपसीदतु ॥ दानवः स्थ ॥ पेरवः स्थ ॥ अश्विभ्यां पिन्वस्व ॥ सरस्वत्यै पिन्वस्वे,—न्द्राय पिन्वस्वे,—न्द्राय पिन्वस्व ॥ उप मेहि सहोर्जो भागेन॥ मधुहविरसि, स्वाहा त्वा वाताय सूर्यस्य रश्मये सिता वृष्टिसनये संजुहोमि स्वाहा ॥ इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत्रा वेट् ॥ गायत्रमसि ॥ त्रैष्टुभमसि ॥ जागतासि ॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामि ॥ अन्तरिक्षेणोपयच्छामि ॥ दिविस्पृङ् मा मा हिंसीः ॥ अन्तरिक्षस्पृङ् मा मा हिंसीः ॥ पृथिवीस्पृङ् मा मा हिंसीः ॥ तेजोऽसि, तेजोऽनुप्रेहि ॥ ७ ॥ १०३-१२३

सलिलाय त्वा वाताय स्वाहा, ऽर्णवाय त्वा वाताय स्वाहा, सिन्धवे त्वा वाताय स्वाहा, समुद्राय त्वा वाताय स्वाहा, शिमिद्वते त्वा वाताय स्वाहा, कुमुद्वते त्वा वाताय स्वाहा, ऽवस्यवे त्वा वाताय स्वाहा, दुवस्यवे त्वा वाताय स्वाहा, ऽनाधृष्याय त्वा वाताय स्वाहा, ऽप्रतिधृष्याय त्वा वाताय स्वाहा, ऽग्नये त्वा वसुमते स्वाहा, सोमाय त्वा रुद्रवते स्वाहे,—न्द्राय त्वा मरुत्वते स्वाहा, यमाय त्वा पितृमतेऽङ्गिरस्वते स्वाहा ॥ सवित्रे त्वर्भुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते स्वाहा ॥ अहः केतुना जुषतां, स्वर्ज्योतिर्जुषतां स्वाहा ॥ रात्रिः केतुना जुषतां, स्वर्ज्योतिर्जुषतां स्वाहा ॥ ८ ॥ १२४-१२७

दिवि धा इमं यज्ञ,—मिमं यज्ञं दिवि धाः, स्वस्ति घर्माय, स्वस्ति घर्मपित्रे॥ विश्वा आशा दक्षिणसद्विश्वान् देवानयाडिह ॥ ओं श्रावय॥ अस्तु श्रौषट्॥ घर्मस्य यज ॥ अश्विना घर्मं पिबतं हार्द्वानु,—मनु मां द्यावापृथिवी अनु मेऽमंसाता,—मिहैव रातयः सन्ति सं यजुर्भिः, स्वाहे-न्द्राय, स्वाहेन्द्राय वेट् ॥ स्वाहाकृतस्य घर्मस्य मध्वः पिबतमश्विना, घर्ममपातमश्विना, वह-द्दिव्याभिरूतिभिः स्वं पेद्रवं यथा वेट् ॥ इषे पिपीहि ॥ ऊर्जे पिपीहि ॥ अस्मै ब्रह्मणे पिपीहि ॥ अस्मै क्षत्राय पिपीहि॥ इष ऊर्जे पिपीहि ॥ सुभूताय पिपीहि ॥ ब्रह्मवर्चसाय पिपीहि ॥ अस्यै विशे

[ ७ ] तै. आ. ४,८ । वा. ३८,१—६ । काण्व. ३८,१—६ । [ देवस्य त्वा सवितुः० । अथर्व. १९.५१,२ ]

[ ८ ] तै. आ. ४,९ । वा. ३७.२१;३८.७—९,१६ । काण्व. ३७,२०;३८,७—९,१६ ।

[ ९ ] तै. आ. ४,९,३; ४,१० । वा. ३,६३;१८,५३,३७,२०;३८,८—१६;९,२०;१८,२८ । काण्व. ३८,८—१६;१०; २७;१९,४०;२०,२३;३७,१९ ।

मह्यं ज्यैष्ठ्याय पिपीहि घर्मोऽसि, घर्ममेन्य,—स्मे ब्रह्माणि धारय ॥ क्षत्रं धारय ॥ विशं धारय ॥ पूष्णे शरसि स्वाहा ॥ ग्रावभ्यः स्वाहा ॥ प्रतिरवेभ्यः स्वाहा ॥ द्यावापृथिवीभ्याꣳ स्वाहा, पितृभ्यो घर्मपेभ्यः स्वाहा ॥ रुद्राय रुद्रहोत्रे स्वाहा ॥ हुतꣳ हविर्मधुहविरसी,—न्द्रतमेऽग्नौ स्वाहा ॥ अश्याम ते देव घर्म ऋभूमतो विभूमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः पितृमतोऽङ्गिरस्वत, उशीमहि त्वा, नमस्ते अस्तु, मा मा हिꣳसीः ॥ सꣳसाद्यमानायानुब्रूहि ॥ अह्ने स्वाहा ॥ रात्र्यै स्वाहा ॥ ९ ॥ १२८–१५५

पशूनां ज्योतिरसि विभूतं, देवत्रा ज्योतिर्भा असि ॥ वनस्पतीनामपामोषधीनाꣳ रसो, वाजिनं त्वा वाजिन्यवनयाम्यू,—र्ध्वं मनः स्वर्ग्यम् ॥ पयोऽसि, पयस्वी भूयासम् ॥ घर्म या ते दिवि शुग्या दिवि या बृहति या स्तनयित्नौ या जागते छन्दसीयं ते तामवयजे, तस्यै ते स्वाहा ॥ घर्म या तेऽन्तरिक्षे शुग्यान्तरिक्षे या वाते या वामदेव्ये या त्रैष्टुभे छन्दसीयं ते तामवयजे, तस्यै ते स्वाहा ॥ घर्म या ते पृथिव्याꣳ शुग्या पृथिव्याꣳ याग्नौ या रथन्तरे या गायत्रे छन्दसीयं ते तामवयजे, तस्यै ते स्वाहा ॥ प्रस्तोतः साम गाय ॥ अन्वद्य न, इत्येषा, ब्रह्मणस्त्वा परस्पाय क्षत्रस्य तन्वस्पाहि ॥ विशस्त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे ॥ प्रस्तोतः साम गाय ॥ अन्वद्य न, इत्येषा, प्राणस्य त्वा परस्पाय चक्षुषस्तन्वस्पाहि ॥ श्रोत्रस्य त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे ॥ प्रस्तोतः साम गाय ॥ अन्वद्य न, इत्येषा, दिवस्त्वा परस्पाय ॥ अन्तरिक्षस्य तन्वस्पाहि ॥ पृथिव्यास्त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे, चतुः स्रक्तिर्नाभिर्ऋतस्य सदो घर्मो विश्वायुः शर्म सप्रथाः ॥ अप द्वेषो अप ह्वरो अन्यव्रतस्य सश्चिम, वल्गुरसि शंयोर्धायाः ॥ शिशुर्जनधायाः ॥ शं च वक्षि ॥ परि च वक्षि ॥ घर्मैतत्तेऽन्नमेतत् पुरीषम् ॥ तेन वर्धस्व चाप्यायस्व, वर्धिषीमहि च वयमा च प्यायिषीमहि च, न्यसौ यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १० ॥ १५६–१७७

रन्तिर्नामासि दिव्यो गन्धर्व,—स्तस्य ते पद्वद्धविर्धान,—मग्निरध्यक्षो, रुद्रो अधिपति,—र्विश्वावसुꣳ सोम गन्धर्वमापो ददृशुषीस्तदृतेनान्वायꣳ,—स्तदिन्द्रस्य वै रुद्रो रारहाण आसां परि

[ १० ] तै. आ. ४,११ । वा. ३८,१८—२१,२३;६,२२;२०,१९;३५,१२;३६,२३ । काण्व. ३८,१८—२१,२३;६,३१;२२,४;३५,४५;३६,२३ ।

[ ११ ] तै. आ. ४,११,५ । वा. १८,५३;१२,९—१०,४०—४१;७,४१—४२;८,४१;३३,३१; १३,४६;२०,१२,३३। काण्व. २०,२३; १३,१०—११,४१—४२; ८,२३—२४;९,६—७;३२,३१;१४,४८;२१,१०५;२२,८ ।

[ विश्वावसुꣳ सोम गन्धर्वम्० । ऋ. १०,१३९,४; तै. आ. ४,११,७ ]

सूर्यस्य परिधीꣳरपोर्णु, वीरेभिरधि तन्नो गृणानो रजसो विमानो यद्वा घा सत्यमुत यन्न विद्म ॥
धिय इन्वानो धिय इन्नो अव्यात् ॥ सस्निमविन्दुच्चरणे नदीनामपावृणोद्दुरो अस्मद्रथानाम् ॥ प्रासां
गन्धर्वो अमृतानि वोचत् ॥ इन्दुं दक्षं परिददादहीनाम् ॥ वार्षाहरꣳ साम गाय ॥ चिदसि समुद्र-
योनिः ॥ १७८-१८४

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः ।
महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिꣳसीः ॥ १८५

सोमपीथानु मेहि ॥ इष्टाहोत्रीयꣳ साम गाय ॥ पुनरूर्जा सह रय्यै,—त्येके, श्यैतꣳ साम
गाय ॥ उदु त्यं चित्रं,—मित्येके ॥ वामदेव्यꣳ साम गाय ॥ इममु षु त्वमस्माकꣳ सनिं गायत्रं
नव्याꣳसम् ॥ अग्निर्देवेषु प्र वोच ॥ भूः स्वाहा ॥ ११ ॥ १८६-१९३

मा नो घर्म व्यथितो विव्यधीन्मा न आयुः परमवरं मानुदोनैः ।
मो ष्वत्वमस्मान्तराधान्मा रुद्रियासो अभि गुल्वधानः ॥ १९४

मा नः क्रतुभिर्हीडिषेभिरस्मद्द्विषः सुनीथो मा पुरा दैः ।
मा नो अग्निं निर्ऋतिर्मो न आष्टान्मा नो द्यावापृथिवी हीडिषेथाम् ॥ १९५

उता नो मित्रावरुणा इहागतं मन्मा दीध्याना उता नः सखाया ।
आदित्यानां प्रसृतिर्हेतिरुग्रा शता वाष्टाद्धविषा वार्णैः ॥ १९६

विधुं दद्राणꣳ समने बहूनाꣳ युवानꣳ सन्तं पलितो जगाद ।
देवस्य पश्य काव्यं महित्वाद्यामममार सह्यः समानः ॥ १९७

जरि चेतीदभिशिषः पुरा चक्रभ्या आतृद ।
संधाता संधिर्मघवा पुरुवसुर्निष्कर्ता विह्रुतं पुनः ॥ १९८

---

[वीरेभिरधि (विश्वावसुरभि) तन्नो०। ऋ. १०,१३९,५; तै. आ..४,११,७। सस्निमविन्दच्चरणे०। ऋ. १०,१३९,६; तै. आ. ४,११,८; नि. ५,१। पुनरूर्जा निवर्तस्व०। सा. १८३२। सह रय्या निवर्तस्वाग्ने०। सा. १८३३। उदु त्यं जातवेदसं०। ऋ. १,५०,१; सा. ३१; अथर्व. १३,२,१६;२०,४७,१३; तै. सं. १,२.८,२; ४,४३,१; नि. १२,१५। चित्रं देवानां०। ऋ. १,११५,१; ऐ. आ. ३,९; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं. १,४,४३,१;२,४,१४,४; तै. ब्रा. २,८,७,३; तै. आ. १,७,६;२,१३,१; नि. १२,१६ ]

[ १२ ] तै. आ. ४,२०। वा. ११,४१—४१;१२,९—१०,४०—४१;२०,१२,३३;२२,३२। काण्व. १२,४१—४२;१३,१०-११,४१-४२;२१,१०५;२२,८;२४,४५। [ विधुं दद्राणꣳ समने०। ऋ. १०,५५,५; सा. ३२५,१७८२; अथर्व. ९,१०,९; तै. आ. ४,२०,१; नि. १४,१८। जरि चेतीदभि० ( य ऋते चिद० )। ऋ. ८,१,१२; सा. २४४; अथर्व. १४,२,४७; तै. आ. ४,२०,१; कात्या. श्रौ. सू. २५,५,३०; ताण्ड्य. ब्रा. ९,१०,१; ]

उ॑दु तिष्ठ स्वध्वर॑, ऊ॒र्ध्वं ऊ॒ षु ण॑, इत्ये॒के॑ ॥ पु॑न॒रूर्जा॑ स॒ह र॒य्ये॑,—त्ये॒के॑ ॥ उ॑दु॒ त्यं चि॒त्र॑,
—मित्ये॒के॑ ॥ भूः स्वाहा॑ ॥ भुवः॒ स्वाहा॑ ॥ ३स्वः॒ स्वाहा॑ ॥ भूर्भुवः॒ ३स्वः॒ स्वाहा॑ ॥ १२ ॥
१९९-२०५

भूर्भुवः॒ ३स्व॒,—मयि॒ तदि॒न्द्रियं॑ वी॒३र्यं॑, मयि॒ रायो॒, मयि॒ रक्षो॒, मयि॒ दक्षो॒, मयि॒
क्रतु॒,—मयि॒ धेहि सु॒वीर्य॑म् ॥ २०६

ति॒सृभि॑र्घ॒र्मो विभा॑त्याकू॑त्या मन॑सा सह॒, वि॒राजा॒ ज्योति॑षा सह॒, तप॑सा ब्रह्म॑णा सह॒,
तस्य॒ दोहमशीमहि॒, तस्य॒ भक्षमशीमहि॒, तस्य॒ ता उप॑हूता उप॑हूतस्य भक्षयामि ॥ १३ ॥
२०७

उदस्य॒ शुष्मा॑द्भानोर्नार्व्या॑ बि॒भर्ति॑ भारं पृथि॒वी न भूमः॑ ॥ २०८
प्र शु॒क्रैतु॒ दे॒वी म॑नी॒षा अ॒स्मत्सु॑तष्टो॒ रथो॒ न वा॒जी॑ ॥ १४ ॥ २०९

चि॒दसि ॥ बृह॒स्पति॑ष्ट्वा सादयतु पृथि॒व्याः पृ॒ष्ठे, तेन॒ ऋषि॑णा तेन॒ विधि॑ना तेन॒ छन्द॑सा तेन॒
ब्रह्म॑णा तया॑ दे॒वत॑याङ्गिर॒स्वद् ध्रु॒वा सी॑द ॥ १५ ॥ २१०--२११

प्र॒जाप॑तिष्ट्वा सादयतु पृथि॒व्याः पृ॒ष्ठे तेन॒ ऋषि॑णा तेन॒ विधि॑ना तेन॒ छन्द॑सा तेन॒ ब्रह्म॑णा तया॑
दे॒वत॑याङ्गिर॒स्वद् ध्रु॒वा सी॑द ॥ १६ ॥ २१२

उ॒ग्रश्च॑ भी॒मश्च॑ ध्वान्त॑श्च धु॒नव॑ा॑श्च स॒ह॒सावा॑॑श्च स॒हीय॑सः॥ विक्षि॑पः॥ वि॒ज्यं॑ वि॒ज्ये॑ विक्षि॑पेत् ।
॥ १७ ॥ २१३--२१५

स॒॑वत्स॒रो॑ऽसि, परिवत्स॒रो॑ऽसी,—दावत्स॒रो॑ऽस्यु,—द्वत्स॒रो॑ऽसि, वत्स॒रो॑ऽसि ॥ तस्य॒ ते

---

[ उदु तिष्ठ स्वध्वर०। ऋ. ८,२३,५; तै. सं. ४,१,४,१। ऊर्ध्व ऊ षु ण०। ऋ. १,३६,१३; सा. ५७; त. सं. ४,१,४,२; तै. ब्रा. ३,६,१,२। पुनरूर्जा निवर्तस्व०। सा. १८३२। सह रय्या निवर्तस्वाग्ने०। सा. १८३३ ]

[ १३ ] तै. आ. ४,२१। वा. ८,१२;३८,२७—२८। काण्व. ८,१३;३८,२६-२७।

[ १४ ] तै. आ. ४,१७। [ उदस्य शुष्माद्भानोः ( ०नुः )। ऋ. ७,३४,७। प्र शुक्रैतु देवी मनीषा०।७, ३४,१ ]

[ १५ ] वा. ४,१९;१२,५३;१४,६,१२,१४—१६,२७;१५,५७ –५८,६४;२७,४५। काण्व. ४,२५;१३,५४;१५,५, २५—१६,३१;१६,७९.८४;२९,५०।

[ १६ ] वा. १५,६४। काण्व. १६,८४।

[ १७ ] तै. आ. ४,२४-२५। वा. ३९,७। काण्व. ३९,६।

[ १८ ] तै. आ.४,१९। मा. श्रौ. १,६,४। वा. २७,४५। काण्व. २९,४९। [ स॑वत्सरोऽसि० । अथर्व. ६, ५५,३ ]

वसन्तः शिरो, ग्रीष्मो दक्षिणं पक्षꣳ, वर्षा उत्तरꣳ, शरत्पुच्छम् ॥ हेमन्तो मध्यꣳ, शिशिरं प्रतिष्ठानꣳ, तस्य ते मासाश्चार्धमासाश्च ऋतवः परिवत्सराः ॥ अहोरात्रे ते कल्पेता,—मेहि, प्रेहि, वीहि, समिह्युदीची ॥ १८ ॥ २१६--२१९

असृङ्मुखो रुधिरेणाभ्यक्तो यमस्य दूतश्च वाग्विधावति ॥ गृध्रः सुपर्णः कुणपं निषेवति, यमस्य दूतः प्रहित एष एति, न्यसौ यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १९ ॥ २२०--२२१

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतं, जीवेम शरदः शतं, प्रब्रवाम शरदः शतꣳ, शृणुयाम शरदः शतम् ॥ २० ॥ २२२--२२३

निधायो वा३ निधायो वा३ निधायो वा३ ओं वा३ ओं वा३ ओं वा३ ए ऐ ओं स्वर्णज्योतिः ॥ २१ ॥ २२४

बृहद्भा३ बृहद्भा३ बृहद्भा३ बृहद्भा इम् बृहद्भा इम् बृहद्भा इम् ॥ इम् इम् इम् स्वर्णज्योतिः ॥ २२ ॥ २२५--२२६

पृथिवी समित्, तामग्निः समिन्द्धे, साग्निꣳ समिन्द्धे, तामहꣳ समिन्धे, सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धताꣳ स्वाहा ॥ अन्तरिक्षꣳ समित्, ताꣳ वायुः समिन्द्धे, सा वायुꣳ समिन्द्धे, तामहꣳ समिन्धे, सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धताꣳ स्वाहा ॥ द्यौः समित्, तामादित्यः समिन्द्धे, सादित्यꣳ समिन्द्धे, तामहꣳ समिन्धे, सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धताꣳ स्वाहा ॥ दिशः समित्, तां प्रजापतिः समिन्द्धे, सा प्रजापतिꣳ समिन्द्धे, तामहꣳ समिन्धे, सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धताꣳ स्वाहा ॥ २३ ॥ २२७--२३०

अग्ने व्रतपते व्रतं चरिष्यामि, तत्ते प्रब्रवीमि, तन्मे गोपाय, तच्छकेयं, तेन शकेयं, तेन राध्यासम् ॥ वायो व्रतपते व्रतं चरिष्यामि, तत्ते प्रब्रवीमि, तन्मे गोपाय, तच्छकेयं,

---

[ १९ ] तै. आ. ४,२९ । वा. १,२५—२६;२,१५,२५;६,२२;२०,१९;३५,१२;३६,२३;३८,२३ । काण्व. १,४२-४३; २,३०,४६;६,३१;२२,४;३५,४५;३६,२३;३८,२३ । [ यो अस्मान् ( ऽस्मान् ) द्वेष्टि यं च वयं द्विष्मः । अथर्व. ३,२७,१—६;१०,५,१६—२१,२५—३५;१६,७,५ ]

[ २० ] वा. ३६,२४ । काण्व. ३६,२४ । [ तच्चक्षुर्देवहितं० । ऋ. ७,६६,१६;अथर्व. १९,६७,१—२; तै. आ. ४, ४२,५ । पश्येम शरदः...शतात् । ऋ. ७,६६,१६ ( उत्तरार्धः ); अथर्व. १९,६७,१—८ ]

[ २१ ] तै. आ. ४,४० ।

[ २३ तै. आ. ४,४१,१—३ ।

[ २४ ] तै. आ. ४,४१,३—४ । वा. १,५;२,२८ । काण्व. १,८;२,५३ ।

तेन शकेयं, तेन राध्यासम् ॥ सूर्य व्रतपते व्रतं चरिष्यामि, तत्ते प्रब्रवीमि, तन्मे गोपाय,
तच्च् शकेयं, तेन शकेयं, तेन राध्यासम् ॥ व्रतानां व्रतपते व्रतं चरिष्यामि, तत्ते प्रब्रवीमि,
तन्मे गोपाय, तच्च् शकेयं, तेन शकेयं, तेन राध्यासम् ॥ २४ ॥ २३१--२३४

पृथिवी समित्, तामग्निः समिन्धिष्ट, साग्निं समिन्धिष्ट, तामहं समिन्धिष्ट, सा मा
समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धिषतां स्वाहा ॥ अन्तरिक्षं समित्, तां वायुः
समिन्धिष्ट, सा वायुं समिन्धिष्ट, तामहं समिन्धिष्ट, सा मा समिद्धा सुसमिद्धा तेजसा
ब्रह्मवर्चसेन समिन्धिषतां स्वाहा ॥ द्यौः समित्, तामादित्यः समिन्धिष्ट, सादित्यं समिन्धिष्ट,
तामहं समिन्धिष्ट, सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धिषतां स्वाहा ॥
दिशः समित्, तां प्रजापतिः समिन्धिष्ट, सा प्रजापतिं समिन्धिष्ट, तामहं समिन्धिष्ट,
सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धिषतां स्वाहा ॥ २५ ॥ २३५--२३८

अग्ने व्रतपते व्रतमचारिषं, तत्ते प्राब्रोचं, तदशकं, तेनाशकं, तेनारात्स्यम् ॥ वायो व्रत-
पते व्रतमचारिषं, तत्ते प्राब्रोचं, तदशकं, तेनाशकं, तेनारात्स्यम् ॥ सूर्य व्रतपते व्रतमचारिषं,
तत्ते प्राब्रोचं, तदशकं, तेनाशकं, तेनारात्स्यम् ॥ व्रतानां व्रतपते व्रतमचारिषं, तत्ते प्राब्रोचं,
तदशकं, तेनाशकं, तेनारात्स्यम् ॥ २६ ॥ २३९--२४२

शं नो वातोऽभिवातु शं नस्तपतु सूर्यः ॥ २४३

अहानि शं भवन्तु नः शं रात्री प्रतिधीयताम् ॥ २४४

पृथिवी शान्तिः, सौषधीभिः शान्ति,—रन्तरिक्षं शान्ति,—स्तद्वायुना शान्ति,—द्यौः शान्तिः,
सा वृष्ट्या शान्ति,—रापः शान्ति,—रोषधयः शान्ति,—र्वनस्पतयः शान्ति,—र्विश्वे देवाः शान्ति,
—र्ब्रह्म शान्ति,—र्ब्राह्मणाः शान्तिः, शान्तिः सर्वशान्ति,—स्तयाहं शान्त्या सर्वशान्त्या मह्यं
द्विपदे च चतुष्पदे च शान्तिं करोमि, शान्तिर्बभूव, शान्तिरसि, शान्तिर्नो अस्त्व,—भयं
नो अस्तु ॥ २४५

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ २४६

---

[ २५ ] तै. आ. ४,४१,४ । वा. १,५;२,२८ । काण्व. १,८;२,५३ ।

[ २६ ] तै. आ. ४,४१,६ ।

[ २७ ] तै. आ. ४,४२ । वा. ३६,४-६,१०-११,१४-१८;११,५०-५२;२७,१०,३९-४१;२०,२१,५०;२५,१९;३५, १४;३८,२४ । काण्व. ३६,४-६,१०-११,१४-१८;१२,५१-५३;२९,१०,४४-४६;२२,६,३५;२७,२३;३५,३७; ३८,२४ । [शं नो वातोऽभिवातु० (०वातु ) । अथर्व. ७,६९,१ । अहानि शं भवन्तु० । अथर्व. ७,६९,१ । पृथिवी शान्तिः (द्यौः शान्तिः०) अथर्व. १९,९,१,१४। आपो हि ष्ठा० । ऋ. १०,९,१; सा. १८३७; अथर्व. १,५,१; तै. सं. ४,१,५,१;५,६,१,४;७,४,१९,४; तै. आ. ४,४२,४;१०,१.१०; नि. ९.२७ ]

*

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २४७

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ २४८

ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो यातामभेषजं ता नः कृण्वन्तु भेषजम् ॥ २४९

कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ २५०

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥ २५१

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ २५२

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ २५३

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ २५४

यथादित्या अꣳशुमाप्याययन्ति यथाक्षितिमक्षितयः पिबन्ति ।
एवास्मानिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ २५५

उद्वयं तमसस्परि ज्योतिः पश्यन्ता उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २५६

मित्रस्य वश्चक्षुषा समीक्षामहे ॥ मित्रस्य वश्चक्षुषा समीक्षध्वम् ॥ २५७--२५८

ब्रह्मण उपस्तरणमसि, ब्रह्मणे त्वोपस्तृणामि ॥ २७ ॥ २५९

[ २५६१ ]

॥ इति खिलकाण्डे नवमः प्रपाठकः ॥ ९ ॥

[ यो वः शिवतमो० । ऋ. १०,९,२; सा. १८३८; अथर्व. १,५,२; तै. सं. ४,१,५,१;७,४,१९,४; तै. आ. ४, ४२,४;५,६.१,४;१०,१,११ । तस्मा अरं गमाम वो० । ऋ. १०,९,३; सा. १८३९; अथर्व. १,५,३; तै. सं. ४,१,५,१;५,६,१,४;७,४,१९,४; तै. आ. ४,४२,४;१०,१,१२ । ईशाना वार्याणां० । ऋ. १०,९,५; अथर्व. १, ५,४; तै. ब्रा. २,५,८,५, तै. आ. ४,४२,४, । कया नश्चित्र आभुवदूती० । ऋ. ४,३१,१; सा. १६९,६८२; अथर्व. २०,१२४,१; तै. सं. ४,२,११,२; तै. आ. ४,४२,२ । कस्त्वा सत्यो मदानां० । ऋ. ४,३१,२; सा. ६८३; अथर्व. २०,१२४,२; तै. आ. ४,४२,३ । अभी षु णः सखीनां० । ऋ. ४,३१,३; सा. ६८४; अथर्व. २०,१२४,३; तै. आ. ४,४२,३। त्रातारमिन्द्रमवितारमिन्द्रꣳ०। ऋ. ६,४७,११; सा. ३३३; अथर्व. ७.८६,१; तै. सं. १,६,१२,५ । स्वस्ति न इन्द्रो वृद्धश्रवाः०। ऋ. १,८९,६; सा. १८७५; तै. आ. १,१,१;२१,३;१०, १,९ । उद्वयं तमसस्परि स्वः० । ऋ. १,५०,१०; अथर्व.. ७,५३,७; तै. सं. ४,१,७,४; तै. ब्रा. २,४,४,९; ६,६,४; तै. आ. ६,३,१ ]

अथ दशमः प्रपाठकः।

## याज्यानुवाक्याः।

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥ १

त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः॥ २

अग्निर्मूर्धा, भुवो यज्ञस्य॥ ३

पिप्रीहि देवं उशतो यविष्ठ विद्वं ऋतूꣳरृतुपते यजेह।

ये दैव्या ऋत्विजस्तेभिरग्ने त्वꣳ होतॄणामस्यायजिष्ठः॥ ४

अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वꣳ हि यज्वा।

ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य॥ ५

पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः। अग्निर्यज्ञस्य हव्यवाट्॥ ६

तꣳसबाधो यतस्रुच इत्था धिया यज्ञवन्तः। आचक्रुरग्निमूतये॥ ७

अग्ने रक्षा णो अꣳहसः प्रति ष्म देव रीषतः। तपिष्ठैरजरो दह॥ ८

त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत्त्वावतः सखा॥ ९

वैश्वानरो न ऊत्या, पृष्टो दिवि॥ १०

---

[१] वा. ३३,९;३,१२;१३,१४—१५;१५,२०,२३;१८,७२—७३;२६,८;२०,८४;१७,७६;१९,३८;३५,१६;२६,९;१७,८—९;२२,१५;२१,५—६। काण्व. ३२,९;३,१८;१४,१४—१५;१६,४१,४४;२०,४१—४२;२८,८;२२,६९;१८,७६;८,१९;२१,४८;२९,३७;३५.४८;२८,१२;२९,३९;१८,९-१०;२४,१९;२३,५-६।

[अग्निर्वृत्राणि जङ्घनद्०। ऋ. ६,१६,३४; सा. ४,१३९६; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४;२०,१४। त्वꣳ सोमासि सत्पति०। ऋ. १,९१,५; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४। अग्निर्मूर्धा दिवः०। ऋ. ८,४४,१६; सा. २७,१५३२; तै. सं. १,५,५,१;४,४,१.१; तै. ब्रा. ३,५,७,१। भुवो यज्ञस्य रजसश्च०। ऋ. १०,८,६; तै. सं. ४,४,४,१; तै. ब्रा. ३,५,७,१। पिप्रीहि देवं (देवाँ) उशतो०। ऋ. १०,२,१; तै. सं. ४,३.१३,४; तै. ब्रा. ३,५,७,५;६,११.४; काठ. २,१५;१८,२१;२०,१५। अग्ने यदद्य विशो०। ऋ. ६,१५,१४; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,६;६,१२,२। पृथुपाजा अमर्त्यो० ऋ. ३,२७,५; तै. ब्रा. ३,६,१,३; काठ. ४०,१४। तꣳ सबाधो यतस्रुच०। ऋ. ३,२७,६; तै ब्रा. ३,६,१,३; काठ. ४०,१४। अग्ने रक्षा णो अꣳहसः०। ऋ. ७,१५,१३; सा. २४; तै. ब्रा. २,४,१,६; काठ. २,१४। त्वं नः सोम विश्वतो रक्षा०। ऋ. १,९१,८; तै. सं. २.३,१४,१; काठ. २,१४। वैश्वानरो न ऊत्या० (ऊतय)। अथर्व. ६,३५,१; आ. श्रौ. सू. २,११। पृष्टो दिवि पृष्टो०। ऋ. १,९८,२; तै. सं. १,५,११,१; ४,४,१२,५; तै. ब्रा. ३,११,६,४; काठ ११,१३]

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि ।
अग्ने अत्रिवन्नमसा गृणा३नोऽस्माकं बोध्यविता तनूनाम् ॥ ११
अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं॰ योः ॥ १२
अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥ १३
अग्नाविष्णू महि धाम प्रियं॰ वां पाथो घृतस्य गुह्यानि नाम ।
दमे दमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमुच्चरण्यत् ॥ १४
पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं॰ वष्टु धियावसुः ॥ १५
आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ १६
ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे ॥ १७
यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्ता आपः ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं॰ सरस्वन्तमवसे हुवेम ॥ १८
अग्निः प्रत्नेन मन्मना शुम्भानस्त३न्वं॰ स्वाम् । कविर्विप्रेण वावृधे ॥ १९
सोम गीर्भिष्ट्वा वयं॰ वर्धयामो वचोविदः । सुमृडीको न आविश ॥ २०
त्वमग्ने वीरवद्यशो देवश्च सविता भगः । दितिश्च दाति वार्यम् ॥ २१
त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥ २२

---

[ विश्वानि नो दुर्गहा जातवेदः ( जातवेदा )० । ऋ. ५,४,९; तै. ब्रा. २,४,१,५; तै. आ. १०,१०,२ । अग्ने त्वं पारया नव्यः० । ऋ. १,१८९,२; तै. सं. १,१,१४,४; तै. ब्रा. २,८,२,५; तै. आ. १०,२,१ । अग्नाविष्णू महि धाम प्रियं॰ ( तद्वां महित्वं० ) । अथर्व. ७,२९,१-२; तै. सं. १,८,२२,१; काठ. ४,१६; श्रौ. पू. अ. २, खं. ८ । पावका नः सरस्वती० । ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१ नि. ११,२६; काठ. ४,१६ । आ नो दिवो बृहतः० । ऋ. ५,४३,११; तै. सं. १,८,२२,१;२,५,१२,१;३,१,११,२; काठ. ४, १६; २०,१५ । ये ते सरस्व ऊर्मयो० । ऋ. ७,९६,५; तै. सं. ३,१,११,३; नि. १०,२४; काठ. १९,१४, । यस्य व्रतं पशवो० । अथर्व. ७,४०,१; तै. सं. ३,१,११,३; श्रौ. पू. अ. ३, खं. ८। अग्निः प्रत्नेन मन्मना०। ऋ. ८,४४,१२; सा. १७११; तै. ब्रा. ३,५,६,१; काठ. २,१४ । सोम गीर्भिष्ट्वा वयं॰ । ऋ. १,९१,११; तै. ब्रा. ३,५,६,१; ताण्ड्य ब्रा. १,५,७; काठ. २,१४ । त्वमग्ने वीरवद्यशो० । ऋ. ७,१५,१२ । त्वं भगो ना ( न ) आ हि० । ऋ. ६,१३,२ ]

प्रेद्धो अग्ने ॥ २३

इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईꣳ सुरभीणि व्यन्तु ॥ २४

अग्न आयूꣳषि पवसे, ऽग्निर्ऋषिः ॥ २५

तꣳ हि शश्वन्ता ईडते स्रुचा देवं घृतश्चुता । अग्निꣳ हव्याय वोढवे ॥ २६

अग्निमग्निꣳ हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २७

अग्ने पावक रोचिषा, स नः पावक दीदिवो, ऽग्निः शुचिव्रततमा, उदग्ने शुचयस्तव ॥ २८

स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥ २९

अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ ३०

किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ ॥ ३१

प्र तत्ते अद्य शिपिविष्ट नामार्यः शꣳसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ ३२

सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ।
दैवीं नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ ३३

---

[प्रेद्धो अग्ने० ऋ. ७,१,३; सा. १३७५; तै. सं. ४,६,५,४;५,४,७,३; काठ. २,१५;१८,४;२०,१४; कपि. २८,४; ४८,२ । इमो अग्ने वीततमानि० ऋ. ७,१,१८; तै. सं. ४,३,१३,६; काठ० २,१५;१९,१४;३५,२; कपि. ४८,३। अग्न आयूꣳषि पवसे० । ऋ. ९,६६,१९; सा. ६२७,१४६४,१५१८; तै. सं. १,३,१४,७;४,२९,१;५,५,१; ६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१; काठ. ४,११;११,१३; कपि. ३,९;८,५। अग्निर्ऋषिः०। ऋ. ९,६६,२०; सा. १५१९; तै. आ. २,५,२ । तꣳ हि शश्वन्ता (०श्वन्त) ईडते (०ळते)। ऋ०५,१४,३; तै. सं. ४,३,१३,८; काठ. १९,१४ । अग्निमग्निꣳ हवीमभिः०। ऋ. १,१२,२; सा. ७९१; अथर्व. २०,१०१,२; तै. सं. ४,३,१३,८। अग्ने पावक रोचिषा०। ऋ०५,२६,१; सा. १५२१; तै.सं. १,३,१४,८;५,५,३;४,६,१,२; काठ. १७,१७;१९,१४; कपि. २८,१ । स नः पावक दीदिवो०। ऋ. १,१२,१०; तै. सं. १,३,१४,८;५,५,३;४,६,१,३; काठ. १९,१४। अग्निः शुचिव्रततमा० (तमः)। ऋ. ८,४४,२१; तै. सं. १,३,१४,८;५,५,३; काठ. १९,१४ । उदग्ने शुचयस्तव० । ऋ. ८,४४,१७; सा. १५३४; तै. सं. १,३,१४,८; ५,५,३;२,४,१४,४; काठ. २,१४;१९,१४; ४०,१४ । स हव्यवाड (०वाळ०) मर्त्यः०। ऋ. ३,११,२; तै. सं. ४,१,११,४; काठ. १९,१४। अग्निꣳस्तोमेन बोधयः । ऋ. ५,१४,१; तै. सं. ४,१,११,४ । किमित्ते विष्णो परिचक्ष्यं०। ऋ.७,१००,६; सा.१६२५; तै. सं. २,२,१२,५; नि. ५,८। प्र तत्ते अद्य शिपिविष्ट० । ऋ. ७,१००,५; सा. १६२६; तै. सं. २,२,१२,५; नि. ५,९ । सुत्रामाणं पृथिवीं० । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै. सं. १,५,११,५; तै. आ. १,१३,२; काठ. २,३ ]

महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥ ३४
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ३५
युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमा अमुञ्चतं गृभीतान् ॥ १ ॥ ३६
अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ ३७
अग्निं दूतꣳ वृणीमहे होतारꣳ विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ ३८
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ३९
अग्निर्वृत्राणि जङ्घन,—दग्निꣳ स्तोमेन बोधया,—ऽग्न आयूꣳषि पवसे, ऽग्ने तमद्या,—
ऽऽभिष्टे अद्य ॥ ४०
एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्णज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ॥ ४१
अधा ह्यग्ने ॥ ४२
अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ ४३

---

[महीमू षु मातरꣳ०। तै. सं. १,५,११,५;७,१,१८,२; तै. ब्रा. ३,१,२,३; तै. आ. १,१३,२; मा. श्रौ. ७,२,६; काठ. ३०,४-५; कपि. ४६,७। अग्नीषोमा सवेदसा०। ऋ. १,९३,९; तै. सं. २,३,१४,१; तै. ब्रा. ३,५,७,२; काठ. ४,१६। युवमेतानि दिवि०। ऋ. १,९३,५; तै. सं. २,३,१४,१; तै. ब्रा. ३,५,७,२; काठ. ४,१६]

[ २ ] वा. ४,१६;११,४६;३३,९,३७;२२,१५;१९,३८;३५,१६;१५,४४-४६;२१,१-२;१८,४९;५,३६;७,४३;४०,१६; १२,२,६,१३,२१,३३;१७,७०,७७। काण्व. ४,२१;१२,४७;३२,९,३७;२४,१९;८,१९;२१,४०;२९,३७;३५,४८; १६,६६—६८;२३,१—२;२०,१९;५,४५;९,८;४०,१८;१३,२,७,१४,२२,३४;१८,७०,७७। [अग्ना (०ग्न) आयाहि वीतये०। ऋ. ६,१६,१०; सा. १,६६०; तै. सं. २,५,७,३;८,१; तै. ब्रा. ३,५,२,१; काठ. १९,५; १६,४;२०,१४; कपि. ३०,३। अग्निं दूतꣳ वृणीमहे०। ऋ. १,१२,१; सा. ३,७९०; अथर्व. २०,१०१,१; तै. सं. २,५,८,५; तै. ब्रा. ३,५,२,३; काठ. २०,१४। अग्निनाग्निः समिध्यते०। ऋ. १,१२,६; सा. ८४४; तै. सं. १,४,४६,३;३,५,११,५; तै. ब्रा. २,७,१२,३; काठ. १५,१२;२०,१४;३४,१९। अग्निर्वृत्राणि जङ्घनद्०। ऋ. ६,१६,३४; सा. ४,१३९६; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४;२०,१४। अग्निꣳ स्तोमेन बोधय०। ऋ. ५,१४,१; तै. सं. ४,१,११,४। अग्ना (०ग्न) आयूꣳषि पवसे०। ऋ. ९,६६,१९; सा. ६२७,१४६४,१५१८; तै. सं. १,३,१४,७;४,२९,१;५,५,१;६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१। अग्ने तमद्याश्वं०। ऋ. ४,१०,१; सा. ४,३४;१७७७; तै. सं. ४,४,४,७। आभिष्टे अद्य०। ऋ. ४,१०,४; तै. सं. ४,४,४,७। एभिर्नो अर्कैर्भवा० ऋ. ४,१०,३; सा. १७७९; तै. सं. ४,४,४,७. काठ. २०,१४। अधा ह्यग्ने०। ऋ. ४,१०,२; सा. १७७८; तै. सं. ४,४,४,७; काठ. २०,१४। अग्नेः स्तोमं मनामहे०। ५,१३,२; सा. १४०५; तै. सं. ५,५,६,१; काठ. २०,१४ ]

अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥ ४४

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते ॥ ४५

वृषा सोम द्युमं असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे ॥ ४६

अग्निर्जातो अरोचत घ्नन् दस्यून् ज्योतिषा तमः । अविन्दद्गा अपः स्वः ॥ ४७

अग्ने बृहन् ॥ ४८

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ ४९

तत्त्वा याम्य,—ग्निनाग्निः ॥ ५०

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ॥ ५१

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ ५२

अनमीमासा इडया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ५३

तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं संजभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ५४

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः ।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ५५

त्वमग्ने व्रतपा असि ॥ ५६

---

[अग्ना यो मर्त्यो दुवो०। ऋ. ६,१४,१; काठ. २०,१४। त्वमग्ने सप्रथा असि०। ऋ. ५,१३,४; सा. १४०७; तै. ब्रा. २,४,१,६; नि. ६,७; काठ. २,१४;२०,१५ । **वृषा सोम द्युमं ( द्युमाँ ) असि०** । ऋ. ९.६४,१; सा. ५०४, ७८१; तै. सं. ४,२,११,३;४,३,१३,३; काठ. २,१४;२०,१५ । **अग्निर्जातो अरोचत०** । ऋ. ५, १४,४। **अग्ने ( अग्ने ) बृहन्०** । ऋ. १०,१,१; तै सं. ४,२,१,४; काठ. १६,८;१९,११; कपि. ३२, १। **इमं मे वरुण श्रुधी०** । ऋ. १,२५.१९; सा. १५८५; तै. सं. २,१,११,६;२.५,१२,१;४,२,११,३; तै. ब्रा. ३, ७,११,३;१२,६; तै. आ. २,४,४;४,२०,३; काठ. ४,१६;११,१२—१३;१२,१५;२१,१३ । **तत्त्वा यामि ब्रह्मणा०** । ऋ. १,२४,११; तै. सं. २,१,११,६; काठ. ४,१६ । **अग्निनाग्निः०** । ऋ. १,१२,६; सा. ८४४; तै. सं. १,४,४६,३;३,५,११,५; तै. ब्रा. २,७,१२,३ । **त्वं ह्यग्ने अग्निना०** । ऋ. ८,४३,१४; तै. सं. १,४,४६,३; ३,५,११,५; काठ. १५,१२ । **प्र स मित्र मर्तो अस्तु०** । ऋ. ३,५९,२; तै. सं. ३,४,११.५; नि २,१३; काठ. २३,१२ । **अनमीमासा० ( ०वास ) इडया० ( ईळ० )** । ऋ. ३,५९,३; तै. सं. २,८,७,५; तै. ब्रा. २,८, ७,४ । **तत्सूर्यस्य देवत्वं०** । ऋ. १,११५,४; अथर्व. २०,१२३,१; तै. ब्रा. २,८,७,१; नि. ४, ११। **भद्रा अश्वा हरितः०** । ऋ. १,११५,३; तै. ब्रा. २,८,७,१ । **त्वमग्ने व्रतपा असि०** । ऋ. ८,११,१; अथर्व. १९,५९,१; तै. सं. १,१,१४,४;१,२,३,१; काठ. २,४;६,१०; कपि. ४८,१० ]

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवं ऋतुभिः कल्पयाति ॥ ५७

अग्ने नय ॥ ५८

आ देवानामपि पन्थामगन्म यच्छक्रवाम तदनु प्रवोढुम् ।
अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति ॥ ५९

अग्निः शुचिव्रततमा, उदग्ने शुचयस्तवा,—ऽक्रन्ददग्नि,—र्नक्तोषासा ॥ ६०

आयाहि तपसा जनिष्वाग्ने पावको अर्चिषा । उपेमाꣳ सुष्टुतिं मम ॥ ६१

आ नो याहि तपसा जनिष्वाग्ने पावक दीद्यत् । हव्या देवेषु नो दधत् ॥ २ ॥ ६२

अभि त्वा देव सवितरीशानꣳ वार्याणाम् । सदावन् भागमीमहे ॥ ६३

मही द्यौः पृथिवी च न,—स्त्वामग्ने पुष्करादधि, तमु त्वा दध्यङ्ङृषि,—स्तमु त्वा पाथ्यो
वृषा ॥ ६४

उत ब्रुवन्तु जन्तवा उदग्निर्वृत्रहाजनि । धनंजयो रणे रणे ॥ ६५

---

[ यद्वो वयं प्रमिनाम० । ऋ. १०,२,४; अथर्व. १९,५९,२; तै. सं. १,१,१४,४; काठ. ६,१०; कपि. ४८,१०। अग्ने नय०। ऋ. १,१८९,१; तै. सं. १,१,१४,३;४,४३,१; तै. ब्रा. २,८,२,३; तै. आ. १,८,८; शत. ब्रा.१४,८,३,१; काठ. ६,१०;३,१; कपि. २,८ । आ देवानामपि० । ऋ. १०,२,३; अथर्व. १९,५९,३; तै. सं. १,१,१४,३; काठ. १८,२१;२,१५ । अग्निः शुचिव्रततमा० । ऋ. ८,४४,२१; तै. सं. १,३,१४,८;१,५,५,३; काठ. १९,१४; ४०,१४ । उदग्ने शुचयस्तव० । ऋ. ८,४४,१७; सा. १५३४; तै. सं. १,३,१४,८; ४,१,१०,४; ५,५,३;२, ४,१४,४ । अक्रन्ददग्निः० । ऋ. १०,४५,४; तै. सं. १,३,१४,२;४,२,१;२,२,२; काठ. २,१४; १९,१४;४०, १४; १६,८—१०;१९,११—१२; कपि. ३२,१—२ । नक्तोषासा० । ऋ. १,९६,५; तै. सं. ४,१,१०,४; ६,५,२; ७,१२,३ ]

[ ३ ] तै. सं. ३,५,११;४,१,११; तै. ब्रा. ३,५,५;९ । वा. ८,३२;१३,१४—१५,३२;११,३२-३४;१५,२०,२१—२३; ३१,१६;३,१२;३,३५;२२,९,१५—१६;३०,२;३६,३;२०,८४;२१,१२—२२,२९—४०,४८-५८;२८,१-२२, २४-४५;९,१६,१८,२१,१०-११। काण्व. ९,३१;१४,१४-१५,३४;१२,३२-३४;१६,४१,४३-४४;३५,१६;२३, १०,१२-२३,३०—४१,४७-५७;३०,१—२२,२४-४५;१०,२२,२४;३,१८,४३,२४,१३;३४,२,३६,३;२२,६९। [अभि त्वा देव सवितः०। ऋ. १,२४,३; तै. सं. ३,५,११,३; काठ. १५,१२;२८,७; कपि. ४४,७ । मही द्यौः पृथिवी च नः०। ऋ. १,२२,१३; तै. सं. ३,३,१०,२;५,११,३;४,२,९,३; काठ. १३,९—१०;१५,१२;१६,१६; २०,७;३९,३ । त्वामग्ने पुष्करादधि० । ऋ. ६,१६,१३; सा. ९; तै. सं. ३,५,११,३;४,१,३,२;४,४,१; काठ. १५,१२;१६,३। तमु त्वा दध्यङ् ऋषि०। ऋ. ६,१६,१४; तै.सं. ३,५,११,३;४,१,३,२; काठ. १५,१२;१९,४। तमु त्वा पाथ्यो वृषा० । ऋ. ६,१६,१५; तै. सं. ३,५,११,४;४,१,३,३; काठ. १५,१२;१६,३; कपि. ३०,२। उत ब्रुवन्तु जन्तवा (०न्तवः)० । ऋ. १,७४,३; सा. १३८२; तै. सं. ३,५,११,४; काठ. १५,१२;८,१६ ]

आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति । विशामग्निं स्वध्वरम् ॥ ६६

प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषीदतु ॥ ६७

आ जातं जातवेदसि प्रियं शिशीतातिथिम् । स्योन आ गृहपतिम् ॥ ६८

अग्निनाग्निः,—स्त्वं ह्यग्ने अग्निना ॥ ६९

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥ ७०

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ७१

समिधो अग्न आज्यस्य व्यन्तु, तनूनपादग्न आज्यस्य वेतु,—इडो अग्न आज्यस्य व्यन्तु,
बर्हिरग्न आज्यस्य वेतु, दुरो अग्न आज्यस्य व्यन्तु,—उषासानक्ताग्न आज्यस्य वीतां, दैव्या
होताराग्न आज्यस्य वीतां, तिस्रो देवीरग्न आज्यस्य व्यन्तु स्वाहा, ऽग्निं स्वाहा, सोमं
स्वाहा, ऽग्निं स्वाहा, ऽग्निं होत्रात् स्वाहा, देवा आज्यपा जुषाणा अग्न आज्यस्य
व्यन्तु ॥ ७२

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ॥ ७३

त्वं नः सोम विश्वतो, ऽग्निर्मूर्धा, भुवो यज्ञस्य ॥ ७४

सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥ ७५

या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।

तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय ॥ ७६

---

[ आ यं हस्ते न० । ऋ. ६,१६,४०; तै. सं. ३,५,११,४ । प्र देवं देववीतये० । ऋ. ६,१६,४१; तै. सं. ३,५,११,४; काठ. १५,१२ । आ जातं जातवेदसि० । ऋ. ६,१६,४२; तै. सं. ३,५,११,४ । अग्निनाग्निः० । ऋ. १,१२,६; सा. ८४४; तै. सं. १,४,४६,३;३,५,११.५; तै. ब्रा. २,७,१२,३; काठ. १५,१२; २०,१४ । त्वं ह्यग्ने अग्निना० । ऋ. ८,४३,१४; तै. सं. १,४,४६.३; ३,५,११.५; काठ. १५,१२। तं मर्जयन्त सुक्रतुं० । ऋ. ८,८४,८; तै. सं. ३,५,११,५; काठ. १५,१२ । यज्ञेन यज्ञमयजन्त० । ऋ. १,१६४,५०; १०,९०,१६; अथर्व. ७,५,१; तै.सं. ३,५,११,५; तै. आ. ३,२,७; श. ब्रा. १०,२,२,२; काठ. १५,१२। अग्ने यं यज्ञमध्वरं० । ऋ. १,१,४; तै. सं. ४,१,११,१; काठ. २,१४ । त्वं नः सोम विश्वतो रक्षा० । ऋ. १,९१.८; तै. सं. २,३,१४,१; ४,१,११,१; काठ. २,१४। अग्निर्मूर्धा दिवः० । ऋ. ८,४४,१६; सा. २७,१५३२; तै. सं.१,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१; काठ. ६,९;१२,१४; २०,१४ । भुवो यज्ञस्य० । ऋ. १०,८,६; तै. सं. ४,४,४,१; तै. ब्रा. ३,५,७.१; काठ. १६,१५;२०,१५ । सोम यास्ते मयोभुव० । ऋ. १,९१,९; तै. सं. ४,१,११,१; काठ. २,१४ । या ते धामानि दिवि० । ऋ. १,९१,४; तै. सं. २,३,१४,१; ४,१,११,१; तै. ब्रा. २,८,३,२; काठ. २३,१५ ]

❀

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ७७
अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पुरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥ ७८
पावका नः सरस्व,—त्या नो दिवः ॥ ७९
पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः ॥ ८०
शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ ८१
इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुता आवृणे ॥ ८२
प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांꣳसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ८३
विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्ताꣳ युज्यं पयः ॥ ८४
विश्वे देवासो अस्रिधा एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयः ॥ ८५
द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ ८६
प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ सदने ऋतस्य ।
आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वाꣳ वरूथम् ॥ ८७
स हव्यवा,—डग्निꣳ स्तोमेन ॥ ८८
देवं बर्हिर्वसुवने वसुधेयस्य वेतु, देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु, देवी उषासानक्ता

[तत्सवितुर्वरेण्यम्०। ऋ. ३,६२,१०; सा. १४६२; तै. सं. १,५,६,४; ४,१,११,१; तै. आ. १,११,२। अचित्ती यच्चकृमा०। ऋ. ४,५४,३; तै. सं. ४,१,११,१। पावका नः सरस्वती०। ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१; नि. ११,२६; काठ.४,१६। आ नो दिवः०। ऋ. ५,४३,११; तै. सं. १,८,२२,१; काठ.४,१६;२०,१५। पूषा गा अन्वेतु नः०। ऋ. ६,५४,५; तै. सं. ४,१,११,२; तै. ब्रा. २,४,१,५; काठ. ४,१५;२०,१५। शुक्रं ते अन्यद्०। ऋ. ६,५८,१; सा. ७५; तै. सं. ४,१,११,२; तै. आ. १,२,४;१०,१;४,५,६; नि. १२,१७; काठ. ४,१५;२०,१५। इहेह वः स्वतवसः०। ऋ. ७,५९,११; तै. आ. १,४,३; काठ. २०,१५। प्र चित्रमर्कं गृणते०। ऋ. ६,६६,९; तै. सं. ४,१,११,३; तै. ब्रा. २,८,५,५; नि. ३,२१; काठ. २०,१५। विश्वे देवा ऋतावृधः०। ऋ. ६,५२,१०; तै. सं. २,४,१४,५; ४,१,११,४; काठ. १३,१५। विश्वे देवासो अस्रिधा०। ऋ. १,३,९। द्यावा नः पृथिवी०। ऋ. २,४१,२०; तै. सं. ४,१,११,४; नि. ९,३८। प्र पूर्वजे पितरा०। ऋ. ७,५३,२; तै. सं. ४,१,११,४; तै. ब्रा. २,८,४,७। स हव्यवाड्०। ऋ. ३,११,२; तै. सं. ४,१,११,४; काठ. १९,४। अग्निꣳ स्तोमेन०। ऋ. ५,१४,१; तै. सं. ४,१,११,४ ]

वसुवने वसुधेयस्य वीतां, देवी जोष्ट्री वसुवने वसुधेयस्य वीतां, देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां, देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां, देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु, देवो नराशꣳसो वसुवने वसुधेयस्य वेतु, देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीया,—नग्ने यान् देवानयाडयाँ अपिप्रेर्ये ते होत्रे अमत्सत ताꣳ ससनुषीꣳ होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमꣳ, स्विष्टकृच्चाग्ने होताभूर्वसुवने वसुधेयस्य नमोवाके वीहि ॥ वाजे वाजे शं नो भवन्तु ॥ ३ ॥ ८९-९०

प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् ॥ ९१

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते । रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥ ९२

अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चित् सहीयान् देवो जीवातवे कृतः ॥ ९३

इडायास्त्वा पदे वयम् ॥ ९४

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तꣳ सवित्रे यज्ञं नय यजमानाय साधु ॥ ९५

सीद होत,—नि होता ॥ ९६

त्वं दूतस्त्वमु नः परस्पास्त्वꣳ वस्या आ वृषभ प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपाः ॥ ९७

अग्निना रयिमश्नवत् पोषमेव दिवे दिवे । यशसꣳ वीरवत्तमम् ॥ ९८

गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥ ९९

---

[ वाजे वाजेऽवत० । ऋ. ७,३८,८; तै. सं. १,७,८,२;४,७,१२,१ । शं नो भवन्तु० । ऋ. ७,३८,७; तै. सं. १,७,८,२; नि. १२,४४ ]

[ ४ ] तै. सं. ३,५,११; १,५,११; २,५,१२ । वा. ३४,१५;११,३५-३६;१२,३६,१२;३,२९;२१,१-४;१८,४९;२७,३९; ३६,४ । काण्व. ३३,९;१२,३५-३६;१३,१३;३,२७;२३,१-४;२०,१९;२९,४४;३६,४;१३,३७; [प्र देवं देव्या धिया० । ऋ. १०,१७६,२; तै. सं. ३,५,११,१; काठ. १५,१२ । अयमु ष्य प्र देवयुः० । ऋ. १०,१७६,३, तै. सं. ३,५,११,१, काठ. १५,१२ । अयमग्निरुरुष्यति० । ऋ. १०,१७६,४; तै. सं. ३,५,११,१; काठ. १५,१२ । इडा ( ०ळा ) यास्त्वा पदे वयं० । ऋ. ३,२९,४; तै. सं. ३,५,११,१; काठ. १५,१२ । अग्ने विश्वेभिः स्वनीक० । ऋ. ६,१५,१६; तै. ३,५,११,२; काठ. १५,१२ । सीद होतः० । ऋ. ३,२९,८; तै. सं. ३,५,११,२; ४,१,३,३; काठ. १५,१२;१९,४;१६,३; कपि. ३०,२। नि होता० । ऋ. २,९,१; तै. सं. ३,५,११,२;४,१,३,३ । त्वं दूतस्त्वमु नः० । ऋ. २,९,२; तै. सं. ३,५,११,२ । अग्निना रयिमश्नवत्० । ऋ. १,१,३; तै. सं. ३,१,११, १;४,३,१३,५ । गयस्फानो ( यो रेवान्यो ) अमीवहा० । ऋ. १,९१,१२;१,१८,२; तै. सं. ४,३,१३,५; नि. ३,२१, काठ. २,१४ ]

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥ १००

प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।

प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥ १०१

मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न उपगन्तन ॥ १०२

या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।

अस्मभ्यं तानि मरुतो वियन्त रयिं नो धत्त वृषणः सुवीरम् ॥ १०३

इमं मे वरुण, तत्त्वा यामि, कया नः, को अद्य, पिप्रीहि देवा,—नग्ने यद्द्या,—

ऽप्स्वग्ने सधिष्टव ॥ १०४

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । आपश्च विश्वशंभुवः ॥ १०५

उदुत्तमꣳ वरुण पाशमस्मत् ॥ १०६

अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।

क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनाꣳसि शिश्रथः कृतानि ॥ १०७

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ १०८

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।

अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि ॥ ४ ॥ १०९

[इन्द्राग्नी रोचना दिवः०। ऋ. ३,१२,९; सा. १६९३; तै. सं. ४,२,११,१; तै. ब्रा. ३,५,७,३; काठ ४,१५। प्र चर्षणिभ्यः पृतना०। ऋ. १,१०९,६; तै. सं. ४,२,११,१; काठ. ४,१५। मरुतो यद्ध वो०। ऋ. ८,७,११; तै. सं. १,५,११,४; काठ. ९,१९;८,१७;२१,१३। या वः शर्म शशमानाय०। ऋ. १,८५,१२; तै. सं. १,५,११,५; तै. ब्रा. २,८,५,६; काठ. ८,१७;२१,१३। इमं मे वरुण०। ऋ. १,२५,१९; सा. १५८५; तै. सं. २,१,११,६; काठ. ११,१२;१२,१५। तत्त्वा यामि०। ऋ. १,२४,११; तै. सं. २,१,११,६; काठ. १२,१५। कया नश्चित्र०। ऋ. ४,३१,१; सा. १६९,६८२; अथर्व. २०,१२४,१; तै. सं. ४,२,११,१; तै. आ. ४,४२,१; काठ. २१,१३। को अद्य युङ्क्ते०। ऋ. १,८४,१६; सा. ३४१; अथर्व. १८,१,६; तै. सं. ४,२,११,३; नि. १४,२५। पिप्रीहि देवान्० ( ०देवाँ )। ऋ. १०,२,१; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,५;६,११,४। अग्ने यदद्य०। ऋ. ६,१५,१४; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,६;६,१२,२। अप्स्वग्ने सधिष्टव०। ऋ. ८,४३,९; तै. सं. ४,२,३,२;११,३; काठ. २,१४। अप्सु मे सोमो अब्रवीद्०। ऋ. १,२३,२०;१०,९,६; अथर्व. १,६,२; तै. ब्रा. २,५,८,६; काठ. २,१४। उदुत्तमꣳ वरुण०। ऋ. १,२४,१५; सा. ५८९; अथर्व. ७,८३,३;१८,४,६९; तै. सं. १,५,११,३;४,२,१,३; नि. २,१३; काठ. २१,१३। अव ते हेडो ( ०ळो ) वरुण०। ऋ. १,२४,१४; तै. सं. १,५,११,३; काठ. ४०,११। त्वं नो अग्ने वरुणस्य०। ऋ. ४,१,४; तै. सं. २,५,१२,३; काठ. ३४,१९। स त्वं नो अग्नेऽवमो०। ऋ. ४,१,५; तै. सं. २,५,१२,३; काठ. ३४,१९; कपि. ४८,१ ]

अग्निर्वृत्राणि जङ्घनत्, त्वꣳ सोमासि सत्पतिः ॥ ११०

अनीकैर्द्वेषो अर्दयाग्ने विश्वाभिरूतिभिः । रयिं नो धेहि यज्ञियम् ॥ १११

सैनानीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति ।

अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥ ११२

पिप्रीहि देवा,—ना देवानाम् ॥ ११३

सांतपना इदꣳ हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ॥ ११४

यो नो मरुतो अभि दुर्हणायुस्तिरश्चित्तानि वसवो जिघाꣳसति ।

द्रुहः पाशान् प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ॥ ११५

अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा वयम् ॥ ११६

गृहमेधासा आगत मरुतो माप भूतन । इमा हव्या जुजुष्टन ॥ ११७

प्र बुध्न्या व ईरते महाꣳसि प्र नामानि प्रयज्यवस्तिरध्वम् ।

सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥ ११८

प्रेद्धो अग्न, इमो अग्ने ॥ ११९

अग्निमीडे पुरोहितꣳ यज्ञस्य देवमृत्विजम् । होतारꣳ रत्नधातमम् ॥ १२०

वृषा सोम द्युमाꣳ असि ॥ १२१

---

[ ५ ] तै. सं. ४,३,१३ । वा. ३३,९;१७.७६,२२–२३;८,४५ । काण्व. ३२,९;१८,७६,२२–२३;८,२६–२७ । [अग्निर्वृत्राणि जङ्घनत्० । ऋ. ६,१६,३४; सा. ४,१३९६; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१ । त्वꣳ सोमासि सत्पतिः० । ऋ. १,९१,५; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४ । सैनानीकेन सुविदत्रो० । ऋ. २,९,६; तै. सं. ४,३,१३;२; काठ. २१,१३ । पिप्रीहि देवान्० । ऋ. १०,२,१; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,५;६,११,४; काठ. २,१५;१८,२१;२०,१५ । आ देवानाम्० । ऋ. १०,२,३; अथर्व. १९,५९,३; तै. सं. १,१,१४,३; काठ. २,१५;१८,२१;३५,९। सांतपना इदꣳ० । ऋ. ७,५९,९; अथर्व. ७,७७,१; तै. सं.४,३,१३,३; काठ. २१,१३ । यो नो मरुतो अभि० । ऋ. ७,५९,८; अथर्व. ७,७७,२; तै. सं. ४,३,१३,३; काठ. २१,१३। अग्निः प्रत्नेन मन्मना० । ऋ. ८,४४,१२; सा. १७११; तै. ब्रा. ३,५,६,१; काठ. २,१४ । सोम गीर्भिष्ट्वा० । ऋ. १,९१,११; तै. ब्रा. ३,५,६,१; ताण्ड्य. ब्रा. १,५,७; काठ. २,१४ । गृहमेधासा ( ०स ) आगत० । ऋ. ७,५९,१०; तै. सं. ४,३,१३,५ । प्र बुध्न्या व ईरते० । ऋ. ७,५६,१४; तै. सं. ४,३,१३,६; काठ. २१,१३ । प्रेद्धो अग्न० । ऋ. ७,१,३; सा. १३७५; तै. सं. ४,६,५,४ । इमो अग्ने० । ऋ. ७,१,१८; तै. सं. ४,३,१३,६; काठ. २,१५;१९,१४; कपि. ४८,३ । अग्निमीडे (०ळे) पुरोहितꣳ० । ऋ. १,१,१; तै. सं. ४,३,१३,३; नि. ७,१५; काठ. २,१४। वृषा सोम द्युमं० (०माँ)। ऋ. ९,६४,१; सा. ५०४,७८१; तै. सं. ४,२,११,३;३,१३,३; काठ. २,१४;२०,१५ ]

क्रीडं॒ वः शर्धो मारुतमनर्वाणं॒ रथेशुभम् । कण्वा अभि प्रगायत ॥ १२२

अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।

ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः ॥ १२३

तं॒ हि शश्वन्तो, ऽग्निमग्निम् ॥ १२४

इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥ १२५

श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।

इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥ १२६

तमिन्द्रं॒ वाजयामसि ॥ १२७

युजे रथं गापेषणं॒ हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः ।

विबाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥ १२८

विश्वकर्मन्, वाचस्पतिम् ॥ ५ ॥ १२९

उशन्तस्त्वा हवामहे ॥ १३०

आ नो अग्ने सुचेतुना रयिं॒ विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ १३१

त्वं॒ सोम महे भगं त्वं॒ यून ऋतायते । दक्षं दधासि जीवसे ॥ १३२

त्वं॒ सोम प्रचिकितो मनीषा त्वं॒ रजिष्ठमनु नेषि पन्थाम् ।

तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १३३

---

[क्रीडं॒ (०ळं) वः शर्धो०। ऋ. १,३७,१; तै. सं. ४,३,१३,६; नि. ७,२; काठ. २१,१३। अत्यासो न ये मरुतः०। ऋ. ७,५६,१६; तै. सं. ४,३,१३,७। तं॒ हि शश्वन्तो०। ऋ. ५,१४,३; तै. सं. ४,३,१३,८; काठ. १९,१४। अग्निमग्निं०। ऋ. १,१२,२; सा. ७९१; अथर्व. २०,१०१,२; तै. सं. ४,३,१३,८। इन्द्राग्नी नवतिं पुरो०। ऋ. ३,१२,६; सा. १५७६;१७०४; तै. सं. १,१,१४,१; काठ. ४,१५। श्नथद्वृत्रमुत सनोति०। ऋ. ६,६०,१; तै. सं. ४,२,११,१;४.३,१३,८;तै. ब्रा. ३,५,७,३; काठ. २१,१३;४,१५;२३,११। तमिन्द्रं॒ वाजयामसि०। ऋ. ८,९३,७; सा. ११९.१२२२; अथर्व. २०,४७,१;१३७,१२; तै. ब्रा. १,५,८,३;२,४,१,३; काठ. ३९,१२। युजे रथं गापषणं॒० (गवेषणं)। ऋ. ७,२३,३; अथर्व. २०,१२,३; तै. ब्रा. २,४,१,३;८,२,५। विश्वकर्मन् हविषा०। ऋ. १०,८१,६; सा. १५८९; तै. सं. ४,६,२,६;४,३,१३,८; नि. १०,२७। वाचस्पतिं विश्वकर्माणं०। ऋ. १०,८१,७; तै. सं. ४,६,२,५; काठ. २१,१३; कपि. २८,२]

[ ६ ] तै.सं. २,६,१२। वा.१९,७०,५२-५७,५९,६८.४९,६१;३३,३६.५५;२७,२७। काण्व. २१,७०;५१-५८,६१,६७; २९,२६;३२,३६,५५। [उशन्तस्त्वा हवामहे०। ऋ.१०,१६,१२; अथर्व. १८ १,५६;२,३४; तै. सं. २,६,१२,१; तै. ब्रा. २,६,१६; काठ. २१,१४;३६,१२। आ नो अग्ने सुचेतुना० (०तना)। ऋ. १,७९,९; सा. १५२६; तै. ब्रा. २,४,५,३; काठ. २,१४। त्वं॒ सोम महे भगं०। ऋ. १,९१,७; तै. ब्रा. २,४,५,३; काठ. २,१४, २०,१५। त्वं॒ सोम प्रचिकितो०। ऋ. १,९१,१; तै. सं. २,६,१२,१; काठ. २१,१४]

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ १३४

त्वꣳ सोम पितृभिः सꣳविदानोऽनु द्यावापृथिवी आततन्थ ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥ १३५

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आगतावसा शंतमेनाथा नः शꣳ योररपो दधातन ॥ १३६

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ १३७

आहं पितृन्त्सुविदत्रं अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदः स्वधया ये सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ १३८

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥ १३९

उदीरतामवरा उत्परासा उन्मध्यमाः पितरः सोम्यासः ।
असुꣳ य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १४०

अग्निष्वात्ता ऋतावृधः पितरो मृडता सु नः । दीर्घायुत्वाय जीवसे ॥ १४१

अग्निष्वात्तानृतुमतो हवामहे नराशꣳसे सोमपीथꣳ य आशुः ।
ते नो विप्रासः सुहवा मृडन्तु शं नो भवन्तु द्विपदे शं चतुष्पदे ॥ १४२

अग्निष्वात्ताः पितर एह गछत सदः सदः सदत सुप्रणीतयः ।
अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ॥ १४३

---

[ त्वया हि नः पितरः० । ऋ. ९,९६.११; तै. सं. २,६,१२,१; काठ. २१,१४ । त्वꣳ सोम पितृभिः० । ऋ. ८,४८,१३; तै. सं. २,६,१२,२; काठ. २१,१४ । बर्हिषदः पितर ऊति० । ऋ. १०,१५,४; अथर्व. १८,१,५१; तै. सं. २,६,१२,२; नि. ४,२१; काठ. २१ १४ । उपहूताः पितरः० । ऋ. १०,१५ ५; अथर्व. १८,३,४५; तै. सं. २,६,१२,३; काठ. २१,१४ । आहं पितृन्त्सुविदत्रं० ( त्राँ० ) । ऋ. १०,१५,३; अथर्व. १८,१,४५; तै. सं. २,६.१२,३; काठ. २१.१४ । इदं पितृभ्यो नमो० । ऋ. १०,१५,२; अथर्व. १८,१,४६; तै. सं. २.६, १२,४ । उदीरतामवरा० ( ०र ) । ऋ. १०,१५,१; अथर्व. १८,१,४४; तै. सं. २,६,१२,३; नि. ११,१८ । अग्निष्वात्ता ऋतावृधः० । काठ. २१,१४ । अग्निष्वात्तानृतुमतो० । वा. य. १९,६१; काठ. २१,१४ । अग्निष्वात्ता पितरा० ( ०रः ) । ऋ. १०,१५,११; अथर्व. १८,३,४४; तै. सं. २,६,१२,२; काठ. २१,१४ ]

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।
आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन् द्रविणोदाम् ॥ १४४

स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।
विवस्वता चक्षुसा द्यामपश्च देवा अग्निं धारयन् द्रविणोदाम् ॥ १४५

ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः पितृभिर्घर्मसद्भिः ॥ १४६

प्र वायुमच्छा बृहती मनीषा बृहद्रयिꣳ विश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ १४७

प्र याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वाय इष्टये दुरोणे ।
नि नो रयिꣳ सुभोजसꣳ युवस्व नि वीरं गव्यमश्व्यं च राधः ॥ १४८

इन्द्रꣳ वयꣳ शुनासीरमस्मिन् यज्ञे हवामहे । स नः पर्षदति द्विषः ॥ १४९

सोऽहोरात्रैः सोऽर्धमासैः स मासैः स ऋतुभिः परि यज्ञं बभूव ।
सꣳवत्सरस्य महिमानमेतꣳ शुनासीरमिन्द्रमद्याहुवेम ॥ १५०

सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिःकेशं पुरुप्रिय ॥ १५१

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ ६ ॥ १५२

[ २४६२ ]

॥ इति खिलकाण्डे दशमः प्रपाठकः ॥१०॥

[स प्रत्नथा सहसा०। ऋ. १,९६,१। स पूर्वया निविदा०। ऋ.१,९६,२; काठ. २१,१४। ये तातृषुर्देवत्रा०। ऋ. १,१०५.९; अथर्व. १८,३,४७; तै. ब्रा. २,६,१६,२; नि. ६,१४। प्र वायुमच्छा बृहती०। ऋ. ६,४९.४। तै. ब्रा. २,८,१,१। प्र याभिर्यासि०। ऋ. ७,९२,३; तै. सं. २,२,१२,७; तै. ब्रा. २,८,१,१; काठ. १०,१२। स नः पर्षदति द्विषः० ( दुर्गाणि विश्वा ) ऋ. परि. ३५,१;२६,१९; ( च. पा.) काठ. २१,१४। सप्त त्वा हरितो रथे०। ऋ. १,५०,८; अथर्व. १३,२,२३;२०,४७,२०; सा. ६४०; तै. सं. १,४,१४,४; काठ. ९,१९; ११,१। तरणिर्विश्वदर्शतो०। ऋ. १,५०,४; अथर्व. १३,२,१९;२०,४७,१६; तै. सं. १,४,३१,१; तै. आ. ३,१६,१; काठ. १०,१३ ]

अथैकादशः प्रपाठकः ।

इन्द्राग्नी रोचना दिवः, प्र चर्षणिभ्यः, इन्द्राग्नी नवतिं पुरः, श्नथद्वृत्रम् ॥ १

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ।

विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ २

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।

सं जास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि ॥ ३

प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आवृणे ॥ ४

उपो ह यद्विदथꣳ वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः ।

अर्वन्तो न काष्ठां नक्षमाणा इन्द्राग्नी जोहुवतो नरस्ते ॥ ५

अग्निर्ददाति सत्पतिꣳ सासाह यो युधा नृभिः ।

अग्निरत्यꣳ रघुष्यदं जेतारमपराजितम् ॥ ६

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तꣳ श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ ७

या वाꣳ सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरागतम् ॥ ८

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।

उभा हि वाꣳ सुहवा जोहवीमि ता वाजꣳ सद्य उशते धेष्ठा ॥ ९

पूषा गा अन्वेतु नः, शुक्रं ते अन्यत् ॥ १०

---

[ १ ] वा. ३३,१२;१५,२९–३०;१८,७२–७३;२६,६–८;१२,५१;३४,१५;२३,३२;८.३२;१३,३२;३४,४५। क.व्र.३२, १२;१६,५०–५१;२०,४१–४२;२८,६–९;१३,५२;३३,९;२५,३४;९,३१;१४,३४;३३,३३। [ इन्द्राग्नी रोचना दिवः० । ऋ. ३,१२,९; सा. १६९३; तै. सं. ४,२,११,१; तै. ब्रा. ३,५,७,३; काठ. ४,१५ । प्र चर्षणिभ्या० (०भ्यः)। ऋ. १,१०९,६; तै. सं. ४,२,११,१; तै. ब्रा. २,८,५,१; काठ. ४,१५ । इन्द्राग्नी नवतिं पुरः० । ऋ. ३,१२,६; सा.१५७६,१७०४; तै. सं. १,१,१४,१; काठ.४,१५। श्नथद्वृत्रम्०। ऋ.६,६०,१; तै. सं. ४,२,११, १; तै. ब्रा. २,८,५,१;३,५,७,३; काठ. ४,१५ । जुष्टो दमूना अतिथिः०। ऋ. ५,४,५; अथर्व. ७,७३,९; तै. ब्रा. २,४,१,१; नि. ४,५; काठ. २,१५ । अग्ने शर्ध महते० । ऋ. ५,२८,३; अथर्व. ७,७३,१०; तै. ब्रा. २,४,१,१; ५,१,४; काठ, २,१५ । प्र वामर्चन्त्युक्थिनो० । ऋ. ३,१२,५; सा. १५७५,१७०३ । उपो ह यद्विदथꣳ०। ७,९३,३, तै. ब्रा.३,६,१२,१। अग्निर्ददाति सत्पतिꣳ०। ऋ.५,२५,६; काठ.२,१५। अग्निस्तुविश्रवस्तमं०। ५,२५,५; काठ. १,१५ । या वाꣳ सन्ति० । ऋ. ६,६०.८; काठ. ४,१५ । शुचिं नु स्तोमं०। ७,९३,१; तै. सं. १,१,१४,१ तै. ब्रा. २,४,८,३; काठ. १३,१५;२१,१३ । पूषा गा अन्वेतु नः० । ऋ. ६,५४,५; तै. सं. ४,१, ११,२; तै. ब्रा. २,४,१,५; काठ. ४,१५;२०,१५ । शुक्रं ते अन्यत्० । ऋ. ६,५८,१; सा. ७५; तै. सं. ४,१, ११,२; तै. ब्रा. २,८,५,३; तै. आ. १,२,४;१०,१;४,५,६; नि. १२,१७; काठ. ४,१५;२०,१५ ]

*

क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥ ११
मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ १२

सꣳ समित् ॥ १३
सखायः सꣳ वः सम्यञ्चमिषꣳ स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ १४

वैश्वानरो न ऊत्या, पृष्टो दिवि ॥ १५
ऋतावानꣳ वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥ १६
वैश्वानर तव धामान्याचके येभिः स्वर्विदभवो विचक्षण ।
जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥ १७

इडामग्ने ॥ १८
त्वं नो अग्ने सनये धनानाꣳ यशसं कारुं कृणुहि स्तवानः ।
शकेम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ १९
वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदꣳ विचष्टे वैश्वानरो यतते सूर्येण ॥ २०
अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीरम् ।
वयं जयेम शतिनꣳ सहस्रिणꣳ वैश्वानर वाजमग्ने तवोतिभिः ॥ २१
विश्वꣳ विव्याच पृथिवीं पुष्टमन्यमन्यत् प्रतिगृभ्णात्यायत् ।
वैश्वानरस्य महतो महिम्ना स्योनमन्नं मधुमन्मे कृणोमि ॥ २२

---

[ क्षेत्रस्य पतिना० । ऋ. ४,५७,१; तै. सं. १,१,१४,२; नि. १०,१५; काठ. ४,१५ । मधुमतीरोषधीः० । ऋ. ४,५७,३; अथर्व. २० १४३,८ । सꣳसमित्० । ऋ. १०.१९१,१; अथर्व. ६,६३;४; तै. सं, २,६,११,४;४,४,४,४; काठ. २,१५ । सखायः सꣳ वः० । ऋ. ५,७.१; तै. सं. २,६,११,४;४,४,४,३; काठ. २,१५ । वैश्वानरो न ऊत्या० ( ऊतय० ) अथर्व. ६,३५,१; तै. सं. १.५,११,१; काठ. ४,१६;२०,१५; आ. श्रौ. सू. २,११ । पृष्टो दिवि० । ऋ. १,९८,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६ ४; काठ. ११,१३ । ऋतावानꣳ वैश्वानरं० । अथर्व. ६.३६,१; तै. सं. १,५,११,१; काठ. ४,१६;६.१०;७.१६ । वैश्वानर तव धामानि०। ऋ. ३.३,१०। इडामग्ने० ( ०ळा० )। ऋ. ३,१ २३;५.११;६.११;७.११;१५,७;२२,५;२३,५; सा. ७६; तै. सं. ४,२,४,३; काठ. १६,११,१८.२१; कपि. २५.२ । त्वं नो अग्ने सनये०। ऋ. १,३१,८। वैश्वानरस्य सुमतौ० । ऋ १,९८,१; तै. सं. १,५,११.३; नि. ७,२२; काठ. ४,१६ । अस्माकमग्ने मघवत्सु० । ऋ. ६,८,६; तै. सं. १,५,११,२; काठ. ४,१६ ]

स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा अरक्षत ।
व्य१न्तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत् ॥ २३

यथा ह त्यत् ॥ २४

त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शꣳ योः ॥ २५

न्य१ग्निं जातवेदसꣳ होत्रवाहꣳ यविष्ठ्यम् । दधाता देवमृत्विजम् ॥ २६

इडायास्त्वा पदे वयं, दधिक्राव्णो अकारिषम् ॥ २७

दधिक्रावाणं बुबुधानो अग्निमुप ब्रुव उषसꣳ सूर्यं गाम् ।
ब्रध्नं मꣳश्चतोर्वरुणस्य बभ्रुं ते विश्वास्मद् दुरिता यावयन्तु ॥ २८

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ २९

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥ ३०

यच्चिद्धि ते ॥ ३१

महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शꣳ योः ॥ ३२

मही द्यौः पृथिवी च नः ॥ ३३

---

[ स जायमानः परमे०। ऋ. ६,८,२। यथा ह त्यत्०। ऋ. ४,१२,६;१०,१२६,८; तै. सं. ४,७,१५,७; काठ. २,१५;९,१९। त्रीण्यायूꣳषि तव०। ऋ. ३,१७,३; तै. सं. ३,२,११,२; काठ. २,१५;१२,१४। न्य१ग्निं जातवेदसं०। ऋ, ५,२६,७; काठ. २,१४। इडा (०ळा०) यास्त्वा पदे वयं०। ऋ. ३,२९,४; तै. ३,५,११,१; काठ. १५,१२। दधिक्राव्णो अकारिषम्०। ऋ. ४,३९,६; सा. ३५८; अथर्व. २०,१३७,३; तै. सं. १,५,११,४; ७,४,१९,४; ताण्ड्य ब्रा. १,६,१७; तै. ब्रा. ३,९,७,५; मै. १,५,१;१,५,६;३,१३,१; काठ.६,९;७,४;५,४,८; कपि. ४,८;५,३। दधिक्रावाणं बुबुधानो०। ऋ. ७,४४,३। अग्निर्होता न्यसीदद्०। ऋ. ५,१६; तै. ब्रा. १,३,१४,१; काठ. २,१५;७,१६। साध्वीमकर्देववीतिं०। ऋ. १०,५३,३; तै. सं. १,३,१४,२; काठ. २,१५। यच्चिद्धि ते०। ऋ. ४,१२,४;१,२५,१; तै. सं. ३,४,११,५;४,७,१५,६। महश्चिदग्ना (०ग्न) एनसो०। ऋ. ४,१२,५; काठ. २,१५। मही द्यौः पृथिवी च नः०। ऋ. १,२२,१३; तै. सं, ३,३,१०,२;५,११,३;४,२,९,३; काठ. १३,९-१०;१५,१२;१६,१६:२०,७;३९,३; कपि. ३२,९ ]

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ १ ॥ ३४

पृथुपाजा,—स्तं॰ सबाधः ॥ ३५
ईडे अग्निं॰ विपश्चितं गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम् ॥ ३६
अग्ने शकेम ते वयं॰ यमं देवस्य वाजिनः । अति द्वेषांꣳसि तरेम ॥ ३७
उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत । अग्ने सꣳसृज्महे गिरः ॥ ३८
उप छाय मिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसंदृशः ॥ ३९
अग्निर्वृत्राणि जङ्घनत्, त्वं॰ सोमासि सत्पति,—रग्नीषोमा युवमेतानि, श्रीणामुदारः ॥
४०

सोमस्य मा तवसं॰ वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद्युञ्जे अद्रिं॰ शमायै अग्ने तन्वं जुषस्व ॥ ४१
सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ ४२
इमौ देवौ जायमानौ जुषन्तेमौ तमांꣳसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥ ४३
उत नो ब्रह्मन् हविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥ ४४

---

[ घृतवती भुवनानां० । ऋ. ६,७०,१; सा. ३७८ ]

[ २ ] तै. सं. १,८,२२;२,१,११। वा. ३३,९;१२,२२;२१,३–४,८—९;२०,८४। काण्व. ३२,९;१३,२३;२३,३-४, ८—९;२१,६९ । [ पृथुपाजास्तं॰ सबाधः० । ऋ. ३,२७,५—६; तै. ब्रा. ३,६,१,२; काठ. ४०,१४। ईडे ( ०ळे ) अग्निं॰ विपश्चितं० । ऋ. ३,२७,२; तै. ब्रा. २,४,२,४; काठ. ४०,१४ । अग्ने शकेम ते वयं० । ऋ. ३,२७,३; तै. ब्रा. २,४,२,५; काठ. ४०,१४ । उप त्वा रण्वसंदृशं० । ऋ. ६,१६,३७; सा. १७०५; काठ. ४०,१४ । उप छायामिव घृणेः० । ऋ. ६,१६,३८; तै. ब्रा. २,४,४,६; काठ. ४०,१४। अग्निर्वृत्राणि जङ्घनत्० । ऋ. ६,१६,३४; सा. ४,१३९६; तै. सं. ४,३,१३,१;५,५,६,१; तै. ब्रा. ३,५,६,१; काठ. २,१४;२०,१४ । त्वं॰ सोमासि सत्पतिः० । ऋ. १,९१,५; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४ । अग्नीषोमा० । ऋ. १,९३,१—४,७,९—१२;१०,६६,७; तै. सं. २,३,१४,१—२; तै. ब्रा. २,८,७,९—१०;३,५,७,२ । युवमेतानि० । ऋ. १,९३,५; तै. सं. २,३,१४,१; तै. ब्रा. ३,५,७,२; काठ. ४,१६ । श्रीणामुदारः० । ऋ. १०,४५,५; तै. सं ४,२,२,३, काठ. २,१५;१६,९ । सोमस्य मा तवसं० । ऋ. ३,१,१; काठ. २,१५ । सोमापूषणा जनना० । ऋ. २,४०,१; तै. सं. १,८,२२,५; तै. ब्रा. १,८,१,५; काठ. ८,१७। इमौ देवौ जायमानौ० । ऋ. २,४०,२; तै. सं. १,८,२२,५; तै. ब्रा. २,८,१,५; काठ. ८,१७ । उत नो ब्रह्मन् हविष ( ०न्नविष )० । ऋ. ३,१३,६; काठ. २,१५ ]

नू नो रास्व सहस्रवत्तोकवत् पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ ४५

त्वा युजा तव तत्सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः ।
अहन्नहिमरिणात् सप्त सिन्धूनपावृणोदपिहितेव खानि ॥ ४६

क्रदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ ४७

त्वं नो अग्ने, स त्वं नो अग्ने, ऽग्निं वः पूर्व्यं गिरा ॥ ४८

मक्षू देववतो रथः शूरो वा पृत्सु कासुचित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ ४९

न यजमान रिष्यसि न सुन्वान न देवयो ।
देवानां य इन्मनो यजमाना इयक्षत्यभीदयज्वनो भुवत् ॥ ५०

नकिष्टं कर्मणा नशन्न प्रयोषन्न योषति ।
देवानां य इन्मनो यजमाना इयक्षत्यभीदयज्वनो भुवत् ॥ ५१

असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् ।
देवानां य इन्मनो यजमाना इयक्षत्यभीदयज्वनो भुवत् ॥ ५२

उपक्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।
पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उपयन्ति विश्वतः ॥ ५३

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥ ५४

---

[नू नो रास्व०। ऋ.३,१३,७; काठ. २,१५ । त्वा युजा तव तत्सोम०। ऋ. ४,२८,१ । क्रदूदरेण सख्या०। ऋ. ८,४८,१०; तै. सं. २,२,१२,३; नि. ६,४ । त्वं नो अग्ने०। ऋ. ४,१,४;१,३१,८; तै. सं. २,५,१२,३,४, २,११,३; तै. ब्रा ३,७,११,३;१२,६; तै. आ. २,४,४;४,२०,३; काठ. ३४,१९ । स त्वं नो अग्नेऽवमो० । ऋ. ४,१,५; तै. सं. २,५,१२,३; काठ. ३४,१९; कपि. ४८,१ । अग्निं वः पूर्व्यंगिरा० । ऋ. ८,३१,१४; तै. सं. १,८,२२,३; काठ. ११,१२। मक्षू देववतो रथः०। ऋ. ८,३१,१५; तै. सं. १,८,२२,३; काठ. ११,१२। न यजमान रिष्यसि०। ऋ. ८,३१,१६; तै. सं. १,८,२२,४; काठ. ११,१२ । नकिष्टं कर्मणा० । ऋ. ८, ३१,१७; तै. सं. १,८,२२,४; काठ. ११,१२ । असदत्र सुवीर्यम्० । ऋ. ८,३१,१८; तै. सं. १,८,२२,४; काठ. ११,१२ । उपक्षरन्ति सिन्धवो०। ऋ. १,१२५,४; तै. सं. १,८,२२,४; काठ. ११,१२;११,५। सोमारुद्रा युवमेतानि०। ऋ. ६,७४,३; अथर्व. ७,४२,२; तै. सं. १,८,२२,५; काठ. ११,१२ ]

सोमारुद्रा धारयेथामसुर्यं१ प्र वामिष्टयोऽरमश्नुवन्तु ।
दमे दमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥ ५५
सोमारुद्रा विवृहतं॰ विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥ ५६
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्रा इह सु मृडतं नः ।
मुमुक्तमस्मान् ग्रुसितानभीके प्रयच्छतं॰ वृषणा शंतमानि ॥ ५७
अग्नाविष्णू सजोषसा, ऽग्नाविष्णू महि धाम प्रियं॰ वाम् ॥ ५८
अग्नाविष्णू महि तद्वां महित्वं॰ वीथो घृतस्य गुह्या जुषाणा ।
दमे दमे सुष्टुती वावृधाना नु वां जिह्वा घृतमाचरण्यत् ॥ ५९
पावका नः सरस्वती ॥ ६०
सरस्वत्यभि नो नेषि वस्यो मापस्फरीः पयसा मा न आधक् ।
जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरण्यानि गन्म ॥ ६१
आ नो दिवः ॥ ६२
बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥ ६३
एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं॰ स्याम पतयो रयीणाम् ॥ ६४
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांऽसि सुक्रतू ॥ ६५
प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं॰ युवाना श्रुतं मे मित्रावरुणा हवेमा ॥ ६६

---

[सोमारुद्रा धारयेथाम्० । ऋ. ६,७४,१; काठ. ११,१२ । सोमारुद्रा विवृहतं॰० । ऋ. ६,७४,२; अथर्व. ७,४२,१; तै. सं. १,८,२२,१; काठ. ११,१२ । तिग्मायुधौ तिग्महेती० । ऋ. ६,७४,४ । अग्नाविष्णू सजोषसा० । तै. सं. ४,७,१;५,७,३,२; तै. ब्रा. ३,११,३ । अग्नाविष्णू महि ( तद्वां ) धाम० । अथर्व. ७,२९,१-२; तै. सं. १,८,२२,१;२,५,१२,१; काठ. ४,१६ । पावका नः सरस्वती० । ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१, नि. ११,२६; काठ. ४,१६ । सरस्वत्यभि नो नेषि० । ऋ. ६,६१,१४; तै. सं. ७,२,७,४; तै. ब्रा. २,४,३,१;८,२,८; काठ. १७,१८;३०,३ । आ नो दिवः । ऋ. ५,४३,११; तै. सं. १,८,२२,१;२,५,१२,१;३,१,११,२; काठ. ४,१६;२०,१५ । बृहस्पते जुषस्व नो० । ऋ. ३,६२,४; तै. सं. १,८,२२,२; काठ. ४,१६;२६ २६,११, । एवा पित्रे विश्वदेवाय० । ऋ. ४,५०,६; अथर्व. २०,८८,६, तै. सं. १,८,२२,२; तै. ब्रा. २,८,२,८; काठ. १७,१८ । आ नो मित्रावरुणा० । ऋ. ३,६२,१६ सा. २२०,६६३; तै. सं. १,८,२२,३ । प्र बाहवा सिसृतं० । ऋ. ७,६२,५; तै. सं. १,८, २२,३; तै. ब्रा. २,७,१५,६;८,६,७; काठ. १२,१४]

औ॒र्व॒भृ॒गु॒वच्छु॒चि॒मप्न॒वान॒वदा हु॑वे । अ॒ग्निꣳ स॑मु॒द्रवा॑ससम् ॥ ६७

आ स॒वꣳ स॑वि॒तुर्य॑था॒ भग॑स्येव भु॒जिꣳ हु॑वे । अ॒ग्निꣳ स॑मु॒द्रवा॑ससम् ॥ ६८

हु॒वे वात॑स्वनं क॒विं प॒र्जन्य॑क्रन्द्यꣳ॒ सहः॑ । अ॒ग्निꣳ स॑मु॒द्रवा॑ससम् ॥ ६९

वृषा॑ सोम द्यु॒माँ अ॑सि ॥ ७०

आ ये त॒न्वन्ति॑ र॒श्मिभि॑स्ति॒रः स॑मु॒द्रमो॑ज॑सा । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ ७१

आ वो॑ यन्तूदवा॒हासो॑ अ॒द्य वृ॒ष्टिꣳ ये विश्वे॑ म॒रुतो॑ जु॒नन्ति॑ ।

अ॒यꣳ यो अ॒ग्निर्म॑रुतः॒ समि॑द्ध ए॒तं जु॑षध्वं कवयो युवानः ॥ ७२

यं त्वा॑ दे॒वापिः॑ शुशुचा॒नो अ॑ग्न आर्ष्टिषे॒णो म॑नु॒ष्यः॑ समी॒धे ।

विश्वे॑भिर्दे॒वैर॑नुम॒द्यमा॑नः॒ प्र प॒र्जन्य॑मीरया वृष्टि॒मन्त॑म् ॥ ७३

अग्ने॒ बाध॑स्व॒ वि मृधो॒ वि दु॒र्गहाप॒ामी॑वा॒मप॒ रक्षाꣳ॑सि सेध ।

अ॒स्मात् स॑मु॒द्राद् बृ॑ह॒तो दि॒वो नोऽपां भू॒मान॒मुप॑ नः सृजे॒ह ॥ ७४

प्रि॒या वो॒ नाम॑ हुवे तु॒राणा॒मा यत्तृ॒पन्म॑रुतो वावशा॒नः ॥ ७५

श्रि॒यसे॒ कं भा॒नुभिः॒ सं मि॑मिक्षिरे॒ ते र॒श्मिभि॒स्त ऋक्व॑भिः सुखा॒दयः॑ ।

ते वाशी॑मन्त इ॒ष्मिणो॒ अभी॑रवो वि॒द्रे प्रि॒यस्य॒ मारु॑तस्य॒ धाम्नः॑ ॥ ७६

म॒रुतो॒ यद्ध॑ वो दि॒वः ॥ ७७

प्रै॒षाम॒ज्मेषु॑ विथु॒रेव॑ रेजते॒ भूमि॒र्यामे॑षु॒ यद्ध॑ यु॒ञ्जते॑ शु॒भे ।

ते क्री॒डयो॒ धुन॑यो॒ भ्राज॑दृष्टयः स्व॒यं म॑हि॒त्वं प॑नयन्त॒ धूत॑यः ॥ २ ॥ ७८

कया॑ शु॒भा सव॑यसः॒ सनी॑डाः समा॒न्या म॒रुतः॒ सं मि॑मिक्षुः ।

कया॑ म॒ती कुत॒ एता॑स ए॒तेऽर्च॑न्ति॒ शुष्मꣳ॒ वृष॑णो वसू॒या ॥ ७९

---

[और्वभृगुवच् शुचिम्० । ऋ. ८,१०२,४; सा. १८; तै. सं. ३,१,११,८; काठ. ४०,१४। आ सवꣳ सवितुर्यथा० । ऋ. ८,१०२,६; तै. सं. ३,१,११,८; काठ. ४०,१४ । हुवे वातस्वनं कविं० । ऋ. ८,१०२,५; तै. सं. ३,१,११,८; काठ. ४०,१४ । वृषा सोम द्युमं० ( ०माँ )। ऋ. ९,६४,१; सा. ५०४,७८१; तै. सं. ४,२,११,३; ३,१३,३; काठ. २,१४; २०,१५, । आ ये तन्वन्ति रश्मिभिः० । ऋ. १,१९,८ । आ वो यन्तूदवाहासो० । ऋ. ५,५८,३; तै. ब्रा. २,५,५,३ । यं त्वा देवापिः० । ऋ. १०,९८,८; काठ. २,१५; कपि. २५,३; ३२,४। अग्ने वाधस्व वि मृधो० । ऋ. १०,९८,१२; तै. ब्रा. २५,८,११; काठ. २.१५। प्रिया वो नाम हुवे० । ऋ. ७,५६,१०; तै. सं. २,१,११,१; काठ. ८,१७ । श्रियसे कं भानुभिः० । ऋ. १,८७,६; तै. सं. २,१,११,२; ४,२,११,२; नि. ४,१६; काठ. ३,१७ । मरुतो यद्ध वो दिवः० । ऋ. ८,७,११; तै. सं. १,५,११,४; २,१,११,१; काठ. ८,१७; ९,१९; २१,१३ । प्रैषामज्मेषु विथुरेव० । ऋ. १,८७,३; तै. सं. ४,३,१३,७ ]

[ ३ ] वा. ३३.२७,७८—७९; ३४,४८ । काण्व. ३२,२७,७८—७९; ३३,३६ । [ कया शुभा सवयसः० । ऋ. १,१६५,१; काठ. ९,१८ ।

कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुता आववर्त ।
श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥ ८०
कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।
संपृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥ ८१
ब्रह्माणि मे मतयः शꣳ सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आशासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ ८२
अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।
महोभिरेकम्मुपयुज्महे न्विन्द्रः स्वधामनु हि नो बभूथ ॥ ८३
क्व३स्या वो मरुतः स्वधासीद्यन्मामेकꣳ समधत्ताहिहत्ये ।
अहꣳ ह्युग्रस्तविषस्तुविष्मान् विश्वस्य शत्रोरनमꣳ वधस्नैः ॥ ८४
भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौꣳस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेन्द्रः क्रत्वा मरुतो यद्वशाम ॥ ८५
वधीꣳ वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥ ८६
अनुत्तमा ते मघवन्नकिर्णु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ८७
एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान् कृणवै मनीषा ।
अहꣳ ह्युग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ ८८
अमन्दन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यꣳ सख्ये सखायस्तन्वे तनूभिः ॥ ८९
एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ ९०

---

[कस्य ब्रह्माणि जुजुषुः०। ऋ. १,१६५,२; काठ. ९,१८। कुतस्त्वामिन्द्र माहिनः०। ऋ. १,१६५,३; काठ. ९,१८। ब्रह्माणि मे मतयः०। ऋ. १,१६५,४; काठ. ९,१८। अतो वयमन्तमेभिर्युजानाः०। ऋ. १,१६५, ५; काठ. ९,१८। क्व३स्या वो मरुतः० । ऋ. १,१६५,६; तै. ब्रा. २,८,३,५; काठ. ९,१८। भूरि चकर्थ युज्येभिः०। ऋ. १,१६५,७; नि. ६,७; काठ. ९,१८; २३,११। वर्धीꣳ वृत्रं मरुत०। ऋ. १,१६५,८; तै. ब्रा. २,८,३,६; काठ. ९,१८;२३,११। अनुत्तमा ते मघवन्०। ऋ. १,१६५,९; काठ. ९,१८। एकस्य चिन्मे०। १,१६५,१०; काठ. ९,१८। अमन्दन्मा मरुतः०। ऋ. १,१६५,११; काठ. ९,१८। एवेदेते प्रति मा०। ऋ. १,१६५,१२; काठ. ९,१८]

को न्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम्॥ ९१
आ यद् दुवस्याद् दुवसे न कारुरस्माँश्चक्रे मान्यस्य मेधा।
ओ षु वर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत्॥ ९२
एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम्॥ ३॥ ९३
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः॥ ९४
आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात्।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे॥ ९५
मरुतो यद्ध वो दिवो, या वः शर्म॥ ९६
आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि। महान्महीभिरूतिभिः॥ ९७
त्वं महाँ इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः।
त्वं वृत्रं शवसा जघन्वान्त्सृजः सिन्धूँरहिना जग्रसानान्॥ ९८
मरुतो यद्ध वो बलं जनं अचुच्यवीतन। गिरीँरचुच्यवीतन॥ ९९
ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितम्।
नृम्णा शीर्षस्वायुधा रथेषु नो विश्वा वः श्रीरधि तनूषु पिपिशे॥ १००
पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः। समत्सु त्वा हवामहे॥ १०१
समत्स्वग्निमवसे वाजयन्तो हवामहे। वाजेषु चित्रराधसम्॥ १०२

[को न्वत्र मरुतो०। ऋ. १,१६५,१३; काठ. ९,१८। आ यद् दुवस्याद् दुवसे०। ऋ. १,१६५,१४; काठ. ९,१८। एष वः स्तोमो मरुत०। ऋ. १,१६५,१५; १६६,१५; १६७,११; १६८,१०; काठ. ९,१८]

[४] वा. ३३,६५; ४,१६; ५,१५,२०,३६—३७; ७,४३—४४; ४०,१६; १७,९। काव. ३२,६५; ४,२१; ५, १०,२६,४५—४६; ९,८—९; ४०,१८; १८,१०। [इन्द्रं वो विश्वतस्परि०। ऋ. १,७,१०; सा. १६२०; अथर्व. २०,३९,१; ७०,१६; तै. सं. १,६,१२,१; २,३,१४,१; ३,१,११,१; ४,३,१३,८; काठ. ८,१७। आ ते शुष्मो वृषभ०। ऋ. ६,१९,९; तै. ब्रा. २,५,८,१; ८,५,९। मरुतो यद्ध वो दिवः०। ऋ. ८,७,११; तै. सं. १,५,११,४; २,१,११,१; ३,१४,४; काठ. ८,१७; ९,१९; २१,१३। या वः शर्म०। ऋ. १,८५,१२; तै. सं. १,५,११,५; २,१,११,१; ३,१४,४; तै. ब्रा. २,८,५,६; काठ. ८,१७; २१,१३। आ तू न इन्द्र वृत्रहन्०। ऋ. ४,३२,१; सा. १८१; काठ. ६,१०; २१,१३। त्वं महं (०हाँ) इन्द्र तुभ्यं०। ऋ. ४,१७,१; काठ. ६,१०। मरुतो यद्ध वो बलं०। ऋ. १,३७,१२। ऋष्टयो वो मरुतो०। ऋ. ५,५७,६। पुरुत्रा हि सदृङ्ङसि०। ऋ. ८,११,८; ४३,२१; सा. ११६७; तै. ब्रा. २,४,४,४। समत्स्वग्निमवसे०। ऋ. ८,११,९; सा. ११६८; तै. ब्रा. २,४,४,४]

❀

अग्ने नया,—ऽऽ देवानां, त्वमग्ने व्रतपा असि, यद्वो वयम् ॥ १०३

त्वमग्ने व्रतभृच्छुचिरग्ने देवां इहावह । उप यज्ञꣳ हविश्च नः ॥ १०४

व्रता नु बिभ्रद् व्रतपा अदब्धो यजानो देवो अजरः सुवीरः ।

दधद्रत्नानि सुमृडीको अग्ने गोपाय नो जीवसे जातवेदः ॥ १०५

श्रेष्ठꣳ यविष्ठ भारताग्ने द्युमन्तमाभर । वसो पुरुस्पृहꣳ रयिम् ॥ १०६

तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात् ।

आ भन्दिष्ठस्य सुमतिं चिकिद्धि महत्ते अग्ने महि शर्म भद्रम् ॥ १०७

त्वामग्ने वाजसातमꣳ विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥ १०८

अयं नो अग्नि,—रनीकैर्द्वेषो अर्दय, सैनानीकेने,—दꣳ विष्णुः, प्र तद्विष्णुः ॥ १०९

आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः ।

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ११०

कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभꣳये ।

परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥ १११

उक्षान्नाय वशान्नाय ॥ ११२

वातोपधूत इषितो वशꣳ अनु त्रिषु यदन्ना वेविषद्वितिष्ठसे ।

आ ते यतन्ते रथ्यो यथा पृथक् शर्धाꣳस्यग्ने अजराणि धक्षतः ॥ ४ ॥ ११३

---

[ अग्ने नय सुपथा० । ऋ. १,१८९,१; तै. सं. १,१,१४,३; ४,४३,१; तै. ब्रा. २,८,२,३; तै. आ, १,८,८; शत. ब्रा. १४,८,३,१; काठ. ६,१०; ३,१; कपि. २,८ । आ देवानां० । ऋ. १०,२,३; अथर्व. १९,५९,३; तै. सं १, १,१४,३; काठ. २,१५;१८,२१;३५,९ । त्वमग्ने व्रतपा असि० । ऋ. ८,११,१; अथर्व. १९,५९,१; तै. सं. १, १,१४,४; २,३,१; काठ. २,४; ६,१०; २३,५ । यद्वो वयम्० । ऋ. १०,२,४; अथर्व. १९,५९,२; तै. सं. १,१, १४,४; काठ. ६,१०; कपि. ४८,१० । त्वमग्ने व्रतभृच्छुचि० (स नः पावक दीदिवो०) । ऋ. १,१२,१०; तै. सं. १,३,१४,८; ५,५,३;४,६,१,३; तै. ब्रा. २,४,१,११ । व्रता नु बिभ्रद् व्रतपा० । तै. ब्रा. २,४,१,११ । श्रेष्ठꣳ यविष्ठ भारताग्ने० । ऋ. २,७,१; तै. सं. १,३,१४,३ । तुभ्यं भरन्ति क्षितयो० । ऋ. ५,१.१०; तै. ब्रा. २,४ ७,९; काठ. ७,१६ । त्वामग्ने वाजसातमꣳ० । ऋ. ५,१३,५; तै. सं. १,४,४६,३; काठ. ६,१० । अयं नो अग्निः० । तै. सं. १,३,४,१; ४,४६,३; काठ. ४,९; ६,१०; कपि. ३,७ । अनीकैर्द्वेषो अर्दय० । तै. सं. ४,३ १३,२; काठ. २१,१३ । इदꣳ विष्णुर्वि चक्रमे० । ऋ. १,२२,१७; सा. २२२,१६६९; अथर्व. ७,२६,४; तै. सं. १,२,१३,१; तै. ब्रा. ३,१,३,३; नि. १२,१९; काठ. २,१०; कपि. ३,४ । प्र तद्विष्णु स्तवते० । ऋ. १, १५४.२; अथर्व. ७.२६,२—३; तै. ब्रा. २,४,३,४; नि. १,२०; काठ. २,१०;२५,८; कपि. २,४; ४०, १ । आ वो राजानमध्वरस्य० । ऋ. ४,३,१; सा. ६९; तै. सं. १,३,१४,१; तै. ब्रा. २,८,६,९; काठ. ७,१६। कद्धिष्ण्यासु वृधसानो० । ऋ. ४.३,६; काठ. ७,१६ । उक्षान्नाय वशान्नाय० । ऋ. ८,४३,११,; अथर्व. ३,२१, ६; २०,१,३; तै. सं. १,३,१४,७, काठ. ७,१६, ४०,५ । वातोपधूत इषितो० । ऋ. १०,९१,७; सा. ९८३ ]

कृणुष्व पाजा इति पञ्च ॥ ११४

सं ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभिद्यौत् ॥ ११५

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ११६

अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ११७

इह त्वा भूर्याचरेदुप त्मन्दोषावस्तर्दीदिवाꣳसमनु द्यून् ।
क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम् ॥ ११८

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत् ॥ ११९

महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ १२०

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ १२१

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ १२२

त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ १२३

---

[५] तै. सं. १,२,१४। वा. १३,९—१३। काण्व. १४,९—१३। [कृणुष्व पाजा (०जः) प्रसितिं०। ऋ. ४,४, १—५; तै. सं. १,२,१४,१—२; नि. ६,१२; काठ. ६,११; १०,५; १६,१५; कपि. २५,५; १३,९। स ते जानाति सुमतिं०। ऋ. ४,४,६; तै. सं. १,२,१४,२; काठ. ६,११। सेदग्ने अस्तु सुभगः०। ऋ. ४,४,७; तै. सं. १,२,१४,३; काठ. ६,११। अर्चामि ते सुमतिं०। ऋ. ४,४,८; तै. सं. १,२,१४,३; काठ. ६,११। इह त्वा भूर्याचरेदुप०। ऋ. ४.४,९; तै. सं. १,२ १४,४; काठ. ६,११। यस्त्वा स्वश्वः सुहिरण्यो०। ऋ. ४,४,१०; तै. सं. १,२,१४.४; काठ. ६,११। महो रुजामि बन्धुता०। ऋ. ४,४,११; तै. सं. १,२,१४, ४; काठ. ६,११। अस्वप्नजस्तरणयः सुशेवा०। ऋ. ४.४,१२; तै. सं. १,२,१४,५; काठ. ६,११। ये पायवः सध्र्यञ्चो०। ऋ. १,१४७,३; ४,४,१३; तै. सं. १,२,१४,५; काठ ६,११। त्वया वयꣳ सधन्यस्त्वोता। ऋ. ४,४,१४; तै. सं. १,२,१४,६; नि. ५,१५; काठ. ६,११;१६.१]

अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥ १२४
अग्नी रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥ १२५
त्वं नः सोम विश्वतः ॥ ५ ॥ १२६
युक्ष्वा हि देवहूतमान् ॥ १२७
उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥ १२८
त्वꣳ ह यद्यविष्ठ्य सहसः सून आहुत । ऋतावा यज्ञियो भुवः ॥ १२९
अयमग्निः सहस्रिणः ॥ १३०
तं नेमिमृभवो यथा नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥ १३१
तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥ १३२
कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥ १३३
मा नो देवानाꣳ विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्न्याः ॥ १३४
मा नः समस्य दूढ्यः परिद्वेषसो अꣳहतिः । ऊर्मिर्न नावमावधीत् ॥ १३५
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय ॥ १३६
इमꣳ यज्ञमिदꣳ वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥ १३७
कुवित्सु नो गविष्टयेऽग्ने सꣳवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥ १३८
मा नो अस्मिन् महाधने परा वर्ग्भारभृद्यथा । सꣳवर्गꣳ सꣳ रयिं जय ॥ १३९

---

[ अया ते अग्ने समिधा० । ऋ. ४,४,१५; तै. सं. १,२,१४,६; नि. ३,२१; काठ. ६,११ । अग्नी रक्षाꣳसि सेधति० । ऋ. ७,१५,१०; अथर्व. ८,३,२६; तै. ब्रा. २,४,१,६; काठ. १५,१२ । त्वं नः सोम विश्वतः० । ऋ. १,९१,८; ८,४८,१५; १०,२५,७; तै. सं. २,३,१४,१;४,१,११,१; काठ. २,१४ ]

[ ६ ] तै. सं २,६,११ । काठ. ७,१७ । वा. १३,३७; ३३,४; १५,२१ । काण्व. १४,३९; ३२,४; १६,४२ । [ युक्ष्वा हि देवहूतमान्० ( ०तमाँ ) । ऋ. ८,७५,१; तै. सं. २,६,११,१; काठ. ७,१७, २२,५—६; कपि. ३४ । उत नो देव देवं ( ०वान् ) ऋ. ८,७५,२; तै. सं. २,६,११,१; काठ. ७,१७ । त्वꣳ ह यद्यविष्ठ्य० । ऋ. ८,७५,३; तै. सं. २,६,११,१; काठ. ७,१७ । अयमग्निः सहस्रिणः० । ऋ. ८,७५,४; तै. सं. २,६,११,१; ४,४,४,१; काठ. ७,१७; १६,१५ । तं नेमिमृभवो यथा० । ऋ. ८,७५,५; तै. सं. २,६,११,१ । तस्मै नूनमभिद्यवे० । ऋ. ८,७५,६; तै. सं. २,६,११, २ । कमु ष्विदस्य सेनयाग्नेः० । ऋ. ८,७५,७; तै. २,६, ११,२; काठ. ७,१७ । मा नो देवानाꣳ विशः । ऋ. ८,७५,८; तै. सं. २,६,११,२; काठ. ७,१७ । मा नः समस्य दूढ्यः० । ऋ. ८,७५,९; तै. सं. २,६,११,२; नि. ५,२३ । नमस्ते अग्न( ०ग्न ) ओजसे० । ऋ. ८, ७५,१०; सा. ११, १६४८; तै. सं. २,६,११,२ काठ. ७,१७ । इमꣳ यज्ञमिदꣳ वचो० । ऋ. १,९१,१०; काठ. २,१४ । कुवित्सु नो गविष्टये० ( वि० ) । ऋ. ८,७५,११; सा. १६४९; तै. सं. २,६,११,३; काठ. ७,१७ । मा नो अस्मिन्० । ऋ ८,७५,१२; सा. १६५०; तै. सं. २,६,११,३; काठ. ७,१७ ]

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधावति ॥ १४०

अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः ॥ ६ ॥ १४१

॥ इति खिलकाण्डे एकादशः प्रपाठकः ॥११॥ [ २६०३ ]

अथ द्वादशः प्रपाठकः ।

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते ॥ १

अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् । अश्वावन्तं सहस्रिणम् ॥ २

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥ ३

इमं यज्ञमिदं वचः ॥ ४

त्यान्नु क्षत्रियं अव आदित्यान् याचिषामहे । सुमृडीकं अभिष्टये ॥ ५

येभ्यो माता मधुमत् पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।

उक्थशुष्मान् वृषभरान्त्स्वप्नसस्तं आदित्यं अनुमदात् स्वस्तये ॥ ६

धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।

दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ७

त्री रोचना दिव्या धारयन्त हिरण्ययाः शुचयो धारपूताः ।

अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥ ८

तत्सूर्यस्य, भद्रा अश्वा, हिरण्यगर्भो, यः प्राणतः ॥ ९

---

[ यस्याजुषन्नमस्विनः० । ऋ. ८,७५,१४; तै सं. २,६,११,३ । अन्यमस्मद्भिया० । ऋ. ८,७५,१३; तै. सं. २,६,११,३ ]

[ १ ] वा. २६,१३; ३३,३७,५३; १३,४;२३,१,३; २५,१०-११; ३४,५३,५८,५६; १६,१,४८; ५,१५। काण्व. ३२,३७, ५३; १४,४; २५,१,३; २७,१४-१५; ३३,४१,४४,४६; १७,१,४८; ५,२० । [ इदं वामास्ये हविः० । ऋ. ४,४९,१, तै. सं. ३,३,११,१। अस्मे इन्द्राबृहस्पती०। ऋ. ४,४९,४; तै. सं. ३,३,११,१। एह्यू षु ब्रवाणि० । ऋ. ६,१६,१६; सा. ७.७०५; काठ. २,१४;२०,१४ । इमं यज्ञमिदं० । ऋ. १,९१,१०; १०,१५०,२; काठ. २,१४ । त्यान्नु क्षत्रियं अव० । ऋ. ८,६७,१; तै. सं. २,१,११,५ । येभ्यो माता मधुमत्० । ऋ.१०, ६३,३ । धारयन्त आदित्यासो० । ऋ. २,२७,४; तै. सं. २,१,११,४; तै. ब्रा. २,८,१,६; काठ. ११,१२ । त्री रोचना दिव्या० । ऋ. २,२७,९ । तत्सूर्यस्य० । ऋ. १,११५,४; अथर्व. २०,१२३,१; तै. ब्रा. २,८,७,१; नि. ४,११ । भद्रा अश्वा० । ऋ.१,११५.३; तै. ब्रा. २,८,७,१ । हिरण्यगर्भो० । ऋ. १०,१२१,१; अथर्व. ४,२, ७; तै. सं. ४,१,८,३; २,८,२; ताण्ड्य ब्रा. ९,९,१२; नि. १०,२३; काठ. ५,५,११; १६,१५; २०,५; ४०,१; कपि. ३१,७; ४८,१३ । यः प्राणतः० । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं. ४,१,८,४; ७,५,१६,१; काठ. ४,१६; ८,१७; १०,१३; २२,१४; ४०,१; ५,५,१३ ]

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमाꣳसि ॥ १०

यदा वाजमसनद्विश्वरूपमा द्यामरुक्षदुत्तराणि सद्म ।
बृहस्पतिꣳ वृषणꣳ वर्धयन्तो नाना सन्तो बिभ्रतो ज्योतिरासाम् ॥ ११

बृहस्पतिꣳ हवामहे विश्वतः संगणꣳ वयम् । उप नो यज्ञमागमत् ॥ १२

स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥ १३

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रꣳ यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १४

ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रꣳथ्यो वयस्वतः ।
वीरेषु वीराꣳ उपपृङ्धि नस्त्वꣳ यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १६

अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पतिं देवं अवो वरेण्यम् ॥ १७

नमस्ते रुद्र मन्यव, इमा रुद्राय ॥ १८

को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयꣳ विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥ १९

इयꣳ विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ २०

---

[ बृहस्पतिः प्रथमं० । ऋ. ४,५०,४; अथर्व. २०,८८,४; तै. ब्रा. २,८,२,७; काठ. १७,१८। यदा वाजमसनद्० । ऋ. १०,६७,१०; अथर्व. २०,९१,१० । स सुष्टुभा स ऋक्वता० । ऋ. ४,५०,५; अथर्व. २०,८८,५; तै. सं. २,३,१४,४; काठ. १०,१३ । ब्रह्मणस्पते त्वमस्य० । ऋ. २,२३,१९; २४,१६; तै. ब्रा. २,८,५,१ । ब्रह्मणस्पते सुयमस्य० । ऋ. २,२४ १५; तै. ब्रा. २,८,५,२ उत्तिष्ठ ब्रह्मणस्पते० । ऋ १,४०,१; तै. आ ४,२,१; काठ. १०,१३ । अग्निरुक्थे पुरोहितो० । ऋ. ८,२७,१; सा. ४८; काठ. १०,१३ । नमस्ते रुद्र मन्यव० । तै. सं. ४,५,१,१; काठ. १७,११; कपि. २७,६ । इमा रुद्राय० । ऋ. १,११४,१; तै. सं. ४,५,१०,१; काठ. १७,१६; कपि. २७,६ । को अद्धा वेद क इह० । ऋ. १०,१२९,६; तै. ब्रा. २,८,९,५ । इयꣳ विसृष्टिर्यत आबभूव० । ऋ. १०,१२९,७; तै. ब्रा. २,८,९,६ ]

इदं॑ विष्णुर्वि च॑क्रमे ॥ २१

तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां॒ नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था विष्णोः॑ प॒दे प॑र॒मे मध्व॒ उत्सः॑ ॥ २२

विश्वे॑ दे॒वा ऋ॑ता॒वृधः॑ ॥ २३

विश्वे॑ देवाः शृणु॒तेमं॒ हवं॑ मे॒ ये अ॒न्तरि॑क्षे॒ य उप॒ द्यवि॒ ष्ठ ।
ये अ॑ग्निजि॒ह्वा उ॒त वा॒ यज॑त्रा आ॒सद्या॒स्मिन् ब॒र्हिषि॒ मादयध्वम् ॥ २४

इन्द्राणी पत्या॑ सुजि॒तं जिगाय॒ सेना॑ ह॒ नाम॑ पृथि॒वी ध॑नंज॒या वि॒श्वव्य॑चा॒ अदि॑तिः सू॒र्यत्व॑क् ।
इन्द्राणी प्रा॒सहा॑ सं॒जय॑न्ती॒ तस्यै॑ त ए॒ना ह॒विषा॑ विधेम ॥ २५

उप॒प्रेहि॑ वाचस्पते दे॒वेन॒ मन॑सा स॒ह । वसु॑पते॒ विर॑मय॒ मय्ये॒वं त॒न्वं॑ मम॑ ॥ २६

ये त्रि॑स॒प्ताः प॑रि॒यन्ति॒ विश्वा॑ रू॒पाणि॒ बिभ्र॑तः ।
वा॒चस्पति॒र्बला॒ तेषां॑ त॒न्वो॑ऽद्य द॑धातु मे ॥ १ ॥ २७

अ॒ग्निः प्र॑थ॒मो वसु॑भिर्नो अव्यात् सोमो॑ रु॒द्रैर॒भिर॑क्षतु॒ त्मना॑ ।
इन्द्रो॑ म॒रुद्भि॑ॠतु॒था कृ॑णोत्वादि॒त्यैर्नो॒ वरु॑णः॒ शर्म॑ य॒ंसत् ॥ २८

सम॒ग्निर्वसु॑भिर्नो अव्यात् सं सोमो॑ रु॒द्रिया॑भिस्त॒नूभिः॑ ।
समिन्द्रो॑ रा॒तह॑व्यो म॒रुद्भिः॒ समा॑दि॒त्यैर्वरु॑णो वि॒श्ववे॑दाः ॥ २९

अग्ने॒ दा दा॒शुषे॑ र॒यिं॑ वी॒रव॑न्तं॒ परी॑णसम् । शि॒शीहि॑ नः सूनु॒मतः॑ ॥ ३०

दा नो॑ अग्ने श॒तिनो॒ दाः स॑ह॒स्रिणो॒ दु॒रो न वाजं॒ श्रुत्या॒ अपा॑वृधि ।
प्राची॒ द्यावा॑पृथि॒वी ब्रह्म॑णा कृधि॒ स्व॑र्ण शु॒क्रमु॒षसो॒ विदि॑द्युतुः ॥ ३१

हि॒र॒ण्यपा॑णिमू॒तये॑ सवि॒तार॒मुप॑ह्वये । स चेत्ता॑ दे॒वता॑ प॒दम् ॥ ३२

---

[इदं विष्णुर्वि चक्रमे० । ऋ. १,२२,१७; सा. २२२,१६६९; अथर्व. ७,२६,४; तै. सं. १,२,१३.१; तै. ब्रा. ३,१,२.३; नि. १२,१९; काठ. २,१०; कपि. २,४ । तदस्य प्रियमभि पाथो० । ऋ. १.१५४,५; तै. ब्रा. २, ४,६,२; ८,३,२ । विश्वे देवा ऋतावृधः० । ऋ. ६,५२,१०; तै. सं. २,४,१४,५;४,१,११,४; काठ. १३,१५ । विश्वे देवा शृणुतेमं० । ऋ. ६ ५२,१३; तै. सं. २,४.१४,५; ४,१,११,४; तै. ब्रा. २,८,६.५ ]

[ २ ] वा. २२,१०; ८,६; ३३,५५; २७,२७; ३५.२१; ३६.१३ । काण्व. २२,१४; ८,५; ३२,५५; २९,२६; ३५,५४; ३६,१३ । [ अग्निः प्रथमो वसुभिः । तै. सं. २,१,११,२; काठ. १०,१२ । समग्निर्वसुभिर्नो० । तै. सं. २,१, ११,२; काठ. १०,१२ । अग्ने दा दाशुषे० । ऋ. ३,२४,५; तै. सं. २,२,१२,६; काठ. ६,१० । हिरण्यपाणि-मूतये० । ऋ. १,२२,,५; तै. सं. १,४,२५,१; २,२,१२,२ ]

वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ३३

प्र वायुं, प्र याभिः ॥ ३४

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ ३५

वडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्र या भूमिं प्रवत्वति मह्ना हिनोषि महिनि ॥ ३६

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् ।
विश्वान्यन्यो भुवना विचष्ट ऋतूꣳरन्यो विदधज्जायते पुनः ॥ ३७

नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ ३८

यथादित्या अꣳशुमाप्याययन्ति यथाक्षितिमक्षितयः पिबन्ति ।
एवास्मानिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ ३९

प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्याꣳ वृत्रहन् वृत्रहासि ।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभो हव्य एधि ॥ ४०

अस्येदेव प्ररिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।
स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥ ४१

त्वमिन्द्रास्यधिराजस्त्वं भवाधिपतिर्जनानाम् ।
दैवीर्विशस्त्वमुताविराजौजस्वत्क्षत्रमजरं ते अस्तु ॥ ४२

आ यस्मिन्त्सप्त वासवा रोहन्ति पूर्व्या रुहः ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥ ४३

---

[वाममद्य सवितर्वामम्०। ऋ. ६,७१,६; तै. सं. १,४,२३.१; २,२,१२,२ । प्र वायुं० । ऋ. ६,४९,४; तै. ब्रा. २,८,१,१ । प्र याभिः । ऋ. ७,९२,३; तै. सं. २,२,१२,७; तै. ब्रा. २,८,१,१; काठ. १०,१२ । स्योना पृथिवि० ( नो ) । ऋ. १,२२,१५; अथर्व. १८,२,१९; तै. आ. १०,१,१०; नि. ९,३२; काठ. ३८,१३ । वडि(०ळि)त्था पर्वतानां० । ऋ. ५,८४,१; तै. सं. २,२,१२,२; नि. ११,३७; काठ. १०,१२ । पूर्वापरं चरतो० । ऋ. १०,८५,१८; अथर्व. ७,८१,१; १३,२,११; १४,१,२३; तै. ब्रा. २,७,१२,२; ८,९,३ । नवो नवो भवति जायमानो० । ऋ. १०,८५,१९; अथर्व. ७,८१,२; १४,१,२४; तै. सं. २.३,५,३; ४,१४, १; नि. ११,६ । प्राच्यां दिशि त्वमिन्द्रासि० । तै. सं. २,४,१४,१; काठ. ८, १७ । अस्येदेव प्ररिरिचे० । ऋ. १,६१,९; अथर्व. २०,३५,९; तै. सं. २,४,१४,२; काठ. ८,१७ । आ यस्मिन्त्सप्त वासवा० । तै. सं. १,६,१२,२; तै. आ. १,८,८; काठ. ८,१६ ]

मन्दो न यः सोम्यो बोधिचक्षा वातश्च नु च्यवन इन्दुविक्षाः ।
स तन्तुः शुचसे न सूरः स स्वेदयुः शुशुचानो न घर्मः ॥ ४४
इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आवृणे ॥ ४५
अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ॥ ४६
अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माणा इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४७
वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ २ ॥ ४८
विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ ४९
अꣳहोमुचे प्रभरेमा मनीषां भूयिष्ठदाव्ने सुमतिमावृणानः ।
इदमिन्द्र प्रति हव्यं जुषस्व सत्याः सन्तु यजमानस्य कामाः ॥ ५०
त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ५१
मा ते अस्याꣳ सहसावन् परिष्टा अघाय भूम हरिवः परादैः ।
त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ॥ ५२
अनु त्वाहिघ्ने अध देव देवा मदन् विश्वे कवितमं कवीनाम् ।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥ ५३

---

[इन्द्रियाणि शतक्रतो० । ऋ. ३,३७,९; अथर्व. २०,२०,२; ५७,२; तै. सं. १,६,१२,१; २,५,१२,५; काठ. ८,१६ । अनु ते दायि मह० । ऋ. ६,२५,८; तै. सं. १,६,१२,१; तै. ब्रा. २,८,५,७; काठ. ८,१६ । अनवस्ते रथमश्वाय० । ऋ. ५,३१,४; सा. ४३९,४४०; तै. सं. १,६,१२,६; तै. ब्रा. २,८,४,३; काठ. ८,१६ । वृष्णे यत्ते वृषणो० । ऋ. ५,३१,५; तै. सं. १,६,१२,६; तै. ब्रा. २,८,४,३; काठ. ८,१६ ]

[ ३ ] वा. १२,४४,५१; २०,५०; ८,४४; १८,७०-७१; ३४,१३; २१,३। काण्व. १२,८५; १३,४५,५२; २२,३५; ८,२५; २०,३९-४०; ३३,७; २३,३ । [ विवेष यन्मा धिषणा० । ऋ. ३,३२,१४; तै. सं. १,६,१२,३; २,५,१२,५; तै. ब्रा. २,६,९,१; काठ. ८,१६; ३८,७ । अꣳहोमुचे प्रभरेमा० । तै. सं. १,६,१२,३; २,५,१२,५; काठ. ८,१६ । त्रातारमिन्द्रमविता० । ऋ. ६,४७,११; सा. ३३३; अथर्व. ७,८६,१; तै. सं. १,६,१२,५; काठ. १७,१८ । मा ते अस्याꣳ सहसावन्० । ऋ. ७,१९,७; अथर्व. २०,३७,७; तै. सं. १,६,१२,५ । अनु त्वाहिघ्ने अध देव० । ऋ. ६,१८,१४; काठ. ८,१६ ]

*

अनु द्यावापृथिवी तत्ता ओजोऽमर्त्या जिहत इन्द्र देवाः ।
कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥ ५४
अभि प्रभर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ५५
अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व विरदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ ५६
वि न इन्द्र मृधो जहि नीचा यछ पृतन्यतः ।
अधस्पदं तमीं कृधि यो अस्माँ अभिदासति ॥ ५७
मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥ ५८
आकरे वसोर्जरिता पनस्यतेऽनेहसः स्तुभ इन्द्रो दुवस्यति ।
विवस्वतः सदना आ हि पिप्रिये सत्रासाहमभिमातिहनं स्तुहि ॥ ५९
त्वं सपत्नान् पृतनासु जिष्णुरिन्द्राभिषाडभिमातीरपघ्नन् ।
पिबा सोमं वज्रबाहो त्रिषध्यास्मभ्यं पणीं रवस्वासुखाय ॥ ६०
पुरुष्टुतस्य नामभिः शतेन महयामसि । इन्द्रस्य चर्षणीसहः ॥ ६१
नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्ये ॥ ६२
अर्वावतो ना आगहि परावतश्च वृत्रहन् । इमा जुषस्व नो गिरः ॥ ६३
यदन्तरा परावतमर्वावतं च हूयसे । इन्द्रेह तता आगहि ॥ ६४
ऐन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥ ६५

---

[अनु द्यावापृथिवी तत्ता० । ऋ. ६.१८,१५; काठ. ८,१६ । अभि प्रभर धृषता० । ऋ. ८,८९ ४; काठ. ८,१६ । अस्मा इदु प्रभरा० । ऋ. १.६१,१२; अथर्व. २० ३५.१२; नि. ६.२०; काठ. ८,१६ । वि न इन्द्र मृधो० । ऋ. १०,१५२,४; सा. १८६८; अथर्व. १,२१,२; तै. सं. १,६,१२,४; २,५,१२,५; नि. ७,२ । मृगो न भीमः कुचरो० । ऋ. १०, १८०,२; सा. १८७३; अथर्व. ७,८४ ३; तै. सं. १,६,१२,४; काठ. ८,१६ । आकरे वसोर्जरिता० । ऋ. ३.५१,३ । पुरुष्टुतस्य धा(ना०)मभिः० । ऋ. ३,३७.४; अथर्व. २०, १९,४ । नामानि ते शतक्रतो० । ऋ. ३,३७ ३; अथर्व. २०.१९,३ । अर्वावतो ना ( न ) आगहि० । ऋ. ३,४०,८; अथर्व. २०,६,८ । यदन्तरा परावतम्० । ऋ. ३ ४० ९; अथर्व. २०,६,९ । एन्द्र सानसिं रयिं० । ऋ. १,८,१; सा. १२९; अथर्व. २०,७०,१७; तै, सं. ३,४,११,३; तै. ब्रा. ३,५,७,३ ]

प्रससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् ॥ ६६

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥ ६७

न्हदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।
त्वष्टा चित्ते युज्यꣳ वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ॥ ६८

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।
इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीꣳरिव त्रितः ॥ ६९

तमिन्द्रꣳ वाजयामसि, युजे रथम् ॥ ७०

वृत्रतरं मघवानꣳ शचीपतिमिन्द्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतꣳ सुवृक्तिभिरमर्त्यं जरमाणं दिवे दिवे ॥ ७१

अहन् वृत्रꣳ वृत्रतरꣳ व्यꣳसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धाꣳसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥ ७२

अभितिष्ठ पृतन्यतोऽधरे सन्तु शत्रवः । इन्द्र इव दस्युहा भवापः क्षेत्राणि संजय ॥ ७३

आशीर्ना ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम् ।
संजयन् क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्यं अधरान्त्सपत्नान् ॥ ७४

त्वमिन्द्रास्यधिराजः ॥ ७५

इन्द्रो जयति न पराजयते अधिराजो राजसु राजयते ।
विश्वा अभिष्टिः पृतना जयत्युपसद्यो नमस्यो यथासत् ॥ ७६

---

[प्रससाहिषे पुरुहूत० । ऋ. १०,१८०,१: तै. सं. ३,४,११,४; तै. ब्रा. २,६,९,१; ३,५,७,४; काठ. ३८,७; १०,१२ । इन्द्रं नरो नेमधिता० । ऋ. ७,२७,१; सा. ३१८; तै. सं. १,६,१२,१; तै. ब्रा. २,८,२.५ । ह्रदं न हि त्वा० । ऋ. १,५२,७ । अभि स्ववृष्टिं मदे अस्य० । ऋ. १,५२,५ । तमिन्द्रꣳ वाजयामसि० । ऋ. ८,९३,७; सा. ११९,१२२२; अथर्व. २०,४७,१; १३७,१२; तै. ब्रा. १,५,८,३; २,४,१,३; काठ. ३९,१२ । युजे रथम्० । ऋ. ७,२३,३; अथर्व. २०,१२,३; तै. ब्रा. २,४,१,३; ८,२,५ । अहन् वृत्रꣳ वृत्रतरꣳ० । ऋ. १, ३२,५; तै. ब्रा. २,५,४,३; नि. ६,४ । अभितिष्ठ पृतन्यतो० । तै. ब्रा. २,४.२,९ । आशीर्ना ऊर्जमुत० । तै. सं. ३,२,८,५; काठ. ५,२ । त्वमिन्द्रास्यधिराजः० । काठ. ८,१७ । इन्द्रो जयति न० । तै. सं २,४, १४,२ ]

आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्विचारीत् ॥ ७७
यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ ७८
मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो विश्ववेदाः ।
मन्युं विश ईडते मानुषीर्या अवा नो मन्यो तपसा सजोषाः ॥ ७९
त्वं हि मन्यो अभिभूत्योजाः स्वयंजो भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहावान्त्स हूयमानो अमृताय गछत् ॥ ८०
इडामग्ने, त्वं नो अग्ने, किमित्ते विष्णो, प्र तत्ते अद्य ॥ ८१
दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयछसि । यजमानाय सुन्वते ॥ ८२
भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥ ३ ॥ ८३
इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यछतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥ ८४
सम्राडन्यः स्वराडन्य उच्यते वां महान्ता इन्द्रावरुणा महावसू ।
विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः ॥ ८५

---

[आ ते मह इन्द्रोत्युग्र० । ऋ. ७,२५,१; तै. सं. १,७,१३,२; तै. ब्रा. ३,८,३,३; काठ. ८,१६ । यो जात एव प्रथमो०। ऋ. २,१२,१; अथर्व. २०,३४,१; तै. सं. १,७,१३,२; तै. ब्रा. २,८,३,३; नि. ३,२१; १०,१०; काठ. ८,१६ । मन्युरिन्द्रो मन्युरेवास० । ऋ. १०,८३,२; अथर्व. ४,३२,२; तै. ब्रा. २,४,१,११ । त्वं हि मन्यो अभिभूत्योजाः० । ऋ, १०,८३,४; अथर्व. ४,३२,४ । इडा (०ळा० ) मग्ने० । ऋ. ३,१,२३; ५,११; ६,११; ७,११; १५,७; २२,५; २३,५; सा. ७६; तै. सं. ४,२,४,३; काठ. १६,११; १८,२१; कपि. २५,२ । त्वं नो अग्ने०। ऋ. ४,१,४; १,३१,८; तै. सं. २,५,१२,३; काठ. ३४,१९। किमित्ते विष्णो०। ऋ. ७,१००,६; सा. १६२५; तै. सं. २,२,१२,५; नि. ५,८ । प्र तत्ते अद्य०। ऋ. ७,१००,५; सा. १६२६; तै. सं. २,२,१२, ५; नि. ५,९ । दीर्घस्ते अस्त्वङ्कुशो०। ऋ- ८,१७,१०; अथर्व. २०,५,४; काठ. ६,१० । भद्रा ते हस्ता०। ऋ. ४,२१,९ ]

[ ४ ] वा. ३३,३६-३७,४२; १९,३८;३५,१६; ३,२९,५२; ४,३७; २१,१—२,५-६; १८,७२-७३; २६,८; २७, ३५,३७; ३६,८; १५,५२ । काण्व. ३२,३६-३७,४२; ८,१९; ११,४०; २९,३७; ३५,४८; ३,३७.६०; ४,४९; २३,१-२,५-६; २०,४१-४२; २८,८; २९,४०,४२; ३६,८; १६,७४। [इन्द्रावरुणा युवमध्वराय०। ऋ. ७, ८२,१; तै. सं. २,५,१२,२; तै. ब्रा. २,८,४,५; नि. ५,२ । सम्राड(०ळ)न्यः स्वराड(०ळ)न्यः। ऋ. ७,८२,२]

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिहृताः सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८६

एना मुखेन वायुमिन्द्रवन्तोऽचिष्याम वृजने विश्व ऊती ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८७

कुत्राचिद्यस्य समृतौ रण्वा नरो नृषदने । अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥ ८८

सꣳ यदिषो वनामहे सꣳ हव्या मानुषाणाम् ।
उत द्युम्नस्य शवस ऋतस्य रश्मिमाददे ॥ ८९

यदद्य सूर्य ब्रवोऽनागा उद्यन्मित्राय वरुणाय सत्यम् ।
वयं देवत्रादिते स्याम तव प्रियासो अर्यमन् गृणन्तः ॥ ९०

उद्वां पृक्षासो मधुमन्तो अस्थुरा सूर्यो अरुहच्छुक्रमर्णः ।
यस्मा आदित्या अध्वनो रदन्ति मित्रो अर्यमा वरुणः सजोषाः ॥ ९१

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।
अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥ ९२

समन्या यन्ति ॥ ९३

अपां नपाद्धास्थादुपस्थं जिह्मानामूर्ध्वो विद्युतꣳ वसानः ।
तस्य ज्येष्ठं महिमानꣳ वहन्तीर्हिरण्यवर्णाः परियन्ति यह्वीः ॥ ९४

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परियन्त्यापः ।
स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥ ९५

अग्न आयूꣳषि पवसे ॥ ९६

---

[विश्वाहेन्द्रो अधिवक्ता नो०। ऋ. १,१००,१९; १०२,११; काठ. १३,११ । तन्नो मित्रो वरुणो० । ऋ. १,९४,१६; ९५,११; ९६,९; ९८,३; १००,१९; १०१,११; १०२,११; १०३,८; १०५,१९; १०६,७; १०७,३; १०८,१३; १०९,८; ११०,९; १११,५; ११२,२५; ११३,२०; ११४,११; ११५,६; नि. ५,११; तै. ब्रा. २,८,७,२; तै. आ. ४,४२,३; काठ. १३,११ । एनां मुखेन ( गूषेण ) वायुम्० । ऋ. १,१०५,१९; नि. ५,११ । कुत्राचिद्यस्य समृतौ०। ऋ. ५,७,२; तै. सं. २,११,१,३ । सꣳ यदिषो०। ऋ. ५,७,३; तै. सं. २,१,११,३ । यदद्य सूर्य ब्रवोऽनागाः० । ऋ. ७,६०,१ । उद्वां पृक्षासो मधुमन्तो० । ऋ. ७,६०,४ । उपेमसृक्षि वाजयुः० । ऋ. २,३५,१; काठ. १२,१५; मा. श्रौ. ६,१,३ । समन्या यन्ति० । ऋ. २,३५,३; सा. ६०७; तै. सं. २,५,१२,१; कपि. ४८,४। अपां नपादा० । ऋ. २,३५,९; तै. सं. २,५,१२,१ । तमस्मेरा युवतयो० । ऋ. २,३५,४; तै. सं. २,५,१२,२ । अग्ना(०ग्न)आयूꣳषि० । ऋ. ९,६६,१९; सा. ६२७,१४६४, १५१८; तै. ब्रा. २,६,३,४; तै. आ. २,५,१; तै. सं. १,३,१४,७; ४,२९,१; ५,५,१; ६,६,२; काठ. ४,११; कपि. ३,९;८,५ ]

आयुर्दा देव जरसं॑ वृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।

घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे म एमम् ॥ ९७

गयस्फानो अमीवहा ॥ ९८

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।

गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ॥ ९९

सुत्रामाणं, महीमू३ षु,—मं मे वरुण, तत्त्वायामि, वैश्वानरो न ऊत्या, पृष्टो दिवि-

व्य,—भि त्वा शूर नोनुमं,—स्त्वामिद्धि हवामहे ॥ १००

आपप्राथ महिना वृष्ण्या वृषन् विश्वा शविष्ठ शवसा ।

अस्मां॑ अव मघवन् गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः ॥ १०१

बोधा सु मे मघवन् वाचमेमां॑ यां ते वसिष्ठो अर्चति प्रशस्तिम् ।

इमा ब्रह्म सधमादे जुषस्व ॥ १०२

रेवतीर्नः सधमादा इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १०३

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।

अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १०४

आ नो अग्ने सुचेतुना ॥ १०५

आ नो अग्ने रयिं भर सत्रासाहं॑ वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥ १०६

---

[ आयुर्दा देव जरसं॑० । काठ. ११,१३ । गयस्फानो अमीवहा० । ऋ. १,९१,१२; तै. सं. ४,३,१३,५ । या ते धामानि हविषा० । ऋ. १,९१,१९; तै सं. १,२,१०,१; तै. ब्रा. २,८,३,१; काठ. ११,३ । सुत्रामाणं पृथिवीं० । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै. सं. १,५,११,५; काठ. २,३ । महीमू षु मातरं० । तै. सं. १,५,११,५; काठ. ३०,४—५; कपि. ४६,७ । इमं मे वरुण० । ऋ. १,२५,१९; सा. १५८५; तै. सं. २,१,११,६; काठ. ४,१६ । तत्त्वायामि ब्रह्मणा० । ऋ. १,२४,११; तै. सं. २,१,११,६; काठ. ४,१६ । वैश्वानरो न ऊत्या० ( ऊतय ) । तै. सं. १,५,११,१; काठ. ४,१६ । पृष्टो दिवि० । ऋ. १,९८,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६,४ । अभि त्वा शूर नोनुमः० । ऋ. ७.३२,२२; सा. २३३,६८०; अथर्व. २०,१२१,१; तै. सं. २,४,१४,२; काठ. १२, १५। त्वामिद्धि हवामहे०। ऋ. ६,४६,१; सा. २३४,८०९; अथर्व. २०,९८,१; तै.सं. २,४,१४,३; काठ. १२,१५। आपप्राथ महिना०। ऋ. ८,७०,६; सा. ८६३; अथर्व. २०,८१,२; ९२,११। बोधा सु मे मघवन्० । ऋ. ७,२२,३; सा. ९२९; अथर्व. २०,११७,३; काठ. १२,१५ । रेवतीर्नः सधमादा इन्द्रे० । ऋ.१,३०,१३; सा. १५३; १०८४; अथर्व. २०,१२२,१; तै. सं १,७,१३,५; २,२,१२,८; ४,१४,४; काठ. ८,१७; १०,१२; १२,१५ । प्रो ष्वस्मै पुरोरथम्० । ऋ. १०,१३३.१; सा. १८०१; अथर्व. २०,९५,२; तै सं. १,७,१३,५; तै. ब्रा. २,५,८,१ । आ नो अग्ने सुचेतु(०त)ना० । ऋ. १,७९,९; सा. १५२६; तै. ब्रा. २,४,५,३; काठ. २,१४ । आ नो अग्ने रयिं भर० । ऋ. १,७९,८; सा. १५२५; काठ. १०,११ ]

इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १०७
मदे मदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
संगृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आभर ॥ १०८
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १०९
ता अस्य पृशनायुवः सोमँ श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रँ हिन्वन्ति सायकँ वस्वीरनु स्वराज्यम् ॥ ११०
घृतं न पूतं तनूररेपाः शुचि हिरण्यम् । तत्ते रुक्मो न रोचत स्वधावः ॥ १११
ओभे सुश्चन्द्र विश्पते ॥ ११२
आर्यमा याति वृषभस्तुराषाड् दाता वसूनि विदधे तनूपाः ।
सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु ॥ ११३
ये तेऽर्यमन् बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति ।
तेभिर्नो देव महि शर्म यछ शं नो भव द्विपदे शं चतुष्पदे ॥ ११४
उदग्ने शुचयस्तव,—ऽयमग्निर्वीरतम,—स्तत् सूर्यस्य, भद्रा अश्वाः, सप्त त्वा हरितो रथे,
तरणिर्विश्वदर्शतः ॥ ११५

---

[इन्द्रो मदाय वावृधे० । ऋ. १,८१,१; सा. ४११,१००२; अथर्व. २०,५६,१ । मदे मदे हि नो ददिः० । ऋ. १,८१,७; अथर्व. २०,५६,४; तै. ब्रा. २,४,४,७; काठ. १०.१२ । ता अस्य नमसा सहः०। ऋ. १.८४, १२; सा. १००७; अथर्व. २०,१०९,३; काठ. १२,१५ । ता अस्य पृशनायुवः० । ऋ.१,८४,११; सा. १००६; अथर्व. २०,१०९,२ । घृतं न पूतं तनूः० । तै. सं. २,२,१२,७ । ओभे ( उभे ) सुश्चन्द्र विश्पते० ( सर्पिषो )। ऋ. ५,३,९; सा. १०२४; मै. २,१३,५; तै. सं. २.२,१२,७; ४.४.४,६ । आर्यमा याति वृषभः० । तै. सं. २,३,१४,४ । ये तेऽर्यमन् बहवो० । तै. सं. २,३,१४.४ । उदग्ने शुचयस्तव०। ऋ. ८, ४४,१७; सा. १५३४; तै. सं. १,३,१४,८; ५.५.३, २ ४,१४.४ । अयमग्निर्वीरतमः० । तै. सं ४,७,१३, ४, काठ. १८,१८; कपि. २९,६ । तत्सूर्यस्य देवत्वं० । ऋ. १,११५,४; अथर्व. २०.१२३,१; तै. ब्रा. २.८,७, १; नि. ४,११ । भद्रा अश्वाः० । ऋ. १.११५,३; तै. ब्रा. २ ८,७.१ । सप्त त्वा हरितो रथे० । ऋ १, ५०,८; सा. ६४०; अथर्व. १३,२,२३; २०.४७,२०; तै. सं. २,४,१४,४; क ठ. ९,१९; ११,१ । तरणिर्विश्वदर्शतः०। ऋ. १;५०,४; सा. ६३५; अथर्व. १३,२.१९; २०,४७,१६; तै. सं. १,४,३१,१; तै. आ. ३,१६,१; काठ. १०,१३ ।

चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं॒ वि च पश्येम ॥ ११६

सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसः ॥ ४ ॥ ११७

युवं॒ सुराममश्विना ॥ ११८

होता यक्षदश्विनौ सरस्वतीमिन्द्रं॒ सुराम्णा॒ सोमानां पिबतु मदन्ता॒ व्यन्तु होतर्यज ।
पुत्रमिव पितरौ ॥ ११९

इन्द्रः सुत्रामा स्ववं अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ १२०

तस्य वयं॒ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववं इन्द्रो अस्मदाराच्चिद् द्वेषः सनुतर्युयोतु ॥ १२१

अग्ने वाजस्य गोमतः ॥ १२२

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥ १२३

सं॒ समि,—दैना वो अग्निं,—मा ते अग्ना इधीमह्य,—ग्ने त्री ते वाजिना त्री षधस्था ॥ १२४

त्रिरग्निर्बलभिद्बलं भित्त्वा सहस्रमैरयत् । शूरो जैतापराजितः ॥ १२५

त्रिरह्नः पवते वृषा सोमः शुक्राभिरूतिभिः । वाजी सहस्रसातमः ॥ १२६

सं॒ वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।
जुषेथा॒ यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ १२७

---

[चक्षुर्नो धेहि चक्षुषे० । ऋ. १०,१५८,४; काठ. ९,१९। सुसंदृशं त्वा वयं प्रति०। ऋ. १०,१५८,५; १, ८२,३; तै. सं. १,८,५,१; काठ. ९,६;९,१९; ३६,१३; कपि. ८,९ ]

[ ५ ] तै. ३,२,११; ३,१,११ । वा. १०,३३; २०,५१—५२,७६; २१,४१—४३; १५,३०-३२,३५,३८-३९; १८, ६६; १२,१९ । काण्व. ११,४६; २२,३६-३७,६१; २३,४२—४४; १६,५१,५३-५४,५७,६०-६१; १३,२०।
[ युवं॒ सुराममश्विना० । ऋ. १०,१३१,४; अथर्व. २०,१२५,४; तै. ब्रा. १,४,२,१; काठ. १७,१९ । होता यक्षदश्विनौ० । तै. ब्रा. २,६,११,१० । इन्द्रः सुत्रामा स्ववं ( ०वाँ )। ऋ. ६,४७,१२; १०,१३१,६; अथर्व. ७,९१,१; २०,१२५,६; तै. सं. १,७,१३,४; काठ. ८,१६ । तस्य वयं॒ सुमतौ० । ऋ. ६,४७,१३; १०,१३१,७; अथर्व. ७,९२,१; २०,१२५,७; तै. सं. १,७,१३,५; नि. ६,७ । अग्ने वाजस्य गोमतः० । ऋ. १,७९,४; सा. ९९,१५६१; तै. सं. ४,४,४,५; काठ. ३९,१५ । भद्रो नो अग्निराहुतो० । ऋ. ८,१९,१९; सा. १११,१५५९; काठ ३९,१५ । सं॒ समिद्० । ऋ. १०,१९१,१; अथर्व. ६,६३,४; तै. सं. २,६,११,४; ४,४, ४,४; काठ. २,१५ । एना वो अग्निम्० । ऋ. ७,१६,१; सा. ४५,७४९; तै. सं. ४,४,४,४; नि. ३,२१; काठ. ३९.१५ । आ ते अग्ना (०ग्न) इधीमहि० । ऋ. ५,६,४; सा. ४१९,१०२२; अथर्व. १८,४,८८; तै. सं. ४, ४ ४,६; काठ. ९,६; ३९,१४ । अग्ने त्री ते वाजिना० । ऋ. ३,२०,२; तै. सं. २,४,११,२; ३,२,११,१ । सं॒ वां कर्मणा समिषा० । ऋ. ६,६९,१; तै. सं. ३,२,११,१; काठ. १२,१४; २३,११ ]

उभा जिग्यथुः ॥ १२८

इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्।
शतꣳ वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान् ॥ १२९

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः।
अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरꣳ विक्रमस्व ॥ १३०

त्रीण्यायूꣳषि तव जातवेदः ॥ १३१

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ १३२

विद्मा ते अग्ने त्रेधा त्रयाणि ॥ १३३

वृषणं त्वा त्रिककुभं त्रिमूर्धानं त्रिसंदृशम्। वर्ष्मन् पृथिव्या ईमहे अग्ने हव्याय वोढवे॥ १३४

अतिविद्धा, ऽस्येदेवा ॥ १३५

पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु ॥ १३६

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः।
इरा विश्वस्मै भुवनाय जायते यत् पर्जन्यः पृथिवीꣳ रेतसावति ॥ १३७

यस्तस्तम्भ सहसा वि ज्मो अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥ १३८

विभिद्या पुरꣳ शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत्।
बृहस्पतिरुषसꣳ सूर्यं गामर्कꣳ विवेद स्तनयन्निव द्यौः ॥ १३९

---

[ उभा जिग्यथुः०। ऋ. ६,६९,८; अथर्व. ७,४४,१; तै. सं. ३,२,११,२; ७,१,६,७; काठ. १२,१४। इन्द्राविष्णू दृꣳहिताः०। ऋ. ७,९९,५; तै. सं. ३,२,११,३। उत माता महिषम्०। ऋ. ४,१८,११; तै. सं. ३,२,११,३। त्रीण्यायूꣳषि तव जातवेदः०। ऋ. ३,१७,३; तै. सं. ३,२,११,२; काठ. २,१५;१२,१४। अग्निरस्मि जन्मना०। ऋ. ३,२६,७; नि. १४,२। विद्मा ते अग्ने त्रेधा०। ऋ. १०,४५,२; तै. सं. ४,२,२,१; काठ. ९,१९;१६,९। अतिविद्धा विथुरेणा०। मै. ३,८,३; ऋ. ८,९६,२; काठ. ९,१९। अस्येदेवा (०व)। मै. ४,१२,२; ऋ. १,६१,९-१०; अथर्व. २०,३५,९-१०; तै. सं. २,४,१४,२; काठ. ८,१७। पर्जन्याय प्रगायत०। ऋ. ७,१०२,१; तै. ब्रा. २,४,५,५; तै. आ. १,२९,१; काठ. २०,१५। प्र वाता वान्ति पतयन्ति०। ऋ. ५,८३,४; तै. आ. ६,६,२। यस्तस्तम्भ सहसा०। ऋ. ४,५०,१; अथर्व. २०,८८,१; काठ. ९,१९। विभिद्या पुरꣳ शयथा०। ऋ. १०,६७,५; अथर्व. २०,९१,५; काठ. ९,१९ ]

❋

कृष्णं नियानꣳ हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते ॥ १४०
आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिरागात् पतन्ति मिहः स्तनयन्त्यभ्रा ॥ १४१
वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषाꣳ वृष्टिरसर्जि ॥ १४२
पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः ।
यत्क्रीडथ मरुत ऋष्टिमन्ता आप इव सध्र्यञ्चो धवध्वे ॥ १४३
सृजन्ति रश्मिमोजसा पन्थाꣳ सूर्याय यातवे । ते भानुभिर्वितस्थिरे ॥ १४४
बर्हिष्ठेभिर्विहरन् यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अ३प्स्वन्तः ॥ १४५
सूर्यो अपो विगाहते रश्मिभिर्वाजसातमः । बोधात् स्तोमैर्वयो दधत् ॥ ५ ॥ १४६
अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ १४७
प्र वा एको मिमय भूर्यागो यन्मा पितेव कितवꣳ शशास ।
आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥ १४८
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥ १४९
याभ्याꣳ ३स्वरजनन्नग्र एव या आतस्थतुर्भुवनानि विश्वा ।
प्र चर्षणी वृषणा वज्रबाहुमग्निमिन्द्रꣳ वृत्रहणꣳ हुवेम ॥ १५०
अग्ना इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोपयातम् । अमर्धन्ता सोमपेयाय देवा॥ १५१

---

[कृष्णं नियानꣳ हरयः०। ऋ. १,१६४,४७; अथर्व. ६,२२,१; ९,१०,२२; १३,३,९; तै. सं. ३,१,११,४; नि. ७,२४; काठ. ११.९; ११,१३ । आ ते सुपर्णा०। ऋ. १,७९,२; तै. सं. ३,१,११,५; काठ. ११,१३ । वाश्रेव विद्युन्मिमाति वत्सं० । ऋ. १,३८,८; तै. सं. ३,१,११,५; तै. आ. १,१२,५; काठ. ११,१३ । पर्वतश्चिन्महि वृद्धो० । ऋ. ५,६०,३; तै. सं. ३,१,११,५ । सृजन्ति रश्मिमोजसा० । ऋ. ८,७,८ ]

[ ६ ] तै. ३.३,११; ३,४,११ । वा. ३३,५१; ७,३२; ३३,२४,४३; ३४,८—१०, ३१;११,६३; १६,१६; १७,१७; १२,३; १०,२०; २३,६५ । काण्व. ३२,२४,४३,५१; ७,३२; १२,३,१७,६५; १८,१७; ३३,३—४,२५; १७, १६; ११,२९, २५,६७ । [ अर्वाञ्चो अद्या भवता० । ऋ. २,२९,६ । प्रवा ( व ) एको मिमय० । ऋ. २, २९,५ । आ घा ये अग्निमिन्धते० । ऋ. ८,४५,१; सा. १३३,१३३८; तै. ब्रा. २,४,५,७; नि. ६,१४; काठ. १३,१५ । याभ्याꣳ ३स्वरजनन्नग्र० । तै. ब्रा. २,४,५,७ । अग्ना (०ग्न) इन्द्रश्च दाशुषो० । ऋ. ३,२५,४; तै. ब्रा. २,४,५,७ ]

अन्वद्य नो अनुमति,—रन्विदनुमते त्वम् ॥ १५२

राकामहँ सुहवाँ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याछिद्यमानया ददातु वीरँ शतदायमुक्थ्यम् ॥ १५३

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषँ सुभगे रराण ॥ १५४

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १५५

या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ १५६

कुहूमहँ सुकृतँ विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ १५७

कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामँ रायस्पोषं चिकितुषे दधातु ॥ १५८

धाता दधातु नो रयिं प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिँ सत्यधर्मणः ॥ १५९

धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।
तस्मै देवा अमृताः सँव्ययन्ताँ विश्वे देवासो अदितिः सजोषाः ॥ १६०

---

[अन्वद्य (अनु नोऽद्या०) नो अनुमतिः० । ऋ. परि, ३,३; अथर्व. ७,२०,१; कपि. ३६,२ । अन्विदनुमते त्वम्० । ऋ. परि. ३,४; अथर्व. ७,२०,२; तै. सं. ३,३,११,३; ४,४,१२,५; ७,१५,५; तै. ब्रा. ३,१,३,३; तै. आ. ४,११,२; काठ. १३,१६; २२,१४—१५ । राकामहँ सुहवाँ० । ऋ. २,३२,४; अथर्व. ७,४८,१; तै. सं. ३,३,११,५; नि. ११,३१; काठ. १३,१६ । यास्ते राके सुमतयः । ऋ. २,३२,५, अथर्व. ७,४८,२; तै. सं. ३,३,११,५; काठ. १३,१६। सिनीवालि पृथुष्टुके०। ऋ. २,३२,६; अथर्व. ७,४६,१; २०,२; ६८,१; तै. सं. ३,१,११,३; ३,११,५; नि. ११,३२; काठ. १३,१६। या सुपाणिः(सुबाहुः) स्वंगुरिः०। ऋ. २,३२,७; अथर्व. ७,४६,२; तै. सं. ३,१,११,४; ३,११,५; काठ. १३,१६ । कुहूमहँ( कुहूं देवीं० ) सुकृतँ०। अथर्व. ७,४७,१; तै. सं. ३,३,११,५; काठ. १३,१६ । कुहूर्देवानाममृतस्य पत्नी० । अथर्व. ७,४७,२; तै. सं. ३,३, ११,५; काठ. १३.१६ । धाता दधातु नो रयिं० । अथर्व. ७.१७,१--२; तै. सं. ३,३,११,३; काठ. १३,१६ । धाता (विश्वा वार्या) ददातु ( ०धा० ) दाशुषे० । अथर्व. ७,१७,२—३; तै. सं. ३,३,११,३ ]

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।
उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥ १६१
प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।
प्रातर्हि यज्ञमश्विना दधाते प्रशꣳसन्ति कवयः पूर्वभाजः ॥ १६२
इन्द्रा नु पूषणा वयꣳ सख्याय स्वस्तये । हुवेम वाजसातये ॥ १६३
यन्निर्णिजा ॥ १६४
त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॥ १६५
हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।
सुगार्हपत्याः समिषो दिदीह्यस्म३र्यक् संमिमीहि श्रवाꣳसि ॥ १६६
त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः ॥ १६७
ब्रह्मा देवानां पदवीः कवीनां कविर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् ॥ १६८
आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे । सत्यसवꣳ सवितारम् ॥ १६९
आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् ॥ १७०
उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः ।
गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिम३भ्यर्का अनावन् ॥ १७१
हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाꣳ अगायत् ॥ १७२

---

[प्रातर्यजध्वमश्विना हिनोत० । ऋ. ५,७७,२; तै. ब्रा. २,४,३,१३; नि. १२,५ । प्रातर्यावाणा प्रथमा० । ऋ. ५,७७,१; तै. ब्रा. २,४,३,१३ । इन्द्रा नु पूषणा वयꣳ० । ऋ. ६,५७,१; सा. २०२; काठ. २३,११ । यन्निर्णिजा रेक्णसा० । ऋ. १,१६२,२; तै. सं. ४,६,८,१; काठ. ५,६,३ । त्वमग्ने बृहद्वयो० । ऋ. ८, १०२,१; तै. सं. ३,४,११,१ । हव्यवाड (ळ) ग्निरजरः पिता० । ऋ. ५,४,२; तै. सं. ३,४,११,१ । त्वं च सोम नो वशो० । ऋ. १,९१,६; तै. सं. ३,४,११,१; काठ. २३,१२ । ब्रह्मा देवानां पदवीः० । ऋ. ९, ९६,६; सा. ९४४; तै. सं. ३,४,११,१; तै. आ. १०,१०,१; नि. १४,१३; काठ. २३,१२ । आ विश्वदेवꣳ सत्पतिꣳ० । ऋ. ५,८२,७; तै. सं. ३,४,११,२ । आ कृष्णेन रजसा० । ऋ. १,३५,२; तै. सं. ३,४,११,२। उदप्रुतो न वयो० । ऋ. १०,६८,१; अथर्व. २०,१६,१; तै. सं. ३,४,११,३; काठ. २३,१२ । हꣳसैरिव सखिभिः० । ऋ. १०,६७,३; अथर्व. २०,९१,३; तै. सं. ३,४,११,३ ]

त्वं᳘ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ॥ १७३
भुवस्त्वमिन्द्र ब्रह्मणो महान् भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄं᳘श्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ १७४
प्र समित्रानमीवासः ॥ १७५
यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥ १७६
यत्किंचेदं᳘ वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ १७७
यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥ १७८
मा नस्तोके तनये मा ना आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥ १७९
य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ॥ १८०
विश्वा रूपाणि ॥ १८१
अश्विना यज्ञमागतं दाशुषः पुरुदं᳘ससा । पूषा रक्षतु नो रयिम् ॥ १८२
इमं᳘ यज्ञमश्विना वर्धयन्तेमौ वी३र्यं᳘ यजमानाय धत्ताम् ।
इमौ पशून् रक्षता᳘ विश्वतो नः पूषा नः पातु सदमप्रयुच्छन् ॥ १८३
प्र ते महे सरस्वति सुभगे वाजिनीवति । सत्यवाचे भरे मतिम् ॥ १८४
इदं ते हव्यं घृतवत्सरस्वति सत्यवाचे प्रभृतेमा हवीं᳘षि ।
इमानि त उदिता शंतमानि तेभिर्वयं᳘ सुभगासः स्याम ॥ ६ ॥ १८५

[ २७८८ ]

॥ इति खिलकाण्डे द्वादशः प्रपाठकः ॥१२॥



---

[त्वं᳘ सुतस्य पीतये० । ऋ. १,५,६; अथर्व. २०,६९,४; तै. सं. ३,४,११,४; काठ. २३,१२ । भुवस्त्वमिन्द्र ब्रह्मणो ( ब्रह्मणा )० । ऋ. १०,५०,४; तै. सं. ३,४,११,४; काठ. २३,१२ । प्र समित्रानमीवासः० । ऋ. ३,५९,२—३; तै. सं. ३,४,११,५; २,८,७,५; नि. २,१३ । यच्चिद्धि ते विशो यथा० । ऋ. १,२५,१; तै. सं. ३,४,११,५—६ । यत्किंचेदं᳘ वरुण दैव्ये० । ऋ. ७,८९,५; अथर्व. ६,५१,३; तै. सं. ३,४,११,६; तै. ब्रा. २,८,१,६; काठ. २३,१२ । यथा नो अदितिः० । ऋ. १,४३,२; तै. सं. ३,४,११,२; काठ. २३,१२ । मा नस्तोके तनये० । ऋ. १,११४,८; तै. सं. ३,४,११,२; ४,५,१०,३; तै. ब्रा. २,८,६,९; तै. आ. १०,५३; काठ. २३,१२ । य इमा विश्वा जातानि० । ऋ. ५,८२,९ । विश्वा रूपाणि० । ऋ. ५,८१,२; तै. सं. ४,१,१०,४; नि. १२,१३; काठ. १६,८; १०,१२; कपि. ३२,१ । अश्विना यज्ञमागतं० । तै. ब्रा. २,५,४,५ । इमं᳘ यज्ञमश्विना० । तै. ब्रा. २,५,४,६ । इदं ते हव्यं घृतवत्० । तै. ब्रा. २,५,४,६ ]

अथ त्रयोदशः प्रपाठकः ।

प्र देवं देव्या धियेत्यष्टौ ॥ १

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥ २
उच् श्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥ ३
समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरꣳ सुवीरम् ।
आरे अस्मदमतिं बाधमाना उच् श्रयस्व महते सौभगाय ॥ ४

ऊर्ध्व ऊ षु ण ऊतये ॥ ५

ऊर्ध्वो नः पाह्यꣳहसो नि केतुना विश्वꣳ समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ ६
जातो जायते सुदिनत्वे अह्नाꣳ समर्य आ विदथे वर्धमानः ।
पुनन्ति धीरा अपसो मनीषा देवया विप्रा उदियर्ति वाचम् ॥ ७
युवा सुवासाः परिवीता आगात् स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवया उन्नयन्ति स्वा३ध्यो मनसा देवयन्तः ॥ ८

अभि त्वा देव सवित,—रिति त्रयोदश ॥ १ ॥ ९

होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धं नाभा पृथिव्याः संगथे वामस्य वर्ष्मन् दिव इडस्पदे, वेत्वाज्यस्य, होतर्यज, होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपां, मध्वाद्य देवो

---

[ १ ] तै. ब्रा. ३,६,१; काठ. १५,१२। वा. ४,१०; ९,३७; ११,४२। काण्व. ४,१३; ११,३; १२,४२। [प्र देवं देव्या धिया०। ऋ. १०,१७६,२; तै. सं. ३,५,११,१; काठ. १५,१२। अञ्जन्ति त्वामध्वरे०। ऋ. ३,८,१; तै. ब्रा. ३,६,१,१; नि. ८,१८; काठ. १५,१२। उच् श्रयस्व वनस्पते०। ऋ. ३,८,३; तै. ब्रा. ३,६,१,१; काठ. १५,१२। समिद्धस्य श्रयमाणः०। ऋ. ३,८,२; तै. ब्रा. ३,६,१,१; काठ. १५,१२। ऊर्ध्व ऊ षु ण ऊतये०। ऋ. १,३६,१३; सा. ५७; तै. सं. ४,१,४,२; ५,१,५,३; तै. ब्रा ३,६,१,२; तै. आ. ४,२०,१; काठ. १५,१२; १६,४। ऊर्ध्वो नः पाह्यꣳहसो०। ऋ. १,३६,१४; तै. ब्रा. ३,६,१,२; काठ. १५,१२। जातो जायते सुदिनत्वे०। ऋ. ३,८,५; तै. ब्रा. ३,६,१,३। युवा सुवासाः परिवीता(त)०। ऋ. ३,८,४; तै. ब्रा. ३,६,१,३; तै. आ. १,२७,२; काठ. १५,१२। अभि त्वा देव सवितः०। ऋ. १,२४,३; तै. सं. ३,५,११,३; काठ. १५,१२; २८,७; कपि. ४४,७ ]

[ २ ] तै. ब्रा. ३,६,२। वा. २८,१—१०,२४—३४; २१,२९—४०। काण्व. ३०,१—१०,२४-३४; २३,३०-४१।

देवेभ्यो देवयानान् पथो अनक्तु, वेत्वाज्यस्य, होतर्यज, होता यक्षन्नराशꣳसं नृशस्तं नॄꣳप्रणेत्रं, गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री, वेत्वाज्यस्य, होतर्यज, होता यक्षदग्निमिड ईडितो देवो देवाꣳ आ च वक्षद्, दूतो हव्यवाडमूरा उपेमं यज्ञमुपेमां देवो देवहूतिमवतु, वेत्वाज्यस्य, होतर्यज, होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा, अस्मिन् यज्ञे वि च प्र च प्रथताꣳ स्वासस्थं देवेभ्या, एमेनदद्य वसवो रुद्रा आदित्याः स्वदन्तु, प्रियमिन्द्रस्यास्तु, वेत्वाज्यस्य, होतर्यज, होता यक्षद्दुर ऋष्वाः कवष्यो कोशधावनी,—रुदाताभिजिहताꣳ, वि पक्षोभिः श्रयन्ताꣳ, सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो, व्यन्त्वाज्यस्य, होतर्यज, होता यक्षदुषासानक्ता बृहती सुपेशसा नॄꣳपतिभ्यो योनिं कृण्वाने, सꣳस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदताꣳ, वीतामाज्यस्य, होतर्यज, होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा, स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा, संतवसेमꣳ यज्ञं दिवि देवेषु धत्ताꣳ, वीतामाज्यस्य, होतर्यज, होता यक्षत्तिस्रो देवीरपसामपस्तमा, अच्छिद्रमद्येदमपस्तन्वतां, देवेभ्यो देवीर्देवमपो, व्यन्त्वाज्यस्य, होतर्यज, होता यक्षत्त्वष्टारमचिष्टुमपाकꣳ रेतोधाꣳ विश्रवसꣳ यशोधां पुरुरूपमकामकर्शनꣳ, सुपोषः पोषैः स्यात् सुवीरो वीरै,—वेत्वाज्यस्य, होतर्यज, होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारꣳ, शशमन्नरः, स्वदात्स्वधिति,—ऋतुथाद्य देवो देवेभ्यो हव्यावाड्, वेत्वाज्यस्य, होतर्यज ॥ २ ॥ १०

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ ११

तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥ १२

नराशꣳसस्य महिमानमेषामुपस्तोपाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्तु देवा उभयानि हव्या ॥ १३

---

[ ३ ] तै. ब्रा. ३,६,३ । काठ. १६,२० । वा. २९,२५—३५ । काण्व. ३१,३७—४७ । [ समिद्धो अद्य मनुषो० । ऋ. १,११०,१; अथर्व. ५,१२,१; तै. ब्रा. ३,६,३,१; नि. ८,५; काठ. १६,२०। तनूनपात् पथ ऋतस्य०। ऋ. १०,११०,२; अथर्व. ५,१२,२; तै. ब्रा. ३,६,३,१; नि. ८,६; काठ. १६,२० । नराशꣳसस्य महिमानम्० । ऋ. ७.२,२; तै. ब्रा. ३,६,३,१; नि. ८,७; काठ. ३७,४ ]

आजुह्वाना ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजीयान् ॥ १४
प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ १५
व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ १६
आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ १७
दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ १८
आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥ १९
य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ २०
उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ ३ ॥ २१

अग्निर्होता नो अध्वरे वाजी सन् परिणीयते । देवो देवेषु यज्ञियः ॥ २२

---

[ आजुह्वाना ईड्यो वन्द्यश्चा०( श्च ) । ऋ. १०,११०,३; अथर्व. ५,१२,३; तै. ब्रा. ३,६,३,२; नि. ८,८; काठ. १६,२० । प्राचीनं बर्हिः प्रदिशा० । ऋ, १०,११०,४; अथर्व. ५,१२,४; तै. ब्रा. ३,६,३,२; नि. ८,९; काठ. १६,२० । व्यचस्वतीरुर्विया विश्रयन्तां० । ऋ. १०,११०,५; अथर्व. ५,१२,५; तै. ब्रा. ३,६,३,३; नि. ८,१०; काठ. १६,२०; आ सुष्वयन्ती यजते० । ऋ. १०,११०,६; अथर्व. ५,१२,६; तै. ब्रा. ३,६,३,३; नि. ८,११; काठ. १६,२० । दैव्या होतारा प्रथमा सुवाचा ० । ऋ. १०,११०,७; अथर्व. ५,१२,७; तै. ब्रा. ३,६,३,३; नि. ८,१२; काठ. १६,२० । आ नो यज्ञं भारती० । ऋ. १०,११०,८; अथर्व. ५,१२,८; तै. ब्रा. ३,६,३,४; नि. ८,१३; काठ. १६,२० । य इमे द्यावापृथिवी जनित्री० । ऋ. १०,११०,९; अथर्व. ५,१२,९; तै. ब्रा. ३,६,३,४; नि. ८,१४, काठ. १६,२० । उपावसृज त्मन्या समञ्जन्० । ऋ. १०,११०,१०; अथर्व. ५,१२,१०; तै. ब्रा. ३,६,३,४; नि. ८,१७; काठ. १६,२० ]

[ ४ ] तै. ब्रा. ३,६,४–६ । वा. ११,२५; ४,२०;१,१५ । काण्व. १२,२५; ४,२६; १,२३ । [ अग्निर्होता नो अध्वरे० । ऋ. ४,१५,१; तै. ब्रा. ३,६,४,१; काठ. १६,२१;३८,१२ ]

परि त्रिविष्ट्यध्वरꣳ यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ २३

परि वाजपतिः कविः ॥ अजैदग्निरसनद्वाजं, नि देवो देवेभ्यो हव्यावाट्, प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतर्हव्या देवेभ्यो, दैव्याः शमितार उत मनुष्या आरभध्व,—मुपनयत मेध्यादुर आशासाना मेधपतये मेधं, प्रास्मा अग्निं भरत, स्तृणीत बर्हि,—रन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य, उदीचीनाꣳ अस्य पदो निधत्तात्, सूर्यं चक्षुर्गमयताद्, वातं प्राणमन्ववसृजता,—दन्तरिक्षमसुं, पृथिवीꣳ शरीर,—मेकधास्य त्वचमाछ्यतात्, पुरा नाभ्या अपिशसो वपामुत्खिदता,—दन्तरेवोष्माणꣳ वारयताच्, श्येनमस्य वक्षः कृणुतात्, प्रशसा बाहू, शला दोषणी, कश्यपेवांसाꣳ,—छिद्रे श्रोणी, कवषोरू स्रेकपर्णाष्ठीवन्ता, षड्विꣳशतिरस्य वङ्क्रय,—स्ता अनुष्ठुयोच्च्यावयताद्, गात्रं गात्रमस्यानूनं कृणुता,—दूवध्यगोहं पार्थिवं खनता,—दस्ना रक्षः सꣳसृजताद्, वनिष्ठुमस्य मा राविष्टो,—रूकं मन्यमाना नेद्वस्तोके तनये रविता रव,—दध्रिगो शमीध्वꣳ, सुशमि शमीध्वꣳ, शमीध्वमध्रिगो ॥ २४-२५

अध्रिगुश्च विपापश्च देवानाꣳ शमितारौ ।
ता एनं प्रविद्वाꣳसौ श्रपयतꣳ यथास्य श्रपणं तथा ॥ ४ ॥ २६

जुषस्व सप्रथस्तमम् ॥ २७

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ २८

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन् देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ २९

---

[ परित्रिविष्ट्यध्वरꣳ० । ऋ. ४,१५,२; तै. ब्रा. ३,६,४,१; १६,२१ । परि वाजपतिः कविः० । ऋ.४,१५,३; सा. ३०; तै. सं. ४,१,२,५; तै. ब्रा. ३,६,४,१; काठ. १६,२,२१; १९,३;३८,१२; कपि. ३०,१ । अजैदग्निरसद्वाजं० । तै. ब्रा. ३,६,५; काठ. १६,२१ । स्तृणीत बर्हिः० । ऋ. १,१३,५ । अन्वेनं माता मन्यतामनु० । काठ. १६,२१ । उदीचीनाꣳ० । ऐ. ब्रा. २,६ ]

[ ५ ] तै. ब्रा. ३,६,७-९ । काठ. १६,२०-२१ । वा. ३,१३; २१,४०—४१,४३-४७; २९,३६; ३३,९; १२,५१ । काण्व. ३,१९; २३,४२-४६; ३१,४८; ३२,९; १३,५२ । [ जुषस्व सप्रथस्तमम्० । ऋ. १,७५,१; तै. ब्रा. ३,६,७,१; काठ. १६,२१ । इमं नो यज्ञममृतेषु० । ऋ. ३,२१,१; तै. ब्रा. ३,६,७,१; काठ. १६,२१ । घृतवन्तः पावक ते० । ऋ. ३,२१,२; तै. ब्रा. ३,६,७,१-२; काठ. १६,२१ ]

*

तुभ्यꣳ स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥ ३०

तुभ्यꣳ श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ ३१

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहि ॥ ३२

होता यक्षदग्निꣳ स्वाहा, ऽऽज्यस्य स्वाहा, मेदसः स्वाहा, स्तोकानाꣳ स्वाहा, स्वा-
हाकृतीनाꣳ स्वाहा, हव्यसूक्तीनाꣳ स्वाहा, देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु,
होतर्यज ॥ ३३

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवाः ॥ ३४

अग्निर्वृत्राणि जङ्घनत् ॥ होता यक्षदग्निमाज्यस्य, जुषताꣳ हविं,—होतर्यज ॥ त्वꣳ सो-
मासि सत्पतिः ॥ होता यक्षत्सोममाज्यस्य, जुषताꣳ हविं,—होतर्यज ॥ शुचिं नु स्तोमम् ॥
होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो, जुषेताꣳ हविं,—होतर्यज॥ श्नथद् वृत्र,—मुभा वामि-
न्द्राग्नी॥ होता यक्षदिन्द्राग्नी पुरोडाशस्य, जुषेताꣳ हविं,—होतर्यज ॥ प्र चर्षणिभ्या, इडामग्ने,
होता यक्षदग्निं पुरोडाशस्य, जुषताꣳ हविं,—होतर्यज ॥ ३५-४३

---

[तुभ्यꣳ स्तोका घृतश्चुतो०। ऋ. ३,२१,३; तै. ब्रा. ३,६,७,२; काठ. १६,२१। तुभ्यꣳ श्चोतन्त्यध्रिगो०। ऋ. ३,२१,४; तै. ब्रा. ३,६,७,२; काठ. १६,२१ । ओजिष्ठं ते मध्यतो० । ऋ. ३,२१,५; तै. ब्रा. ३,६,७,२; काठ. १६,२१ । सद्यो जातो व्यमिमीत० । ऋ. १०,११०,११; अथर्व. ५,१२,११; तै. ब्रा. ३,६,३,४; नि. ८,२१; काठ. १६,२० । अग्निर्वृत्राणि जङ्घनद्० । ऋ. ६,१६,३४; सा. ४,१३९६; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४; २०,१४ । त्वꣳ सोमासि सत्पतिः० । ऋ. १.९१,५; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१; काठ. २,१४ । शुचिं नु स्तोमम्० । ऋ. ७,९३,१; तै. सं. १,१,१४,१; तै. ब्रा. २,४,८,३; काठ. १३,१५; २१,१३ । श्नथद् वृत्रम्० । ऋ. ६,६०,१; तै. सं. ४,२,११,१; ३,१३,८; तै. ब्रा. २,८,५,१; काठ. ३,५,७,३; काठ. ४,१५; २१,१३; २३,११ । उभा वामिन्द्राग्नी० । ऋ. ६,६०,१३; तै. सं. १,१,१४,१; ५, ५,१; तै. ब्रा. २,८,५,१; काठ. ६,९; ७,४-५; कपि. ४,८; ५,३-४। प्र चर्षणिभ्या० (भ्यः)। ऋ. १,१०९,६; तै. सं. ४,२,११,१; तै. ब्रा. २,८,५,१; काठ. ४,१५ । इडा(ळा)मग्ने० । ऋ. ३,१,२३; ५,११; ६,११; ७,११; १५,७; २२,५; २३,५; सा. ७६; तै. सं. ४,२,४,३ ]

अ॒ग्निꣳ सु॒दीतिꣳ सु॒दृशं॑ गृ॒णन्तो॑ नम॒स्याम॒स्त्वेड्यं॑ जातवेदः।
त्वां दू॒तम॑र॒तिꣳ ह॒व्यवा॑हं दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑म् ॥ ४४

इडोप॑हू॒तो॒,—प॑हू॒तेडो,—पा॑स्मां इडा॑ ह्वयता॒,—मिडोप॑हूता मान॒वी घृ॒तप॑दी मैत्रावरु॒णी ॥ ब्रह्म॑ दे॒वकृ॑त॒मुप॑हूतं॒, दैव्या॑ अध्व॒र्यव॒ उप॑हूता॒, उप॑हूता मनु॒ष्या॑ य इ॒मꣳ य॒ज्ञम॒वान् ये च॑ य॒ज्ञ-प॑ति॒ꣳ वर्धा॒,—नुप॑हूते द्यावापृथि॒वी पू॑र्व॒जे ऋ॒ताव॑री दे॒वी दे॒वपु॑त्रे, उप॑हू॒तोऽयꣳ यज॑मान॒ उत्त॑र-स्यां देवय॒ज्याया॒,—मुप॑हूतो॒ भूय॑सि ह॒विःक॑रण॒े, दि॒व्ये धाम॒न्नुप॑हूतो, दे॒वा म॑ इ॒दꣳ ह॒विर्जु॑-षन्ता॒मिति॒, तस्मि॒न्नुप॑हूतः ॥ ५ ॥ ४५-४६

त्वꣳ ह्य॑ग्ने प्रथ॒मो म॒नोता॒स्या धि॒यो अभ॑वो दस्म॒ होता॑।
त्वꣳ सीꣳ वृषन्नकृणोर्दु॒ष्टरी॑तु॒ सहो॒ विश्व॑स्मै॒ सह॑से॒ सह॑ध्यै ॥ ४७
अधा॒ होता॒ न्यसी॑दो॒ यजी॑यानि॒डस्प॒द इ॒षय॒न्नीड्यः॒ सन्।
तं त्वा॒ नरः॑ प्रथ॒मं दे॒वय॑न्तो म॒हो रा॒ये चि॒तय॑न्तो॒ अनु॑ग्मन् ॥ ४८

वृ॒तेव॒ यन्तं॑ ब॒हुभि॑र्वस॒व्यै॑स्त्वे र॒यिं जा॑गृ॒वाꣳसो॒ अनु॑ग्मन्।
रुश॑न्तम॒ग्निं द॑र्श॒तं बृ॒हन्त॑ꣳ व॒पाव॑न्तꣳ वि॒श्वहा॑ दीदि॒वाꣳस॑म् ॥ ४९
प॒दं दे॒वस्य॒ नम॑सा॒ व्यन्तः॑ श्रव॒स्यवः॒ श्रव॑ आप॒न्नमृ॑क्तम्।
नामा॑नि चिद्दधिरे य॒ज्ञिया॑नि भ॒द्राया॑न्ते रणयन्त॒ संदृ॑ष्टौ ॥ ५०
त्वाꣳ व॑र्धन्ति क्षि॒तयः॑ पृथि॒व्यां त्वाꣳ राय॑ उ॒भया॑सो॒ जना॑नाम्।
त्वं त्रा॒ता त॑रणे॒ चेत्यो॑ भूः पि॒ता मा॒ता सद॒मिन्मानु॑षाणाम् ॥ ५१
स॒प॒र्येण्यः॒ स प्रि॒यो वि॒क्ष्व॑ग्निर्होता॑ म॒न्द्रो निष॑सादा॒ यजी॑यान्।
तं त्वा॑ व॒यं दम॒ आ दी॑दि॒वाꣳस॒मुप॑ ज्ञु॒बाधो॒ नम॑सा सदेम ॥ ५२

---

[अग्निꣳ सुदीतिꣳ०। ऋ. ३,१७,४; तै. ब्रा. ३,६,९,१; काठ. १८,२१]

[ ६ ] तै. ब्रा. ३,६,१०। काठ. १८,२०। [त्वꣳ ह्यग्ने प्रथमो०। ऋ. ६,१,१; तै. ब्रा. ३,६,१०,१; काठ. १८,२०। अधा होता न्यसीदो०। ऋ. ६,१,२; तै. ब्रा. ३,६,१०,१; काठ. १८,२०। वृतेव यन्तं बहुभिर्वसव्यैस्त्वे०। ऋ. ६,१,३; तै. ब्रा. ३,६,१०,१; काठ. १८,२०। पदं देवस्य नमसा०। ऋ. ६,१,४; तै. ब्रा. ३,६,१०,२; नि. ४,१९। त्वाꣳ वर्धन्ति क्षितयः०। ऋ. ६,१,५; तै. ब्रा. ३,६,१०,२; काठ. १८,२०। सपर्येण्यः स प्रियो०। ऋ. ६,१,६; तै. ब्रा. ३,६,१०,३; काठ. १८,२०]

तं त्वा वयꣳ सुऽध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वꣳ विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ५३

विशां कविꣳ विश्पतिꣳ शश्वतीनां नितोशनꣳ वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकꣳ राजन्तमग्निꣳ यजतꣳ रयीणाम् ॥ ५४

सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।
य आहुतिं परि वेदा नमोभिर्विश्वेत् स वामा दधते त्वोतः ॥ ५५

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायाꣳ सुमतौ यतेम ॥ ५६

आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्यस्तरुत्रः ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरꣳ विभाहि ॥ ५७

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ ५८

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन् वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ ६ ॥ ५९

आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् ।
युवꣳ राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः ॥ ६०

होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासेअज्राणाꣳ यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेताꣳ हविर्होतर्यज ॥ ६१

---

[तं त्वा वयꣳ सुऽध्यो०। ऋ. ६,१,७; तै. ब्रा. ३,६,१०,३; काठ. १८,२०। विशां कविꣳ विश्पतिꣳ०। ऋ. ६,१,८; तै. ब्रा. ३,६,१०,३; काठ. १८,२०। सो अग्न ईजे शशमे०। ऋ. ६,१,९; तै. ब्रा. ३,६,१०,४; काठ. १८,२०। अस्मा उ ते महि महे०। ऋ. ६,१,१०; तै. ब्रा. ३,६,१०,४। आ यस्ततन्थ रोदसी०। ऋ. ६,१,११; तै. ब्रा. ३,६,१०,५; काठ. १८,२०। नृवद्वसो सदमिद्धेह्यस्मे०। ऋ. ६,१,१२; तै. ब्रा. ३,६,१०,५; काठ. १८,२०। पुरूण्यग्ने पुरुधा त्वाया०। ऋ. ६,१,१३; तै. ब्रा. ३,६,१०,५; कठ. १८,२०]

[७] तै. ब्रा. ३,६,११-१२। वा. २१,४३-४७। काण्व. २३,४४-४६। [आ वृत्रहणा वृत्रहभिः०। ऋ. ६,६०,३; तै. ब्रा. ३,६,८,१। एवेन्द्राग्नी जुषेताꣳ०। तै. ब्रा. ३,६,११,१-२]

गीर्भिर्विप्रः प्रमतिमिच्छमाना ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥ ६२

देवेभ्यो वनस्पते हवींꣳषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥ ६३

होता यक्षद्वनस्पति,—मभि हि पिष्टतमया रभिष्ठया रशनयाधित यत्राग्नेराज्यस्य प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथाꣳसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयाꣳसमिव कृत्वी करद्देवं देवो वनस्पति,—र्जुषताꣳ हवि,—होतर्यज ॥ ६४

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वहा देवत्रा दधिषो हवींꣳषि प्र च दातारममृतेषु वोचः ॥ ६५

पिप्रीहि देवान् ॥ होता यक्षदग्निꣳ स्विष्टकृत,—मयाडग्निरग्नेः प्रिया धामान्य,—याट् सोमस्याज्यस्य हविषः प्रिया धामान्य,—याडिन्द्राग्न्योश्छागस्य हविषः प्रिया धामान्य,—याड् वनस्पतेः प्रिया पाथाꣳस्य,—याड् देवानामाज्यपानां प्रिया धामानि, यक्षदग्नेर्होतुः प्रिया धामानि, यक्षत्स्वं महिमान,—मायजतामेज्या इषः, कृणोतु सो अध्वरा जातवेदा, जुषताꣳ हवि,—होतर्यज ॥ अग्ने यदद्य,—डोपहूता ॥ ७ ॥ ६६-६७

देवं बर्हिः सुदेवं देवैः स्यात्, सुवीरꣳ वीरै,—र्वस्तोर्वृज्येता,—ऽक्तोः प्रभ्रियेता,—ऽत्यन्यान् राया बर्हिष्मतो मदेम, वसुवने वसुधेयस्य वेतु, यज, देवं बर्हि,—र्वसुवने वसुधेयस्य वेतु, देवीर्द्वारः संघाते वीड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ, वत्सं ईमेनास्तरुणा आमिमीयात् कुमारो वा नवजातो, मैना अर्वा रेणुककाटः प्रणग्, वसुवने वसुधेयस्य व्यन्तु, यज, देवीर्द्वारो, वसुवने वसुधेयस्य व्यन्तु, देवी उषासानक्ताद्यास्मिन् यज्ञे प्रयत्यह्वेता,—मपि नूनं देवीर्विशः प्रायासिष्टाꣳ सुप्रीते सुधिते, वसुवने वसुधेयस्य वीताꣳ, यज, देवी उषासानक्ता, वसुवने

[ गीर्भिर्विप्रः प्रमतिमिछ(च्छ)माना (न)०। ऋ. ७,९३,४; तै. ब्रा. ३,६,९,१; काठ. ४,१५। देवेभ्यो वनस्पते हवींꣳषि०। तै. ब्रा. ३,६,११,२; काठ. १८,२१। देवो वनस्पतिर्जुषताꣳ०। तै. ब्रा. ३,६,११,४। वनस्पते रशनया नियूय०। ऋ. १०,७०,१०; तै. ब्रा. ३,६,१२,१; नि. ६,७। पिप्रीहि देवान्०। ऋ. १०,२,१; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,५; ६,११,४; काठ. २,१५; १८,२१; २०,१५। अग्ने यदद्य०। ऋ. ६,१५,१४; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,६; ६,१२,२ ]

[ ८ ] तै. ब्रा. ३,६,१३। वा. २१,४८—५८; २८,३५—४५। काण्व. २३,४७—५७; ३०,१२—२२।

वसुधेयस्य वीतां, देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांऽसि यूयवदान्या वक्षद्वसु वार्याणि यजमानाय, वसुवने वसुधेयस्य वीताꣳ, यज, देवी जोष्ट्री, वसुवने वसुधेयस्य वीतां, देवी ऊर्जाहुती, इषमूर्जमन्या वक्षत्सग्धिꣳ सपीतिमन्या, नवेन पूर्वं दयमानाः स्याम पुराणेन नवं, तामूर्जमूर्जाहुती ऊर्जयमाने अधाताꣳ, वसुवने वसुधेयस्य वीताꣳ, यज, देवी ऊर्जाहुती, वसुवने वसुधेयस्य वीतां, देवा दैव्या होतारा पोतारा नेष्टारा हताघशꣳसा आभरद्वसुवने वसुधेयस्य वीताꣳ, यज, देवा दैव्या होतारा, वसुवने वसुधेयस्य वीतां, देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती, द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमꣳ रुद्रैर्यज्ञमावी,-दिहैवेडया वसुमत्या सधमादं मदेम, वसुवने वसुधेयस्य व्यन्तु, यज, देवीस्तिस्रस्तिस्रो देवी,-र्वसुवने वसुधेयस्य व्यन्तु, देवो नराशꣳसस्त्रिशीर्षा षुडक्षः, शतमिदेनꣳ शितिपृष्ठा आदधति, सहस्रमीं प्रवहन्ति, मित्रावरुणेदस्य होत्रमर्हतो, बृहस्पतिः स्तोत्र,-मश्विनाध्वर्यवꣳ, वसुवने वसुधेयस्य वेतु, यज, देवो नराशꣳसो वसुवने वसुधेयस्य वेतु, देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग् द्यामग्रेणास्पृक्ष,-दान्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणाद्दꣳहीद्, वसुवने वसुधेयस्य वेतु, यज, देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु, देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हꣳ यशस्व,-देना बर्हिषान्या बर्हीꣳष्यभिष्याम, वसुवने वसुधेयस्य वेतु, यज, देवं बर्हिर्वारितीनाꣳ वसुवने वसुधेयस्य वेतु, देवो अग्निः स्विष्टकृद्, यज, देवो अग्निः स्विष्टकृत् ॥ ८ ॥ ६८

अग्निमद्य होतारमवृणीतायꣳ यजमानः पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नये आज्यं गृह्णन्त्सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागꣳ, सूपस्था अद्य देवो वनस्पतिरभवदग्नये आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेना,-ऽघस्तां तं, मेदस्तः प्रतिपचता,-ऽग्रभीष्टा,-मवीवृधेतां पुरोडाशेन, त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायꣳ यजमानो, बहुभ्य आ संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यता इति, ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्व,-षितश्च होतरसि भद्रवाच्याय प्रेषितो, मानुषः सूक्तावाकाय, सूक्ता ब्रूही,-दं द्यावापृथिवी भद्रमभू,-दार्ध्म सूक्तवाकमुत नमोवाक,-मृध्यास्म सूक्तोच्य,-मग्ने त्वꣳ सूक्तवागस्युपश्रुति दिवस्पृथिव्यो,-रोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताꣳ शंगवी जीरदानू अत्रस्नू अप्रवेदे असंबाधे

---

[९] तै. ब्रा. ३,६,१५; ३,५,१०। वा. २१,५९-६१; २८,२३,४६। काण्व. २३,५८—६०; ३०,२३,४६।

उरुगव्यूती अभयंकृतौ वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती च पयस्वती च सूपचरणा
च स्वधिचरणा च, तयोराविद्यग्निरिदꣳ हविरजुषता,ऽवीवृधत, महो ज्यायोऽकृत, सोम
इदꣳ हविरजुषता,ऽवीवृधत, महो ज्यायोऽकृते,न्द्राग्नी इदꣳ हविरजुषेता,मवीवृधेतां,
महो ज्यायोऽक्राताꣳ, वनस्पतिरिदꣳ हविरजुषता,ऽवीवृधत, महो ज्यायोऽकृत, देवा
आज्यपा आज्यमजुषन्ता,ऽवीवृधन्त, महो ज्यायोऽकता,ऽग्निर्होत्रेणेदꣳ हविरजुषता,
ऽवीवृधत, महो ज्यायोऽकृता,ऽस्यामृधद्धोत्रायां देवंगमायामाशास्तेऽयꣳ यजमाना, आयुरा-
शास्ते, सुप्रजास्त्वमाशास्ते, विश्वं प्रियमाशास्ते, यदनेन हविषाशास्ते तदश्यात्, तदृ-
ध्यात्, तदस्मै देवा रासन्तां, तदग्निर्देवो देवेभ्यो वनुताꣳ, वयमग्नेर्मानुषा इष्टं च वीतं
चा,भे च नो द्यावापृथिवी अꣳहसस्पातामे,ह गतिर्वामस्ये,दं नमो देवेभ्यः ॥ ९ ॥ ६९

तच् शꣳयोरावृणीमहे गातुꣳ यज्ञाय गातुꣳ यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजꣳ शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ७०

आप्यायस्व, सं ते पयाꣳसि ॥ ७१

इह त्वष्टारमग्रियꣳ विश्वरूपमुपह्वये । अस्माकमस्तु केवलः ॥ ७२

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ७३

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यछत ॥ ७४

उत ग्ना व्यन्तु देवपत्नीरिन्द्रा३ण्यग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ ७५

---

[ १० ] तै. ब्रा. ३,५,११—१२ । वा. ११,६३; १२,११२-११४; २७,२०; ३४,१० । काण्व. १२,६५; १३,१११—११३; २९,२०; ३३,४ । [ तच् शꣳयोरावृणीमहे० । तै. सं. २,६,१०,२; तै. ब्रा. ३,५,११; तै. आ. १,९,७; ३,१ । आप्यायस्व० । ऋ. १,९१,१६–१७; ९,३१,४; तै. सं. १,४,३२,१; ३,२,५,३; ४,२,७,४; तै. ब्रा. ३,५,१२; ७,१३,४; तै. आ. ३,१७,१; ६,६,३; ताण्ड्य ब्रा. १,५,८; काठ. १६,१४; कपि. २५,५ । सं ते पयाꣳसि० । ऋ. १,९१,१८; तै. सं. ४,२,७,४; काठ. १६,१४; ३५,१३; ३७,५; कपि. २५,५ । इह त्वष्टारमग्रियꣳ० । ऋ. १,१३,१०; तै. सं. ३,१,११,१; तै. ब्रा. ३,५,१२,१ । तन्नस्तुरीपमध० । ऋ. ३,४,९; ७,२,९; तै. सं. ३,१,११,१ । देवानां पत्नीरुशतीः० । ऋ. ५,४६,७; तै. ब्रा. ३,५,१२,१ । उत ग्ना व्यन्तु देवपत्नीः० । ऋ. ५,४६,८; अथर्व. ७,४९,२; तै. ब्रा. ३,५,१२,१; नि. १२,४६ ]

राकामहं, यास्ते राके, सिनीवालि, या सुपाणिः, कुहूमहं, कुहूर्देवानाम् ॥ ७६

अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावा ॥ ७७

हव्यवाडग्निं,—रिडोपहूता ॥ १० ॥ ७८

[ २८६६ ]

॥ इति खिलकाण्डे त्रयोदशः प्रपाठकः ॥१३॥



अथ चतुर्दशः प्रपाठकः ।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ १

अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनुमदेम सोम ॥ २

त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।
त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ ३

या ते धामानि दिवि या पृथिव्याम् ॥ ४

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ५

---

[ राकामहं० । ऋ. २,३२,४; अथर्व. ७,४८,१; तै. सं. ३,३,११,५; नि. ११,३१; काठ. १३,१६ । यास्ते राके० । ऋ. २,३२,५; अथर्व. ७,४८,२; तै. सं. ३,३,११,५; काठ. १३,१६ । सिनीवालि० । ऋ. २,३२,६; अथर्व. ७,४६,१; तै. सं. ३,१,११,३; ३,११,५; नि. ११,३२; काठ. १३,१६ । या सुपाणिः० । ऋ. २,३२, ७; अथर्व. ७,४६,२; तै. सं. ३,१,११,४; ३,११,५; काठ. १३,१६ । कुहूमहं(०देवीं) । ऋ. परि. ३,१; अथर्व. ७,४७,१; तै. सं. ३,३,११,५; काठ. १३,१६ । कुहूर्देवानाम्० । ऋ. परि. ३,२; अथर्व. ७,४७,२; तै. सं. ३,३,११,५; काठ. १३,१६ । अग्निर्होता गृहपतिः० । ऋ. ६,१५,१३; तै. ब्रा. ३,५,१२,१ । हव्यवाड(ळ)-ग्निः०। ऋ. ५,४,२; तै. सं. ३,४,११,१ ]

[ १ ] तै. ब्रा. २,८,३; २,८,१ । वा. ३४,२०-२२; ४,३७; १०,२०; २३,६५। काण्व. ३३,१४-१६; ४,४९; ११,२९; २५,६७ । [ सोमो धेनुं सोमो० । ऋ. १,९१,२०; तै. ब्रा. २,८,३,१ । अषाढं युत्सु पृतनासु० । ऋ. १,९१,२१; तै. ब्रा. २,४,३,८; २,८,३,१; ७,४,१ । त्वं सोम क्रतुभिः०। ऋ. १,९१,२; तै. ब्रा. २,४,३,८; २,८,३,१। या ते धामानि दिवि० । ऋ. १,९१,४; तै. सं. २,३,१४,१; ४,१,११,१; तै. ब्रा. २,८,३,१; काठ. १३,१५ । त्वामिमा ओषधीः सोम० । ऋ. १,९१,२२; तै. ब्रा. २,८,३,१ ]

या ते धामानि हविषा यजन्ति, सोमापूषणे,—मौ देवौ ॥ ६
सोमापूषणा रजसो विमानꣳ सप्तचक्रꣳ रथमविश्वमिन्वम् ।
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम् ॥ ७
दिव्यन्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ।
ता अस्मभ्यं पुरुवारं पुरुक्षुꣳ रायस्पोषꣳ विष्युतां नाभिमस्मे ॥ ८
धियं पूषा जिन्वतु विश्वमिन्वो रयिꣳ सोमो रयिपतिर्दधातु ।
अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः ॥ ९
विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ।
सोमापूषणा अवतं धियं मे युवाभ्याꣳ विश्वाः पृतना जयेम ॥ १०
प्रजापते नहि त्वत्तान्यन्यो विश्वा जातानि परि ता बभूव ।
यस्मै कं जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ ११
रयीणां पतिꣳ यजतं बृहन्तमस्मिन् भरे नृतमꣳ वाजसातौ ।
प्रजापतिं प्रथमजामृतस्य यजाम देवमधि नो ब्रवीतु ॥ १२
प्रजापते त्वं निधिपाः पुराणो देवानां पिता जनिता प्रजानाम् ।
पतिर्विश्वस्य जगतः परस्पा हविर्नो देव विहवे जुषस्व ॥ १३
तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च ।
प्रजापते विश्वसृग् जीवधन्य इदं नो देव प्रतिहर्य हव्यम् ॥ १४
प्रजापतिं प्रथमꣳ यज्ञियानां देवानामग्रे यजतꣳ यजध्वम् ।
स नो ददातु श्रवणं पितॄणां तस्मै ते देव हविषा विधेम ॥ १५

---

[या ते धामानि हविषा०। ऋ. १,९१,१९; तै. सं. १,२,१०,१; तै. ब्रा. २,८,३,१; काठ. ११,१३ । सोमापूषणा० । ऋ. २,४०,१,३; तै. सं. १,८,२२,५; २,६,११,४; तै. ब्रा. २,८,१,५; काठ. ८,१७ । इमौ देवौ० । २,४०,२; तै. सं. १,८,२२,५; २.६,११,४; तै. ब्रा. २.८,१,५; काठ. ८,१७ । सोमापूषणा रजसो० । ऋ. २,४०,३; तै. सं. १,८,२२,५; तै. ब्रा. २,८,१,५ । दिव्यन्यः सदनं चक्र० । ऋ. २,४०,४; तै. ब्रा. २,८, १,५। धियं पूषा जिन्वतु० । ऋ. २,४०,६; तै. ब्रा. २.८,१,६ । विश्वान्यन्यो भुवना० । ऋ. २,४०,५; तै. ब्रा. २,८,१,६ । प्रजापते नहि त्वत्तान्यन्यो० । ऋ. १०,१२१,१०; अथर्व. ७,७९,४; ८०,३; तै. सं. १,८,१४,२; ३,२,५,६; तै. ब्रा. २,८,१,२; ३,५,७,१; तै. आ. १०,५४; नि. १०,४३; काठ. १५,८ । रयीणां पतिꣳ यजतं० । तै. ब्रा. २,८,१,३। प्रजापते त्वं निधिपाः०। तै. ब्रा. २,८,१,३ । तवेमे लोकाः प्रदिशो०। तै. ब्रा. २.८,१,३ । प्रजापतिं प्रथमꣳ० । तै. ब्रा. २,८,१,४ ]

❀

यो राय ईशे शतदाय उक्थ्यो यः पशूनाꣳ रक्षिता विष्ठितानाम् ।
प्रजापतिः प्रथमजा ऋतस्य सहस्रधामा जुषताꣳ हविर्नः ॥ १ ॥ १६

वायो शतꣳ हरीणाꣳ युवस्व पोष्याणाम् ।
उत वा ते सहस्रिणो रथा आयातु पाजसा ॥ १७

ईशानाय प्रहुतिꣳ यस्त आनट् शुचिꣳ सोमꣳ शुचिपास्तुभ्यꣳ वायो ।
कृणोषि तं मर्त्येषु प्रशस्तं जातो जातो जायते वाज्यस्य ॥ १८

युक्ष्वा हि त्वꣳ रथासहा युवस्व पोष्या वसो ।
आन्नो वायो मधु पिबास्माकꣳ सवनागहि ॥ १९

कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसꣳ सूर्येण ॥ २०

आ नो वायो महे तने याहि मखाय पाजसे ।
वयꣳ हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने ॥ २१

सं ते वायुः ॥ २२

पीवोअन्नꣳ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥ २३

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा उत श्वेतꣳ वसुधितिं निरेके ॥ २४

आ वायो, प्र वायुं, प्र याभिः ॥ २५

---

[ यो राय ईशे० । तै. ब्रा. २,८,१,४ ]

[ २ ] तै. ब्रा. २,८,१ । वा. ११,३९; २७,२३-२४,२७-२८; ७,७; ३३,५५; २५,१५,२१-२२; ४,५; ३१,१६ । काण्व. १२,३९; २९,२३—२४,२६,३१; ७,६; ३२,५५; २७,१९,२५-२६; ४,६; ३५,१६ । [ वायो शतꣳ हरीणाꣳ० । ऋ. ४,४८,५; तै. सं. २,२,१२,७ । ईशानाय प्रहुतिꣳ० । ऋ. ७,९०,२ । युक्ष्वा हि त्वꣳ रथासहा० । ऋ. ८,२६,२० । कुविदङ्ग नमसा० । ऋ. ७,९१,१ । आ नो वायो महे० । ऋ. ८,४६,२५ । सं ते वायुः० । तै. सं. ४,१,४; ५.१,५,१; कठ. १६,४; १९,५; कपि. ३०,३ । पीवोअन्नꣳ ( ०न्नाँ ) रयिवृधः० । ऋ. ७,९१,३; तै. ब्रा. २,८,१,१ । राये नु यं जज्ञतू० । ऋ. ७,९०,३; तै. ब्रा. २,८,१,१ । आ वायो० । ऋ. ७,९२,१; तै. सं. १,४,४,१; ३,४,२,१; तै. ब्रा. २,८,११; काठ. ४,२; १३,११—१२; कपि. ३,२ । प्र वायुं० । ऋ. ६,४९,४; तै. ब्रा. २,८,१,१ । प्रयाभिः० । ऋ. ७, ९२,३; तै. सं. २,२,१२,७; तै. ब्रा. २,८,१,१; काठ. १०,१२ ]

आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ २६
देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्तताम् ।
देवानाꣳ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २७
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितꣳ यदायुः ॥ २८
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ २९
आ वो देवास ईमहे ॥ ३०
उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥ ३१
यज्ञेन यज्ञमयजन्त देवाः ॥ २ ॥ ३२
अग्ने नय ॥ ३३
प्र वः शुक्राय भानवे भरध्वꣳ हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूꣳष्यन्तर्विश्वानि विद्मना जिगाति ॥ ३४
अग्ने त्वं पारय ॥ ३५
अच्छा गिरो मतयो देवयन्तीरग्निꣳ यन्ति द्रविणं भिक्षमाणाः ।
सुसंदृशꣳ सुप्रतीकꣳ स्वञ्चꣳ हव्यवाहमरतिं मानुषाणाम् ॥ ३६
अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।
पुनरस्मभ्यꣳ सुवितायं देव क्षाꣳ विश्वेभिरमृतेभिर्यजत्र ॥ ३७

---

[आ नो नियुद्भिः० । ऋ. ७,९२,५; तै. ब्रा. २,८,१,२। देवानां भद्रा सुमतिः०। ऋ.१,८९,२; नि. १२,३९। भद्रं कर्णेभिः शृणुयाम० । ऋ. १,८९,८; सा. १८७४; तै, आ. १,१,१; काठ. ३५,१; कपि. २८,२ । शतमिन्नु शरदो० । ऋ. १,८९,९; तै. आ. १,२७,६; काठ. ३५,१; कपि. ४८,२ । आ वो देवास० । तै. सं. १,२,१,२ । उत देवा अवहितं० । ऋ. १०,१३७,१; अथर्व. ४,१३,१ । यज्ञेन यज्ञमयजन्त० । ऋ. १, १६४,५०; १०,९०,१६; अथर्व. ७,५,१; तै. सं. ३,५,११,५; तै. आ. ३,२,७; शत. ब्रा. १०,२,२,२ ]

[ ३ ] तै. ब्रा. २,८,२ । वा. ५,३६; ७,४३; ४०,१६; १२,१२; ४,३०; १८,४९; २१,२; ३८,५ । काण्व. ५,४५; ९,८, ४०,१८; १३,१३; ४,४२; २०,१९; २३,२; ३८,५ । अग्ने नय सुपथा० । ऋ. १,१८९,१; तै. सं.१, १,१४,३; ४,४३,१; तै. ब्रा. २,८,२,३; तै. आ. १,८,८; शत. ब्रा. १४,८,३,१; काठ. ३,१; ६,१०; कपि. २,८। प्र वः शुक्राय भानवे०। ऋ. ७,४,१; तै. ब्रा. २,८,२,३; काठ. ७,१६ । अग्ने त्वं पारय०। ऋ. १,१८९,२; तै. सं. १,१,१४,४; तै. ब्रा. २,८,२,५; तै. आ. १०,२,१ । अछा ( च्छा ) गिरो मतयो०। ऋ. ७,१०,३; तै. ब्रा. २,८,२,४ । अग्ने त्वमस्मद्युयोध्यमीवा० । १,१८९,३; तै. ब्रा. २,८,२,४ ]

प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।
दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ ३८

उदुत्तमं,—मस्तभ्नाद् द्यां,—मिमां धियम् ॥ ३९

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥ ४०

अव ते हेडो वरुण, तत्त्वायामि ॥ ४१

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत् ॥ ४२

आ नो दिवः ॥ ४३

इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमꣳ सरस्वति जुषस्व ।
तव शर्मन् प्रियतमे दधाना उपस्थेयाम शरणं न वृक्षम् ॥ ४४

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥ ४५

सरस्वत्यभि नो नेषि वस्यः, इदं ते हव्यम् ॥ ३ ॥ ४६

---

[प्र कारवो मनना०। ऋ. ३,६,१; तै. ब्रा. २,८,२,५ । उदुत्तमं वरुण पाश० । ऋ. १,२४,१५; सा. ५८९; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; ४,२,१,३; तै. ब्रा. २,७,१६,४; ८,१,६; तै. आ. २,४,४; नि. २,१३; काठ. ३,८; १६,८; १९.११; २१,१३; कपि. २,१५; ३२,१ । अस्तभ्नाद् द्याम्० । ऋ.८,४२,१; तै.सं. १,२,८,१; तै. ब्रा. २,८,१,६; काठ. २,६; ११,१२; कपि. १,१९ । इमां धियम्० । ऋ. ८,४२,३; १०,६७,१; अथर्व. २०,९१,१; तै. सं. १,२,२,२; ६,१,३,२; काठ. २,३; कपि. १,१५ । कितवासो यद्रिरिपुः० । ऋ. ५, ८५,८; तै. सं. ३,४,११,६, तै. ब्रा. २,८,१,५; काठ. २३,१२ । अव ते हेडो(ळो) वरुण० । ऋ. १,२४,१४; तै. सं. १,५,११,३; तै. ब्रा. २,७,१६,४; ८,१,६; तै. आ. २,४,४; काठ. ४०,११ । तत्त्वायामि ब्रह्मणा० । ऋ. १,२४,११; तै. सं. २,१,११,६; तै. ब्रा. २,८,१,६; काठ. ४,१६; ११,१३; १२,१५; १७,१९; २१,१३; ४०,११ । पावीरवी कन्या चित्रायुः० । ऋ. ६,४९,७; तै. सं. ४.१,११,२; तै. ब्रा. २,८,२,८ । आ नो दिवः० । ऋ. ५,४३,११; ७,२४,३; तै. सं. १,८,२२,१; २,५,१२,१; ३,१,११.२; काठ. ४,१६;२०,१५ । इमा जुह्वाना युष्मदा० । ऋ. ७,९५,५; तै. ब्रा. २,४,६,१; काठ. ४,१६ । यस्ते स्तनः शशयो०। ऋ. १,१६, ४,४९, अथर्व. ७,१०,१; तै. ब्रा. २,८,२,८; तै. आ. ४,८,२; ५,७,३; शत. ब्रा. १४,२,१,१५; ९,४,२८ । सरस्वत्यभि नो नेषि० । ऋ. ६, ६१,१४; तै. सं. ७,२,७,४; तै. ब्रा. २,४,३,१; २,८,२,८; काठ. १७,१८; ३०,३ । इदं ते हव्यम । तै. ब्रा. २,५,४,६ ]

आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिꣳ सदने सादयध्वम् ।
सादद्योनिं दम आ दीदिवाꣳसꣳ हिरण्यवर्णमरुषꣳ सपेम ॥ ४७

स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः स्वर्षाः ।
बृहस्पतिः स स्वावेश ऋष्वः पुरू सखिभ्य आसुतिं करिष्ठः ॥ ४८

बृहस्पतिः, स सुष्टुभा ॥ ४९

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच् शवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ५०

एवा पित्रे विश्वदेवाय वृष्णे ॥ ५१

सूर्यो देवीमुषसꣳ रोचमानां मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ ५२

भद्रा अश्वा,—स्तत्सूर्यस्य ॥ ५३

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ ५४

अद्या देवा उदिता सूर्यस्य निरꣳहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५५

---

[ ४ ] तै. ब्रा. २,८,२; २,८,७ । वा. २६,३; ३३,३७-३८,४२; ७,४२; १३,४६; २१,५-६; २५,२३; २९,४ । काण्व. २,२१; २८,४; ३२,३७-३८,४२; ८,२४;९,७; १४,४८; २३,५-६; २७,२७; ३१,४। [आ वेधसं नीलपृष्ठं० । ऋ. ५,४३,१२; तै. ब्रा. २,५,५,४; २,८,२,७ । स हि शुचिः शतपत्रः० । ऋ. ७,९७,७; तै. ब्रा. २,५,५,४; ८,२,७ । बृहस्पतिः० । ऋ. ४,५०,४; ६,७३,३; १०,४२,११; ४३,११; ४४,११; १८२,१; अथर्व. ७,५१,१ ; २०,१७,११; ८८,४; ८९,११; ९०,३, ९४,११; तै. सं. ३,३,११,१; तै. ब्रा. २,८,२,७—८; काठ. १७,१८ । स सुष्टुभा० । ऋ. ४,५०,५; १,६२,४; अथर्व. २०,८८,५; तै. सं. २,३,१४,४; काठ. १०,१३ । बृहस्पते अति यदर्यो० । ऋ. २,२३,१५; तै. सं. १,८,२२,२; काठ. ४,१६;४०,११ । एवा पित्रे विश्वदेवाय०। ऋ. ४,५०,६; अथर्व. २०,८८,६, तै. सं. १,८,२२,२; तै. ब्रा. २,८,२,८; काठ. १७,१८। सूर्यो देवीमुषसꣳ०। ऋ. १,११५,२; अथर्व. २०,१०७,१५; तै. ब्रा. २,८,७,१ । भद्रा अश्वाः० । ऋ. १,११५,३; तै. ब्रा. २,८,७,१ । तत्सूर्यस्य० । ऋ. १,११५,४; अथर्व. २०,१२३,१; तै. ब्रा. २,८,७,१; नि. ४,११ । तन्मित्रस्य वरुणस्य०। ऋ. १,११५,५; अथर्व. २०,१२३,२; तै. ब्रा. २,८,७,२ । अद्या देवा उदिता०। ऋ. १,११५,६; तै. ब्रा. २,८, ७,२ ]

चित्रं देवानामुदगादनीकं, सुत्रामाणं, महीमू ष्वं,—दितिः पाशान् ॥ ५६
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ ५७
विष्टम्भो दिवः, स्तीर्णं बर्हिः ॥ ४ ॥ ५८
विष्णोर्नु कं, तदस्य, प्र तद्विष्णुः ॥ ५९
परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ ६०
विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ६१
त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ।
प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ ६२
इन्द्रं नरो नेमधिता, युजे रथम् ॥ ६३
जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ६४

---

[चित्रं देवानाम्० । ऋ. १,११५,१; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं. १,४,४३,१; २,४,१४,४; तै. ब्रा. २,८,७,३; ऐ. आ. ३,९; तै. आ. १,७,६; २,१३,१; नि. १२,१६; काठ. ४,६; १०,१३; १३,१६; २१, १४; २२,५-६,८; कपि. ३,४,७; ३५,२ । सुत्रामाणं पृथिवीं० । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै. सं. १,५,११,५; ७,१,१८,२; तै. आ. १,१३,२; काठ. २,३ । महीमू षु० । तै. सं. १,५,११,५; ७,१,१८,२; तै. ब्रा. ३,१,२,३; तै. आ. १,१३,२; काठ. ३०,४—५; कपि. ४६,७ । अदितिः पाशान्० । तै. सं. ३,१, ४,४; काठ. ३०,८ । अदितिर्द्यौरदितिः० । ऋ. १,८९,१०; अथर्व. ७,६,१; तै. आ. १,१३,२; नि. ४,२३ । विष्टम्भो दिवः० । ऋ. ९,८९,६; तै. सं. ४,४,१२,५; काठ. २२,१४ । स्तीर्णं बर्हिः० । ऋ. १,१३५,१; तै. सं. ५,१,११,२; काठ. ५,६,२ ]

[ ५ ] तै. ब्रा. २,८,२-३ । वा. ५,१८,२०; १९,८१; ८,१५ । काण्व. ५,२४,२६; २१,७८; ९,१५ । [विष्णोर्नु कं० । ऋ. १,१५४,१; अथर्व. ७,२६,१; तै. सं. १,२,१३,२; तै. ब्रा. २,८,३,२; काठ. २,१०; २५,८; कपि. २,४; ४०,१ । तदस्य० । ऋ. १,१५४,५; १०३,५; २,३५,११; तै. ब्रा. २,४,६,२; ८,३,२ । प्र तद्विष्णुः० । ऋ. १,१५४,२; अथर्व. ७,२६,२—३; तै. ब्रा. २,४,३,४; ८,३,२; ३,१,३,३; नि. १,२०; काठ. २,१०; २५,८; कपि २,४; ४०,१ । परो मात्रया तन्वा० । ऋ. ७,९९,१; तै. ब्रा. २,८,३,२ । विचक्रमे पृथिवीमेष० । ऋ. ७,१००,४; तै. ब्रा. २,४,३,५; ८,३,३ । त्रिर्देवः पृथिवीमेष० । ऋ. ७,१००,३; तै. ब्रा. २,४,३,५; ८,३,३ । इन्द्रं नरो नेमधिता० । ऋ. ७,२७,१; सा. ३१८; तै. सं. १,६,१२,१; तै. ब्रा. २,८,२,५ । युजे रथम्० । ऋ. ७,२३,३; अथर्व. २०,१२,३; तै. ब्रा. २,४,१,३; ८,२,५। जगृह्णा(०म्मा०) ते दक्षिणमिन्द्र०। ऋ. १०, ४७,१; सा. ३१७; तै. ब्रा. २,८.२,५ ]

तवेदं॒ विश्व॑म॒भितः॑ पश॒व्यं॑ यत् पश्य॑सि॒ चक्ष॑सा॒ सूर्य॑स्य ।
गवा॑मसि॒ गोप॑ति॒रेक॑ इन्द्र भक्षी॒महि॑ ते॒ प्रय॑तस्य॒ वस्वः॑ ॥ ६५

समि॑न्द्र नः ॥ ६६

आ॒राच्छत्रु॒मप॑ बाधस्व दू॒रमु॒ग्रो यः शम्बः॑ पुरुहूत॒ तेन॑ ।
अ॒स्मे धे॑हि॒ यव॑म॒द्गोम॑दिन्द्र कृ॒धी धियं॑ जरि॒त्रे वाज॑रत्नाम् ॥ ६७

इन्द्रो॑ व॒लं र॑क्षि॒तारं॒ दुघा॑नां क॒रेणे॑व॒ वि च॑कर्ता॒ रवे॑ण ।
स्वेदा॑ञ्जिभिरा॒शिर॑मि॒च्छमा॒नोऽरो॑दयत् प॒णिमा॒ गा अ॑मुष्णात् ॥ ६८

अध्व॑र्यवो॒ यो दृभी॑कं ज॒घान॒ यो गा उ॒दाज॒दप॒ हि व॒लं वः ।
तस्मा॑ ए॒तम॒न्तरि॑क्षे॒ न वात॒मिन्द्रं॒ सोमै॒रोर्णु॑त॒ जूर्न वस्त्रैः॑ ॥ ६९

इन्द्रा॒ ओष॑धीरसनो॒दहा॑नि॒ वन॒स्पतीँ॑ररसनोद॒न्तरि॑क्षम् ।
बि॒भेद॑ व॒लं नु॑नु॒दे विवा॒चोऽथा॑भवद्द॒मि॒ताभिक्र॑तूनाम् ॥ ७०

यो ह॒त्वाहि॒मरि॑णात् स॒प्त सिन्धू॒न् यो गा उ॒दाज॑दप॒धा व॒लस्य॑ ।
यो अश्म॑नोर॒न्तर॒ग्निं ज॒जान॑ सं॒वृक् स॒मत्सु॒ स ज॑नास॒ इन्द्रः॑ ॥ ७१

अ॒भि स्व॒वृ॑ष्टिम् ॥ ७२

भि॒नद्व॒लमङ्गि॑रोभिर्गृणा॒नो वि पर्व॑तस्य दृंहि॒तान्यै॑रत् ।
रि॒णग्रोधां॑सि कृ॒त्रिमा॑ण्येषां॒ सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार ॥ ५ ॥ ७३

विष्णुं॑ दे॒वं वरु॑णमू॒तये॒ भगं॒ मेद॑सा दे॒वा व॒पया॑ यजध्वम् ।
ता नो॑ य॒ज्ञमाग॑तं वि॒श्वधे॑ना प्र॒जाव॑द॒स्मे द्र॑वि॒णेह ध॑त्तम् ॥ ७४

---

[तवेदं विश्वमभितः० । ऋ. ७,९८,६; अथर्व. २०,८७,६; तै. ब्रा. २,८,२,६ । समिन्द्र नः०(णो०) । ऋ. ५,४२,४; अथर्व. ७,९७,२; तै. सं. १,४,४४,१; तै. ब्रा. २,८,२,६; काठ. ४,१२; कपि. ३,१० । आराच्छत्रुमपबाधस्व० । ऋ. १०,४२,७; अथर्व. २०,८९,७; तै. ब्रा. २,८,२,७; नि. ५,२४ । इन्द्रो वलं( व० ) रक्षितारं० । १०,६७,६; अथर्व. २०,९१,६ । अध्वर्यवो यो दृभीकं० । ऋ. २,१४,३ । इन्द्रा (०न्द्र) ओषधीरसनो० । ऋ. ३,३४,१०; अथर्व. २०,११,१० । यो हत्वाहिमरिणात् सप्त० । ऋ. २,१२,३; अथर्व. २०,३४,३ । अभि स्ववृष्टिम्० । ऋ. १,५२,५ । भिनद्वलमङ्गिरोभिः० । ऋ. २,१५,८; तै. सं. २,३,१४,५ ]

[ ६ ] तै. ब्रा. २,८,४; ६ । वा. ८,६,५९; ३३,४३; ३४,३१; १२,७५,७८,८१,८४,८८ । काण्व. ८,५; ९,४५; ३२,४३; ३३,२५; १३,७६,७९,८२,८५,८९ । [ विष्णुं देवं वरुणमूतये० । तै. ब्रा. २,८,४,४ ]

मेदसा देवा वपया यजध्वꣳ विष्णुं च देवꣳ वरुणं च रातिम् ।
ता नो अमीवामपबाधमाना इमꣳ यज्ञं जुषमाणा उपेतम् ॥ ७५
विष्णूवरुणा युवमध्वराय नो विशे जनाय महि शर्म यछतम् ।
दीर्घप्रयज्यू हविषा वृधाना ज्योतिषारातीर्दहतं तमाꣳसि ॥ ७६
ययोरोजसा स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतिम् ॥ ७७
विष्णूवरुणा अभिशस्तिपावा देवा यजन्त हविषा घृतेन ।
अपामीवाꣳ सेधतꣳ रक्षसश्चाथा धत्तꣳ यजमानाय शꣳयोः ॥ ७८
अꣳहोमुचा वृषभा सुप्रतूर्ती देवानां देवतमा शविष्ठा ।
विष्णूवरुणा प्रतिहर्यतं न इदं नरा प्रयतमूतये हविः ॥ ७९
आ देवो याति सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयश्च प्रसुवश्च भूम ॥ ८०
अभीवृतं कृशनैर्विश्वरूपꣳ हिरण्यशम्यꣳ यजतो बृहन्तम् ।
आस्थाद्रथꣳ सविता चित्रभानुः कृष्णा रजाꣳसि तविषीं दधानः ॥ ८१
स घा नो देवः सविता सहावासाविषद्वसुपतिर्वसूनि ।
विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ॥ ८२
आ कृष्णेन रजसा, वाममद्य ॥ ८३
भगं धियꣳ वाजयन्तः पुरन्धिं नराशꣳसो ग्नास्पतिर्नो अव्यात् ।
आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥ ८४

---

[मेदसा देवा वपया० । तै. ब्रा. २,८,४,४ । विष्णुवरुणा युवम्० । तै. ब्रा. २,८,४,५ । ययोरोजसा स्कभिता० । अथर्व. ७,२५(२६),१; तै. ब्रा. २,८,४,५ । विष्णूवरुणा अभि० । तै. ब्रा. २,८,४,६ । अꣳहोमुचा वृषभा० । तै. ब्रा. २,८,४,६ । आ देवो याति (तु०) सविता० । ऋ. ७,४५,१; तै. ब्रा. २,८,६,१; काठ. १७,१९ । अभीवृतं कृशनैः० । ऋ. १,३५,४; तै. ब्रा. २,८,६,१ । स घा नो देवः सविता० । ऋ. ७,४५, ३; तै. ब्रा. २,८,६,१ । आ कृष्णेन रजसा० । ऋ. १,३५,२; तै. सं. ३,४,११,२, । वाममद्य० । ऋ. ६,७१,६; तै. सं. १,४,२२,१; २,२,१२,२। भगं धियꣳ वाजयन्तः०। ऋ. २,३८,१०; तै. ब्रा. २,८,६,३ ]

या ओषधयो, ऽश्वावतीं, मोषधीरिति मातरो, ऽति विश्वाः परिष्ठा, यदोषधयः
संगच्छन्ते, ऽन्या वो अन्याम् ॥ ६ ॥ ८५

मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।
यत् सीं वरिष्ठे बृहती विमिन्वन् रुवद्धोक्षा पप्रथानेभिरेवैः ॥ ८६

प्र पूर्वजे ॥ ८७

स इत् स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान ।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥ ८८
भूरि द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।
नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ८९
इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥ ९०
उर्वी पृथ्वी बहुले दूरेअन्ते उपब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ९१

इन्द्रो भूतस्य भुवनस्य राजेन्द्रो दाधार पृथिवीमुतेमाम् ।
इन्द्रे ह विश्वा भुवना श्रितानीन्द्रं मन्ये पितरं मातरं च ॥ ९२
इन्द्रः पृणन्तं पपुरिं चेन्द्रा इन्द्रः स्तुवन्तं स्तवितारमिन्द्रः ।
दधाति शक्रः सुकृतस्य लोक इन्द्रं मन्ये पितरं मातरं च ॥ ९३
इन्द्रो द्यौरुरुर्व्युत भूमिरिन्द्रा इन्द्रः समुद्रो अभवद्गभीरः ।
उरुर्वन्तरिक्षं स जनासा इन्द्रा इन्द्रं मन्ये पितरं मातरं च ॥ ९४

[या ओषधयः० (ओषधीः) । ऋ. १०,९७,१; तै. सं. ४,२,६,१; नि. ९,२८; काठ. १३,१६; १६,१३; कपि. २५,४ । अश्वावतीम्० । ऋ. १०,९७,७; तै. सं. ४,२,६,४; तै. ब्रा. २,८,४,८; काठ. १६,१३; कपि. २५,४ । ओषधीरिति मातरः० । ऋ. १०,९७,४; तै. सं ४,२,६,१; तै. ब्रा. २,८,४,८; नि. ६,३; काठ. १३,१६; १६, १३; कपि. २५,४ । अति विश्वाः परिष्ठा०। ऋ. १०,९७,१०; तै. सं ४,२,६,३; तै. ब्रा. २,८,४,८; काठ. १६, १३; कपि. २५,४ । यदोषधयः संगच्छन्ते० । तै. सं. ४,२,६,२; कपि. २५,४ । अन्या वो अन्याम्० । ऋ. १०,९७,१४, तै. सं. ४,२,६,३; तै. ब्रा. २,८,४,८; काठ. १६,१३; कपि. २५,४ ]

[ ७ ] तै.ब्रा.२,८.४,७-८;२,८,९,८। वा.२०,५४;२७,२८;३४.४०। काण्व.२२,३९; २९,३१ । [मही द्यावापृथिवी०। ऋ. ४,५६,१। प्र पूर्वजे०। ऋ. ७,५३,२;तै.सं. ४,१,११,४; तै. ब्रा. २,८,४,७। स इत् स्वपा भुवनेष्वास०। ऋ. ४,५६,३;तै. ब्रा. २,८,४,७। भूरि द्वे अचरन्ती०। ऋ. १,१८५,२;तै.ब्रा. २,८,४,८। इदं द्यावापृथिवी०। ऋ. १,१८५,११; तै. ब्रा. २,८,४,८ । उर्वी पृथ्वी (पृथिवी) बहुले० । ऋ. १,१८५,७; तै. ब्रा. २,८,४,८ ]

*

इन्द्रो वृत्रं वज्रेणावधीदिन्द्रो व्युं समुतं शुष्णमिन्द्रः ।
इन्द्रः पुरः शम्बरस्याभिनदिन्द्रं मन्ये पितरं मातरं च ॥ ९५
इन्द्रो बभूव ब्रह्मणा गभीर इन्द्रा आभूतः परिभूष्विन्द्रः ।
इन्द्रो भविष्यदुत भूतमिन्द्रा इन्द्रं मन्ये पितरं मातरं च ॥ ९६
इन्द्रोऽस्माँ अवतु वज्रबाहुरिन्द्रे भूतानि भुवनानीन्द्रे ।
अस्माकमिन्द्रो भवतु प्रसाह इन्द्रं मन्ये पितरं मातरं च ॥ ९७
उत स्या नः सरस्वती जुषाणोपश्रुवत् सुभगा यज्ञे अस्मिन् ।
घृतंद्युभिर्नमस्यैरियाणा राया युजा चिदुत्तरा सखिभ्यः ॥ ९८
प्र क्षोदसा धायसा सस्र एषा सरस्वती धरुणमायसी पूः ।
प्र बाधमाना रथ्येव याति विश्वा अपो महिना सिन्धुरन्याः ॥ ९९
एकाचेतत् सरस्वती नदीनां शुचिर्यती गिरिभ्या आ समुद्रात् ।
रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय ॥ १००
इदमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १०१
अयमु ते सरस्वति वसिष्ठो द्वारा ऋतस्य सुभगे व्यावः ।
वर्ध शुभ्रे स्तुवते रासि वाजान् यूयं पात स्वस्तिभिः सदा नः ॥ १०२
इयं शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥७॥ १०३
शुचिं नु स्तोमं, श्नथद्वृत्रं, उभा वामिन्द्राग्नी, प्र चर्षणिभ्या, आ वृत्रहणा,

---

[उत स्या नः सरस्वती जुषाणोप० । ऋ. ७,९५,४ । प्र क्षोदसा धायसा० । ऋ. ७,९५,१ । एकाचेतत् सरस्वती० । ऋ. ७,९५,२ । अयमु ते सरस्वति० । ऋ. ७,९५,६ । इयं शुष्मेभिर्बिसखा० । ऋ. ६, ६१,२; तै. ब्रा. २,८,२,८; नि. २,२४; काठ. ४,१६ ]

[ ८ ] तै. ब्रा. २,८,७,४ । वा. ३,१३; २०,४४; २७,२०; २९,९; ६,२० । काण्व. ३,१९; २२,२९; २९,२०; ३१,९; ६,२७ । [ शुचिं नु स्तोमं० ऋ. ७,९३,१; तै. सं. १,१,१४,१; तै. ब्रा. २,४,८,३; काठ. १३,१५; २१,१३। श्नथद् वृत्रम्० । ऋ. ६,६०,१; तै. सं. ४,२,११,१; ३,१३,८; तै. ब्रा. २,८,५,१; ३,५,७,३; काठ.४,१५;२१, १३;२३,११ । उभा वामिन्द्राग्नी० । ऋ. ६,६०,१३; तै. सं. १,१,१४,१; ५,५,१; तै. ब्रा. २,८,५,१; काठ. ७,४,७,५; ६,९; कपि. ४,८; ५,३—४ । प्र चर्षणिभ्या०(०भ्यः) । ऋ. १,१०९,६; तै. सं. ४,२,११,१; तै. ब्रा. २,८,५,१; काठ. ४,१५ । आ वृत्रहणा० । ऋ. ६,६०,३; तै. ब्रा. ३,६,८,१ ]

गीर्भिर्विप्र,—स्त्वष्टा दधत्, तन्नस्तुरीपं, त्वष्टा वीरम् ॥ १०४

पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।
प्रजां त्वष्टा विष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः ॥ १०५

देव त्वष्टः ॥ १०६

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।
उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिꣳहं प्रतिचेतयेते ॥ १०७

जगृह्मा ते दक्षिणमिन्द्र हस्तम् ॥ १०८

सुब्रह्माणं देववन्तं महान्तमुरुं गभीरं पृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रꣳ वृषणꣳ रयिं दाः ॥ १०९
वनीवानो मम दूतास इन्द्रꣳ स्तोमाश्चरन्ति सुमतीरियानाः ।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रꣳ वृषणꣳ रयिं दाः । ११०

स्वायुधꣳ स्ववसꣳ सुनीथं चतुःसमुद्रं धरुणꣳ रयीणाम् ।
चर्कृत्यꣳ शꣳस्यं भूरिवारमुग्रमस्मभ्यं चित्रꣳ वृषणꣳ रयिं दाः ॥ १११
अश्वावन्तꣳ रथिनꣳ वीरवन्तꣳ सहस्रिणꣳ शतिनꣳ वाजमिन्द्र ।
भद्रव्रातꣳ विप्रवीरꣳ स्वर्षामस्मभ्यं चित्रꣳ वृषणꣳ रयिं दाः ॥ ११२
सनद्वाजꣳ विप्रवीरं तरुत्रं धनस्पृतꣳ शूशुवाꣳसꣳ सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रꣳ वृषणꣳ रयिं दाः ॥ ८ ॥ ११३

---

[गीर्भिर्विप्रः० । ऋ. ७.९३,४; तै. ब्रा. २,८,५,१; ३,६,९,१; काठ. ४,१५ । त्वष्टा दधत्० । तै. ब्रा. २,६,८,४; ८,७,४; काठ. ३८,६ । तन्नस्तुरीपं० । ऋ. १,१४२,१०; ३,४,९; ७,२,९; तै. सं. ४,१,८,३; ३,१,११,१; नि. ६,२१; काठ. १८,१७; कपि. २९,५ । त्वष्टा वीरम्० । तै. सं. ५,१,११,३; तै. ब्रा. २,८,७,४; काठ. ५,६,२ । पिशङ्गरूपः सुभरो०। ऋ. २,३,९; तै. सं. ३,१,११,२; तै. ब्रा. २,८,७,४ । देव त्वष्टः० । ऋ. १०,७०,९; तै. सं. १,३,१०,१; ६,३,११,२; काठ. ३,७; कपि. २,१४ । आविष्ट्यो वर्धते० । ऋ. १,९५,५; तै. ब्रा. २,८,७,४; नि. ८,१५ । जगृह्मा (०भ्मा) ते दक्षिणम्० । ऋ. १०,४७,१; सा. ३१७; तै. ब्रा. २,८,२,५ । सुब्रह्माणं देववन्तं० । ऋ. १०,४७,३; तै. ब्रा. २,५,६,१ । वनीवानो मम दूतास (स)० । १०,४७,७ । स्वायुधꣳ स्ववसꣳ सुनीथं० । ऋ. १०,४७,२ । अश्वावन्तꣳ रथिनꣳ० । ऋ. १०,४७,५ । सनद्वाजꣳ विप्रवीरं० । ऋ. १०,४७,४ ]

त्वष्टा पत्नीभिरिह नः सजोषा देवो देवीभिर्हविषो जुषाणः ।
उपो रयिं बृहुलꣳ विष्यता नः शृणोत नः सुमतिꣳ यज्ञियासः ॥ ११४
रेतोधा यस्य भुवनस्य देवः ससाद योनौ जनिता जनिष्ठः ।
रूपाणि कृण्वन् विदधद्वपूꣳषि त्वष्टा पत्नीभिश्चरति प्रजानन् ॥ ११५
त्वष्टा पत्नीभिरनु मꣳहनेवाग्नेर्यावा धिषणे यं दधाते ।
विश्वा वसु हस्तयोरादधानोऽन्तर्मही रोदसी याति साधन् ॥ ११६
आ नो वीरैभिर्जनिता मतीनां गोभिरश्वेभिर्वसुभिर्वसूयन् ।
समञ्जानो धामभिर्विश्वरूपैस्त्वष्टा पत्नीभिश्चरति प्रजानन् ॥ ११७
त्वष्टा रेतो भुवनस्य पत्नीर्विकृण्वानास्तनुयं भूरि पर्श्वः ।
ग्ना वो देवी रोदसी तच्छृणोता नो रयिं जनत विश्ववारम् ॥ ११८
यज्ञं च नस्तन्वं च प्रजां च रयिं च नो जनत विश्वरूपम् ।
योनौ रेतो दधदस्मै नु त्वष्टा देवीः पत्नीर्जनत जीवसे नः ॥ ११९
वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।
मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ १२०
पर ऋणा सावीरध मत्कृतानि माहꣳ राजन्नन्यकृतेन भोजम् ।
अव्युष्टा इन्नु भूयसीरुषास आ नो वीरान् वरुण तासु शाधि ॥ १२१
अपो षु म्यक्ष वरुण भियसं मत्सम्राडृतावोऽनु नो गृभाय ।
दामेव वत्साद्विमुमुग्ध्यꣳहो नहि त्वदारे निमिषश्चनेशे ॥ १२२
यो मे राजन् युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥ १२३
मा नो वधैर्वरुण ये त इष्टा एनः कृण्वन्तमरुण श्रीणन्ति ।
मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ १२४

---

[ ९ ] वा. ७,२४; ३३,८; १८,७३; २६,७ । काण्व. ७,२६; ३२,८; २०,४२; २८,९ । [ यज्ञं च नस्तन्वं च० । ऋ. १०,१५७,२; साम. ११११; अथर्व. २०,६३,१; १२४,४; तै. आ. १,२७,१ । वि मच्छ्रथाय रशनाम्० । ऋ. २,२८,५ । पर ऋणा सावीरध० । ऋ. २,२८,९ । अपो षु म्यक्ष० । ऋ. २,२८,६; नि. १३,१ । यो मे राजन् युज्यो० । ऋ. २,२८,१० । मा नो वधैर्वरुण० । ऋ. २,२८,७ ]

क्व३ त्यानि नौ सख्या बभूवुः संचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ १२५

मूर्धानं दिवः, पृष्टो दिवि, वैश्वानरस्य सुमतौ स्याम, त्वमग्ने शोचिषा शोशुचानो,
ऽग्निः प्रातः सवनाद्, विश्वं विव्याच ॥ ९ ॥ १२६

आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।
घृतवर्तनिः पविभी रुचान इषां वोढा नृपतिर्वाजिनीवान् ॥ १२७
स पप्रथानो अभि पञ्च भूमा त्रिवन्धुरो मनसायातु युक्तः ।
विशो येन गच्छथो देवयन्तीः कुत्रा चिद्यामश्विना दधाना ॥ १२८
स्वश्वा यशसायातमर्वाग्दस्रा निधिं मधुमन्तं पिबाथः ।
वि वां रथो वध्वा यादमानोऽन्तान् दिवो बाधते वर्तनिभ्याम् ॥ १२९
यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
तेन नः शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥ १३०
युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥ १३१
युवं भुज्युमवविद्धं समुद्र उदूहथुरर्णसो अस्रिधानैः ।
पतत्रिभिरश्रमैरव्यथिभिर्दंसनाभिरश्विना पारयन्ता ॥ १३२
ब्रह्मणस्पते त्वमस्य यन्ता ॥ १३३

---

[क्व३ त्यानि नौ सख्या० । ऋ. ७,८८,५ । मूर्धानं दिवः० । ऋ. ६,७,१; सा. ६७,११४०; तै. सं. १,४, १३,१; ६,५,२,१; काठ. ४,५; २८,१; कपि. ३,५ । पृष्टो दिवि० । ऋ. १,९८,२; ७,५,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६,४; काठ. ४,१६; ४०,३ । वैश्वानरस्य सुमतौ० । ऋ. १,९८,१; तै. सं. १,५,११,३; नि. ७,२२; काठ. ४,१६ । त्वमग्ने शोचिषा० । ऋ, ७,१३,२; तै सं. १,५,११,२ । अग्निः प्रातः सवनाद्० । मै. १,३,३६; तै. सं. ३,१,९,१; काठ. ३०,६—७ ]

[ १० ] तै. ब्रा. २,८,७; २,८,५—६ । वा. २१,९; ३४,५८ । काण्व. २३,९; ३३,४६ । आ वां रथो रोदसी० । ऋ. ७,६९,१; तै. ब्रा. २,८,७,६ । स पप्रथानो अभि पञ्च० । ७, ६९,२; तै, ब्रा. २,८,७,७ । स्वश्वा यशसायातम्० । ऋ. ७,६९,३; तै. ब्रा. २,८,७,७ । यो ह स्य वां रथिरा० । ऋ ७,६९,५; तै. ब्रा. २,८,७,८; काठ. १७,१८ । युवोः श्रियं परि योषा० । ऋ. ७,६९,४; तै. ब्रा. २,८,७,८; नि. ६, ४ । युवं भुज्युमवविद्धं० । ऋ. ७,६९,७; तै. ब्रा. २,८,७,८ । ब्रह्मणस्पते त्वमस्य० । ऋ. २,२३,१९, २४,१६; तै, ब्रा. २,८५,१ ]

स ईꣳ सत्येभिः सखिभिः शुचद्भिर्गोधायसꣳ वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणꣳ व्यानट् ॥ १३४

ब्रह्मणस्पतेरभवद्यथावशꣳ सत्यो मन्युर्महि कर्मा करिष्यतः ।
यो गा उदाजत् स दिवे वि चाभजन्महीव रीतिः शवसासरत् पृथक् ॥ १३५

इन्धानो अग्निꣳ वनवद्वनुष्यतः कृतब्रह्मा शूशुवद्रातहव्या इत् ।
जातेन जातमति स प्रसर्सृते यꣳ यꣳ युजं कृणुते ब्रह्मणस्पतिः ॥ १३६

ब्रह्मणस्पते सूयमस्य विश्वहा ॥ १३७

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानाꣳ यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ १३८

आयातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।
सꣳ यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥ १३९

युवꣳ वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।
अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥ १४०

को नु वां मित्रावरुणा ऋतायन्दिवो वा महः पार्थिवस्य वा दे ।
ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो नु वाजान् ॥ १४१

तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ १४२

यद्बꣳहिष्ठं नातिविधे सुदानू अच्छिद्रꣳ शर्म भुवनस्य गोपा ।
तेन नो मित्रावरुणा अविष्टꣳ सिषासन्तो जिगीवाꣳसः स्याम ॥ १४३

प्र बाहवा ॥ १० ॥ १४४

---

[स ईꣳ सत्येभिः सखिभिः०। ऋ. १०,६७,७; अथर्व. २०,९१,७; तै. ब्रा. २,८,५,१; नि. ५,४। ब्रह्मणस्पतेरभवद्यथा० । ऋ. २,२४,१४; तै. ब्रा. २,८,५,२ । इन्धानो अग्निꣳ वनवद्० । ऋ. २,२५,१; तै. ब्रा. २,८,५,२। ब्रह्मणस्पते सूयमस्य०। ऋ. २,२४,१५; तै, ब्रा. २,८,५,२ । स इज्जनेन स विशा०। ऋ. २,२६,३; तै. सं. २,३,१४,३; तै. ब्रा. २,८,५.३ । आयातं मित्रावरुणा० । ऋ. ६,६७,३ । युवꣳ वस्त्राणि पीवसा० । ऋ. १,१५२,१; तै. ब्रा. २,८,६,६ । को नु वां मित्रावरुणा०। ऋ. ५,४१,१ । तत्सु वां मित्रावरुणा० । ऋ. ५,६२,२; तै. ब्रा. २,८,६,६। यद्बꣳहिष्ठं नातिविधे० । ऋ. ५,६२,९; तै. ब्रा. २,८,६,७ । प्र बाहवा०। ऋ. ७,६२,५; तै. सं. १,८,२२,३; २,५,१२,३; तै. ब्रा. २,७,१५,६; ८,६,७; काठ. १२,१४ ]

आ नो विश्वा आस्क्रा गमन्तु देवा मित्रो अर्यमा वरुणः सजोषाः।
भुवन् यथा नो विश्वे वृधासः करन्त्सुषाहा विथुरं न शवः॥ १४५

शं नो देवा विश्वदेवा भवन्तु शꣳ सरस्वती सह धीभिरस्तु।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः॥ १४६

ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः।
ते सौभगꣳ वीरवद्गोमदप्नो दधातन द्रविणं चित्रमस्मे॥ १४७

सुगा वो देवा, विश्वे देवाः॥ १४८

द्यौः पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृडता नः।
विश्व आदित्या अदिते सजोषा अस्मभ्यꣳ शर्म बहुलꣳ वियन्त॥ १४९

ईडे अग्निꣳ स्ववसं नमोभिरिह प्रसत्तो विचयत् कृतं नः।
रथैरिव प्रभरे वाजयद्भिः प्रदक्षिणिन्मरुताꣳ स्तोममश्याम्॥ १५०

त्विषीमन्तो अध्वरस्येव दिद्युत् तृषुच्यवसो जुह्वो नाग्नेः।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः॥ १५१

अग्ने याहि दूत्यं मा रिषण्यो देवाꣳ अच्छा ब्रह्मकृता गणेन।
सरस्वतीं मरुतो अश्विनापो यक्षि देवान् रत्नधेयाय विश्वान्॥ १५२

प्र चित्रमर्कं गृणते तुराय॥ १५३

ये अग्नयो न शोशुचन्निधाना द्विर्यत् त्रिर्मरुतो वावृधन्त।
अरेणवो हिरण्ययास एषाꣳ साकं नृम्णैः पौꣳस्येभिश्च भूवन्॥ १५४

---

[११] तै. ब्रा. २,८,६। वा. ८,१८,५५,५८; ३३,५३। काण्व. ९,१८,४१.४३; ३२,५३। [ आ नो विश्वा आस्क्रा०। ऋ.१,१८६,२; तै.ब्रा. २,८,६,३। शं नो देवा विश्वदेवा०। ऋ. ७,३५,११; अथर्व.१९,११,२; तै. ब्रा. २,८,६,३। ये सवितुः सत्यसवस्य०। ऋ.१०,३६,१३; तै.ब्रा. २,८,६,४। सुगा वो देवा०। काठ. ४,१२; कपि.३,१०। विश्वे देवाः० । ऋ. ५,५१,१३;६,९,५; ५२,१०; ५२,१३—१४; ९,५,११; १०,२४,५; ५२,१; ६५,१४; तै. सं. २.४ १४,५; ४,१,११,४; तै. ब्रा. २,८,६,५; शत. ब्रा. १,५,१,२६ । द्यौः पितः ( ०ष्पि० ) पृथिवि०। ऋ. ६,५१,५; तै. ब्रा. २,८,६,५। ईडे अग्निꣳ स्ववसं०। ऋ. ५,६०,१; अथर्व. ७,५०,३; तै. ब्रा. २,७,१२,४। त्विषीमन्तो अध्वरस्येव०। ऋ. ६,६६,१०। अग्ने याहि दूत्यं मा०। ऋ. ७,९,५; तै. ब्रा. २,८,६,४। प्र चित्रमर्कं गृणते०। ऋ. ६,६६,९; तै. सं. ४,१,११,३; तै. ब्रा. २,८,५,५; नि. ३,२१; काठ. २०,१५। ये अग्नयो न शोशुचन्निधाना०। ऋ. ६,६६,२ ]

आ वो यन्तूदवाहासो अद्य ॥ १५५

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञाः पृथिवीं धारयन्ति ।
सा नो भूतस्य भुवनस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥ १५६

असंबाधा या मध्यतो मानवेभ्यो यस्या उद्वतः प्रवतः समं महत् ।
नानारूपा ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥ १५७

यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु घृतं दुहामथो उक्षतु वर्चसा ॥ १५८

यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।
या बिभर्ति बहुधा प्राणदेजत्सा नो भूमिः पूर्वपेयं दधातु ॥ १५९

यास्ते प्राचीः प्रदिशो या उदीचीर्याश्च भूम्यधराग्याश्च पश्चा ।
शिवास्ता मह्यं चरते भवन्तु मा निपप्तं भुवने शिश्रियाणः ॥ १६०

विश्वंभरा वसुधानी पुरुक्षुर्हिरण्यवर्णा जगतः प्रतिष्ठा ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्र ऋषभा द्रविणं नो दधातु ॥ ११ ॥ १६१

आ वां मित्रावरुणा हव्यदातिं नमसा देवा अवसा ववृत्याम् ।
अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥ १६२

ऋतस्य गोपा अधितिष्ठथो रथं सत्यधर्माणा परमे व्योमन् ।
यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत् पिन्वते दिवः ॥ १६३

वाचं सु मित्रावरुणा ऋतावरीं पर्जन्यश्चित्रां वदति त्विषीमतीम् ।
अभ्रा वसथ मरुतः सु मायया द्यां वर्षयतमरुणामरेपसम् ॥ १६४

---

[ आ वो यन्तूदवाहासो० । ऋ. ५,५८,३; तै. ब्रा. २,५,५,३ । सत्यं बृहदृतमुग्रं० । अथर्व. १२,१,१ । असंबाधा(०धं) या मध्यतो०(ब०) । अथर्व. १२,१,२ । यां रक्षन्त्यस्वप्ना० । अथर्व. १२,१,७ । यस्यां पूर्वे पूर्वजना० । अथर्व. १२,१,५ ( पूर्वार्धः ); १२,१,४ ( उत्तरार्धः ) । यास्ते प्राचीः प्रदिशो० । अथर्व. १२,१,३१ । विश्वंभरा वसुधानी० । अथर्व. १२,१,६, ]

[ १२ ] तै. ब्रा. २,८,६;२,८,३—४ । वा. १७,३९; २१,८; २०,५२; २९,३४ । काण्व. १८,३९; २३,८; २२,३७; ३१,४६ । [ आ वां मित्रावरुणा० । ऋ. १,१५२,७; तै. ब्रा. २,८,६,५ । ऋतस्य गोपा अधितिष्ठथो० । ऋ. ६,६३,१ । वाचं सु मित्रावरुणा० । ऋ. ५,६३,६; तै. ब्रा. २,४,५,४ ]

सम्राजा अस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।
वृष्टिꣳ वाꣳ राधो अमृतत्वमीमहे द्यावापृथिवी विचरन्ति तन्यवः ॥ १६५

आ नो मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिडाभिः ।
प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारोः ॥ १६६

सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।
चित्रेभिरभ्रैरुपतिष्ठतो रवं द्यां वर्षयतो असुरस्य मायया ॥ १६७

आ ते महो, यो जात एवा,—ऽभि गोत्राणि ॥ १६८

आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्युमिन्द्र ।
आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽवतारीर्दासीः ॥ १६९

अयꣳ शृण्वे अध जयन्नुत घ्नन्नयमुत प्रकृणुते युधा गाः ।
यदा सत्यं कृणुते मन्युमिन्द्रो विश्वं दृढं भयत एजदस्मात् ॥ १७०

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ १७१

इन्द्रस्तरस्वानभिमातिहोग्रो हिरण्यवर्ण इषिरः स्वर्षाः ।
तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ १७२

हिरण्यवर्णो अभयं कृणोत्वभिमातिहेन्द्रः पृतनासु जिष्णुः ।
स नः शर्म त्रिवरूथꣳ वियꣳसद्यूयं पात स्वस्तिभिः सदा नः ॥ १७३

इन्द्रꣳ स्तुहि वज्रिणꣳ सोमपृष्ठं पुरोडाशस्य जुषताꣳ हविर्नः ।
हत्वाभिमातीः पृतनाः सहस्वानथाभयं कृणुहि विश्वतो नः ॥ १७४

---

सम्राजा अस्य भुवनस्य० । ऋ. ५,६३,२ । आ नो मित्रावरुणा० । ऋ. ७,६५,४; तै. ब्रा. २,८,६,७ । सम्राजा उग्रा वृषभा० । ऋ. ५,६३,३ । आ ते महो० । ऋ. ७,२५,१; तै. सं. १,७,१३,२ । यो जात एव० । ऋ. २,१२,१; अथर्व. २०,३४,१; तै. सं. १,७,१३,२; तै. ब्रा. २,८,३,३; नि. ३,२१; १०,१०; काठ. ८,१६ । अभि गोत्राणि० । ऋ. १०,१०३,७; सा. १८५५; अथर्व. १९,१३,७; तै. सं. ४,६,४,२ । आभिः स्पृधो मिथतीः० । ऋ. ६,२५,२; तै. ब्रा २,८,३,३ । अयꣳ शृण्वे अध० । ऋ. ४,१७,१०; तै. ब्रा. २,८,३,३ । अनु स्वधामक्षरन्नापो० । ऋ. १,३३.११; तै. ब्रा. २,८,३,४ । तस्य वयꣳ सुमतौ० । ऋ. ६,४७,१३; १०.१३१,७; अथर्व. ७,९२,१; २०,१२५,७; तै. सं. १,७,१३,५; तै. ब्रा. २,८,४.१; नि. ६,७ । हिरण्यवर्णो अभयं० । तै. ब्रा. २,८,४,१ । इन्द्रꣳ स्तुहि वज्रिणꣳ० । तै. ब्रा. २,८,४,१ ]

❀

स्तुहि शूरꣳ वज्रिणमप्रतीकꣳ वृत्रहणं पुरुहूतमिन्द्रम् ।
य एक इच् शतपतिर्जनेषु तस्मा इन्द्राय हविषा जुहोत ॥ १७५
इन्द्रो देवानामधिपाः पुरोहितो विशां पतिरभवद् वाजिनीवान् ।
अभिमातिहा तविषस्तुविष्मानस्मभ्यं चित्रꣳ वृषणꣳ रयिं दात् ॥ १७६
य इमे द्यावापृथिवी महित्वा बलेनाद्दꣳहदभिमातिहेन्द्रः ।
स नो हविः प्रतिगृभ्णातु रातये देवानां देवो निधिपा नो अव्यात् ॥ १२ ॥ १७७

इन्द्रो वृत्रमतरद् वृत्रतूर्येऽनाधृष्यो मघवा शूर इन्द्रः ।
अन्वेनꣳ विशो अमदन्त पूर्वीरयꣳ राजा जगतश्चर्षणीनाम् ॥ १७८
स एव वीरः स उ वीर्यवान्त्स एकराजो जगतः परस्पाः ।
यदा वृत्रमतरच् शूर इन्द्रो अथैकराजो अभवज्जनानाम् ॥ १७९
इन्द्रो यज्ञꣳ वर्धयन् विश्ववेदाः पुरोडाशस्य जुषताꣳ हविर्नः ।
वृत्रं तीर्त्वा दानवꣳ वज्रबाहुर्दिशोऽदृꣳहद् दृꣳहिता दृꣳहणेन ॥ १८०
इमꣳ यज्ञꣳ वर्धयन् विश्ववेदाः पुरोडाशं प्रतिगृभ्णात्विन्द्रः ।
यदा वृत्रमतरच् शूर इन्द्रो अथाभवद्दमिताभिक्रतूनाम् ॥ १८१

अहन् वृत्रम् ॥ १८२

इन्द्रो देवाञ्शम्बरहत्य आवदिन्द्रो देवानामभवत् पुरोगाः ।
इन्द्रो यज्ञे हविषा वावृधानो वृत्रतूर्नो अभयꣳ शर्म यꣳसत् ॥ १८३

इन्द्रस्य वृष्णो, जनिष्ठा उग्र, इन्द्र एषां नेता, भूरि चकर्थ ॥ १८४

---

[स्तुहि शूरꣳ वज्रिणम्०। तै. ब्रा. २,८,४,२। इन्द्रो देवानामधिपाः०। तै. ब्रा. २,८.४,२। य इमे द्यावापृथिवी०। तै. ब्रा. २,८,४,३ ]

[ १३ ] तै. ब्रा. २.८,३—४। वा. १७,४०–४१;३३,६४; २०,३६। काण्व. १८,४०—४१; ३२,६४; २२,२१ [इन्द्रो वृत्रमतरद् वृत्रतूर्ये०। तै. ब्रा. २,८,३,६। स एव वीरः स उ०। तै. ब्रा. २,८,३,७। इन्द्रो यज्ञꣳ वर्धयन्०। तै. ब्रा. २,८,३,७। इमꣳ यज्ञꣳ वर्धयन्०। तै. ब्रा. २,८.३,८। अहन् वृत्रम्०। ऋ. १,३२,५; तै. ब्रा. २,५,४,३; नि. ६,४। इन्द्रो देवाञ्शम्बरहत्य०। तै. ब्रा. २,८,३,८। इन्द्रस्य वृष्णो०। ऋ. १०,१०३,९; सा. १८१७; अथर्व. १९,१३ १०; तै. सं. ४,६,४,३; काठ. १८,५; कपि. २८,५। जनिष्ठा उग्रः०। ऋ. १०,७३, १; तै. ब्रा. २,८,३,४; काठ. ४,८; कपि. ३,६। इन्द्र एषां ( आसां ) नेता०। ऋ. १०,१०३,८; सा. १८५६; अथर्व. १९,१३,९; तै. सं. ४,६,४,३; काठ. १८,५; कपि. २८,५। भूरि चकर्थ०। ऋ. १,१६५,७; नि. ६,७; काठ. ९,१८; २३,११ ]

त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः ।
स्तवानेभिः स्तवस इन्द्र देवैर्विद्यामेषं वृजनं जीरदानुम् ॥ १८५

यः सप्त सिन्धूꣳरदधात् पृथिव्यां यः सप्त लोकानकृणोद्दिशश्च ।
इन्द्रो हविष्मान्त्सगणो मरुद्भिर्वृत्रतूर्नो यज्ञमिहोपयासत् ॥ १८६

समिद्धा इन्द्रो, ऽनवस्ते ॥ १८७

इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम् ॥ १८८

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रꣳ स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः ॥ १८९

इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ॥ १९०

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणाभिनद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥ १९१

त्वमपो वि दुरो विषूचीरिन्द्र दृढमरुजः पर्वतस्य ।
राजाभवो जगतश्चर्षणीनाꣳ साकꣳ सूर्यं जनयन् द्यामुषासम् ॥ १९२

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥ १९३

स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १९४

---

[त्वं मानेभ्य इन्द्र विश्वजन्या० । ऋ. १,१६९,८ । समिद्धा इन्द्रो० । तै. ब्रा. २,६,८, कठ. ३८,६ । अनवस्ते० । ऋ. ५,३१,४; सा. ४३९, ४४०; तै. सं. १,६,१२,६; तै. ब्रा. २,८,४,३; काठ. ८,१६ । इन्द्रस्य नु वीर्याणि० । ऋ. १,३२,१; सा. ६१२; अथर्व. २,५,५; तै. ब्रा. २,५,४,१; ८,४,३ । अहन्नहिं पर्वते० । ऋ. १,३२,२; अथर्व. २,५,६; तै. ब्रा. २,५,४,२; ८,४,३ । इन्द्रो यातोऽवासितस्य० । ऋ. १,३२,१५; तै. ब्रा. २,८,४,३ । अभि सिध्मो अजिगादस्य० । ऋ. १.३३,१३; तै. ब्रा. २,८,४,४; नि. ६,१६ ]

[ १४ ] तै. ब्रा. २,८,१,६ । वा. १७,४३; ८,४; ३३,६८ । काण्व. १८,४३;८,३; ३२,६८ । [ त्वमपो वि दुरो विषूचीः० । ऋ. ६.३०,५ । इन्द्रो राजा जगतश्चर्षणिनाम्० । ऋ. ७,२७,३; अथर्व. १९,५,१; तै. ब्रा. २, ८,५,८ । स्वादोरित्था विपूवतो० । ऋ. १,८४,१०; सा. ४०९,१००५; अथर्व. २०,१०९,१ ]

युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः ।
अजूर्यतो वज्रिणो वीर्याणीन्द्रः श्रुतस्य महतो महानि ॥ १९५
इदं नमो वृषभाय स्वराजे उक्थशुष्माय तवसेऽवाचि ।
अस्मिन्निन्द्र वृजने सर्ववीराः स्मत् सूरिभिस्तव शर्मन्त्स्याम ॥ १९६
अस्माकमिन्द्रः संमृतेषु ध्वजेषु ॥ १९७
आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंतमेन ।
अनागास्त्वे अदितित्वे तुरास इमं॒ यज्ञं दधतु श्रोषमाणाः ॥ १९८
न दक्षिणा विचिकिते न सव्या न प्राचीनमादित्या नोत पश्चा ।
पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥ १९९
धारयन्तः ॥ २००
तिस्रो भूमीर्धारय॒स्त्रीन् रुत द्यूंस्त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु ॥ २०१
यज्ञो देवानां प्रत्येतु सुम्नम् ॥ २०२
शुचिरपः सूयवसा अदब्धा उपक्षयन्ति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ २०३
आदित्यो देव उदगात् पुरस्ताद्विश्वा भूतानि प्रति मोदमानः ।
तस्य देवाः प्रसवं॒ यन्ति सर्वे यत्रास्य नाम परमं गुहा विदुः ॥ २०४
यस्य भान्ति केतवो यस्य रश्मयो यस्येमा विश्वा भुवनानि सर्वा ।
तस्यादित्यस्य प्रसवं मनामहे यस्तेजसा प्रथमजा विभाति ॥ २०५

---

[ युध्मस्य ते वृषभस्य० । ऋ. ३,४६,१ । इदं नमो वृषभाय० । ऋ. १,५१,१५ । अस्माकमिन्द्रः समृतेषु० । ऋ. १०,१०३,११; सा. १८५९; अथर्व. १९,१३,११; तै. सं. ४,६,४,३; काठ. १८,५; कपि. २८,५ । आदित्यानामवसा० । ऋ. ७,५१,१; तै. सं. २,१,११,६; तै. ब्रा. २,८,१,६ । न दक्षिणा विचिकिते० । ऋ. २,२७,११; तै. सं. २,१,११,५; तै. ब्रा. २,८,१,६ । धारयन्तः० । ऋ. २,२७,४; तै. सं. २,१,११,४; तै. ब्रा. २,८,१,६; काठ. ११,१२ । तिस्रो भूमीर्धारयं॒स्त्रीन्० । ऋ. २,२७,८; तै. सं. २,१,११,५; तै. ब्रा. २,८,१,६; काठ. ११,१२ । यज्ञो देवानां प्रत्येतु (०ति०) । ऋ. १,१०७,१; तै. सं. १,४,२२,१; २,१,११,४; तै. ब्रा. २,८,१,६; काठ. ४,१०; कपि. ३,८ । शुचिरपः सूयवसा० । ऋ. २,२७,१३; तै. सं. २,१,११,४; तै. ब्रा. २,८,१,६ । यस्य भान्ति केतवो० । तै. ब्रा. ३,१,१,१ ]

विभाति केतुररुणः पुरस्तादादित्यो विश्वा भुवनानि सर्वा ।
सुगं नु पन्थामन्वेति प्रजानन् पिता देवानामसुरो विपश्चित् ॥ २०६

व्रतेन यं व्रतिनो वर्धयन्ति देवा मनुष्याः पितरश्च सर्वे ।
तस्यादित्यस्य प्रसवं मनामहे यस्तेजसा प्रथमजा विभाति ॥ २०७

आदित्यः शुक्र उदगात् पुरस्ताज्ज्योतिः कृण्वन् वि तमो बाधमानः ।
आभासमानः प्रदिशो नु सर्वा भद्रस्य कर्ता रोचमाना आगात् ॥ २०८

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुना अभूतामादित् प्रापश्यन् भुवनानि विश्वा ॥ १४ ॥ २०९

वयमु त्वा गृहपते जनानामग्ने अकर्म समिधा बृहन्तम् ।
अस्थूरि नो गार्हपत्यानि सन्तु तिग्मेन नस्तेजसा संशिशाधि ॥ २१०

अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।
यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ २११

तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो अद्यौत् ।
अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु ॥ २१२

आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत् सूदयच्च ॥ २१३

स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥ २१४

स इदस्तेव प्रतिधादसिष्यञ्छिशीत तेजोऽयसो न धाराम् ।
चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥ २१५

हव्यवाडग्निरजरः पिता नः ॥ २१६

---

[ यदेदेनमदधुर्यज्ञियासो० । ऋ. १०,८८,११; नि. ७,२९ ]

[ १५ ] [ वयमु त्वा गृहपते० । ऋ. ६,१५,१९; तै. ब्रा. ३,५,१२,१ । अग्ने स क्षेषदृतपा० । ऋ. ६,३,१ । तेजिष्ठा यस्यारतिः० । ऋ. ६,१२,३ । आ यदिषे नृपतिं० । ऋ. १,७१,८; तै. सं. १,३,१४,६ । स तेजीयसा मनसा० । ऋ ३,१९,३; तै. सं. १,३,१४,६ । स इदस्तेव प्रतिधाद्० । ऋ. ६,३,५ । हव्यवाड(ळ)-ग्निरजरः० । ऋ. ५,४,२; तै. सं. ३,४,११,१ ]

मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।
नि यं दधुर्मनुष्यासु विक्षु ३स्वर्णं चित्रं वपुषे विभावम् ॥ २१७

अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋभूणां पर्येति परिवीतो विभावा ॥ २१८

अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची ।
आयुं न यं नमसा रातहव्या अञ्जन्ति सुप्रयसं पञ्च जनाः ॥ २१९

स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात् ।
विश्वायुर्यो अमृतो मर्त्येषु पर्यभूदतिथिर्जातवेदाः ॥ २२०

यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः ।
आ यो विवाय सख्या सखिभ्योऽपरिहृतो अत्यो न सप्तिः ॥ २२१

यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥ २२२

एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च ।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥ २२३

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ २२४

आ नो गहि सख्येभिः शिवेभिर्महान् महीभिरूतिभिः सरण्यन् ।
अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥ २२५

कुर्मस्ता आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः ।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥ २२६

---

[मथीद्यदीं विष्टे०। ऋ. १,१४८,१ । अयं स यस्य शर्मन्०। ऋ. १,६,१ । अदिद्युतत्स्वपाको०। ऋ. ६,११,४; अथर्व. ३,३,१ । स नो विभावा चक्षणिर्न० । ऋ. ६,४,२ । यो भानुभिर्विभावा विभाति० । ऋ १०,६,२ । यदग्न एषा समितिः० । ऋ. १०,११,८; अथर्व. १८,१,२६ । एता ते अग्न उचथानि० । ऋ. १,७३,१० । वि पृक्षो अग्ने मघवानो० । ऋ १,७३,५ । आ नो गहि सख्येभि०। ऋ. ३,१,१९ । कुर्मस्ता आयुरजरं० । ऋ. १०,५१,१७ ]

हविषीत्र भजमानो ना आभाग् देवेभ्यः शिक्षन्नुत मानुषेभ्यः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीपितो यजीयान् ॥ १५ ॥ २२७

अग्ने दा, दा नो अग्ने, ऽग्निर्ददात्य,—न्नपते अन्नस्य नो देह्य,—ग्निना रयिमश्नवत्,
सꣳ समिद्युवसे वृषन्, यास्ते ॥ २२८

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या अनु स्वाः ॥ २२९

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेताः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥ २३०
अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥ २३१
इमꣳ यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः सꣳविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ २३२
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
याꣳश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ २३३
परेयिवाꣳसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतꣳ संगमनं जनानाꣳ यमꣳ राजानꣳ हविषा दुवस्य ॥ २३४

---

[ १६ ] तै. सं. २,६,१२; तै. ब्रा. २,८,५। वा. ११,८३; १५,३०; १३,२२; १८,४६। काण्व. १२,८४; १६,५१; १४,२२; २०,१६। [अग्ने दा०। ऋ.३,२४,५; तै. सं. २,२,१२,६; काठ. ६,१०। दा नो अग्ने०। मै. ४,१२,२; ऋ. ७,१,५; २,२,७; तै. सं. २,२,१२,६। अग्निर्ददाति०। ऋ. ५,२५,६; काठ. २,१५। अन्नपते अन्नस्य०। तै. सं. ४,२,३,१; तै. ब्रा. ३,११,४; काठ. १९,१२; १६,१०; कपि. २५,१; ३२,२। अग्निना रयिमश्नवत्०। ऋ. १,१,३; तै. सं. ३,१,११,१; ४,३,१३,५। सꣳ समिद्युवसे वृषन्०। ऋ.१०,१९१,१; अथर्व.६.६३,४; तै. सं. २,६,११,४; ४,४,४,४; काठ. २,१५। यास्ते०। मै. २,७,१६; ऋ. १,४३,९; २,३२,५; ६,५८,३; ९,६२,७; सा. ९७९; अथर्व. ७,४८,२; तै. सं. ३,३,११,५; ४,२,९,४; ५,७,७,३; तै. ब्रा. २,५,५,५। काठ. १६,१६; ४०,१३। यमो नो गातुं प्रथमो०। ऋ. १०,१४,२; अथर्व. १८,१,५०। प्रेहि प्रेहि पथिभिः०। ऋ. १०,१४,७; अथर्व. १८,१,५४। अङ्गिरोभिरागहि०। ऋ.१०,१४,५; अथर्व. १८,१,५९; तै. सं. २,६,१२,६। इमꣳ यम प्रस्तरमा०। ऋ. १०,१४,४; अथर्व. १८,१,६०; तै. सं. २,६,१२,६। मातली कव्यैर्यमो०। ऋ. १०,१४,३; अथर्व. १८,१,४७; तै. सं. २,६,१२,५; तै. ब्रा. २,६,१६,२। परेयिवाꣳसं प्रवतो०। ऋ. १०, १४,१; अथर्व. १८,१,४९; तै. आ. ६,१,१; नि. १०,२० ]

यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति ।
ताभिर्यासि दूत्य सूर्यस्य कामेन कृतः श्रव इच्छमानः ॥ २३५
शुक्रं ते अन्यद्यजतं ते अन्यत् ॥ २३६
पूषेमा आशा अनुवेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रजानन् ॥ २३७
प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ २३८
पूषा सुबन्धुर्दिव आ पृथिव्या इडस्पतिर्मघवा दस्मवर्चाः ।
यं देवासो अददुः सूर्यायै कामेन कृतं तवस स्वञ्चम् ॥ २३९
अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते ॥ १६ ॥ २४०
यद्देवा देवहेडन यद्वाचानृतमोदिम । आदित्यास्तस्मान्मुञ्चततस्य त्वेनमामुत ॥ २४१
देवा जीवनकाम्या यद्वाचानृतमोदिम । तस्मान्न इह मुञ्चत विश्वे देवाः सजोषसः ॥ २४२
ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति ।
कृतान्नः पाह्यंहसो यत् किंचानृतमोदिम ॥ २४३
इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः ।
ते नो मुञ्चन्त्वेनसो यत् किंचानृतमोदिम ॥ २४४
संजातशंसादुत जामिशंसाज्ज्यायसः शंसादुत वा कनीयसः ।
अनाधृष्टं देवकृत यदेनस्तस्मात्त्वमस्मान् जातवेदो मुमुग्धि ॥ २४५

---

[यास्ते पूषन्नावो अन्तः० । ऋ. ६,५८,३; तै. ब्रा. २,५,५,५; ८,५,३ । शुक्रं ते अन्यद्यजतं० । ऋ. ६, ५८,१; सा. ७५; तै. सं. ४,१,११,२; तै. ब्रा. २,८,५,३; तै. आ. १,२,४; १०,१; ४,५,६; नि. १२,१७; काठ. ४,१५; २०,१५। पूषेमा आशा अनुवेद०। ऋ. १०,१७,५; अथर्व. ७,९,२; तै. ब्रा. २,८,५,३; ४,१,५; तै. आ. ६,१,१ । प्रपथे पथामजनिष्ट० । ऋ. १०,१७,६; अथर्व. ७,९,१; तै. ब्रा. २,८,५,३ । पूषा सुबन्धुर्दिव आ० । ऋ. ६,५८,४; तै. ब्रा. २,८,५,४ । अजाश्वः पशुपा० । ऋ. ६,५८,२; तै. ब्रा. २,८,५,४]

[१७] तै. आ. २,३-४ । वा. २०,१४-१६; २१,१-४; १२,१२; १८,४९; २,२४; ८,१४,१६ । काण्व. २२,१-३; २३,१-४; १३,१३; २०,१९; २,४४; ९,१६ । [देवा जीवनकाम्या० । तै. ब्रा. ३,७,१२,१; तै. आ. २,३,१ । ऋतेन द्यावापृथिवी० । तै. ब्रा. ३,४,१२,२; तै. आ. २,३,१ । सजातशंसादुत० । तै. ब्रा. ३,७,१२,२; तै. आ. २,३ ]

यदुन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि यानि कानि च चकृम ॥ २४६

येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निरमोचि ।
येनेन्द्रो विश्वा अजुहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान अयाक्षि ॥ २४७

यद्दैव्यमृणमहं बभूव धिष्यं वा संचकर जनेभ्यः ।
अग्निर्नस्तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताम् ॥ २४८

यत् कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरामि ।
एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥ २४९

यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः ।
उग्रं पश्या च राष्ट्रभृच्च तान्यप्सरसामनुदत्तानृणानि ॥ २५०

उग्रं पश्येद्राष्ट्रभृत् किल्बिषानि यदक्षवृत्तमनुदत्तमेतत् ।
नेम्न ऋणानृणवानीप्समानो यमस्य लोके निधिरजराय ॥ २५१

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ २५२

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ २५३

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ २५४

---

[ यदन्तरिक्षं पृथिवीमुत० । तै. सं. १,८,५ ३; तै. ब्रा. ३,७,१२,४; तै. आ. २,६,२, काठ. ९,६; कपि.८,१०। येन त्रितो अर्णवान्निः० । तै. आ. २,३ । यत् कुसीदमप्रतीतं० । तै. सं. ३,३,८,१; तै. आ. २,३ । यद्धस्ताभ्यां चकर०। तै. ब्रा. ३,७,१२,३; तै. आ. २,४ । उग्रं पश्येद्राष्ट्रभृत्० । तै. आ. २,४ । इमं मे वरुण श्रुधी० । ऋ. १,२५,१९; सा. १५८५; तै. सं. ६,१,११,६; तै. ब्रा. ३,७,११,३; १२,३; तै. आ. २,४,४; काठ. ४,१६; ११,१२ । तत्त्वा यामि ब्रह्मणा० । ऋ. १,२४,११; तै. सं. २,१,११,६; तै. ब्रा. २,८,१,६; ३,७, ११,३; १२,६; तै. आ, २,४; काठ. ४,१६; ११,१३ । उदुत्तमं वरुण पाशम्० । ऋ. १,२४,१५; सा. ५८९; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; २,५,१२,१; ४,२,१,३; तै. ब्रा. २,७,१६,४; ८,१,६; नि. २,१३; काठ. ३,८; १६,८; कपि. २,१५; ३२,१ ]

*

अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांऽसि शिश्रथः कृतानि ॥ २५५

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांऽसि प्रमुमुग्ध्यस्मत् ॥ २५६

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥ २५७

संकसुको विकसुको निर्ऋतो यश्च निस्वनः । तेऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतम् ॥ २५८
निर्यक्ष्ममचीचते कृत्यां निर्ऋतिं चकार ।
तेन योऽस्मत् समृच्छातै तमस्मै प्रसुवामसि ॥ २५९

दुःशंसानुशंसाभ्यां घनेनानुघनेन च ।
तेन योऽस्मत् समृच्छातै तमस्मै प्रसुवामसि ॥ २६०

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विरिष्टम् ॥१७॥ २६१

शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।
ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥ २६२

या वः शर्म शशमानाय सन्ति ॥ २६३

अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः ।
वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ॥ २६४

---

[ अव ते हेडो (॰ळो) वरुण॰ । ऋ. १,२४,१४; तै. सं. १,५,११,३; २,५,१२,१; तै. ब्रा. २,७,१६,४; ८,१,६; तै. आ. २,४,४; काठ. ४०,११ । त्वं नो अग्ने वरुणस्य॰ । ऋ. ४,१,४; तै. सं. २,५,१२,३; तै. ब्रा. ३,७,११,३; १२,६; तै. आ. २,४,४; ४,२०,३; काठ. ३४,१९ । स त्वं नो अग्नेऽवमो॰ । ऋ. ४,१,५; तै.सं. २,५,१२,३; काठ. ३४,१९; कपि. ४८,१ । संकसुको विकसुको॰ । अथर्व. १२,२,१४; तै. आ. २,४ । निर्यक्ष्ममचीचते॰ । तै. आ. २,४ । सं वर्चसा पयसा॰ । अथर्व. ६,५३,३; तै. सं. १,४,४४,१; तै. आ. २,४,८; काठ. ४,१२; कपि. ३,१०]

[ १८ ] तै. ब्रा. २,८,५; ७ । [ शुची वो हव्या मरुतः॰ । ऋ. ७,५६,१२; तै. ब्रा. २,८,५,५ । या वः शर्म॰ । ऋ. १,८५,१२; तै. सं. १,५,११,५; २,१,११,१; ३,१४,४; तै. ब्रा. २,८,५,६; काठ. ८,१७; ११,१३ । अंसेष्वा मरुतः॰ । ऋ. ७,५६,१३; तै. ब्रा. २,८,५,५ ]

ऋष्टयो वो मरुतो अंसयोरधि ॥ २६५

इमे तुरं मरुतो रामयन्तीमे सहः सहस आनमन्ति ।

इमे शंसं वनुष्यतो निपान्ति गुरु द्वेषो अररुषे दधान्ति ॥ २६६

अरा इवेदचरमा अहेव प्र प्रजायन्ते अकवा महोभिः ।

पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः संमिमिक्षुः ॥ २६७

अग्नीषोमा इमं, युवमेतानि ॥ २६८

अग्नीषोमा यो अद्य वामिदं वचः सपर्यति ।

तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥ २६९

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।

अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥ २७०

अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् ।

स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ २७१

अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।

सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शंयोः ॥ २७२

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः ।

स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणायाह्यर्वाङ् ॥ २७३

विवेष यन्मा धिषणा जजान ॥ २७४

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिन्द्रम् ।

समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आविशन्ति ॥ २७५

सत्यमित्तन्न त्वावँ अ३न्योऽस्तीन्द्र देवो न मर्त्यो ज्यायान् ।

अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम् ॥ २७६

---

[ ऋष्टयो वो मरुतो० । ऋ. ५,५७,६ । इमे तुरं मरुतो० । ऋ. ७,५६,१९; तै. ब्रा. २,८,५,६ । अरा इवेदचरमा० । ऋ. ५,५८,५; तै. ब्रा. २,८,५,७ । अग्नीषोमा यो अद्य० । ऋ. १,९३,२; तै. ब्रा. २,८,७,९ । आन्यं दिवो मातरिश्वा० । ऋ. १,९३,६; तै. सं. २,३,१४,२; कठ. ४,१६ । अग्नीषोमा य आहुतिं० । ऋ. १,९३,३; तै. ब्रा. २,८,७,१० । अग्नीषोमा हविषः० । ऋ. १,९३,७; तै. सं. २,३,१४,२; तै. ब्रा. २,८,७,१० । आ चर्षणिप्रा वृषभो० । ऋ. १,१७७,१; तै. ब्रा. २,४,३,११; काठ. ३८,७ । विवेष यन्मा धिषणा० । ऋ. ३,३२,१४; तै. १,६,१२,३; २,५,१२,५; तै. ब्रा. १,६,९,१; काठ. ८,१६; ३८,७ । तं सध्रीचीरूतयो० । ऋ. ६,३६,३; तै. ब्रा. २,४,५,२; ६,९,१ । सत्यमित् तन्न त्वावं० (०वाँ०) । ऋ. ६,३०,४; तै. ब्रा. २,६,९,१ ]

प्र ससाहिषे पुरुहूत शत्रून् ॥ २७७

स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाडिन्द्र तव्यम् ।

रक्षा च नो मघोनः पाहि सूरीन् राये च नः स्वपत्या इषे धाः ॥ २७८

[ ३१४४ ]

॥ इति खिलकाण्डे चतुर्दशः प्रपाठकः ॥१४॥



॥ इति खिलकाण्डं समाप्तम् ॥

इति मैत्रायणी-संहिता समाप्ता ।

[प्र ससाहिषे पुरुहूत० । ऋ. १०,१८०,१; तै सं. ३,४,११,४; तै. ब्रा. २,६,९,१; ३,५,७,४; काठ. ३८,७; १०,१२ । स शेवृधमधि धा० । ऋ. १,५४,११; तै. ब्रा. २,६,९,१; काठ. ३८,७]

# मैत्रायणी-संहितायां ऋग्वेद-मन्त्राः ।

## प्रथमं काण्डम् ।

| पृष्ठं | मन्त्रः | प्रपा. | मं.सं. | ऋग्वेदे |
|---|---|---|---|---|
| १ | मा व (वः) स्तेन ईशत माघशँसः । | १ | १ | ६।२८।७ |
| | सहस्रवलिशा(०वल्शा)...रुहेम । | | ५ | ३।८।११ |
| ३ | परि वाजपतिः कविः०... दाशुषे । | | २१ | ४।१५।३ |
| ५ | नित्यहोतारं (वीतिहोत्रं) ० महि । | | ३१ | ५।२६।३ |
| ६ | आपो मा (अस्मान्)०... एमि । | २ | ५ | १०।१७।१० |
| ७ | विश्वो देवस्य नेतुर्मर्तो० पुष्यसे । | | १३ | ५।५०।१ |
| | इमां धियं०... रुहेयम् (रुहेम) । | | १५ | ८।४२।३ |
| ८ | त्वमग्ने व्रतपा०... यज्ञेष्वीड्यः । | | २८ | ८।११।१ |
| | अपि पन्थामगन्महि०... वसु । | | ३२ | ६।५१।१६ |
| ९ | अस्तभ्नाद् द्यामृषभो०...व्रतानि । | | ३९ | ३।३०।९<br>८।४२।१ |
| | वनेषु व्यन्तरिक्षं ०... मद्रौ । | | ४० | ५।८५।२ |
| | नमो मित्रस्य ०... शंसत । | | ४५ | १०।३७।१ |
| ११ | विभ्राड् बृहत् पिबतु०... जति । | | ५९ | १०।१७०।१ |
| | युञ्जते मन उत युञ्जते०...ष्टुतिः । | | ६१ | ५।८१।१ |
| | इदꣳ विष्णुर्वि० ... पाꣳसुरे । | | ६३ | १।२२।१७ |
| | इरावती धेनुमती०... मयूखैः । | | ६४ | ७।९९।३ |
| १२ | विष्णोर्नु कं ०... रुगायः । | | ६९ | १।१५४।१ |
| | प्र तद्विष्णुः स्तवते०... विश्वा । | | ७१ | १।१५४।२ |
| | उच्छ्र (०च्छ्र) यस्व वनस्पते । | | ७६ | ३।८।३ |
| १३ | परि त्वा गिर्वणो०... जुष्टयः । | | ७९ | १।१०।१२ |
| | त्वꣳ सोम तनू०... वरूथम् । | | ८२ | ८।७९।३ |
| | अग्ने नय सुपथा०... विधेम । | | ८४ | १।१८९।१ |
| | एवा वन्दस्व वरुणं०... उपस्थे । | | ८६ | ८।४२।२ |
| १४ | प्रणिनाय महते सौभगाय ॥<br>वनस्पते शतवल्शि (० वल्शो)०शो | | ९१ | ३।८।११ |
| | ता ते(वां)धामा(वास्तू)न्युश्मसि | | ९६ | १।१५४।६ |
| | विष्णो कर्माणि ०... सखा । | | ९७ | १।२२।१९ |
| १५ | तद्विष्णोः परमं ०... ततम् । | | ९९ | १।२२।२० |
| | न वा (उ) एत०... दधातु । | | १०६ | १।१६२।२१<br>१०।१७।४ |
| १६ | यो नो द्वेष्ट्यधरः सः । | २ | १०८ | ३।५३।२१ |
| १७ | उदुत्तमꣳ वरुण ०... स्याम । | | ११८ | १।२४।१५ |
| १८ | यमग्ने पृत्सु मर्त्यमवा०...रिषः । | ३ | ६ | १।२७।७ |
| १९ | आ वायो भूष शुचि०...पेयम् । | | २० | ७।९२।१ |
| | इन्द्रवायू इमे सुता०...हि । | | २२ | १।२।४ |
| | अयꣳ वां मित्रावरुणा०...हवम् । | | २४ | १।४७।१<br>२।४१।४ |
| | या वां कशा० मिमिक्षतम् । | | २६ | १।२२।३ |
| २० | अयꣳवेनश्चोदयत्०...रिहन्ति । | | ३१ | १०।१२३।१ |
| | तं प्रत्नथा पूर्वथा०...वर्धसे | | ३३ | ५।४४।१ |
| २१ | ये देवा(०सो) ...जुषध्वम् । | | ४० | १।१३९।११ |
| | मूर्धानं दिवो अरतिं०...देवाः । | | ४५ | ६।७।१ |
| | ध्रुवं ध्रुवेण हविषा०... मसि । | | ४८ | १।१७३।६ |
| | यथा नः सर्वा०...असत् । | | ४८ | १०।१४१।४ |
| २२ | इन्द्राग्नी आगतꣳ ०धियेषिता । | | ५१ | ३।१२।१ |
| | ओमासश्चर्षणीधृतो०...सुतम् । | | ५३ | १।३।७ |
| | इन्द्र मरुत्व इह०...सुयज्ञाः । | | ५५ | ३।५१।७ |
| | जनिष्ठा उग्रः० जनिष्टम् (धनिष्ठा) | | ५७ | १०।७३।१ |
| | मरुत्वन्तꣳ वृषभꣳ०...हुवे । | | ५९ | ३।४७।५ |
| | मरुत्वाꣳ इन्द्र ०... सुतानाम् । | | ६१ | ३।४७।१ |
| २३ | सजोषा इन्द्र सगणो०...नः । | | ६३ | ३।४७।२ |
| | महं (०हाँ) इन्द्रो य०...वावृधे । | | ६५ | ८।६।१ |
| | महं (०हाँ) इन्द्रो नृव०...भूत् । | | ६७ | ६।१९।१ |
| | कदा चन स्तरीरसि०...पृच्यते । | | ६९ | ८।५१।७ |
| | कदा चनः प्रयुच्छस्युभ०...दिवि । | | ७१ | ८।५२।७ |
| | यज्ञो देवानां०... वित्तरासत् । | | ७३ | १।१०७।१ |
| | विश्वस्य भुवनस्य राजा । | | ७४ | ९।९७।५६ |
| २४ | अदब्धेभिः सवितः०...ईशत । | | ७६ | ६।७१।३ |
| | अगना(०ग्न)०...दुच्छुनाम् । | | ८६ | ९।६६।१९ |
| | ओजस्तदस्य तित्विषे०...रोदसी । | | ८८ | ८।६।५ |
| २५ | भद्रश्च (०म) स्य०...यथा । | | ९० | १।५०।३ |

समक्तमग्निना हविः ४,१.९१
समग्निरग्निनागत ४,९,९६
समग्निर्वसुभिर्नो ४,१२,२९
समग्निस्तपसागत ४,९.९७
समस्त्वग्निमवसे ४,११,१०२
समन्या यन्ति २,१३,१; ४ १२,९३
समाना वा आकूतानि २,२,२६
समानो मन्त्रः समितिः २,२,२७
समानो वा एष ४,४,११
समापा ओषधीभिः १,१,१९
समावद्वृत्रघ्नधरा २,६.३०
समावृतत्पृथिवी ३.११.११२
समास्त्वाग्ना ऋतवो२,१२,२५;३,४,६
समितꣳ संकल्पेथाꣳ २,७,१४०
समित्स्रवन्ति सरितो २,७,२३७
समिद्दिशामाशयानः ३,१६,५०
समिद्धस्य श्रयमाणः ४ १३,४
समिद्धा इन्द्र उषसा ३.११.१
समिद्धा इन्द्रोऽनवस्तं ४.१४ १८७
समिद्धे अग्ना अधि २,१०,४६
समिद्धो अग्निरश्विना ३,११,१३
समिद्धो अग्निः समिधा ३,११,११३
समिद्धो अञ्जन्कृदरं ३,१६.१७
समिद्धो अद्य मनुषो ४,१३,११
समिधमातिष्ठ २,६,२७
समिधाग्निं दुवस्यत २,७,१२१
समिधो अग्ना आज्यस्य ४,१०,७२
समिध्यमानꣳ समिधा २,७,२३४
समिन्द्र नः ४,१४.६६
समिन्द्र नो मनसा १,३,१०८
समिन्द्र राया समिषा २,२,२३
समीची नामासि २ १३,१०४
समुद्रं गच्छ स्वाहा १,२,११६; ३,१०,
२५
समुद्रस्य त्वावकयाग्ने २,१०,२
समुद्रस्य वो वयुनस्य २,१०,६९
समुद्रादूर्मिर्मधुमं १,६,२६
समुद्राय शिशुमारान् ३,१४,२
समुद्रे ते हृदयम् १.३,११८;२,१२,१३
समुद्रे त्वा नृमणा २,७,११०
समुद्रोऽसि नभस्वाना २ १२,८
समृतयज्ञो वा एष १,४,३४
समृषीणाꣳ स्तुतेन १.५,१९
सं पत्नी पत्या सुकृतेषु १,४,२६
संपश्यामि प्रजा अहम् १,५,३२, ५२
संपृच्यध्वमृतावरी ४,१,२३
संप्रच्यवध्वमुप २,१२,२१
संप्रच्युता वरुणेन २,१३,८
संमासि ४ ९.६७
सं मा सृजामि पयसा २.१२,५
संमृश इमानायुषे १,२,७३
सम्राजा अस्य भुवनस्य ४.१४,१६५
सम्राजा उग्रा वृषभा ४.।४ १६७
सम्राट् च स्वराट् चाग्ने १,६.२५
सम्राडन्यः स्वराडन्य ४.१२.८५
सम्राडसि स्वराडसि १.८,५०
सम्राड् दिशाꣳ सहसाम्नी ३ १६,५८
सरस्वती मनसा ३,११,७५
सरस्वती योन्यां गर्भम् ३,११,८६
सरस्वतीवान् भारती ३,१०,१९
सरस्वत्यभि नो नेषि ४,११,६१; १४,
४६
सरस्वत्यै पिन्वस्व ४,९,१११
सर्वाभ्यो देवताभ्यो २,४.२१
सर्वे व्राता वरुणस्य २.६,३४
सलिलः सलिगः सगरः १,७ १२
सलिलाय त्वा वाताय ४,९,१२४
सवयसे त्वाभिवयसे २.१३,१००
सवयसे स्वाहा ३.१२,१६
सविता त्वादित्यैः पश्चाद् ४,९,८१
सविता त्वा प्रसवानाꣳ २.६,१६
सविता वरुणो दधद् ३.११.२८
सवित्रे स्वर्भूमते ४.९ १२५
स शेवृधमधि धा ४.१४,२७८
स सुष्टुभा स ऋक्वता ४.१२.१३
सस्निमविन्दच्चरणे ४,९,१८०
सह रय्या निवर्तस्वाग्ने १.७,११; १७
सहस्यवाडग्निꣳस्तोमेन ४.१०,८८
स हव्यवाडमर्त्य ४,१०,२९
सहसा जातान् प्रणुदा २.८.१६
सहस्रवीर्यमसि १.१,२७
सहस्राणि सहस्रशो २,९,४२
स हि शुचिः शतपत्रः ४,१४,४८
साकꣳ यक्ष्म प्रपत २,७,१७८
साध्या वै देवा ३,९,१५
साध्वीमकर्देववीतिं ४,११.३०
सा नः प्रजां पशून् ४.९,७८
सा नः सुप्रतूर्तिः ४,२,३६
सांतपना इदꣳ हविः ४,१०,११४
सा मे सत्याशीर्देवान् १ ४ ७
सारस्वतौ त्वोत्सौ १,८ ५२
सावित्रं पुनरुत्सृष्ट २,५,४
सावित्रैरश्रिमादत्ते ३,१,२
सावित्रोऽष्टाकपालं २,६ ४५
सा वै सृष्टोभयान् ४,२,४१
सिनीवालि पृथुष्टुके ४,१२,१५५
सिनीवाली सुकपर्दा २,७,६५
सीद त्वं मातुरस्या २,७,१०५
सीदन्तु विशो १,१,२०
सीद होतः स्व उ लोके २,७,३८;
३,८,५
सीद होतर्नि होता ४,१०,९६
सीरा युञ्जन्ति कवयो २,७,१५४
सीसेन क्लीबात् २ ४,२
सीसेन तन्त्रं मनसा ३,११,७२
सुगा वो देवाः सदना १,३,११०; ४,
१४,१४८
सुजातो ज्योतिषा २.७,४७
सुत्रामाणं पृथिवीं ४,१०,३३
सुत्रामाणं महीमूषु ४ १२,१००
सुदेवो असि वरुण ४,७,१६
सुपर्णꣳ वस्ते मृगो ३,१६.४४
सुपर्णः पार्जन्य ३,१४,१५
सुपर्णोऽसि गरुत्मान् २,७,९६-९७;
१०,६२
सुबर्हिरग्निः पूषण्वान् ३,११.११६
सुब्रह्माणं देववन्तं ४,१४,१०९
सुभूताय पिपीहि ४,९,१४०
सुमित्रा ना आपा १,२,११९

सुम्नहूर्यज्ञ आ च २,१०,५४
सुप्रावन्तं बर्हिषद॰ ३,११,५७
सुत्रागात्वद देव १,२,६५
सुत्राङ्गनभ्र डडूवारे ३,८.२४
सुविचा विविचयध्वम् ४.१,४८
सुषदा पश्चात् सवितुः ४,९,५६
सुवर्दर्शं त्वा वय॰ १,१०,११;४.१२,
११७
सूनरि विश्वा त्वा ४,२,३४
सूयमे मेऽद्य स्त॰ १,१ ३६
सूर्यं एकाकी चरति ३,१२,२६
सूर्य व्रतपते व्रतं ४,९,२३३;२४१
सूर्यस्य चक्षुरारुहम् १,२,३१
सूर्यस्य रसा ४,९ २५
सूर्यस्य हस्ते त्वा ४,९,४८
सूर्याग्नी द्यावापृथिवी १,२,१६
सूर्यो अपो विगाहते ४,१२,१४६
सूर्यो ज्योतिर्ज्योतिः सूर्यः १,६,५३
सूर्यो देवीमुषस॰ ४,१४,५२
सृजन्ति रश्मिमोजसा ४.१२,१४४
सृजा वृष्टिं दिव आद्भिः २,४.३१
सेदग्ने अस्तु सुभगः ४.११,११६
सैनानीकेन सुविदत्रो ४,१०,११२
सो अग्न ईजे शशमे ४,१३,५५
सो अग्निर्यो वसुर्गृणे २,१३,४५
सोऽहोरात्रैः सोऽर्धमासैः ४.१०,१५०
सोम॰ राजान॰ वरुण १,११,२०
सोम गीर्भिष्ट्वा वय॰ ४,१०,२०
सोमपीथानु मेहि ४,९,१८६
सोम यास्ते मयोभुव ४,१०,७५
सोमविक्रयिस्सोमं ३.७,१०
सोमस्य मा तवस॰ ४,११,४१
सोमान॰ स्वरणं कृणुहि १ ५.३८
सोमापूषणा जनना ४,११.४२
सोमापूषणा रजसो ४,१४.७
सोमाय कुलङ्ग ३ १४,१३
सोमाय लबाना० ३,१४,५
सोमाय हंसान् ३,१४,३
सोमारुद्रा धारयेथाम् ४,११,५५
सोमारुद्रा युवमेतानि ४.११,५४
सोमारुद्रा विवृहत॰ ४.११,५६
सोमेनेजान॰ याजयेत् ४,३,५
सोमोऽस्यश्विभ्यां पच्यस्व २,३,३७;
३,११,५०
सोमो धेनु॰ सोमो ४,१४.१
सोमो राजामृत॰ सुत ३,११,३९
सोमो वा अमुत्रासीत् ३ ७.१२
सौमारौद्रं घृते चरुं २.१,५
सौमरौद्रं चरुं २,१.६
सौम्यं बभ्रुं लोमशं २,५.१
सौरी बलाका ३ १४,१४
सौर्यं घृते चरुं २,२,११
स्तीर्णं बर्हिः सुष्टरीमा ३.१६,२०
स्तुहि शूर॰ वज्रिणम् ४,१४,१७५
स्तोकानामिन्दुं प्रति ३,११,११
स्तोमस्त्र॰स्त्रिंशे ३,१६.६१
स्थाल्या दुहत्यनया १,८,८,
स्थिरो भव वीड्वंग २,७,५१;३,१,८
स्यूना देवेभिरमृतेन २,७,२२९
स्योना पृथिवि ४,१२,३५
स्योनासि सुषदा २ ६,३५
स्योना स्योनेन घृतेन ४,२,३७
स्वयं कृण्वानः २.१३.१०५
स्वजा असि स्वभूरसि १,९,३६
स्वधा नमः १,१०.४५
स्वयंभूरसि श्रेष्ठो ४,६,४७
स्वर्ग॰ वा एष लोकम् ३.५,५
स्वर्भानुर्वा आसुरः २,५,२
स्वर्यन्तो नापेक्षन्ता २.१०,६०
स्वर्वती सुदुघा नः ३,१६,५९
स्वर्विदसि स्वर्वित्त्वा १.२.१०५
स्वश्वा यशसायात० ४,१४,१२९
स्वस्तिगव्यूतिरभयानि २,७,१७
स्वस्तिना इन्द्रो ४.९,२५४
३स्वः स्वाहा ४,९,२०४
स्वादुष॰सदः पितरो ३,१६,४१
स्वादोरित्था विषूवतो ४.१४,१९४
स्वाद्वीं त्वा स्वादुना २,३,३६
स्वायुध॰ स्ववस॰ सुनीथ ४,१४,१११
स्वावेशोऽस्यग्रेगा १,२,९३
स्वाहाकृतस्य घर्मस्य ४,९,१३४
स्वाहा दिव आप्यायस्व ४,६,४०
स्वाहा देवेभ्यः ३,१०,४
स्वाहान्तरिक्षादाप्यायस्व ४.६,४२
स्वाहा पृथिव्या आप्यायस्व ४,६,४४
स्वाहा भूत्यै नमः २ ७,१५०
स्वाहा मरुद्भ्यः ४,९,६२
स्वाहा यज्ञ॰ वरुणः ३,११,११३
स्वाहा यज्ञं मनसः १,२,२१
स्वाहा यज्ञं मनसा ३,६,१७
स्वाहा राजसूयाः २,६,२२
स्वाहेति तदिममेव १,६.४५
स्वाहेत्यपः परिषिञ्चन् ३,२,६
स्वैर्दक्षैर्दक्षपितेह २.८,५
स्वो रोहावेहि स्वो १,११,३७
हं॰सः शुचिषद् २,६,३८;७,१०४
१३,५७
हं॰सैरिव सखिभिः ४,१२,१७२
हरिकेशः सूर्यरश्मिः २,१०,४८
हरिवं इन्द्रो धाना ३.१०,१५
हरिवतो हार्योजनस्य १.३,८४
हर्योर्धाना हरिवतीः १.३,८५
हविरसि वैश्वानरम् १.१,२६
हविषीव भजमानो ४,१४,२२७
हविष्कृदेहि १,४,४३; ४,१.४३
हविष्मतीरिमा आपो १ ३.१
हव्यवाडग्निरजरः पिता ४,१२,१६६;
१४,११६
हव्यवाडग्निरिड ४,१३,७८
हस्त आधाय सविता २,७,१०
हिंकाराय स्वाहा ३,१२,५
हिमस्य त्वां जरायुणाग्ने २,१०,३
हिरण्यगर्भः समवर्तताग्रे २,७,१९८;
१३,११०; ३,१२,१८
हिरण्यं निधाय जुहोति ३,७,९
हिरण्यपाणिमूतये ४,१२,३२
हिरण्यवर्णमुषसो २,६,२६

हिरण्यवर्णः स हिरण्य २,१३,२
हिरण्यवर्णाः शुचयः १,२,४; २,१३,३
हिरण्यवर्णो अभयं ४,१४,१७३
हुतꣳ हविर्मधुहविः ४,९,१५०
हुवे वातस्वणं ४,११,६९
हृदं न हि त्वा ४,१२,६८
हृदयस्यावद्यति ३,१०,११
हृषिस्पृक् क्रतुस्पृग् ४,७,६
हृदे त्वा मनसे त्वा १, ३, ३; ४,९,८८
हेमन्तेन ऋतुना ३,११,११८
हेमन्तो मध्यꣳ शिशिरं ४,९,२१८
होतर्यज पोतर्यज ३,६,१३; १५
होताध्वर्युरावया ३,१६,६
होता यक्षत्सनिधामिम् ३,११,१२
होता यक्षत्सोममाज्यस्य ४,१३,३८
होता यक्षदग्निꣳ समिधा ३.१३,१०
होता यक्षदग्निꣳ स्वाहा ४,१३,३३
होता यक्षदग्निꣳ स्विष्ट० ४,१३,६७
होता यक्षदग्निमाज्यस्य ४,१३.३६
होता यक्षदश्विनौ ३,११,३१; ४,१२, ११९
होता यक्षदिन्द्राग्नी४,१३.४०,४१,६१
होता यक्षद्वनस्पति ४,१३,६४



अथ यजुर्वेदीयं

# मैत्रायणीयमारण्यकम्

अथवा

## मैत्रायणीया उपनिषद् ।

### शान्तिः ।

ॐ तच्छꣳयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ॥
ऊर्ध्वं जिगातु भेषजꣳ शन्नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

[1] ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मोपनिषदं, माऽहं ब्रह्म निराकुर्यां, मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे ऽ अस्तु॥ तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु, ते मयि सन्तु ॥ १ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

वैराग्योत्थभक्तियुक्तब्रह्ममात्रप्रबोधतः । यत्पदं मुनयो यान्ति तत् त्रैपदमहं महः ॥ १ ॥

---

### अथ प्रथमः प्रपाठकः ।

॥ ॐ ॥ [3]ब्रह्मयज्ञो वा ऽ एष यत्पूर्वेषां चयनन्तस्माद्यजमानश्चित्वैतानग्नीनात्मानमभिध्यायेत्, सम्पूर्णः खलु वा ऽ अद्धाऽविकलः सम्पद्यते यज्ञः कः सोऽभिध्येर् योऽयꣳ यः प्राणाख्यस्तस्योपाख्यानम् ॥१॥

बृहद्रथो वै नाम राजा विराज्ये पुत्रं निधापयित्वेदमशाश्वतम्मन्यमानः शरीरꣳ वैराग्य-

---

१ क्वचिदेषा शान्तिरपि दृश्यते ।

२ एषा कण्डिका निर्णयसागर–मुंबई–मुद्रिताष्टोत्तरशतोपनिषदन्तर्गतमैत्रायणीयोपनिषदि नास्त्येवेति ।

३ निर्णयसागर–मुंबई–मुद्रिताष्टोत्तरशतोपनिषदन्तर्गतमैत्रायणीयोपनिषदः प्रारम्भ इमां कण्डिकामारभ्यैवेति ।

४ एतस्या मैत्रायणीयोपनिषदः संस्करणे मुम्बईस्थनिर्णयसागरमुद्रितमेकं पुस्तकमपरं श्रीमत्परमहंसपरिव्राजककृष्णानन्दयतिवर्यैः [श्री० मुठे स्वामिभिः] दत्तं लिखितपुस्तकं चेति पुस्तकद्वयमेव हस्ते समापन्नम्। तयोरुभयोर्मेलने क्रियमाणेऽन्योऽन्यं महद्वैम्यषं दृक्पथे समागतम् । तत्र मुद्रितपुस्तकमतीवपाठभेदसमाकुलमानुपूर्व्या परिभ्रष्टं न्यूनमसम्पूर्णं स्वराङ्कनविरहितं प्रपाठकपञ्चकात्मकमेवेति तत्त्यक्त्वा लिखितपुस्तकं विशुद्धपाठवद्यथावदानुपूर्वीकं सम्पूर्णं स्वरलेखनसन्नियमितं प्रपाठकसप्तकोपेतं मैत्रायणीयवैदिकवर्याणां नित्यपाठाधारमिति कृत्वा तदेवावलम्ब्यैतत्संस्करणं संस्कृतमिति ज्ञेयम् ॥

मुद्रितपुस्तकस्थाः पाठभेदास्तु पदेपदे वर्तमानाः क्वचिदपपाठाः क्वचिच्च शुद्धाः पाठाः सन्ति तथापि ते नार्थान्तरमावहन्त्यतो न सङ्ग्रहीता इत्यपि ध्येयम् ॥

मुपेतोऽरण्यं निर्जगाम, स तत्र परमन्तप ऽ आस्थायाऽऽदित्यमुदीक्षमाण ऽ ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य अन्तिकमाजगाम, अग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्छाकायन्य ऽ उत्तिष्ठोत्तिष्ठ, वरꣳ वृणीष्वेति राजानमब्रवीत्, स तस्मै नमस्कृत्वोवाच, भगवन्नाहमात्मवित्त्वं तत्त्वविच्छुश्रुमो वयꣳ स त्वं नो ब्रूहीति, एतद्वृत्तं पुरस्ताद्दुःशक्यमेतम्प्रश्नमैक्ष्वाकान्यान्कामान्वृणीष्वेति शाकायन्यः, शिरसाऽस्य चरणावभिमृश्यमानो राजेमां गाथां जगाद ॥२॥

भगवन्नास्थिचर्मस्नायुमज्जामांꣳसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किङ्कामोपभोगैः कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसम्प्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्छरीरे किङ्कामोपभोगैः ॥३॥

सर्वञ्चेदꣳ क्षयिष्णुं पश्यामो यथेमे दꣳशमशकादयः॥ तृणवनस्पतय उद्भूतप्रध्वꣳसिनोऽथ किमेतैर्वाऽपरेऽन्ये महाधनुर्द्धराश्चक्रवर्तिनः ॥ केचित्सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववध्र्यश्वाश्वपतिः शशबिन्दुर्हरिश्चन्द्रोऽम्बरीषो ननक्तुः शर्यातिर्ययातिरनरण्योऽक्षसेनादयोऽथ मरुत्तभरतप्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीꣳश्रियं त्यक्त्वाऽस्माल्लोकादमुंल्लोकं प्रयाता इति, अथ किमेतैर्वाऽपरेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधनं पश्यामः, अथ किमेतैर्वाण्यानांꣳ शोषणं महार्णवानाꣳ शिखरिणां प्रपतनं ध्रुवस्य प्रचलनꣳव्रश्चनꣳ वातरज्जूनां निमज्जनं पृथिव्याः स्थानादपसरणꣳ सुराणामित्येतद्विधेऽस्मिन्सꣳसारे किङ्कामोपभोगैर्यैरेवाशितस्यासकृदिहावर्तनं दृश्यता ऽ इत्युद्धर्तुमर्हसीत्यन्धोदपानस्थो भेक ऽ इवाहमस्मिन्सꣳसारे भगवꣳस्त्वं नो गतिस्त्वं नो गतिः ॥४॥

॥ इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि प्रथमः प्रपाठकः ॥१॥

## ॥ अथ द्वितीयः प्रपाठकः ॥

॥ ॐ ॥ अथ भगवाञ्छाकायन्यः सुप्रीतस्त्वब्रवीद्राजानं महाराज बृहद्रथेक्ष्वाकुवꣳशध्वज शीघ्रमात्मज्ञः कृतकृत्यस्त्वं मरुन्नाम्नेति विश्रुतोऽसीत्ययꣳ वाव खल्वात्मा ते यः कतमो भगवा ऽ इति तꣳ होवाचेति ॥१॥

अथ यऽएषोऽसावाविष्टम्भनेनोर्द्धमुत्क्रान्तो व्यथमानोऽव्यथमानस्तमः प्रणुदत्येषऽआत्मेत्याह भगवान्मैत्रिरित्येवꣳ ह्याहाथ य ऽ एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योति-

रूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यतऽएषऽआत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥२॥

अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रिणाऽऽख्याताऽहं ते कथयिष्यामीत्यथापहतपाप्मानस्तिग्मतेजसोर्ध्वरेतसो वालखिल्याऽइति श्रूयन्तेऽथ क्रतुं प्रजापतिमब्रुवन्भगवञ्छकटमिवाचेतनमिदꣳ शरीरं कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत्प्रतिष्ठापितं प्रचोदयिता वाऽअस्य यद्भगवन्वेत्स्यैतदस्माकं ब्रूहीति तान्होवाचेति ॥३॥

यो ह खलु वावोपरिस्थः श्रूयते गुणेष्विवोर्ध्वरेतसः स वाऽएष शुद्धः पूतः शून्यः शान्तः प्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यनेनेदꣳ शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ते होचुर्भगवन्कथमनेनेदृशेनाणिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाच ॥४॥

स वाऽएष३ सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञो बुद्धिपूर्वमिहैवावर्ततेꣳऽशेनेति सुप्तस्येवाबुद्धिपूर्वꣳ विबोधायैवमित्यथ यो ह खलु वावैतस्य३ सोꣳऽशोऽयꣳ यश्चेतनमात्रः प्रतिपूरुषꣳ क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यश्चेतनेनेदꣳ शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ते होचुर्भगवन्यद्यनेनेदृशेनाणिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाचेति ॥५॥

प्रजापतिर्वाऽएकोऽग्रेतिष्ठन्स नारमतैकः सऽआत्मानमभिध्यात्वा बह्वीः प्रजाऽअसृजत्ताऽअस्यैवात्मप्रबुद्धाऽअप्राणाः स्थाणुरिव तिष्ठमानाऽअपश्यत्स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं प्रविशानीत्यथ स वायुमिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत्सऽएको नाशकत्स पञ्चधाऽत्मानꣳ विभज्योच्यते यः प्राणोऽपानः समानऽउदानो व्यानऽइत्यथायꣳ योर्ध्वमुत्क्रामत्येष वाव स प्राणोऽथ योऽयमवाङ् सङ्क्रामत्येष वाव सोऽपानोऽथ येन वाऽएता अनुगृहीताऽइत्येष वाव स व्यानोऽथ योऽयꣳ स्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाऽङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञऽउत्तरꣳ व्यानस्य रूपं चैतेषामन्तरा प्रसूतिरेवोदानस्याथ योऽयं पीताशितमुद्गिरति निगिरतीति वैष वाव सऽउदानोऽथोपाꣳशुरन्तर्याममभिभवत्यन्तर्यामऽउपाꣳशु चैतयोरन्तराले वौष्ण्यं प्रासुवद्यदौष्ण्यꣳ स पुरुषोऽथ यः पुरुषः३ सोऽग्निर्वैश्वानरोऽप्यन्यत्राप्युक्तमयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति स वाऽएष पञ्चधाऽऽत्मानꣳ विभज्य निहितो गुहायां मनोमयः प्राणशरीरो

भारूपः सत्यसंङ्कल्पऽआकाशात्मेति स वा एऽषोऽस्माद्धृदन्तरादकृतार्थोऽमन्यतार्थान्-श्नानीत्यतः खानीमानि भित्त्वोदितः पञ्चभी रश्मिभिर्विषयानत्तीति बुद्धीन्द्रियाणि यानी-मान्येतान्यस्य रश्मयः कर्म्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोऽस्य प्रतोदोऽनेन खल्वीरितं परिभ्रमतीदꣳ शरीरं चक्रमिव मृते च नेदꣳ शरीरं चेतनवत्प्रतिष्ठा-पितं प्रचोदयिता वैषोऽप्यस्येति ॥६॥

स वाऽएषऽआत्मेहोशन्ति कवयः सितासितैः कर्म्मफलैरनाभिभूतऽइव प्रति शरीरेषु चरत्यव्यक्तत्वात्सौक्ष्म्याद्दृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थो सति कर्ता कर्तैवावस्थः स वाऽएष शुद्धः स्थिरोऽचलश्चालेप्योऽव्यग्रो निःस्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च कृत-भुग्गुणमयेन पटेनात्मानमन्तर्द्धायावस्थितऽइत्यवस्थित इति ॥७॥

॥ इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि द्वितीयः प्रपाठकः ॥२॥

## ॥ अथ तृतीयः प्रपाठकः ॥

॥ॐ॥ ते होचुर्भगवन्यद्येवमस्यात्मनो महिमानꣳ सूचयसीत्यन्यो वाऽपरः कोऽयमात्मा-ख्यो३ योऽयꣳ सितासितैः कर्म्मफलैरभिभूयमानः सदसद्योनिमापद्यताऽइत्यवाङ्चोर्ध्वां वा गतिं द्वन्द्वैरभिभूयमानः परिभ्रमतीति कतमऽएषऽइति तान्होवाचेति ॥१॥

अस्ति खल्वन्योऽपरो भूतात्माख्यो३ योऽयꣳ सितासितैः कर्म्मफलैरभिभूयमानः सदस-द्योनिमापद्यताऽइत्यवाङ्चोर्ध्वां वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानं पञ्च तन्मात्रा भूतशब्देनोच्यन्तेऽथ पञ्चमहाभूतानि भूतशब्देनोच्यन्तेऽथ तेषांꣳ यत्समुदयं तच्छ-रीरमित्युक्तमथ यो ह खलु वाव शरीरमित्युक्तꣳ स भूतात्मेत्युक्तमथाश्रितोऽस्यात्मा बिन्दुरिव पुष्कराऽइति स वा एषोऽभिभूतः प्राकृतैर्गुणैरित्यथोऽभिभूतत्वात्सम्मूढत्वं प्रयातः सम्मूढत्वा-द्रात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयातऽइत्यहꣳ सो ममेदमित्येवं मन्यमानो निबध्ना-त्यात्मनाऽऽत्मानं जालेनेव खचरः कृतस्यानुफलैरभिभूयमानः परिभ्रमतीति ॥२॥

अथान्यत्राप्युक्तꣳ यः कर्ता सोऽयꣳ वै भूतात्मा करणैः कारयिताऽन्तःपुरुषोऽथ यथा-ऽग्निनाऽयष्पिण्डो वाऽभिभूतः कर्तृभिर्हन्यमानो नानात्वमुपैत्येवꣳ वाव खल्वसौ भूतात्माऽ-न्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति चतुर्जालं चतुर्दशविधं चतुरशीतिधा

परिणतं भूतगणमेतद्वै नानात्वस्य रूपं तानि ह वा एतानि पुरुषेणेरितानि चक्रमिव मृत्पचेनेत्यथ यथाऽयःपिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंसृष्टत्वादिति ॥३॥

अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चामयैर्बहुभिः परिपूर्णं कोषऽइव वसुनेति ॥४॥

अथान्यत्राप्युक्तं सम्मोहो भयं विषादो निद्रा तन्द्री प्रमादो जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्यं मूढत्वं निर्व्रीडत्वं निराकृतित्वमुद्धतत्वमसमत्वमिति तामसान्यथ तृष्णा स्नेहो रागो लोभो हिंसा रतिर्दृष्टिर्व्यावृत्तत्वमीर्ष्या काममस्थिरत्वं चलत्वं व्यग्रत्वं जिगीषाऽर्थोपार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्गः शुक्रः स्वरोन्नतमस्त्विति राजसान्येतैः परिपूर्णऽएतैरभिभूतऽइत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोति ॥५॥

॥ इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि तृतीयः प्रपाठकः ॥३॥

## ॥ अथ चतुर्थः प्रपाठकः ॥

॥ॐ॥ ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिताऽअभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि त्वमस्माकं गतिरन्या न विद्यतऽइत्यस्य को विधिर्भूतात्मनो येनेदं हित्वाऽऽत्मन्येव सायुज्यमुपैति तान्होवाचेति ॥१॥

अथान्यत्राप्युक्तं महानदीपूर्मयऽइवानिवर्तकमस्य यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैः पाशैः पङ्गुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्येव बहुभयावस्थं मदिरोन्मत्तऽइव मोहमदिरोन्मत्तं पाप्मना गृहीतऽइव भ्राम्यमाणं महोरगदष्टऽइव विषयदष्टं महान्धकारमिव रागान्धमिन्द्रजालमिव मायामयं स्वप्नऽइव मिथ्यादर्शनं कदलीगर्भऽइवासारं नटऽइव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तं

शब्दस्पर्शादयो ह्यर्था मर्त्येऽअनर्थाऽइव स्थिताः ॥
येषां सक्तस्तु भूतात्मा न स्मरेत परं पदम् ॥२॥

अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः स्वधर्मस्यानुचरणं स्वाश्रमे-

❀

ष्वेवानुक्रमणꣳ स्वधर्मस्य वाऽएतद्व्रतꣳ स्तम्बशाखेवेतराण्यनेनोर्ध्वभाग्भवत्यन्यथावाङ्पतत्येष स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी भवत्याश्रमेष्वेवावस्थस्तपस्वी वेत्युच्यतऽइत्येतदयुक्तं नातपस्कस्यात्मज्ञानेऽधिगमः कर्मसिद्धिर्वेत्येवꣳ ह्याह ॥

तपसा प्राप्यते सत्त्वꣳ सत्त्वात्सम्प्राप्यते मनः ॥
मनसः प्राप्यते ह्यात्मायमाप्त्वा न निवर्ततऽइति ॥३॥

अस्ति ब्रह्मेति ब्रह्मविद्याविदो ब्रह्मवित् ॥ ब्रह्मद्वारमिदमित्येवैतदाह यस्तपसाऽपहतपाप्मा ॥ ॐ ब्रह्मणो महिमेत्येवैतदाह यस्तु युक्तोऽजस्रं चिन्तयति तस्माद्विद्यया तपसा चिन्तया चोपलभते ब्रह्म सद्ब्रह्मणः परऽएता भवत्याधिदैवत्वं देवेभ्यश्चेत्यक्षय्यमपरिमितमनामयꣳ सुखमश्नुते यऽएवꣳ विद्वाननेन त्रिकेण ब्रह्मोपास्तेऽथ यैः परिपूर्णोऽभिभूतोऽयꣳ रथितश्च तैर्वैवमुक्तस्त्वात्मन्येव सायुज्यमुपैति ॥४॥

ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति निहितमस्माभिरेतद्यथावदुक्तं मनसीत्यथोत्तरं प्रश्नमनुब्रूहीत्यग्निर्वायुरादित्यः कालो यः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्येकेऽन्यꣳ श्रेयः कतमो यः सोऽस्माकं ब्रूहीति तान्होवाचेति ॥५॥

ब्रह्मणो वावैताऽअग्र्यास्तनवः परस्यामृतस्याशरीरस्य तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्तऽइत्येवꣳ ह्याह ब्रह्म खल्विदꣳ वाव सर्वꣳ या वाऽस्याऽअग्र्यास्तनवस्ताऽअभिध्यायेदर्चयेन्निन्हुयाच्चातस्ताभिः सहैवोपर्युपरि लोकेषु चरत्यथ कृत्स्नः क्षयऽएकत्वमेति पुरुषस्य पुरुषस्य ॥६॥

॥ इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि चतुर्थः प्रपाठकः ॥४॥

## ॥ अथ पञ्चमः प्रपाठकः ॥

॥ ॐ ॥ अथ यथेयं कौत्सायनी स्तुतिः ॥

त्वं ब्रह्मा त्वं च वै विष्णुस्त्वꣳ रुद्रस्त्वं प्रजापतिः ॥
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥१॥

त्वं मनस्त्वꣳ यमस्त्वं पृथिवी त्वꣳ विश्वं त्वमथाच्युतः ॥
स्वार्थे स्वाभाविकेऽर्थे च बहुधा सꣳस्थितिस्त्वयि ॥२॥

विश्वेश्वर नमस्तुभ्यꣳ विश्वात्मा विश्वकर्मकृत् ॥
विश्वभुग्विश्वमायुस्त्वꣳ विश्वक्रीडारतिः प्रभुः ॥३॥

नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ॥
अचिन्त्यायाप्रमेयाय अनादिनिधनाय च ॥४॥ इति ॥१॥

तमो वाऽइदमग्रऽआसीदेकं तत्परेऽस्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रसः सम्प्रास्रवद्वत्सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषः क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वेत्यस्य प्रागुक्ताऽएतास्तनवोऽथ यो ह खलु वावास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो३ योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो३ योऽयं ब्रह्माथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो३ योऽयं विष्णुः स वाऽएषऽएकस्त्रिधाभूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा वोद्भूतऽउद्भूतत्वाद्भूतं भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूवऽइत्यसावात्माऽन्तर्बहिश्चान्तर्बहिश्च ॥२॥

॥ इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि पञ्चमः प्रपाठकः ॥५॥

## ॥ अथ षष्ठः प्रपाठकः ॥

॥ॐ॥ द्विधा वाऽएषऽआत्माऽऽत्मानं बिभर्त्ययं यः प्राणो यश्चासाऽआदित्योऽथ द्वौ वाऽएताऽअस्य पन्थानावन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेतेऽसौ वाऽआदित्यो बहिरात्माऽन्तरात्मा प्राणोऽतो बहिरात्मक्या गत्याऽन्तरात्मनोऽनुमीयते गतिरित्येवं ह्याहाथ यः कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठऽआवृत्तचक्षुः सोऽन्तराऽऽत्मक्या गत्या बहिरात्मनोऽनुमीयते गतिरित्येवं ह्याहाथ यऽएषोऽन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां हिरण्यवत्सः सऽएषोऽन्तरे हृत्पुष्करऽएवाश्रितोऽन्नमत्ति ॥ १ ॥

अथ यऽएषोऽन्तरे हृत्पुष्करऽएवाश्रितोऽन्नमत्ति सऽएषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति कः पुष्करः किम्मयो वेत्तीदं वाव तत्पुष्करं योऽयमाकाशस्येमाश्चतस्रो दिशश्चतस्रऽउपदिशो दलसंस्था आसुरर्वाग्विचरतऽएतौ प्राणादित्याऽएताऽउपासीतऽओमित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥

द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं यत्सत्यं तद्ब्रह्म यद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः सऽआदित्यः स वाऽएषऽओमित्येतदात्माऽभवत्स त्रेधाऽऽत्मानं व्यकुरुतऽओमिति तिस्रो मात्राऽएताभिः सर्वमिदमोतं प्रोतं चैवास्मीत्येवं ह्याहैतद्वाऽआदित्यऽओमित्येवं ध्यायतऽआत्मानं युञ्जीतेति ॥ ३ ॥

अथान्यत्राप्युक्तमथ खलु यऽउद्गीथः स प्रणवो यः प्रणवः सऽउद्गीथऽइत्यसौ वाऽ-
आदित्यऽउद्गीथऽएष प्रणवऽइत्येवꣳ ह्याहोद्गीथं प्रणवाख्यं प्रणेतारं भारूपꣳ विगतनिद्रꣳ
विजरꣳ विमृत्युं त्रिपदं त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवꣳ ह्याहोर्ध्वमूलं
त्रिपाद्ब्रह्म शाखाऽआकाशवाय्वग्न्युदकभूम्यादयऽएकोऽश्वत्थनामैतद्ब्रह्मैतत्तस्यैतत्तेजो यद-
साऽआदित्यऽओँमित्येतदक्षरस्य चैतत्तस्मादोमित्यनेनैतदुपासीताजस्रमित्येकोऽस्य सम्बो-
धयितेत्येवꣳ ह्याह ॥

एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् ॥
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥

अथान्यत्राप्युक्तꣳ स्वनवत्येषाऽस्य तनूर्याऽओँमिति स्त्रीपुन्नपुꣳसकमिति लिङ्गवत्येषाऽ-
थाग्निर्वायुरादित्यऽइति भास्वत्येषाऽथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषाऽथ गार्हपत्यो
दक्षिणाग्निराहवनीयऽइतिमुखवत्येषाऽथऽऋग्यजुःसामेति विज्ञानवत्येषाऽथ भूर्भुवः३ स्वरिति
लोकवत्येषाऽथ भूतं भव्यं भविष्यदिति कालवत्येषाऽथ प्राणोऽग्निः सूर्यऽइति प्रतापवत्येषा-
ऽथान्नमापश्चन्द्रमाऽइत्याप्यायनवत्येषाऽथ बुद्धिर्मनोऽहङ्कारऽइति चेतनवत्येषाऽथ प्राणोऽ-
पानो व्यानऽइति प्राणवत्येषेत्येतद्वाऽओँमित्युक्तेनैताः प्रस्तुताऽर्चिताऽर्पिता भवन्तीत्येवꣳ
ह्याहैतद्वै सत्यकाम परं चापरं च ब्रह्म यदोमित्येदक्षरमिति ॥ ५ ॥

अथ व्याहृतꣳ वाऽइदमासीत्स सत्यं प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद्भूर्भुवः३ स्वरित्ये-
षैवाऽस्य प्रजापतेः स्थविष्ठा तनूर्या लोकवतीति स्वरित्यस्याः शिरो नाभिर्भुवोभूः पादाऽ-
आदित्यश्चक्षुश्चक्षुर्बाऽऽयत्ता हि पुरुषस्य महतीर्मात्राश्चक्षुषा ह्ययं मात्राश्चरति सत्यꣳ वै
चक्षुरक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरत्येतस्माद्भूर्भुवः३ स्वरित्युपासीतानेन हि प्रजा-
पतिर्विश्वात्मा विश्वचक्षुरिवोपासीतो भवतीत्येवꣳ ह्याहैषा वै प्रजापतेर्विश्वभृत्तनूरेतस्या-
मिदꣳ सर्वमन्तर्हितमस्मिꣳश्च सर्वस्मिन्नेषाऽन्तर्हितेति तस्मादेषोपासीतेति ॥ ६ ॥

तत्सवितुर्वरेण्यमित्यसौ वाऽआदित्यः सविता स वाऽएवं प्रवरणीयऽआत्मकामेनेत्याहु-
र्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामी-
त्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादि-
त्याहुर्ब्रह्मवादिनोऽथ भर्गऽइति यो ह वाऽअमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणि वैष भर्गाख्यो
भाभिर्गतिरस्य हीति भर्गो भर्जयतीति वैष भर्गऽइति रुद्रो ब्रह्मवादिनोऽथ भऽइति भासय-
तीमाँल्लोकान्रऽइति रञ्जयतीमानि भूतानि गऽइति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजा-
स्तस्माद्भरगत्वाद्भर्गः शश्वत्सूयमानात्सूर्यः सवनात्सविताऽऽदानादादित्यः पवनात्पावनोऽ-

थापोऽप्यायनादित्येवꣳ ह्याह खल्वात्मनऽआत्मा नेताऽमृताख्यश्चेता मन्ता गन्तोत्स्रष्टाऽऽनन्दयिता कर्ता वक्ता रसयिताऽऽघ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे सन्निविष्टऽइत्येवꣳ ह्याहाथ यत्र द्वैतीभूतꣳ विज्ञानं तत्र हि शृणोति पश्यति जिघ्रति रसयते चैव स्पर्शयति सर्वमात्मा जानीतेति यत्राद्वैतीभूतꣳ विज्ञानं कार्यकारणकर्म्मनिर्मुक्तं निर्वचनमनौपम्यं निरूपाख्यं किं तदवाच्यम् ॥ ७ ॥

एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हꣳसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्रऽइन्दुरिति यऽएष तपत्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेनैष वाव जिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्वाऽरण्यं गत्वाऽथ बहिः कृत्वेन्द्रियार्थान्स्वाच्छरीरादुपलभेतेनमिति ॥

विश्वरूपꣳ हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ॥
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥८॥

+ तस्माद्वाऽएषऽउभयात्मैवꣳ विदात्मन्येवाभिध्यायत्यात्मन्येव यजतीति ध्यानं प्रयोगस्थं मनो विद्वद्भिष्टुतं मनः पूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत् ॥ उच्छिष्टोच्छिष्टोपहतꣳ यच्च पापेन दत्तमृतसूतकाद्वा ॥ वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं च यदन्यत् ॥ अद्भिः पुरस्तात्परिदधाति प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोत्यथावशिष्टꣳ यतवागश्नात्यथोऽद्भिर्भूयऽएवोपरिष्टात्परिदधात्याचान्तो भूत्वाऽऽत्मेज्यानः प्राणोऽग्निर्विश्वोऽसीति च द्वाभ्यामात्मानमभिध्यायेत्प्राणोऽग्निः परमात्मा वै पञ्च वायुः समाश्रितः ॥ स प्रीतः प्रीणातु विश्वꣳ विश्वभुग्विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया धार्यते जायमानम् ॥ विशन्तु त्वामाहुतयश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसीत्येवन्न विधिना खल्वनेनात्ताऽन्नत्वं पुनरुपैति ॥९॥

अथापरꣳ वेदितव्यमुत्तरो विकारोऽस्यात्मयज्ञस्य यथाऽन्नमन्नादश्चेत्यस्योपव्याख्यानं पुरुषश्चेता प्रधानान्तस्थः सऽएव भोक्ता प्राकृतमन्नं भुङ्क्तऽइति तस्यायं भूतात्मा ह्यन्नमस्य कर्ता प्रधानस्तस्मात्त्रिगुणं भोज्यं भोक्ता पुरुषोऽन्तस्थोऽत्र दृष्टं नाम प्रत्ययꣳ यस्माद्बीजसम्भवा हि पशवस्तस्माद्बीजं भोज्यमनेनैव प्रधानस्य भोज्यत्वꣳ व्याख्यातं तस्माद्भोक्ता पुरुषो भोज्या प्रकृतिस्तत्स्थो भुङ्क्तऽइति प्राकृतमन्नं त्रिगुणभेदपरिणामत्वान्महदाद्यꣳ विशेषान्तं लिङ्गमनेनैव चतुर्दशविधस्य मार्गस्य व्याख्या कृता भवति सुखदुःखमोहसंज्ञꣳ ह्यन्नभूतमिदं जगत् ॥ न हि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूतिः ॥ तस्याप्येवं

+ इत आरभ्यासमाप्तेः पाठो मुंबईस्थनिर्णयसागरमुद्रणालयमुद्रितपुस्तके नास्त्येवेति ॥

तिसृष्ववस्थास्वन्नत्वं भवति कौमारꣳ यौवनं जरा परिणामत्वात्तदन्नत्वमेवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति तत्र बुद्ध्यादीनि स्वादूनि भवन्त्यध्यवसायसङ्कल्पाभिमानाऽइत्यर्थेन्द्रियार्थान्पञ्च स्वादूनि भवन्त्येवꣳ सर्वाणीन्द्रियकर्म्माणि प्राणकर्म्माण्येवꣳ व्यक्तमन्नमव्यक्तमन्नमस्य निर्गुणो भोक्ता भोक्तृत्वाच्चैतन्यं प्रसिद्धं तस्य यथाऽग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्नमित्येवꣳ वित्सोमसंज्ञोऽयं भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुखऽइति वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्तऽइति यो हैवꣳ वेद सन्न्यासी योगी चात्मयाजी चेत्यथ यद्वाऽन्यः कश्चिच्छून्यागारे कामिन्यः प्रविष्टाः स्पृशतीन्द्रियार्थाꣳस्तद्वद्यो न स्पृशति प्रविष्टान्सन्न्यासी योगी चात्मयाजी चेति ॥ १० ॥

परꣳवाऽएतदात्मनो रूपꣳ यदन्नमन्नमयो ह्ययं प्राणोऽथ न यद्यश्नात्यमन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽघ्राताऽरसयिता भवति प्राणाꣳश्चोत्सृजतीत्येवꣳ ह्याहाथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति रसयिता भवति घ्राता भवति द्रष्टा भवतीत्येवꣳ ह्याह ॥

अन्नाद्वै प्रजाः प्रजायन्ते याः काश्चित्पृथिवीश्रिताः ॥
अतोऽन्नेनैव जीवन्त्यथैतदपि यन्त्यन्ततः ॥ ११ ॥

अथान्यत्राप्युक्तꣳ सर्वाणि ह वाऽइमानि भूतान्यहरहः प्रपतन्त्यन्नमभिजिघृक्षमाणानि सूर्यो रश्मिभिराददात्यन्नं तेनासौ तपत्यन्नेनाभिषिक्ताः पचन्तीमे प्राणाऽअग्निर्वाऽअन्नेनोज्ज्वलत्यन्नकामेनेदं प्रकल्पितं ब्रह्मणाऽतोऽन्नमात्मेत्युपासीतेत्येवꣳ ह्याह ॥

अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते ॥
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥ १२ ॥

अथान्यत्राप्युक्तꣳ विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नं प्राणो वाऽअन्नस्य रसो मनः प्राणस्य विज्ञानं मनसऽआनन्दꣳ विज्ञानस्येत्यन्नवान्प्राणवान्मनस्वान्विज्ञानवानानन्दवाꣳश्च भवति यो हैवꣳ वेद यावन्ति ह वै भूतान्यन्नमदन्ति तावत्स्वन्तरस्थोऽन्नमत्ति यो हैवꣳ वेद ॥ अन्नमेव विजरन्नमन्नꣳ सꣳवननꣳ स्मृतमन्नं पशूनां प्राणोऽन्नं ज्येष्ठमन्नं भिषक्स्मृतम् ॥ १३ ॥

अथान्यत्राप्युक्तमन्नꣳ वाऽअस्य सर्वस्य योनिः ॥ कालश्चान्नस्य सूर्यो योनिर्वै कालस्य तस्यैतद्रूपꣳ यन्निमेषादिकालात्सम्भृतं द्वादशात्मकꣳ वत्सरमेतस्याग्नेयमर्द्धमर्द्धꣳ वारुणम्-

घाद्यꣳ श्रविष्ठार्द्धमाग्नेयं क्रमेणोत्क्रमेण सार्पाद्यꣳ श्रविष्ठार्द्धान्तꣳ सौम्यं तत्रैकैकमात्मनो नवाꣳशकꣳस चारकविधꣳ सौक्ष्म्यत्वादेतत्प्रमाणमनेनैव प्रमीयते हि कालो न विना प्रमाणयेत्प्रमाणेन प्रमेयस्योपलब्धिः प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैत्यात्मसम्बोधनार्थमित्येवꣳ ह्याह ॥ यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ यः कालं ब्रह्मेत्युपासीत कालस्तस्यातिदूरमपसरतीत्येवꣳ ह्याह ॥

कालात्स्रवन्ति भूतानि कालाद्वृद्धिं प्रयान्ति च ॥
काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥१४॥

द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्यात्स कालोऽकालोऽथ यऽआदित्याद्यः स कालः सकलः सकलस्य वाऽएतद्रूपꣳ यत्सꣳवत्सरः सꣳवत्सरात्खल्वेवेमाः प्रजाः प्रजायन्ते सꣳवत्सरेणेह वै जाता विवर्द्धन्ते सꣳवत्सरे प्रत्यस्तꣳ यन्ति तस्मात्सꣳवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा चेत्येवꣳ ह्याह ॥

कालः पचति भूतानि सर्वाण्येव महात्मनि ॥
यस्मिꣳस्तु पच्यते कालो यस्तꣳ वेद स वेदवित् ॥१५॥

विग्रहवानेष कालः सिन्धुराजः प्रजानाम् ॥ एष तत्स्थः सवितारव्यो यस्मादेवेमे चन्द्रर्क्षग्रहसꣳवत्सरादयः सूयन्तेऽथैभ्यः सर्वमिदमत्र वा यत्किञ्चिच्छुभाशुभम् ॥ दृश्यते ह लोके तदेतेभ्यस्तस्मादादित्यात्मा ब्रह्माथ कालसꣳज्ञमादित्यमुपासीतादित्यो ब्रह्मेत्येकेऽथꣳऽएवꣳ ह्याह ॥

होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः ॥
सर्वः कश्चित्प्रभुः साक्षी योऽमुष्मिन्भाति मण्डले ॥१६॥

ब्रह्म ह वाऽइदमग्रऽआसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्योऽनन्तऽउदीच्योऽनन्तऽऊर्द्ध्वꣳश्चावाङ् च सर्वतोऽनन्तो न ह्यस्य प्राच्यादिदिशः कल्पन्तेऽथ तिर्यगवाङ् चोर्द्ध्वꣳ वानूह्यऽएष परमात्मापरिमितो योऽजोऽतर्क्योऽचिन्त्यऽएषऽआकाशात्मैवैष कृत्स्नक्षयऽएको जागर्तीत्येतस्मादाकाशादेष खल्विदं चेतामात्रं बोधयत्यनेनैव चेदं ध्यायतेऽस्मिꣳश्च प्रत्यस्तꣳ यात्यस्यैतद्भास्वरꣳ रूपꣳयदमुष्मिन्नादित्ये तपत्यग्नौ चाधूमके यज्ज्योतिश्चित्रतरमुदरस्थोऽथ वा यः पचत्यन्नमित्येवꣳ ह्याह ॥ यश्चैषोऽग्नौ यश्चायꣳ हृदये यश्चासावऽआदित्ये सऽएषऽएकऽइत्येकस्य हैकत्वमेति यऽएवꣳ वेद ॥१७॥

तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्गऽइत्युच्यते योगोऽनेन यदा पश्यन्पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं तदाऽविद्वान्पुण्यपापे×

× यदा पश्यः पश्यते...।... पापे विधूय निरञ्जनः परमं साम्यमुपैति । [ मुण्ड० उ० ३।१।३ ]

विहाय परेऽव्यये सर्वमेकीकरोतीत्येवꣳ ह्याह ॥

यथा पर्वतमादीप्तं नाश्रयन्ति मृगा द्विजाः ॥
तद्वद् ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ॥१८॥

अथान्यत्राप्युक्तꣳ यदा वै बहिर्विद्वान्मनो नियम्येन्द्रियार्थाꣳश्च प्राणो निवेशयित्वा निःसंकल्पस्ततस्तिष्ठेद्प्राणादिह यस्मात्सम्भूतः प्राणसंज्ञको जीवस्तस्मात्प्राणो वै तुरीयाख्ये धारयेत्प्राणमित्येवꣳ ह्याह ॥

अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमम् ॥
तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयम् ॥१९॥

अथान्यत्राप्युक्तमतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनः प्राणनिरोधनाद् ब्रह्म तर्केण पश्यति यदाऽऽत्मनाऽऽत्मानमणोरणीयाꣳसं द्योतमानं मनःक्षयात्पश्यति तदाऽऽत्मनाऽऽत्मानं दृष्ट्वा निरात्मा भवति निरात्मकत्वादसंख्योऽयोनिश्चित्यो मोक्षलक्षणऽइत्येतत्परꣳ रहस्यमित्येवꣳ ह्याह ॥

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ॥
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुतऽइति ॥२०॥

अथान्यत्राप्युक्तमूर्ध्वगा नाडी सुषुम्णाख्या प्राणसञ्चारिणी ताल्वन्तर्विच्छिन्ना तया प्राणोंकारमनोयुक्तयोर्ध्वमुत्क्रमेत्ताल्वधयग्रं परिवर्त्य चेन्द्रियाण्यसꣳयोज्य महिमा महिमानं निरीक्षेत ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं लभतऽइत्येवꣳ ह्याह ॥

परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः ॥
तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्द्धनि ॥२१॥

अथान्यत्राप्युक्तं द्वे वाव ब्रह्मणीऽअभिध्येये शब्दश्चाशब्दश्चाथ शब्देनैवाशब्दमाविष्क्रियतेऽथ तत्रो३मिति शब्दोऽनेनोर्ध्वमुत्क्रान्तोऽशब्दे निधनमेत्यथ हैषा गतिरेतदमृतमेतत्सायुज्यत्वं निर्वृत्तत्वं तथा चेत्यथ यथोर्णनाभिस्तन्तुनोर्ध्वमुत्क्रान्तोऽवकाशं लभतऽइत्येवꣳ वाव खल्वसाऽअभिध्यातऽओमित्यनेनोर्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभतेऽन्यथा परे शब्दवादिनः श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्दमाकर्णयन्ति सप्तविधेयं तस्योपमा यथा नद्यः किङ्किणी काꣳस्यचक्रभेकाविष्क्रन्धिकावृष्टिर्निर्वाते वदतीति तं पृथग्लक्षणमितीत्य परे शब्देऽव्यक्ते ब्रह्मण्यस्तं गतास्तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा सम्पन्ना मधुत्वं नानारसाऽइत्येवꣳ ह्याह ॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥२२॥+

अथान्यत्राप्युक्तं यः शब्दस्तदो३मित्येतदक्षरं यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरत्वाय तदेतदुपासीतेत्येवं ह्याह ॥

योऽसौ परापरो देवा ऽॐकारो नाम नामतः ॥
निःशब्दः शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥२३॥

अथान्यत्राप्युक्तं धनुः शरीरमो३मित्येतच्छरः शिखाऽस्य मनस्तमोलक्षणं भित्वा तमोऽतमाविष्टमागच्छत्यथाविष्टं भित्त्वाऽलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म तमसः पर्यपश्यद्यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ विद्युति विभात्यथ खल्वेनं दृष्ट्वाऽमृतत्वं गच्छतीत्येवं ह्याह ॥

ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निधीयते ।
अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥
मानसे च विलीने तु यत्सुखं चात्मसाक्षिकम् ॥
तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोकऽएव सः ॥२४॥

अथान्यत्राप्युक्तं निद्रे वान्तर्हितेन्द्रियः शुद्धितमया धिया स्वप्नऽइव यः पश्यतीन्द्रियबिलेऽविवशः प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकं च सोऽपि प्रणवाख्यः प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवतीत्येवं ह्याह ॥

एवं प्राणमथोङ्कारं यस्मात्सर्वमनेकधा ॥ युनक्ति युञ्जते वाऽपि तस्माद्योगऽइति स्मृतः ॥
एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च ॥ सर्वभावपरित्यागो योगऽइत्यभिधीयते ॥२५॥

अथान्यत्राप्युक्तंयथा चाप्सु चारिणः शाकुनिकः सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येवं वाव खल्विमान्प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोत्यतस्तप्तोर्वीव सोऽथ यथा तप्तोर्विसर्पिस्तृणकाष्ठसंस्पर्शेनोज्ज्वलतीत्येवं वाव खल्वसाऽअप्राणाख्यः प्राणसंस्पर्शेनोज्ज्वलत्यथ यदुज्ज्वलत्येतद्ब्रह्मणो रूपं चैतद्विष्णोः परमं पदं चैतद्रुद्रस्य रुद्रत्वमेतत्तदपरिमितधा वाऽऽत्मानं विभज्य पूरयतीमांल्लोकानित्येवं ह्याह ॥

वह्नेश्च यद्वत्खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य ॥
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथा क्रमेण ॥२६॥

+ ब्रह्मबिन्दु उप० १७

अथान्यत्राप्युक्तं ब्रह्मणो वावैतत्तेजः परस्यामृतस्याशरीरस्य यच्छरीरस्यौष्ण्यमस्यैतद्घृ-तमथाऽऽविः सन्नभसि निहितꣳ वैतदेकाग्रेणैवमन्तर्हृदयाकाशꣳ विनुदन्ति यत्तस्य ज्योतिरिव सम्पद्यतीत्यतस्तद्भावमाचिरेणैति भूमावयाष्पिण्डं निहितꣳ यथाऽचिरेणैति भूमित्वं मृद्वत्सꣳस्थमयःपिण्डꣳ यथाऽग्न्ययस्कारादयो नाभिभवन्ति प्रणश्यति चित्तं तथाऽऽश्रयेण सहैव-मित्येवꣳ ह्याह ॥

हृद्याकाशमयं कोशमानन्दं परमालयम् ॥
स्वꣳ योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥२७॥

अथान्यत्राप्युक्तं भूतेन्द्रियार्थानतिक्रम्य ततः प्रवृज्याज्यं धृतिदण्डं धनुर्गृहीत्वाऽनभिमा-नमयेन चैवेषुणा तं ब्रह्मद्वारपारं निहत्याद्यꣳ सम्मोहमौली तृष्णेर्ष्या कुण्डली तन्द्रीराऽघवे-त्र्यभिमानाध्यक्षः क्रोधज्यं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति तꣳ हत्वोङ्कारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाऽऽविर्भूतेऽन्तराकाशे शनकैरवटैवावटकृद्धा-तुकामः सꣳविशत्येवं ब्रह्मशालाꣳविशेत्तत्श्चतुर्जालं ब्रह्मकोशं प्रणुदेद्गुर्वागमेनेत्यतः शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यतः स्वे महिम्नि तिष्ठमानं दृष्ट्वाऽऽवृत्तचक्रमिव सꣳसारचक्रमालोकयतीत्येवꣳ ह्याह॥

षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः ॥
आनन्दः परमो गुह्यः सम्यग्योगः प्रवर्तते ॥
रजस्तमोभ्याꣳ विद्धस्य सुसमिद्धस्य देहिनः ॥
पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ॥२८॥

एवमुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन्ब्रह्मणः पन्था-नमारूढाः पुत्राः प्रजापतेरिति सन्तोषं द्वन्द्वतितिक्षाꣳशान्तत्वꣳ योगाभ्यासादवाप्नोतीत्येतद्गु-ह्यतमं नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेदित्यनन्यभक्ताय सर्वगुणसम्पन्नाय दद्यादिति ॥२९॥

ॐशुचौ देशे शुचिः सत्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादित्यतः सद् ब्रह्मणि सत्याभिलाषिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निःकामोऽक्षय्यमपरिमितꣳ सुखमाक्रम्य तिष्ठति परमꣳ वै शेवधेरिव परस्योद्धरणꣳ यन्निः-कामत्वꣳ स हि सर्वकाममयः पुरुषोऽध्यवसायसङ्कल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तोऽत्रैकऽआहुर्गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतोऽध्यवसायस्य दोषक्षयाद्धि मोक्षो मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा

धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं *मनऽएव गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहोऽव्यग्रहश्चाभिमानित्वं प्रयातऽइत्यहꣳ सो, ममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानं जालेनेव खचरोऽन्तः पुरुषोऽध्यवसायसङ्कल्पाभिमानलिङ्गोऽवबद्धोऽतस्तद्विपरीतो मुक्तस्तस्मान्निरध्यवसायो निःसङ्कल्पो निरभिमानस्तिष्ठेदेतन्मोक्षलक्षणमेषाऽत्र ब्रह्मपदव्येषोऽत्र द्वारविवरोऽनेनास्य तमसः पारं गमिष्यत्यत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ॥ ×यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥ बुद्धिस्तु न विचेष्टते तामाहुः परमां गतिमित्येतदुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी कृतकृत्यो मरुदुत्तरायणं गतो न ह्यत्रोद्वर्त्मना गतिरेषोऽत्र ब्रह्मपथः सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गताऽइत्यत्रोदाहरन्ति ॥

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ॥
सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः ॥
ऊर्ध्वमेकः स्थितस्तेषाꣳ यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥
यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ॥
तेन देवनिकायानाꣳ स्वधामानि प्रपद्यते ॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ॥
इह कर्मोपभोगाय तैः सꣳसरति सोऽवशः ॥
तस्मात्स्वर्गः स्वर्गापवर्गहेतुर्भगवानसावादित्यऽइति ॥३०॥

किमात्मकानि वाऽएतानीन्द्रियाणि प्रचरन्त्युद्गन्ता चैतेषामिह को नियन्ता चेत्याह प्रत्याहात्माऽऽत्मकानीत्यात्मा ह्येषामुद्गन्ता नियन्ता चाप्सरसो भानवीयाश्च मरीचयो नामाथ पञ्चभी रश्मिभिर्विषयानत्तीति कतमऽआत्मेति योऽयꣳ शुद्धः पूतः शून्यः शान्तादिलक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्यस्तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौष्ण्यमाविष्टं चापाꣳ यः शिवतमो रसऽइत्येकेऽथ वाक्श्रोत्रं चक्षुर्मनः प्राणऽइत्येकेऽथ बुद्धिर्धृतिः स्मृतिः प्रज्ञानमित्येकेऽथ ते वाऽएतस्यैवꣳ यथैवेह बीजस्याङ्कुरा वाऽथ धूमार्चिर्विस्फुलिङ्गाऽइवाग्नेश्चेत्यत्रोदाहरन्ति ॥

वह्नेश्च यद्वत्खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य ॥
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथा क्रमेण ॥३१॥

तस्माद्वाऽएतस्मादात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि च भूतान्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमित्यथ यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येवꣳ वाऽएतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसऽइतिहासः

---

* बृहदार० उ० १।५।३ × कठ उ० ६।१०

पुराणꣳ विद्याऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि विश्वा भूतानि ॥३२॥

पञ्चेष्टको वाऽएषोऽग्निर्यत्संꣳवत्सरस्तस्येमाऽइष्टका यो वसन्तो ग्रीष्मो वर्षा शरद्धेमन्तः शिशिरः स शिरः पक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविधः सेयं पृथिवी प्रजापतेः प्रथमा चितिः, करैर्यजमानमन्तरिक्षमुत्क्षिप्त्वा वायवे प्रायच्छत्प्राणो वै वायुः प्राणोऽग्निस्तस्येमाऽइष्टका यः प्राणोऽपानो व्यानः समानऽउदानः स शिरःपक्षसी पृष्ठपुच्छवानेषोऽग्निः पुरुषविधस्त-दिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः, करैर्यजमानं दिवमुत्क्षिप्त्वेन्द्राय प्रायच्छदसौ वाऽ-आदित्यऽइन्द्रः सैषोऽग्निस्तस्येमाऽइष्टका यदृग्यजुःसामाथर्वाङ्गिरसऽइतिहासः पुराणꣳ स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविधस्तस्यैषा द्यौः प्रजापतेस्तृतीया चितिः, करैर्य-जमानस्यात्मविदेऽवदानं करोत्यथात्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत्तत्रानन्दी मोदी भवति ॥३३

पृथिवी गार्हपत्योऽन्तरिक्षं दक्षिणाग्निर्द्यौराहवनीयस्तत्तऽएव पवमानः पावकः शुचिर्यऽ आविष्कृतमेतेनास्य यज्ञꣳ यतः पवमानः पावकः शुचिः सङ्घातो हि जाठरस्तस्मादग्निर्यष्ट-व्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यो यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छन्ति ॥

हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः ॥
मद्गुर्हꣳसस्तेजो वृषः सोऽस्मिन्नग्नौ यजामहऽइति ॥

चापि मन्त्रार्थꣳ विचिनोति तत्सवितुर्वरेण्यं भर्गोऽस्याभिध्येयꣳ यो बुद्ध्यन्तस्थोऽध्यायी ह मनः शान्तिपदमनुसरित्यात्मन्येव धत्तेऽत्रेमे श्लोका भवन्ति ॥

यथानिरिन्धनो वह्निः स्वयोनाऽउपशाम्यते ॥
तथा वृत्तिक्षयाच्चित्तꣳ स्वयोनाऽउपशाम्यते ॥१॥
स्वयोनाऽउपशान्तस्य मनसः सत्यकामतः ॥
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥२॥
चित्तमेव हि सꣳसारं तत्प्रयत्नेन शोधयेत् ॥
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥३॥
चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभम् ॥
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥४॥
समासक्तꣳ यथाचित्तं जन्तोर्विषयगोचरे ॥
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥५॥
मनो हि द्विविधं प्रोक्तꣳ शुद्धं चाशुद्धमेव च ॥
अशुद्धं कामसम्पर्काच्छुद्धं कामविवर्जितम् ॥६॥

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ॥
यदा यात्यमनीभावं तदा तत्परमं पदम् ॥७॥
तावन्मनो निरोद्धव्यꣳ हृदि यावत्क्षयं गतम् ॥
एतज्ज्ञानं च मोक्षं च शेषोऽन्यो ग्रन्थविस्तरः ॥८॥
समाधिनिर्धौतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ॥
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते ॥९॥
अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्ष्यते ॥
एवमन्तर्गतं यस्य मनः स परिमुच्यते ॥१०॥
मनऽएव मनुष्याणां कारणं बन्धमोक्षयोः ॥
बन्धाय विषयासङ्गि मोक्षे निर्विषयं स्मृतम् ॥११॥ इति ॥

अतोऽनग्निहोत्र्यनग्निचिदज्ञानाभिध्यायिनाम् ॥ ब्रह्मणस्पदव्योमानुस्मरणꣳ विरुद्धं तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः ॥३४॥

नमोऽग्नये पृथिवी३क्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि, नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि, नमऽआदित्याय दिविक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि, नमो ब्रह्मणे सर्वक्षिते सर्वस्मृते सर्वमस्मै यजमानाय धेहि ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ॥
तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ॥ योऽसाऽआदित्ये पुरुषः सोऽसाऽअहम् ॥×

इत्येष ह वै सत्यधर्मो यदादित्यस्यादित्यत्वं तच्छुक्लं पुरुषमलिङ्गं नभसोऽन्तर्गतस्य तेजसोꣳशमात्रमेतद्यदादित्यस्य मध्यऽइवेत्यक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गऽएतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोꣳशमात्रमेतद्यदादित्यस्य मध्येऽअमृतꣳ यस्य हि सोमः प्राणा वाऽअप्यङ्कुराऽएतद्ब्रह्मैतदमृतमेतद्भर्गऽएतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोꣳशमात्रमेतद्यदादित्यस्य मध्ये यजुर्दीप्यत्यो३मापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरो३मित्यष्टपादꣳशुचिꣳ हꣳसं त्रिसूत्रं मनुमव्ययं द्विधर्मोन्धं तेजसेद्धꣳ सर्वं पश्यन्पश्याति नभसोऽन्तर्गतस्य तेजसोꣳशमात्रमेतद्यदादित्यस्य मध्येऽउदित्वा मयूखे भवतऽएतत्संवित्सत्यधर्मऽएतद्यजुरेतत्तपऽएतदग्निरेतद्वायुरेतत्प्राणऽएतदापऽएतच्चन्द्रमाऽएतच्छुक्रमेतदमृतमेतद्ब्रह्मविषयऽएतद्भानुरर्णवस्तस्मिन्नेव यजमानाः सैन्धवऽइव व्लीयन्तऽएषा वै ब्रह्मैक्यताऽत्र हि सर्वे कामाः समाहिताऽइत्यत्रोदाहरन्ति ॥ अꣳशुधारयऽइवाणुर्वातेरितः सꣳस्फुरत्यसावन्तर्गतः सुराणाꣳ यो हैवꣳ वित्स सवित्स द्वैतवित्सैकधामेतः स्यात्तदात्मकश्च ॥

× काण्व यजु [ दृष्टये = विष्णवे ] ४०।१५-१६; ईश उ० १५-१६

ये बिन्दवऽइवाभ्युच्चरन्त्यजस्रं विद्युदिवाभ्राचिर्षः परमे व्योमन् ॥

तेऽर्चिषो वै यशसऽआश्रयवशाज्जटाभिरूपाऽइव कृष्णवर्त्मनः ॥३५॥

तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजस्तत्त्रेधाऽभिहितमग्नाऽआदित्ये प्राणेऽथैषा नाड्यन्न बहुमित्येषाऽग्नौ हुतमादित्यं गमयत्यथोऽआदित्ये यो रसोऽस्रवत्सऽउद्गीथं वर्षति तेनेमे प्राणाः प्राणेभ्यः प्रजाऽइत्यत्रोदाहरन्ति ॥ यद्धविरग्नौ हूयते तदादित्यं गमयति तत्सूर्यो रश्मिभिर्वर्षति तेनान्नं भवत्यन्नाद्भूतानामुत्पत्तिरित्येवं ह्याह ॥

अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ॥

आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥३६॥+

द्वे वाव खल्व ते ब्रह्म ज्योतिषो रूपके शान्तमेकं समृद्धं चैकमथ यच्छान्तं तस्याधारं खमथ यत्समृद्धमिदं तस्यान्नं तस्मान्मन्त्रौषधाज्यमिव पुरोडाशस्थालीपाकादिभिर्यष्टव्य-मन्तर्वेद्यामास्येवशिष्टैरन्नपानैश्चास्यमाहवनीयमिति मत्वा तेजसः समृद्ध्यै पुण्यलोक-विजित्यर्थायामृतत्वाय चात्रोदाहरन्त्यग्निहोत्रं जुहुयात्स्वर्गकामो यमराज्यमग्निष्टोमेनाभि-जयति सोमराज्यमुक्थ्येन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेण प्राजापत्यमासहस्रसं-वत्सरान्तः क्रतुनेति ॥

वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ॥

अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥३७॥

अग्निहोत्रं जुह्वानो लोभजालं भिनत्त्यतः सम्मोहं छित्त्वा न क्रोधं स्तुन्वानः काममभि-ध्यायमानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्दन्नतः परमाकाशमत्र हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं ततः स्वे महिम्नि तिष्ठमानं पश्यत्यत्रो-दाहरन्ति ॥

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ॥

तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥

शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणुं परमैक्यं ध्यात्वाऽतः परमतां गच्छत्यत्र हि सर्वे कामाः समाहिताऽइत्यत्रोदाहरन्ति ॥

अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवद्विस्त्रिधा हि ॥

तद्ब्रह्माभिष्टूयमानं महो देवो भुवनान्याविवेश ॥ ॐनमो ब्रह्मणे नमः ॥३८॥

इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि षष्ठः प्रपाठकः ॥६॥

---

१ पुण्यपत्तनस्थानन्दाश्रममुद्रिते उपनिषत्समुच्चयगते सभाष्यायां मैत्र्युपनिषदि त्वनयोः षट्त्रिंशत्सप्तत्रिंशयोः कण्डिकयोः पूर्वापरभावे परस्परं व्यत्यासो दृश्यत इति ॥ + मनु० ३।७६

अथ सप्तमः प्रपाठकः ॥

॥ओ३म्॥ अग्निर्गायत्रं त्रिवृद्रथन्तरꣳ वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः शुद्धो भास्वरो गुणभुग्[1]भयोऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञो मघोऽप्रमेयोऽनाद्यन्तः श्रीमानजो धीमाननिर्देश्यः सर्वसृक्सर्वस्यात्मा सर्वभुक्सर्वस्येशानः सर्वस्यान्तराऽऽन्तरऽइति ॥१॥

इन्द्रस्त्रिष्टुप्पञ्चदशो बृहद्ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणतऽउद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करऽइति ॥२॥

मरुतो जगती सप्तदशो वैरूपꣳ वर्षाऽअपानः शुक्रऽआदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तꣳ स्थिरमचलममृतमच्युतं ध्रुवꣳ विष्णुसंज्ञितꣳ सर्वापरं धामेति ॥३॥

विश्वेदेवाऽअनुष्टुबेकविꣳशो वैराजः शरत्समानो वरुणः साध्याऽउत्तरतऽउद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यन्तःशुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तऽइति ॥४॥

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिꣳशौ शाक्वररैवते हेमन्तशिशिराऽउदानोऽङ्गिरसश्चन्द्रमाऽऊर्ध्वाऽउद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतो भान्तः क्षान्तः शान्तऽइति ॥५॥

शनिराहुकेतूरगरक्षो यक्षनरविहङ्गशरभेभादयोऽधस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति प्रणवाख्यꣳ प्रणेतारं भारूपꣳ विगतनिद्रꣳ विजरꣳ विमृत्युꣳ विशोकमिति ॥६॥

एष हि खल्वात्माऽन्तर्हृदयेऽणीयानिद्धोऽग्निरिव विश्वरूपोऽस्यैवान्नमिदꣳ सर्वमस्मिन्नोताऽइमाः प्रजाऽएष तऽआत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसङ्कल्पः सत्यकामऽएष परमेश्वरऽएष भूताधिपतिरेष भूतपालऽएष सेतुर्विधरणऽएष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हꣳसः शास्ता-

---

१ गुणभुरभयो०

ऽच्युतो विष्णुर्नारायणो यश्चैषोऽग्नौ यश्चायꣳ हृदये यश्चासावादित्ये सऽएषऽएकस्तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नमः ॥७॥

अथेदानीं ज्ञानोपसर्गा राजन्मोहजालस्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैष वाट्यैः पुरस्तादुक्तेऽप्यधःस्तम्बेनाश्लिष्यन्त्यथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता नित्ययाचनका नित्यꣳ शिल्पोपजीविनोऽथ ये चान्ये ह पुरोयाचकाऽअयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वाꣳसोऽथ ये चान्ये ह वृथाकषायण्डलिनः कापालिनोऽथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयामऽइत्येवं ब्रुवाणाऽअथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयोऽथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् ॥ प्रकाशभूता वै ते तस्कराऽअस्वर्ग्याऽइत्येवꣳह्याह ॥

नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ॥
भ्राम्यंल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥८॥

बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेसामविद्यामसृजत्तयाशिवमशिवमित्युद्दिशन्त्यशिवꣳ शिवमिति वेदादिशास्त्रꣳ हिꣳसकधर्माभिध्यानमस्त्विति वदन्त्यतो नैनामभिधीयेतान्यथैषा वन्ध्येवैषा रतिमात्रं फलमस्या वृत्तच्युतस्यैव नारम्भणीयेत्येवꣳ ह्याह ॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ॥
विद्याभीप्सितं नचिकेतसं मन्ये ॥ न त्वा कामा बहवो लोलुपन्ते ॥*
विद्यां चाविद्यां च यस्तद्वेदोऽभयꣳ सह ॥
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥×
अविद्यायामन्तरे वेष्ट्यमानाः स्वयं धीराः पण्डितंमन्यमानाः ॥
दन्द्रम्यमाणाः परियन्ति मूढाऽअन्धेनैव नीयमाना यथान्धाऽइति ॥९॥+

देवासुरा ह वै यऽआत्मकामा ब्रह्मणोऽन्तिकं प्रयातास्तस्मै नमस्कृत्वोचुर्भगवन्वयमात्मकामाः स त्वं नो ब्रूहीत्यतश्चिरं ध्यात्वाऽमन्यतान्यतात्मानो वै ते सुराऽअतोऽन्यतममेतेषामुक्तं तदिमे मूढाऽउपजीवन्त्यभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशꣳसिनः सत्यमिवानृतं पश्यन्तीन्द्रजालवदित्यतो यद्वेदेष्वभिहितं तत्सत्यꣳ यद्वेदेषूक्तं तद्विद्वाꣳसऽउपजीवन्ति तस्माद्ब्राह्मणो नावैदिकमधीयीतायमर्थः स्यादिति ॥१०॥

---

* कठ उ० १।२।४ × वा० यजु० ४०।११; ईश ११ + कठ उ० १।२।५

एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत्परं तेजस्तत्त्रेधाऽभिहितमग्नाऽआदित्ये प्राणऽएतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यदो३मित्येतदक्षरमनेनैव तदु तद्बुध्यत्युदयत्युच्छ्वसत्यजस्रं ब्रह्म धियाऽऽलम्बश्चाऽत्रैवैतत्समीरणे प्रकाशप्रक्षेपकोष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभासि प्रशाखयैवोत्क्रम्य स्कन्धात्स्कन्धमनुसरत्यप्सु प्रक्षेपको लवणस्येव घृतस्य चौष्ण्यमिवाभिध्यातुर्विस्तृतिरिवैतादित्यत्रोदाहरन्त्यथ कस्मादुच्यते वैद्युतो यस्मादुच्चारितमात्रऽएव सर्वꣳ शरीरꣳ विद्योतयति तस्मादो३मित्यनेनैतदुपासीतापरिमितं तेजः ॥

पुरुषश्चाक्षुषो योऽयं दक्षिणेऽक्षिण्यवस्थितः ॥
इन्द्रोऽयमस्य जायेयꣳ सव्ये चाक्षिण्यवस्थिता ॥१॥

समागमस्तयोरेव हृदयान्तर्गतः सुषौ ॥
तेजस्तल्लोहितस्यात्र पिण्डऽएवोभयस्तयोः ॥२॥

हृदयादायती तावच्चक्षुष्यस्मिन्प्रतिष्ठिता ॥
साऽरणी सा तयोर्नाडी द्वयोरेका द्विधा सती ॥३॥

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥४॥

खजाग्निसंयोगाद्धृदि सम्प्रयुक्तं मणोर्ह्यणुर्द्व्यणुः कण्ठदेशे ॥
जिह्वाग्रदेशे त्र्यणुकं च विद्धि विनिर्गतं मातृकमेवमाहुः ॥५॥

न पश्यन्मृत्युं पश्यति न रोगो न च दुःखताम् ॥
सर्वꣳ हि पश्यन्पश्यति सर्वमाप्नोति सर्वशः ॥६॥

चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः ॥
भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥७॥

त्रिष्वेकपाच्चरेद् ब्रह्म त्रिपाच्चरति चोत्तरे ॥
सत्यानृतोपभोगार्थो द्वैतीभावो महात्मनः ॥८॥

इति द्वैतीभावो महात्मनऽइति ॥११॥

इति मैत्रायणीयारण्यकेऽथवा मैत्रायणीयशाखोपनिषदि सप्तमः प्रपाठकः ॥७॥

इति मैत्रायणीयारण्यकमथवा मैत्रायणीयशाखोपनिषत्समाप्ता ॥

*

अथ यजुर्वेदीय-मैत्रायणीयारण्यकेऽथवा मैत्रायणीयोपनिषदि=अन्ते पठ्यमाना—

शान्तिः ॥

॥ॐ॥ नमो वाचे नमो वाचस्पतये याऽचोंदिताय च नोदिताय तस्मै वाचे नमो नमऽ-ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मन्त्रविद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रविदः प्रादुर्दैवीꣳ वाचमुद्यासं जुष्टां देवेभ्यः स्वधावरीं पितृभ्योऽनुमतान्मनुष्येभ्यस्तन्मा देवाऽअवन्तु शोभायै पितरोऽनुमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ इति ॥

क्वचिदष्टोत्तरशतोपनिषदादौ चान्या शान्तिरुक्ता—

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽअस्तु ॥ तदात्मनि निरते यऽउपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥१॥

ॐ शान्तिः शान्तिः शान्तिः ॥ इति ॥

